# किरातार्ज्जुनीयस्य विवरणसङ्क्षेपः ।

## प्रथमः सर्गः ।

अथ युधिष्ठिर-वनेचर समागमः ।—

प्रजानुराग एव राज्यमूलं, तदभावे च वनवासानन्तरमपि राज्यलाभो दुष्करः, इत्यालोच्य द्वैतवने वसता युधिष्ठिरेण दुर्य्योधनस्य प्रजापालनपद्धतिम्, आत्मनि च जनानां यथापूर्वम् अनुरागं जिज्ञासुना दूतः कश्चित् प्रेषितो वनेचरः। स च ब्रह्मचारिवेशधृक् अधिगतदुर्य्योधनान्तिकः विदिताखिल-राजवृत्तान्तः द्वैतवने समेत्य युधिष्ठिराभ्यासम्, आत्मजाति-समयेन कृतप्रणामः, प्रियार्हे राज्ञि अप्रियनिवेदकम् आत्मानं अक्षोभं याचमानः, विनयेन स्वाहङ्कारञ्च अपनिनीषुः तदभ्यनु-ज्ञातः दुर्य्योधनस्य राज्यरक्षामूलम् इन्द्रियनिग्रहं, भृत्यानुरागं, त्रिवर्गसाधनं, सामाद्युपाय-व्यवस्थापनादिकञ्च आकलयति ।

दुर्य्योधनस्य राजनीतिकुशलता —

वनेचरः प्राह —"महाराज ! राज्यदार्ढ्यार्थी स दुर्य्यो-धनः सततं वशीभूतेन्द्रियग्रामः पौरुषमेव अवलम्बमानः भृत्येषु मित्रोचितां, मित्रेषु भ्रात्राद्युचितां, भ्रात्रादिषु च आत्मोचितां वृत्तिम् आतन्वानः निरहङ्कारो वर्त्तते ; वर्त्तते च समानुरागेण समाराधितत्रिवर्गः यथास्थानं विहितसामाद्युपायः ।

तथाहि तस्य साम अकपटमेव, तच्च दानयुक्तं, दानञ्च सत्कारपूर्व्वकं विशेषसत्कारश्च गुणानुसारेणैव ।

दण्डोऽपि तस्य न स्वसुखसमीहया, न धनाशया, नापि निगगमि; अपि तु—"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्य-दण्डयन्। अयशो महदाप्नोति नरकञ्चैव गच्छति॥" इत्यादि धर्म्मशास्त्रानुमोदितोऽयं चात्रो धर्म्मः इति मन्वानस्य प्रियाप्रियेषु पुत्रमित्रादिषु दण्डार्हेषु समभावेनैव।

भेदकौशलञ्च गूढ़ाकारेङ्गितस्य तस्य परराष्ट्रेषु मन्त्रगुप्ति-समर्थान् भेदकुशलान् चारान् नियोज्य स्वयं शङ्कितस्यापि निःशङ्कवत् अवस्थानादिकं सम्यक् समजनि।

उपायप्रयोगानुरूपाणि च फलानि लब्धानि; तथाच,—सर्व्वे राजानः तस्य वशमागत्य प्राणपणेनापि सम्भूय सर्व्वाणि खलु कर्म्माणि साधयन्ति। सम्पत्तिश्च तस्य उपायनादिप्राप्तया बहुला समजनि; किं बहुना, मेदिनी अपि तद्‌गुणाकृष्टा स्वयमेवा-र्थान् प्रसूते।

मित्रबलन्तु तस्य सुतरामेव, तथा च लोका हि तद्‌गुण समाकृष्टाः विनापि युद्धव्यापारं मैत्रीमापन्नाः।

धर्म्मबलमपि तेन दुःशासनादिषु विन्यस्तराज्यभारेण पुरो-हितानुमतेन च मखादिकम् अनुष्ठाय समासादितम्।

वनेचरगमनम्।—

एवं साम्राज्याधिकारी अपि सः कथाच्छलेन लोकेभ्यः भवतां विक्रमं श्रुत्वा तदनुध्यानपरः भीतभीत एव आस्ते। "किं बहुना, वक्तव्यं तावदुक्तं मया तदत्र भवन्तः प्रमाणम्" इत्युक्त्वा युधिष्ठिराल्लब्धपुरस्कारो वनेचरः स्वभवनमयासीत्।

युधिष्ठिरं प्रति द्रौपदीवाक्यम्।—

अथ युधिष्ठिरेण द्रौपदीभवनमुपगम्य अनुजसन्निधौ समी-रिते च तस्मिन्, तत्क्रोधोद्दीपनार्थम् इदमाह च पाञ्चाली।—

"महाराज ! नैतत् युज्यते तव, यत् पुरुषपरम्परागतं राज्यं हेलया परित्यज्य ब्राह्मणवदकाण्डे वनाश्रयणं, क्रोधस्य अन्तःशत्रुतया परिहर्त्तव्यत्वेऽपि स्वसम्मानखण्डकतया परपरिभावकतया च हेयमेव नितरां क्रोधराहित्यम्। अपरञ्च, एतदतीव कष्टकारणं—यत् सततं राजसुखोचिताः वीरप्रवरा अपि इमे भवदवरजाः भीमादयः अनुचितारम्भाः भवदर्थमेव क्लिश्यन्ति। भवतोऽपि साम्राज्याधिपतेः अनुचिता वनेचरवृत्तिः, ममापि गुरुजनाध्युषितायां कुरुसभायां भवतां समक्षमेव केशग्रहणादिकं नितरामरुन्तुदम्। अतः समुज्झितक्षमः त्यक्तवनवासः छद्मना दूषितसन्धिश्च समुत्तिष्ठतां वैरशोधनाय ; राजलक्ष्मीरपि व्यसनविनिर्म्मुक्तं भवन्तमेवाधिश्रयतु।

## द्वितीय सर्ग।



युधिष्ठिरं प्रति भीमसेनवाक्यम्।—

अथ ज्वलदनलसन्निभेन क्रोधोद्दीपकेन द्रौपदीवाक्येन उद्रिक्तकोपः भीमसेनः द्रौपदीपक्षमेव कक्षीकुर्व्वन् युक्तिमत्तया, प्रियजनोदिततया, परिणतिसुखतया च सर्व्वथा ग्राह्यत्वमाकलय्य तद्वाक्यस्य, "सकलविद्यापरिमार्ज्जितबुद्धेः अवन्ध्यकोपस्यापि भवतः सञ्जातो बुद्धिविपर्य्ययः पौरुषभ्रंशश्च" इति स्वयमपि उपालभमानः "नायमुपेक्षाकालः" इति सम्यगावेदयति स्वकल्पितयुक्तिबलेन। तथाहि—

शत्रोरभ्युदयो महानपि क्षयोन्मुखः क्षयावस्था च अचिरेण भूयसी, स्वस्य च विपरीतैव प्रतिपालनीया, इति नीतिविद्भिः भाष्यमाणत्वात् साम्प्रतं च तद्वैपरीत्येन स्वपरगततया वर्त्त-मानत्वात् नायमुपेक्षाकालः। दर्शितश्च तेन अनुचितोपेक्षायां राज्यभ्रंशः अपेक्षायान्तु प्रजानुरागः सुतरामभ्युदयश्च इति, युक्त्या प्रतिपादितश्च उत्साहप्रभुमन्त्रशक्तिषु नीतिपश्चाङ्ग-भुताया: उत्साहशक्तेः प्राधान्यं, व्यवस्थापितश्च महैश्वर्य्य-सिद्धेः पौरुषमात्रस्य हेतुत्वं, समुज्झितपौरुषस्य च परपरि-भवः, परिणामहीनता, लाघवम्, ऐश्वर्य्यहीनता, क्रमेण। यदृच्छया ऐश्वर्य्यलाभस्यापि वीरजनायोग्यतया भिक्षावृत्तिवत् जघन्यत्वं, समर्थितश्च "साम्ना दानेन भेदेन समस्तैरथवा पृथक्। विजेतुं प्रयतेतारीन् न युद्धेन कदाचन॥" इति मनूक्तदिशा साम्नः प्राथमिकत्वेऽपि सिंहदृष्टान्तेन तत् परि-खण्ड्य विजयाधायकतया आनुषङ्गिकसम्पत्तिसम्पादकतया वीरसहजसमयसिद्धतया च युद्धस्यैव प्राधान्यं, निराकृता च स्वपक्षवीर्य्यातिशयवर्णनेन परपरिभवाशङ्का।

भीमं प्रति युधिष्ठिरोपदेशः।—

इत्यमभिहिते भीमेन, तत्रभवान् युधिष्ठिरः मत्तमातङ्गवत् परिसान्त्वन-तर्ज्जनाभ्यां क्रमेण तस्य कोपमपनिनीषुः तद्वाक्य-जातं नयस्खलितमपि स्वकल्पितयुक्तिसमुद्भासितं वाक्यगुणान्वितं बुद्धिप्रतिभासूचकञ्च इति कथमपि बहिरभिनन्द्य "स्वसंशया-खण्डकतया न मया ग्राह्यम्" इति प्रदर्शितावशः, अविविक्ताङ्गी-कारे च विपत्तिः अवश्यम्भाविनी, वैपरीत्येन च विभवावाप्तिः इति अन्वयव्यतिरेकाभ्यां समर्थितस्वपक्षः, विमृश्यकारिणः ध्रुवा फलसिद्धिः इति कृषिदृष्टान्तेन स्वमतस्य दार्ढ्यमापादयन्

सम्प्रदायशुद्धशास्त्रश्रवणस्य क्रोधोपशान्तिः, तस्याः अवसरे शौर्य्यं, तस्य च विवेकः इति क्रमेण प्रदर्शयन् भूष्यभूषणभावं, स्रुत-विवेकः शास्त्रशिक्षैव विवेकमूलमिति दर्शितविवेकोपायः विमृश्यकारिणः आकस्मिककार्य्यविघातस्य च अभ्युदयतुल्यत्वम् आकलयन्, कोप एव अनर्थहेतुः, तदपहारश्च विभवमूलमिति सम्यक् प्रकटय्य, उपदिश्य च क्रोधशमयोः दोषगुणसन्दर्शनेन कोपणं भीमसेनं, वनेचरोक्तोऽपि, गर्व्वितस्य वैरिणः सुयोधनस्य प्रजानुरागः मित्रानुगुण्यञ्च अन्तर्भेदजर्ज्जरिततया, अवसरं प्रति-पालद्भिः मानधनैः वृष्णिप्रभृतिभिः अस्मत्पक्षीयैः स्वार्थसाध-नाय कथमपि स्वीकृतत्वेन च प्रच्छन्नकूपोपमं आपातमात्रम् इत्यनास्थामास्थापयन्, अभिमानात् मूढ़ता, ततो नीतिभ्रंशः, तस्मात् अन्तर्भेदः, ततश्च परपरिभवः इति अभिमानस्यैवास्य महजस्य परम्परया अनर्थहेतुत्वं प्रख्यापयन् गर्हयंश्च पराभव-हेतुत्वात् आकालिकविग्रहम्, उपेक्षापक्षपाती नीतिम् उपदिदेश भीमसेनम् ।

अथ व्यासागमनम् ।—

अत्रान्तरे अतर्कितोपगतं साक्षात् सुकृतिपुञ्जमिव भगवन्तं महर्षिं वेदव्यासं अभ्युत्थानासनादिभिः अभ्यर्च्चितपादपद्मः तदाज्ञया च स्वासनोपविष्टः युधिष्ठिरो जीवाभिमुखस्थित शशाङ्कमूर्त्तिरिव भृशं रुरुचे ।

# तृतीय सर्ग ।

अथ व्यासवर्णनम् ।—

अथात्र भवता भारविना महर्षिं द्वैपायनं विशिंषता तस्य घनसमश्यामला कान्तिः, पिङ्गलो जटाभारः, सत्त्वगुणोत्कर्षः, सौम्यत्वम्, अलौकिकप्रभावमाधुर्य्यञ्च उपवर्णितम् ।

युधिष्ठिरस्य विनयः ।—

ततश्च महर्षिणा सार्द्धं युधिष्ठिरस्य सम्भाषणचातुरी, विनयातिशय्यं, विविधवाक्यकौशलञ्च भृशं व्यञ्जयता मधुरोक्तिना, दुर्य्योधने दोषबाहुल्यं युधिष्ठिरे गुणबाहुल्यम् अभिव्यज्य च उभयत्र समानसौहार्द्दस्य अरागद्वेषिणोऽपि महर्षेः गुणपक्षपातित्वञ्च समर्थितम् ।

युधिष्ठिरं प्रति व्यासस्योपदेशः ।—

समुद्घाटितञ्च प्रथमं वेदव्यासमुखेन धृतराष्ट्रस्य समानस्नेहभाजनेष्वपि पुत्रभ्रातृपुत्रेषु वर्त्तमानेषु स्वसुतेष्वेव स्नेहातिशय्यरूपं, दुर्ज्जनेष्वपि कर्णादिषु सचिवेषु संशयापनोदनार्थं सम्यक् निर्भरत्वरूपञ्च दूषणं ; प्रकटितञ्च दुर्य्योधनसमितौ स्त्रीग्रहणसाहसादिकम् अङ्गीकृतवत्यां युधिष्ठिरस्य तूष्णीमवस्थानेन विनयशान्त्यादिषु गुणेषु नितरां पक्षपातित्वम् । ततश्च दुर्य्योधनपक्षीयाणां महावीराणां भीष्मद्रोणकर्णप्रभृतीनां वीर्य्यातिशयप्रख्यापनेन युधिष्ठिरपक्षदौर्ब्बल्यं परपक्षप्राबल्यञ्च प्रदर्शयन् "स्वशक्त्युपचयार्थं कोऽपि उपायः विधेयः" इत्युपदिशन् युधिष्ठिरानुमताय सव्यसाचिने शक्राराधनानुगुणं मन्त्रं प्रदाय "गृहीतायुधः अदत्तावसरः इन्द्रकीलपर्व्वते आसिद्धेः तपस्यतु"

"क्षणेनैव कश्चिद् गुह्यकः त्वां तत्र नेष्यति" इति च अर्ज्जुनमुपदिश्य व्यासः तिरोदधे, इत्यपि वर्णितम्।

अर्ज्जुनं प्रति द्रौपदीवाक्यम्।—

अथ समायाते गुह्यके सव्यसाचिविरहदुःखमुत्प्रेक्षमाणानां युधिष्ठिरादीनां परिजनानां तत्कालोचितः शोकोद्गमः; निसर्गधैर्य्येण महर्षिवचनप्रत्ययेन अरातिं प्रति समुत्कटद्वेषेण च तेषां तदपनोदनं, कृष्णायाः समधिकशोकोच्छ्वासश्च चारुतरोक्तानि; सन्निवेशितश्च ततः निसर्गधीरस्यापि अर्ज्जुनस्य आपातिष्टविरहशोकापनोदनार्थं सर्व्वार्थसिद्धिनिदानभूतोत्साहदार्व्यार्थञ्च पाञ्चाली-स्निग्धकरुणोजस्विवचनप्रपञ्चः। तत्र च प्रथमं शत्रुकपटपङ्कमग्नस्य गौरवस्य उद्धरणं भवत्सापेक्षमेव इत्युक्त्या विहितः शोकापनोदः; वैभवावाप्तिमाकलय्य च प्रकटितम् उत्साहदार्व्यम्। ततश्च निरतिशयगौरवापहारकस्य केशग्रहणवसनकर्षणादिरूपस्य वैरिकृतनिकारस्य प्रख्यापनेन, वीरप्रधानस्य शिरोधृतशत्रुकृतापमानस्य शस्त्रधारणवैफल्यं; शौर्य्यादिगुणमालिन्यञ्च समनूद्य समुद्दीपितो मन्युः।

गुह्यकार्ज्जुनयोः इन्द्रकीलगमनम्।—

अनन्तरं तपःसिद्धिप्रत्यूहव्यूहध्वंसदक्ष-स्वाभीष्टदेववासवाशीर्व्वाद-प्रार्थनमुखेन अर्ज्जुनस्य तपोऽनुष्ठानरूपं स्वकर्त्तव्यमुपदिश्य विवृतः तत्प्रस्थानप्रस्तावः। अथ कृष्णावचनवात्याभिः भृशमुद्दीपितकोपवह्निः सव्यसाची, यक्षदर्शितवर्त्मना समधिगतेन्द्रकीलसानुमार्गः विहिततत्रत्यतापसजनानुरागः समवर्त्तत ततश्च—"नेदुर्दुन्दुभयो दिव्याः पुष्पवर्षाश्च सन्ततः। सङ्गतस्तीरदेशेषु पयोधिः हर्षसंयुतः॥" इति च सुष्ठु प्रतिपादितम्।

---

# चतुर्थ सर्ग—

कविकृतशरद्वर्णनम् ।—

तत्रादौ गुह्यकेन सार्द्धं वर्त्मनि वर्त्तमानस्य यियासोः इन्द्र कीलसानुम् अर्ज्जुनस्य अतर्कितोपगतं सरस शरत्समयमधिकृत्य प्रदर्शिता खलु महाकविना अगाधकाव्यरसतरङ्गभङ्गिः। तत्र च क्रमेण कलहंसकुलकूजितायां परिणतशस्यभारविपाण्डुरितायां प्रियायामिव भुवि तौ सङ्गमयता, फलभरनमित शालिप्रसवशोभितां अकमलसलिलसनाथां स्थलीम् उपानयता, सर्वतः सलिलेषु विकचकमलकुलं, चटुलशफरीसलीलस्फुरणं, कलमचयरामणीयकञ्च प्रदर्शयता, विकचकमलकलिलि फेनिले क्वचन सलिले पाठीनविवर्त्तनेन सम्पाद्य किञ्जल्कभेदं, स्थलकमलिनीगतं भ्रममपनयता, उपस्थापयता च समुद्रयोषितम् इह सितसैकतवसनवसानां प्रतिदिनम् अपचीयमानेन स्तिमित रयेण सलिलसञ्चातेन समुदितोर्म्मिरेखवेलां; शालिरक्षणार्थञ्च क्षेत्रमध्युषितानां कृषक-रमणीनां विकसितबन्धुजीवकेन रेणुरुचिरेण विमण्डय भालदेशं, संशोभ्य च विशालपयोधरयुगलं कमलरेणुरमणीयं श्रमजनितस्वेदजलपुलकेन; निवेश्य च श्रुतिमूले कमनीयं कुसुमभूषणं; प्रीणयता च निकामम् अर्ज्जुनं, कविनैव स्वयमुत्थापितः प्रथमस्तरङ्गः।

ततोऽपि क्रमेण उपानीय प्रस्नुतपीवरस्तनीं पश्चिमरात्रि-गोचरसन्निवृत्तां वत्ससमुत्सुकां मन्थरगामिनीं धेनुसंहतिम्, उन्माद्य च विपक्षविजयिनम् उत्खातकेलिनिरतम् उच्चैर्नदन्तं

महोत्सवम् ; जनयित्वा च विमलकौतूहलम् अर्ज्जुनस्य हिमानीविशदगोकदम्बेन शनैर्विनिर्मुक्तपुलिनां विवृतजघनामिव दर्शयता सरितं ; समानीय च धेनोः सविधगतान् महजकृजून् गवानुकारिणः वनेष्वपि गृहीयतो गोवल्लभान् गोपजनान् ; नर्त्तयित्वा च व्रजप्राङ्गने दधिमन्थनव्याजेन विकचकमलसदृशाननाः प्रचलकुण्डलरुचिरश्रुतिशष्कलीः चञ्चलतरकुन्तलाः, पाणिकर्षणपार्श्वविवर्त्तनाभ्यां समधिकचलदङ्गयष्टीः मथिविवर्त्तनजनितकुम्भध्वनिषु मृदङ्गरवेष्विव समुच्चरितेषु श्रमविम्लानलोचनसरोरुहाः गोपवल्लभाः वल्लवीः ; सङ्गमय्य च अर्ज्जुनं वृषोपलूनशष्पे सरले रथाङ्गैरङ्कितसान्द्रकर्द्दमे नियतगमनक्षमे वर्त्मनि ; दर्शयित्वा च समीपतरवर्त्तिग्रामेषु महजसरलस्वभावरुचिराणां वैधकर्म्मनिरतानां जनानां पवित्राणि गृहाणि, समुल्लासितः खलु सव्यसाची ।

गुह्यककृत शरद्वर्णनम् ।—

अथ सहावस्थितः महानुभावो गुह्यकः सम्यगधिगतार्ज्जुनहृदयभावः सम्प्रेक्ष्य च शारदीम् अभिख्यां शरच्छोभासन्दर्शनकौतूहलाक्रान्तमनसं सव्यसाचिनं शरद्गुणं व्याचिख्यासुः संवर्द्ध्य च शुभाशिषा विवृतवान् इमां वचनपरम्पराचातुरीम् ।—

"पश्य धनञ्जय ! इदानीं परिपाकरमणीयानि शस्यानि, मन्दचारिण्यः स्रोतस्विन्यः, पङ्करहिता क्षितिः, सविशदवलाकानां सेन्द्रचापघनघनावलीनाञ्च असद्भावेऽपि निर्म्मलं नभः, चपलाऽऽकुलैः सजलजलदवृन्दैः विनिर्म्मुक्ता अपि दिशः प्रसन्नाः, प्रकृतिरुचिरा खलु कलहंसकाकली, कुमुद-कह्लार-कमलयुक्तानि परिणतिपिशङ्गप्रसवशालि-शालीनि च सलिलानि, वाणसप्तपर्णप्रभृतिकुसुमसुरभीणि वनानि, सितघनच्छायप्रायाणि

शीतसुरभिवातनिषेवितानि च नभोवर्त्मानि, वत्ससनाथं व्रज-मञ्चारिणी अपि प्रस्नुतपीवरस्तनी धेनुसंहतिः, सुरम्यगोपीजन-गानश्रवणसंसक्तहृदयतया बुभुक्षिताऽपि विरहितशष्पकवला मृगवधूः, प्रणताग्रभागोऽपि पद्मिनीकृतावमाननया मदन-पीड़ित इव धृतपाण्डुरिमा कलमः, सरोजमञ्जुताः किञ्जल्क-परिवाहिना सुशीतलेन मरुता समाकृष्टदेहभाराः यति-समागमे जारा इव गमनविधुराः भ्रमराः, अलक्तलोहित-चञ्चुभागा उपात्तपिङ्गलकलमशिखा विकचशिरीषकुसुम-समवर्णा अनुकृतमहेन्द्रचापशोभा शुकावली च वर्त्तते खलु दिशि दिशि।

हिमालयसन्दर्शनम्।—

इत्येवं कथयति तत्र यत्ते, समवर्त्तत सहसा नयनपथ-वर्त्ती समुन्नततरः गिरिराजः। आसाद्य च तम् अशेषवन-राजिश्यामलाङ्गयष्टिं हिमानीविशदम् अचलेन्द्रं, नीलनिचोल-परिदधानं विशदवपुषमिव हलायुधम् अनुमेने तत्र जिष्णुरिति।

## पञ्चमे सर्गे।

—)o(—

कविकृतं हिमाचलवर्णनम्।—

तत्र प्रथमतः आपञ्चदशश्लोकं हिमवद्वर्णनं तत्रभवता कविनैव सुतरां समुद्भासितम्। तत्र च हिमालयैकदेशे विशाल-मपि तपनमण्डलं सन्निवेश्य प्रख्यापितं सर्वलोकातिशायि परममौन्नत्यम्। अदृष्टपरस्पराणां क्षितिनभःसुरलोक-

निवासिनां आश्रयताञ्च प्रतिपाद्य प्रकटितः खलु सर्व्वेभ्योऽपरिच्छेद्यभावः। उपवर्ण्य च सानूनां कणकराजिविराजितत्वं तत्सम्बद्धदेशानाञ्च मणिमयूखभासुरत्वं "प्रभूतरत्नाकरोऽयं हिमाचल" इति व्यञ्जितं ; व्यञ्जितश्च पृथुनितम्बविलम्बितत्वम् अम्बुदानां प्रदर्शयता आमेखलं मेघसद्भावः। किञ्च, करिरुग्णतटां तटिनीं, विविधरत्नखचितं शिलोच्चयं, बहुव्रततीयुता दरीभुवः, सुरसुन्दरीनिषेवितां निर्झरिणीं, लतावकुलप्रियं विषधरं, नित्यविकचवारिरुहञ्च मानसं सरः, सगणं गिरिजयान्वितं परमेश्वरं, सहजोज्ज्वलञ्च ओषधिजातं, समुन्नतसानुनिहितां जाह्नवीञ्च यथाक्रमं वर्णयता "गजाकरः, रत्नाकरः, विविधवनोपवनसुन्दरः, स्वर्गोपमः, मानसालयः, सर्व्वाश्रयः, विलासभूमिः, योगिसेव्यः, नितरां पूततमश्च गिरिराजोऽयम् अलोकसामान्यमहिमा सर्वेभ्यः" इति प्रकटीकृतम्।

गुह्यककृतं हिमालयवर्णनम्।

अथ गिरिसन्दर्शनविस्मितमानसेन अर्ज्जुनानुचरेण गुह्यकेन पुनः समुदीरितं अष्टाचत्वारिंशत्श्लोकान्तं षोड़शत एकाधिकत्रिंशत्श्लोकैः धनञ्जयं प्रति अचलेन्द्रसौन्दर्य्यवर्णनचातुर्य्यम्।

तत्र प्रथमं तावत् अस्य हिमाद्रेः दर्शनमात्रेण प्रजानाम् अघविनाशसामर्थ्यं, शिखरचयैः गगनव्यापित्वं, मध्यभागस्य उन्नतवृत्तमात्रानुमेयत्वं, परमपुरुषसाम्यं, पद्मयोनिमात्राधिगम्यत्वञ्च वर्णयित्वा प्रकटितानि खलु पवित्रत्वं, महद् औन्नत्यं, दुरारोहत्वं, दुरधिगम्यत्वञ्च लोकानाम्। ततश्च रुचिरपल्लवलतागृहेषु धृतिमतीनामपि रमणीनाम् औत्सुक्यं, गिरिवरप्रभवरत्नादिवैभवेनैव वसुन्धरायाः स्वर्गपातालाभ्यामपि

प्रकृष्टैश्वर्य्यञ्च मन्दरस्य सर्व्वथाऽयं भोगभूमिरिति सूचितम्। तत्रा जनैरज्ञातमहिम्नः भवानीपतेरवस्थानं, मुमुक्षूणां संसारोच्छेदकतत्त्वज्ञानसम्पादनं चात्रेति धर्म्मञ्चैतत् मुक्तिश्चैतच्च सुष्ठु प्रतिपादितम्। ततश्च दिव्यस्त्रीणां धेनुकबन्धादिसुरतविशेषाः, प्रापाविस्फुरणं, मधुरो विहगकलध्वनिः, पुष्पितास्तरवः, छायाश्रिताः सरितः, सकमलं सलिलं, सरस-कोकिलकाकली, सुधाभवनं, तत्रत्यानां सुरसुन्दरीणां स्वर्गविस्मृतिश्च वर्णितानि।

वर्णितानि चात्रैव हिमाचले पार्व्वत्याः तपोऽनुष्ठानं, हरेण तत्परिणयः, मन्दराचलसौन्दर्य्यं, ज्योत्स्नासदृशी स्फटिकरजतभित्तिच्छाया, पुनरपि सरसं पार्व्वतीपरमेश्वरयोः विवाहमाङ्गल्यं, मणिकिरणावलीनाञ्च गगनमुपसर्पन्तीनां सम्पर्कात् सूर्य्यस्य सहस्रकिरणव्यभिचारित्वम्, अलकासन्निहितश्च भास्वरकैलासाचलः विविधरत्ननिचयमण्डित इति।

ततश्च नलिनीवनानां माहलद्युतिसम्पर्कात् नित्यश्यामलत्वं, तरूणाञ्च नित्यकुसुमस्तवकाचितत्वम्, अजनितपल्लवविकारित्वञ्च, मरकतमणीनाञ्च किरणेषु मृगीणां हरिततृणभ्रान्तिः, समीरणेरितानां पद्मरागाणां विवर्त्तेषु गगनस्थितेषु सुवर्णच्छत्रशोभा, कुधसि च गङ्गातटे अर्द्धनारीश्वरयोः उमामहेश्वरयोः सालक्तस्नानालक्तकपदचिह्नम्। सौरकिरणानाञ्च चलदनोकहान्तरनिर्गतरजतभित्तिमयूखैः संवलितानां दर्पणविम्बसाम्यं, हरवृषभस्य च शुभ्रकिरणाभिव्याप्तस्य वप्रक्रीड़ायां मण्डलितोर्द्धदेहस्य शशाङ्कमण्डलसाम्यम्। शरदि इन्द्रचापपरिमुक्तानामपि जलधरपटलानां विविधमणिमयूखसम्पर्कात् सेन्द्रचापभावः, भवस्य मूर्द्धन्यशशिकिरणकदम्बैः तमिस्रास्वपि अमृतधारावर्षिभिः श्यामलवनान्तस्य श्वैत्यसम्पादनं सम्यक विवृतमस्ति।

अर्ज्जुनस्य इन्द्रकीलप्राप्तिः ।—

अनन्तरञ्च इन्द्रकीलपर्व्वतं वर्णयितुम् आरभमाणो गुह्यकः सहगामिनम् अर्ज्जुनमाह—"अस्य खलु इन्द्रकीलस्य कन्दराः हिरण्मयाः, पर्व्वतोऽयं वासवस्य नितरां प्रियतमः, हिरण्मयीनां तटभुवां भासः वातेरितलतान्तःपातिन्यः विद्युद्विलसितानि अनुकुर्व्वाणा वर्त्तन्ते । वर्त्तन्ते चात्र भ्रमदैरावतस्य गण्डकषण कम्पेन निरस्तव्यालाः तन्मदवारिसिक्ताः मत्तमतङ्गजान्तर वर्ज्जिताः चन्दनतरवः । सन्ति चात्र मेघवृन्दसान्द्राभिः मर कतमणिप्रभाभिः मलिनीकृताः दिनकरकिरणनिचयाः" इति ।

अर्ज्जुनं प्रति गुह्यकस्य उपदेशः, तत्प्रस्थानञ्च ।

भव्याऽपि भवान् व्यासदेवस्योपदेशेन अप्रमत्तः गृहीत शस्त्रश्च अत्रैव इन्द्रकीलपर्व्वते तपस्यतु; बहुविघ्नानि च श्रेयांसि इत्युपदिश्य, "भवदिन्द्रियग्रामो मा भूत् कुपथगामी. भगवान् त्र्यम्बकः भवतः तपोऽनुष्ठानजनितश्रमादं वारयतु. लोकपालाश्च महेन्द्रादयः तपोबलं परिवर्द्धयन्तः भवतः शुभानु ष्ठानं प्रभूतमङ्गलेन योजयन्तु" इत्याद्याशिषा च संवर्द्ध्य धनञ्जयं, जगाम खलु निजधाम ।

धनञ्जयोऽपि तद्विरहकातरः क्षणमुत्कण्ठितः किमपि चिन्तयित्वा तमतिविपुलशोभम् आशुकार्य्यसिद्धिसम्पादकं महान्तं दुर्निरीक्ष्यम् इन्द्रकीलाचलम् अधिष्ठितवान् इति ।

---

# षष्ठ सर्ग।

—)०(—

अर्ज्जुनस्य इन्द्रकीलाधिरोहणम्।—

अथ तत्रभवान् सौम्यदर्शनः सत्पथप्रवृत्तस्य इन्द्रसूनुः अर्ज्जुनः, वासुदेवः पतगेन्द्रमिव, गङ्गासमीपमङ्गतं सुवर्णमानुम् इन्द्रकीलपर्वतम् आससाद। तत्र स्थिताश्च भूमिरुहाः भ्रमरनिक्कणव्याजेन उदीर्य्य जयध्वनिं, पवनधूननच्छलेन अवनमय्य च शाखाग्रशिरांसि वन्दिन इव तम् अभितः ववृषुः कुसुमानि। वायवश्च सुखस्पर्शाः प्रसार्य्य पङ्कजपरागान् विभिद्य भागीरथीवीचिसलिलानि, अनुकूलाः सुहृदमिव सुहृदः, भृशम् आलिलिङ्गुः। ध्वनयश्च वप्रपतितानां वन्धुरेषु स्खलनात् धुमधुमायमानानां निर्झरसलिलानां समपादयन् माङ्गलिकतूर्य्यकृतप्रमोदम्। जिष्णुस्तु तत्र गङ्गाऽम्भसि प्रबलप्रवाहवेगेन भग्नान् अभ्युन्नतान् देवदारुद्रुमान्, प्रणतिप्रवणाश्च सर्वत्र दृष्टान्तभूताः नितरामचतशरीराः वेतसी-लताः, तरङ्गोपरि भ्राजमानञ्च सरोजरेणु-रूषितं प्लवमानं कलहंसकुलं, तटप्रदेशांश्च परिणत-गजविभक्तान् मदसिक्तान् अलियुक्तान् मन्ददर्श। अभिननन्द च तत्र श्रुत्वा, हेममय-वप्रभासा समनां गतं नाथं रवमात्रश्रवणेन अनुसरन्तीनां पतिवियोगविधुराणां चक्रवाकवधूनां करुणरुतानि। उन्निनाय च तरङ्गोपरि रिङ्गमाणकिरणच्छटासन्दर्शनात् जलान्तर्निलीनविविधरत्ननिचयान्। अपश्यच्च पुनः उपलाहतोद्धत-तरङ्गच्युतफेनपुञ्जानि समीरणेरणवितताानि निमज्जदनेक-मतङ्गज-दानजल-क्षतचन्द्र-

काणि सरितां सलिलानि, तत्रैव च पुलिननिलीनां परिस्फुट-विवृतमुखीं पतदच्छमौक्तिकमणिनिकराम् अश्रुविन्दुवर्षिणीमिव शुक्तिकासन्ततिम्। सस्मार च निर्म्मले पयसि सफेनविद्रुमलता-पल्लवदर्शनेन दशनकिरणभिन्नशोणिम्न: दयिताधरपल्लवस्य। किं बहुना? तत्र गिरिनदीषु बहूनि अलौकिकानि दृष्टानि खलु धनञ्जयेन। तथाहि—कुत्रचित् सलिलैकदेशे गजसमानाकारा: ग्राहा:, क्वचित् समुत्पतन्तो महान्त: फणिन इति।

तत: समुत्तीर्य्य गङ्गाऽभिमुखगामिनी: शफरीपरिस्फुरित-चारुदृश: सर्व्वा: गिरिसरित:, अधिरुह्य च तमचलेन्द्रं, प्राप्य च कुसुमनिकरविनम्राग्रभागै: तरुभि: भूषिततलं पवित्रम् अचल-चूड़ाचुम्बितवनान्तभागं, दृष्ट्वा च बहुकुसुमफलयुक्तै: तरुभि: कृतसुषमं विजनवनम् इन्द्रकीलं धृततोष: अर्ज्जुन: समुत्-सेहे तप: चरितुम्।

अर्ज्जुनस्य तपश्चरणवर्णनम्।—

अथ यथाविधि निरुध्य चित्तवृत्तिं तपस्यत: अस्य अर्ज्जुनस्य नासीत् दुश्चरतपोऽनुष्ठानजनितखेद:। वशीकृतेन्द्रियग्रामस्य मैत्र्या-दिगुणोपेतस्य च तस्य नितराम् उपचितवती तपोजनितसुकृति-संहति:। स च प्रतिगृह्य विवेकबुद्धिं निवर्त्त्य च कामक्रोधा-दिभ्य: अन्त:शत्रुभ्य: चित्तवृत्तिम्, अनुभूय च शान्त्यानन्दं, परित्यक्तविषयासङ्ग: जपध्यानवन्दनादिभि: समाराधितवासव: प्रतिजग्राह स्वाभाविकागन्तुकाभ्यां वीरशान्तिरसाभ्यां समुद्-भासितं तेज:। मरकतमणिसमानकान्ति: शिरसि धृतपिङ्गल-जटाभार: स हि अरुणकिरणभातशिरस: तमालतरो: अनुचकार साम्यलक्ष्मीम्।

इत्थं तपस्यत: धृतायुधस्यापि तस्य तपस: प्रभावेण तदानीं सर्वे व्यालमृगा: परित्यक्तहिंसाभावा: समजायन्त।

वायवश्च शैत्यसौगन्ध्यमान्द्याढ्याः समभवन्, आतपाश्च निरतिशय-सुखस्पर्शाः, तरवः नवकिशलयभाजः विनताश्च, शयनीयभूमिभागाः तृणाङ्कुराः, घनरहिता अपि सघनाम्बुशीकरिणः नभोभागाः, रजोविनिर्म्मुक्तानि क्षितितलानि, अभीष्टफलसूचकानि च निमित्तकुसुमानि।

वनरक्षकाणां वासवान्तिके धनञ्जयतपोवर्णनम्।—

अथ अचिरेणैव अनन्यसदृशं तपोवैभवं दृष्ट्वा तत्रत्याः वनरक्षकाः वनचराः गुह्यकाः क्लेशमनुभवन्तः वासवभवनोद्देशं गत्वा तदनुमतप्रवेशाः प्रणम्य च वनरक्षणविघ्नभूतम् अर्ज्जुनतपोऽनुष्ठानं कथयामासुः।—"भगवन्! मघवन्! भवतः इन्द्रकीलाचले कोऽपि वल्कलसंवृताङ्गः सूर्य्य इव प्रकाशमानः सन्तापितभूभागः धृतबृहत्कार्म्मुकः अभिभूय च स्वचरितोत्कर्षेण तापसजनान्, तपस्तप्तमारेभे। तस्य च प्रभावमहिम्ना निखिलानि भूतान्यपि समनुगतानि। तथा हि—वाताः सुखस्पर्शाः, पृथिवी नवतृणाभरणा, नभो निर्म्मलं, रजःसु सम्पद्यमानेषु वृष्टिसम्पातः, वन्यमृगा अपि परस्परं त्यक्त-हिंसाः गुरौ शिष्या इव धृतानुरागाः, तरवोऽपि पुष्पिताः अवनताश्च, अचलोऽपि परवानिव, मन्यामहे। अतीवायासेऽपि तस्य श्रमरहितं महासत्त्वसूचकं शरीरं विजयशंसि, प्रभावस्य जन निसर्गभयोत्पादकः, तन्न जानीमो वयं स किं ऋषिवंशजः? दैत्यजा वा? इति अशक्ताः खलु तस्य स्वरूपं निरूपयितुम्। तदस्माभिः अज्ञानोपहतैः सहसा असदपि यदभिहितं तत् क्षन्तव्यमेव भवता" इति।

अर्ज्जुनस्य तपोव्याहननाय अप्सरोगणं प्रति वासवोपदेशः।—

अथ भगवान् वासवः गुह्यकेभ्यः विदितस्वसूनुतपोऽनुष्ठान-

वृत्तान्तः सम्यक् संवृतहर्षवेगः विदितभक्तिरपि अर्ज्जुनस्य पुनरपि तपोदार्ढ्यं विजिज्ञासुः आहूय च सुराङ्गनासङ्घातम् उवाच,— "भोः सुराङ्गनाः! भवत्यः एव मनोभवस्य सर्व्वविजयिनः अमोघाः अस्त्रभूताः, भवतीनाञ्च कटाक्षपातेनैव निरस्त महामोहानामपि तापसानां क्षीणानि भवन्ति तपांसि; युष्माकं प्रसादाच्च सर्वलोकश्लाघ्यत्वं स्वर्गलोकस्य", इत्यनेकं प्रशस्य "कलाभिज्ञैः गन्धर्वैः मिलित्वा तस्य तपः विघ्नयन्तु, नास्ति च तत्र अभिशापाशङ्का, यतः स विजयार्थी तपस्यति, नासौ मुमुक्षुः" इति च प्रबोध्य विससर्ज्ज।

अप्सरसां अर्ज्जुनान्तिके प्रस्थानोद्यमवर्णनम्।—

अथ सुरसभामध्ये सम्यक् प्रशस्य वासवेन विसर्ज्जिताः ताः स्तनभरविनमितदेहभाराः अचलस्थलनलिनीसमसुषमा अप्सरसः प्रीततमाः सत्यः अभिवन्द्य देवेन्द्रपदारविन्दं देव सभामध्यगतं वासवमपि मोहयन्त्यः अर्ज्जुनं प्रति प्रतस्थिरे।

## सप्तमः सर्गः।

---)o(---

अथ गन्धर्व्वसहितानाम् अप्सरसां सशैलगमनोपवर्णनम्।—

अत्र तावत् सुरकामिनीनां महेन्द्रालयात् अर्ज्जुनसमीपं प्रस्थानं उपवर्णयितुम् अदर्शयत् खलु प्रथमं रथगजसहितानां वासवसचिवानां तासां रक्षणार्थं अनुसरणक्रमं, मङ्गल मृदङ्गानाञ्च मन्द्रध्वनिं, सौरपथम् अतिक्रम्य अत्यद्भुं गच्छन्तीनाञ्च आतपतापजनितखेदराहित्यम्, अध्वगमनश्रमेण च नयनो

त्पलानां क्लिष्टत्वम्, आतपतापेन कपोलेषु लौहित्यं, वियति विसर्पताञ्च तन्नाथानां स्यन्दनानां देवप्रभावेण हयाकर्षणेन च नेमीनामसति विवर्त्तनेऽपि विमानवत् अवस्थानम्। तदा नाञ्च तासां नितराम् अजनि पथिगमनश्रमेण खेदोपगमः, उच्छ्रितानि च वियति समुन्नततराणि ध्वजांशुकानि; आसीच्च रामाणां सुकुमारतरे शरीरे आतपतापसहत्वम् अवलोक्य विस्मितानां गन्धर्वाणां चित्तेषु विधातुः विचित्रं सृष्टिनैपुण्यं; सिन्दूरैः अलङ्कृतानां हैमदामसन्दानितानां मदधारावर्षिणां सुरगजानाम् अरुणकिरणवितानैः चपलास्फुरणकृतशोभे जलद जाले तदा सादृश्यं समजनि, इत्यादि उपवर्णितवान् महाकविः।

ततश्च सूर्य्यमण्डलपर्य्यन्तदेशात् अतिदूरं दिग्वधूनां विरचितैकवेणीमिव मन्दाकिनीं क्रमेण समगच्छन् खलु महेन्द्र बलानि। तत्र च मन्दाकिनीतरङ्गसङ्गशीतलः विधूतपङ्कज किञ्जल्कः सुखसमीरणः तेषां पथिगमनखेदम् अपनिनाय। आसीच्च तेषां विमानसम्पर्कात् तटरहिताया अपि सुरनद्याः तीरप्रान्तेषु प्रवाहस्खलनमिव, ग्रहपथनिर्गतानाञ्च विमानानां तोयदोपरि सञ्चारः। तत्र च दिग्गजदन्तनिर्भिन्नाः सजलजलदा अभिवर्षन्ति स्म भृशं सलिलानि। वायुना अपसारितजघनां शुकानाञ्च सुरकामिनीनां मणिमयमेखलांशुजालेन सञ्जातं पुनरधोवसनावरणम्। मेघाश्च क्षालयन्तोऽपि भालभूषणतिलक विशेषान्, शमितपरिश्रमखेदाः बहु मेनिरे खलु सुराङ्गनाभिः। विमानगत्या विलुप्तवासवधनुःशोभानामपि निर्ज्जलमेघानां सुरकामिनीजनाङ्गभाजां विविधरत्नानां विचित्राभिः प्रभाभिः भूयोऽपि समजनि इन्द्रचापशोभा इत्याद्युपवर्णितम्।

अथ अप्सरसामिन्द्रकीलप्राप्तिः ।—

अनन्तरञ्च तत्र अर्ज्जुनसकाशे गत्वा "किमस्माभिः विधेयम्" इति कृतालापैः महेन्द्रबलैः विहगसञ्चारमार्गम् अतिक्रम्य समाजग्मे खलु मेघाच्छादितसानुः सानुमान् इन्द्रकीलः ।

अथ तस्य अचलराजस्य शिखरप्रदेशे तूर्य्यध्वनिपुरःसरम् अविरलम् आगतानां सेनानां संहतिः मुखकमलैः श्वेतातपत्र रम्यफेनपुञ्जैः रेजे नितराम् आकाशनदीव । तुरङ्गाश्च रश्मि संयमनसङ्कोचितग्रीवाः अवनतपूर्व्वकायाः जलदमेतुमार्गेण अवपतन्तः कथंकथमपि क्षितितलमानिन्युः विमानान । तट चलाभिमुखम् अवपतन्तः दिग्गजाः सजलजलदमध्यस्थितत्वात् निष्कम्पपक्षाः जलधिशायिनः मैनाकादिपर्व्वता इव भृशं रराजिरे । अश्वानाञ्च गगनचारित्वात् समविषमेषु सर्व्वत्रैव आरोहावरोहविशेषाभावेन समाना खलु खरपदवी जाता । मयूराश्च तत्राधित्यकासु स्थिताः निर्झररवमिश्रितं रथघर्घरध्वनिं स्तनयित्नुस्तनितमिव विशङ्कमानाः सञ्जाता नितराम् उत्कण्ठिताः उन्नतग्रीवाश्च । तत्र च वप्रजलधारा अचलनितम्ब स्थितानां मरकतमणीनां प्रभासंवलिताः संवृत्ताः । सुरगजाश्च पर्व्वतीयगजानां मदजलगन्धमुपघ्राय भृशं क्रुद्धा अपि स्वकरिणभिः समाकृष्टचित्ताः कथमपि शान्ता अभवन् । सा समग्रा वाहिनी रथचक्रसमुत्थपार्थिवरेणुभिः छुरिताः सर्व्वतः वनानि समाक्रान्तवती ।

अप्सरःशिविरसन्निवेशनम् ।—

अथेन्द्रसचिवाः गन्धर्व्वाः गङ्गासमीपे समुज्ज्वलमणिमय-सैकतां च्युतकुसुमाचितां सान्द्रशाद्वलां भूमिम् अध्युषिताः विनिवेश्य च शिविराणि, जनयित्वा च गिरेः समधिकचारुतां तस्थुः ।

तत्र च सुराङ्गनानां सम्भोगेन सुरभिकुसुमयुक्ताः तरवः, विजनानि स्थानानि, नवकिशलयशोभिताश्च व्रतत्यः, सम्प्रति साफल्यम् प्रापुः। अश्वश्रान्तोऽपि सुरवधूजनः पुरतः भुजङ्गनिश्वासधूत-किशलयान् चन्दनतरून् सेव्यानपि सहसा परितत्याज।

तत्र च साहिनो गत्वा गजानां ध्वजान् कुथकम्बलानि तनुत्राणानि च उन्मोच्य शमयामासुः गमनखेदम्। गजैश्च पथिश्रमजनितां विहाय निद्रां परित्यक्ते शयनीये, मद लोलुपं भ्रमरकुलं क्षणं विलीनं जातम्; उत्थाय च ते वनगज-दानगन्धेन परपारं प्रति सोत्कण्ठाः गङ्गाप्रवाहरुद्धमार्गाश्च मूर्धानं विधुन्वन्तः अङ्कुशप्रहारोद्यतं यन्तारमपि न बहु मेनिरे। जलपानार्थम् आनतपूर्वकायस्य कस्यचित् करिणः हस्तिपकभयेन शनैः प्रक्षिप्यमाणानां पीतशेषाणां जलानां शीकरः मदस्राविषु कपोलेषु मद इव विरेजे। पिपासितेन केनचित् मतङ्गजेन सलिलसमीपं गत्वा वन्यगजमदगन्धम् उपाघ्राय कोपात् परपारनिक्षिप्तदृष्टिना तत्यजे शीतलमपि पानीयम्। केचिच्च दन्तावलाः क्रीडारताः गिरिनद्यां, स्वमदभारभेण तस्याः सलिलानि, कमलरेणुभिश्च निजगण्डदेशान् शोभयामासुः। नदीजलञ्च गजभग्नकमलरेणुपिशङ्गं सेनापरागेण च लोहितेन अनुरञ्जितं सत् माञ्जिष्ठं वसनमिव भृशं विरेजे। सन्दानित कन्धराः शृङ्खलितपश्चात्पादा मदस्राविणः कतिपये द्विरदाः साङ्ग विक्षेपम् अगुरुवनेषु संसक्ताः जलवर्षिणः गण्डशैला इव दृश्यन्ते स्म। वायवश्च तत्रत्याः गजमदगन्धमया बभूवुः। समाकर्ण्य च घनघोषगम्भीराणि बृंहितानि तेषां स्वभाववैरिणः मृगाधिपाः सञ्जाताः प्रबुद्धाः क्रुद्धाश्च, अनूपदेशस्थिताश्च चकोरनीलकण्ठाः नितरां सम्भ्रान्ताः, तरुणाश्च वनजातानां शाखासु निषण्णपरिक्षुद्रैः

शिविरसन्निवेशै:, परिश्रान्तवधूजनसन्निधानैश्च आसीत् तत्र समग्रा पुरोपजनिता शोभा। एतानि चात्र वर्णितानि।

## अष्टमे सर्गे।

—)०(—

अथ गन्धर्वाणाम् अप्सरसाञ्च कुसुमावचयक्रीडादिवर्णनम्।—

अथ गन्धर्वगणसनाथा: ता: सुराङ्गना: वनानि विहर्त्तु-कामा: सत्य: स्वेच्छोपनिर्म्मितमन्दिरशोभितं विचित्रमणि-मयूखसमुद्भासितं विविधतोरणान्वितं परिहृत्य चारु नगरं, विशन्त्यश्च निविड़ं वनगहनम्, उद्भास्य च स्वदेहकान्ति-च्छटाभि: अचलवीरुध:, चपला इव शोभमाना आसन्। अथ विमानमण्डलात् सलीलम् अवतीर्य्य भूमिभागे विविधकुसुम-स्तवकशोभिनां शाखिनाम् अभ्यन्तरेषु विचरन्त्य: लताभ्रान्त-भ्रमरचुम्बितबाहुलता: ता: शिलीमुखै: पायमानस्तवकसन्ततिं चलकिशलयाम् अशोकयष्टिं गाढ़दष्टौष्ठपुटां विधूनितकरपल्लवां स्वामिव विलोकयन्त्य: आसन्। तासु च कामपि कश्चित् दयित: सरसमाह,—"अयि मानिनि! नवपल्लवलोभ-नीयौ करौ धुनाना वृथा परिश्रमं मा कुरु; यत: कल्पलता-भ्रमेण समागता: भ्रमरा: भीता: भवन्ति" इति। प्रणय-कुपितां कामपि प्रबोधयन्ती कथयति स्म सखी,- "कोपं विहाय दयित: अनुगम्यताम्, अन्यथा ते पश्चात्तापो भविष्यति." इति।

इत्थं सलीलम् उपयान्त्य: सुराङ्गना: अधित्यकासु काशकुसुम-परिशोभिततीरभागां सारसरसनमुखरितां वनस्रोतस्विनीं, मौक्तिकसरानिव जर्ज्जरकणनिर्झरवारिबिन्दून्, अलिकुल

मङ्गलकुसुमशोभितां लतासन्ततिं, करिकपोल-कषणमद श्यामलकचौन् चन्दनतरूंश्च पश्यन्त्यः नितरां समुल्लासिताः। कदाचित् क्वचन प्रदेशे स्वकरग्राह्यमपि मनोहरं कुसुम निचयं त्यक्त्वा कान्तप्रियतार्थं दयितदीयमानमेव श्रयन्तीषु:। कुत्रचित् च कापि कामिनी कुसुमदित्सना दयितेन सपत्नीना-मर्पयेः समाहृता अकथयन्ती किञ्चिदपि वाष्पं विमुञ्चन्ती आसीत् भूमिलिखनतत्परा। काचन प्रगल्भा कान्तस्य आलापसमये तदभिमुखी तत्र च दत्तदृष्टिः परिशिथिलनीविबन्धा स्रस्तं वसन मपि न परिहितवती, न वा विदित पुष्पेषु वृथा करार्पणम्। काचिच्च पल्लवसंहतिगुम्फितं प्रियदत्तं कुसुमशेखरं शिरसि समर्पयन्ती करेण ताड़यामास कान्तं जघनेन। अपरा च अथव लेश नितम्बेन, निर्मुक्तवसनेन स्तनद्वयेन, रोमराजिपरि-शोभिना उदरेण, शिथिलबन्धनेन केशपाशेन, अनावृतबाहुमूल प्रदर्शनेन च जहार स्वदयितमानसम्। अन्या च स्वनयन निपतितकुसुमरजः मुखमारुतेन विदूरयितुम् अशक्नुवन्तं कान्तम् उरसि पयोधरेण निजघान। जाता खलु वन्यकुसुम प्रसाधनेन कस्याश्चित् महीयसी कान्तिः। काचन बभञ्ज पल्लवम्, अर्पयामास च स्तनयोः पुष्पपरागम्। तदानीञ्च मानुमार्गात् कथमपि वहिः निःसरन्तीनां तासां सुरसुन्दरीणाम् ऊरुभारसमाक्रान्तान् पल्लवलोहितान् मन्दगतीन् चरणान्, चन्द्रहारमणिशोभितनितम्बयुक्तानि अध्वश्रमेण च सगौरवाणि जघनानि, स्तनभारनमितानि नाभिपङ्कजरुचिराणि त्रिवलि-युक्तानि च उदराणि, स्वेदलव-ललितानि ईषदुन्मीलितलोचनानि कमलनिभानि च मुखानि, सविस्मयं निर्वर्णयन्तो गन्धर्व्वाः लेभिरे खलु नूतनमिव दर्शनसुखम्।

अथ तासां गन्धर्वसहितानां जलकेलिः ।—

इतश्च सर्गपरिसमाप्तिं यावत् जलकेलिवर्णनम् । तत्र च चटुलमीनचपलपङ्कजां तीरसङ्गततरङ्गमालां कलहंसनादिनीं सरिद्वरां भागीरथीम् आसाद्य ता एव सुराङ्गनाः निषेव्यमाणाश्च खलु कमलसौरभयुक्तैः सलिलकणवाहिभिः तरङ्गवातैः, निरस्य च सलीलगमनैः कलहंसगतिं, नितम्बैश्च पुलिनशोभां, दीर्घलोचनैश्च सरोजश्रियं, सङ्घातच्युतचटुलमीनकुलाकुलां सहचरैः गन्धर्वैः प्रथममवगाढ़ाम् अवगाह्य च सलिलमल्लतिं, गुरुनितम्बनोदितैश्च तरङ्गसङ्घातैः अपसार्य्य कङ्कसंश्रयान् सारस-समूहान्, विधाय च पङ्किलानि स्वच्छनीयानि, भृशं चिक्रीड़ुः । तरङ्गताड़नेन च तासां विक्षिप्ताः केशपाशाः, लोलितानि माल्यानि, विलुप्ताश्च अङ्गरागाः, नखक्षतानि च विस्पष्टलक्षितानि समभवन् । तत्र कस्या अपि नलिनीवननिलीनायाः लोचनयोः भृङ्गसङ्गतपङ्कजभ्रमः, केशेषु च निःशब्दनिस्पन्दद्विरेफसम्भ्रमः, दशनशोभितस्मेराननै च विकचकमलभ्रान्तिः समजनि । काचन सपत्नीसन्निधौ प्रियेण परिधापिताम् उरःस्थलस्थितां जलाविलामपि न तत्याज मालिकाम् । विहरन्तीनाञ्च सलिलेषु तासां क्षालितम् अञ्जनं, जातञ्च नयनेषु लौहित्यं, शिरोभूषणञ्च नितरां मृदितं, विगता च पत्रलेखा, अधरपल्लवाश्च अलक्तरागशून्याः । किं बहुना ? जलक्षालनेन विस्पष्टलक्षितानि नखक्षतानि सपत्नीनयनदाहकराणि समभवन् ।

शुभाननानां मुक्ताहारपरिशोभितानाम् अकृत्रिमाणां सुराङ्गनानां सरोरुहसङ्गतानां विधूतफेनपङ्क्तीनां क्षालितघृतकुङ्कुमरागाणाम् ऊर्म्मिनिचयानाञ्च नासीत् तत्र किमपि वैलक्षण्यम् ।

अङ्गनाकरताड़ितानां मृदङ्गमन्द्रध्वनिञ्च कुर्व्वताम् अम्भसां पयो धरास्नेषमम्पर्केण तालयुक्तानां मनोरमं नृत्यमिव समजायत। अन्यकानि च जाह्नवीतोयानि सरोजचारुभिः तासां सस्मितमुखैः अनङ्गनानि जातानि। उरःस्थलेषु च परिस्फुरन्मीनविघट्टनेन लोचनानि तासां वामविलोलितानि, बाहुपल्लवाश्च विकम्पिताः जाताः। मीनाभिभवत्रासेन च प्रियमालिङ्ग्य अभवत् प्रमोद जननी काचित् मानिनी। जलावगाहनेन च पर्य्याकुल मूर्द्धजसंवृतानि वदनसरोजानि भ्रमराक्रान्तसरोजानीव रेजुः। अन्या च अगाधजलसन्तरणेन जातसम्भ्रमा करौ धुनाना प्रियाङ्गसंस्लेषमवाप मानिनी। अपरा च प्रियाञ्जलि जलेन सिक्ता सलीलं करौ विधूनयन्ती निश्वसती च वेप माना जाता।

कापि प्रथमं प्रियेन जलेन ताड़िता पुनः अनु नीता सती समुल्लासितमुखपङ्कजा सञ्जाता। अपरा च मदनार्त्ता जलसेचनोद्यतं करं प्रियेण विधृतं श्लथनीविबन्धना अपि मेखलाविजड़ितवसना जाता। कस्याश्च नयनयुगलं सदानीं निरञ्जनमपि तिर्य्यग्दर्शनभूषितम्, अयावकोऽपि ओष्ठपल्लवः प्रवेपितः; अतिलकमपि ललाटपट्टं रेखामण्डितं; दीर्घसमविधे च निमज्जन्तीनां कासामपि नयनानि निमीलन्त्यपि लीलानि, वेपितानि अङ्गानि, निश्वासोत्कम्पितानि च स्तनयुगलानि, श्रमेण कामेन वा, इति सन्देहास्पदानि सम भवन्।

अन्या खलु सपत्न्याः पश्चात् कान्तेन संसिक्ता अश्रु कल्पपरायणा सान्त्वनेरपि न सन्तोषमवाप। तासां विहार

सप्तर्षिगण सलिलानि समन्तात् प्रसृतानि ऊर्मिभिः अति क्रान्ततटानि च संवृत्तानि।

इत्थं विघटय्य चक्रवाकयुगलानि, विलोप्य च पङ्कजवनशोभाः ताः सुराङ्गनाः तारकागणभूषिताः रजन्य इव विरेजिरे। गङ्गातोयानि च तदानीं तदङ्ग चन्दनरसरञ्जितानि त्रुटितभूषणमणिप्रभाभासुराणि ऊर्मि युतानि च नितरां नयनमनोहराणि लोकानां संवृत्तानि। इति।

## नवमे सर्गे।

—)o(—

सायंवर्णनम्।—

अथ तत्रभवान् महाकविः सूर्य्यास्तमनवर्णनमारभमाणः प्रथमं तावत् नीरविहारप्रतिनिवृत्तानां सुराङ्गनानां मानसानि रिरंसु तया कलुषितानि संवीक्ष्य इव भगवान् मरीचिमाली अस्तो न्मुखः सन् सागरोपान्ते विलम्बमानः अभूत्।

तदानीञ्च भानुमान् स्रस्तकिरणः पश्चिमाशामाश्रयन् दिवः सनाथकलाग्रयष्टिरिव शुशुभे; संवृत्तश्च पङ्कजमधुपानेनेव नितरां लोहिताङ्गः, आविरभूच्च चक्रवाकहृदयेषु विरहसन्तापः, दिशि च प्रतीच्याम् अर्द्धास्तमिते सूर्य्ये आश्रयव्यसनेनेव न शुशुभिरे किरणजालानि; सौधजालनिपतितानि च तानि सायंमण्डनार्थं त्वरयन्ति वनितासु कान्तदौत्यमिव कुर्वन्ति स्म। आताम्र कोमलकरैः अस्ताचलसानुद्रुमान् आसाद्य च भानुरयं शैल

गहने, जलधौ, धरण्यां वा पिपतिषुः इति समजनि सन्देहो जनानाम्। पततां पतत्रिणां कलरवसङ्कुलः सायंसमयः अनुदिनसन्ध्यारागतया लेभे खलु प्रभातसादृश्यम्। सन्ध्यारागरञ्जिता च पश्चिमाशा विद्रुमजालमण्डितस्य जलधेः अनुचकार शोभाम्। सन्ध्याऽपि प्रणतशिरसः सदेकाग्रचेतसः उपासीनान् विहाय सहसा अपससार। अन्धकारेण च दिगन्तराणि सशैल-वनोपवनानि नितरां व्यानशे।

तदानीञ्च भानुमता कुक्षिगतीकृतानीव भुवनानां कृत्स्न-वस्तूनि अनुपलभ्यमानानि संवृत्तानि। कालस्य दुष्परिहारतया मिलनमिच्छूनाम् अपि चक्रवाक-मिथुनानाम् आपतितो तीव्रतरः विरहसन्तापः। चक्राङ्कविरहसन्दर्शनेन व्यथितमिव कमलिन्याः मुखकमलम् अवननाम। घनतिमिरेण च रञ्जिता इव तरुशैलाः, आच्छादितमिव गगनतलं, समीकृता इव धरणी, विलोपिता इव दिशः, मलिनीकृतानीव पङ्कजानि, विहितविस्पष्टतारकमिव नभः सहसा संवृत्तानि इत्यपवर्णितवान्।

चन्द्रोदयवर्णनम्—

अपरतश्च कतकीकुसुमकेसरविशदाः चन्द्रकिरणाः समन्तात् दिग्दिगन्तराणि व्याप्तानि चक्रुः। प्राची च दिक् चन्द्रोदयेन विगलितान्धकारा लम्भिता खलु धवलिम्ना। नीले नभसि प्रसृतं हिमशुभ्रमिन्दोः किरणजालं वारिधिजलान्तः प्रविष्टं गङ्गासलिलमिव विराजते स्म। कुत्रचिच्च शशिकिरणविक्षिप्तः पुरतः ध्वान्तनिचयः हरधूतकेशपाशवत् चकासे। दिगन्ताश्च तमो विनिर्मुक्ताः कृतोच्छ्वास इव संवृत्ताः। कुत्र च हिमकरेण शुभ्रकलया विक्षिप्तम् अन्धकारम् आदिवराहसमुद्धृत

भूमण्डलमिव संवृत्तम्। उदयरागताम्रश्च हिमांशुः पूर्व-पयोधेः कनक-कलस इव उज्जगाम। जाता खलु रजनी चन्द्रोदयसुप्रकाशा सम्यगभिन्न-तिमिरा विमुक्तावगुण्ठना व्रीड़ावत नववधूरिव।

किन्तु एतदतीव विस्मयकरं, यदिह शशधरेण स्वकिरण-भासा गगनं नातिदीपितं, न च गिरिकाननेभ्यः तिमिरमुत्सारितं, न वा दिगन्ते प्रसारिता दीधितिः, तथापि रजनि रजनि हिमभासा कृतभूषणा। कलहान्तरितानां मान भञ्जनात् वाष्पकलुषान् दृष्टिपातान् कथञ्चिद् स्वीकृत्य भीतभीत इव चन्द्रमाः कथंकथमपि गगनदेशे समुदियाय। तारका वधूसमालिङ्गनमङ्क्रान्त इव शशिनि उदयरागः सुतरां विरेजे। मन्दरान्दुग्धक्षीरोदधिरिव श्यामलकाननानि, सान्द्राण्यपि तमांसि नुनोद चन्द्रकिरणनिचयः। चन्द्रिकाचयनिर्भिन्ना च वृक्षच्छाया मल्लिशुभ्रपुष्पचिता वासभवनभूमिरिव भृशं ददृशे। चक्रवाकमिथुनञ्च दिवा दिनकरकिरणतप्तं सम्प्रति शीतलम् अपि शशिकिरणकदम्बं न सेहे द्रष्टुमपि।

तदा नैशपवनश्च कणवाही विकचकुमुदगन्धमादधानः निलीनभृङ्गं काननोद्देशं मन्दमालोड़यन् वहति स्म। कलङ्कमनाश्य शशधरः मन्मथाभिषेचनाय यामिन्याः संस्थापितः मनोलोचन-रजतकलस इव भृशं दिदीपे। अनङ्गोऽपि तदानीं शशिमयूखसहायः विश्वविजयि चापमाददे।

अथ सुरतवर्णनम्।

ततश्च सुराङ्गनाः तत्तदुद्दीपनाद्दीपितकामाः सुरतसमयोऽयम् इति विगणय्य सज्जितमपि भवनं पुनः मण्डयितुम्, अधिगत वृत्तान्ता अपि पुनः दूतीव्यापारं, भूषिता अपि पुनः प्रसाधनञ्च

कत्तुम् अभिलषन्त्य: विरहातुरा: तदानीं केवलं मनसि धृत-प्रियसमागमा: सञ्जाता:।

अथ पुन: प्रियविरहं सोढ़म् अशक्नुवाना: ता: स्वयमेव कान्तभवनं प्रस्थिता:। गमनसमये च तासां पुलकाञ्चित-कपोलं विलुप्तपत्रलेखं मुखकदम्बं पूर्णचन्द्रविम्बानुकारि सम जनि। काचन कलहान्तरिता कान्तमानेतुं स्वसखीमनु नयन्ती प्रियजनेन सहसा सङ्गतवती। कासाञ्च नवसङ्गमोद्गत घर्म्मपरीतानां कान्तोरसि निपतन्तीनां मण्डनं जातं खलु ललितमण्डनता। तदाऽवसरज्ञ: किल मदन: सीधुपानविधु राणां कान्तसङ्गतानां व्रीड़ां शिथिलयन् मानमखण्डयत्। कस्यचित् दयितस्य "तव गमनमार्गे दृष्टिपात:, करन्यस्तं कपोलं, जीवितमपि त्वदधीनम्, अतो नास्ति त्वयि मान:" इति दूतीवाक्यजातं नितराम् अभिनवप्रमोदमजनयत्।

अथ प्रकटसुरतवर्णनम्।—

लज्जाऽपि तदानीं नायिकाया: प्रियजने नयनकमलं साचि सम्पाद्य दयितवक्षसि पतनं प्रतिबध्य च कामपि प्राप भूषण-ताम्। कापि रमणी प्रणयकुपितं प्रस्थितञ्च कान्तं बाष्पमोक्षणेन निवर्त्तयामास। काचन बाष्पाकुललोचना ईर्ष्याविमुखिता तनरोमविभेदच्छलेन पश्यत: प्रियस्य अभिमानाशङ्काम् अपनु नोद। कापि दयितेन प्रसह्य चुम्बितमुखकमला व्रीड़या सह विगलितनीविबन्धना जाता। कयाचित् प्रियतमाकृष्टवसन भारया दृष्टिप्रतिषेधार्थं दयितं स्तनोपपीड़म् आलिलिङ्गे। तदानीञ्च आलिङ्गनचुम्बनेषु नखदन्तक्षतान्यपि सुखकराणि आसन्। कासामिह सुरकामिनीनां वेपमानकरकिसलयानि, निमीलिताईनयनानि, सीत्कृतानि च कामास्त्रभूतानि संवृत्तानि।

अथ पानगोष्ठीवर्णनम् ।—

अथ तदानीं मधुपानात् मानभञ्जनं जातं, वाक्कलहो निवृत्तः, मदनोऽपि कृतकार्य्यत्वात् नेषुं धनुषि सन्दधे। दयितेन सादरम् अर्पितां वारुणीं रसयित्वा कामिन्यः गलितापत्रपाः उपगतमोहाश्च जाताः, स्वयमादाय पीयमानस्य दयितेन सादरं प्रदत्तस्य तेन च सह निपीयमानस्य आसवस्य प्रतिवारम् अभिनव एव समजनि स्वादः। प्रियजनोऽपि दयिताननदत्तं मधु मस्तृह्रं निपीय नितरां मुमुदे। प्रमदाजनोऽपि कान्तदन्तपदमण्डनशोभां वारुणीं बहु मेने। मधुपानाच्च तासां विलोचने रागोत्पत्तिः, अधरेभ्यश्च लाक्षारागनिवृत्तिः, मध्वानयोश्च परस्परं गन्धसंक्रान्तिः सञ्जाता। आकर्णविश्रान्तनयनकमलैः व्यर्थीकृतानि दयितानां कर्णासितोत्पलानि सम्प्रति मदरागात् वर्णविभेदेन सार्थकानि संवृत्तानि। मदिरायाः भृशमास्वादनात् वीतरागोऽपि कामिनीनाम् अधरपल्लवः कान्तदन्तपदलाञ्छितः पूर्वतोऽपि सान्द्रतामागतः। सर्वाङ्गापि मदकान्तिः आताम्रलोचनेषु, अरुणितकपोलतलेषु, मुखकमलेषु च दर्पणेष्विव नितान्तं ददृशे।

वारुणी खलु रमणीनाम् अधोवासः शिथिलयन्ती, लज्जां विदूरयन्ती, अस्थानकोपितान्यपि तदानीं गुणपक्षे सन्निवेशयन्ती शास्त्रप्रतिषेधरूपं दोषं सुतरां ममार्ज्ज। मधुपानमत्ताश्च सखीसमीप एव कान्तवपुषि निपेतुः। मत्ततया च तासां नयनानां वाक्यानाञ्च विकृतिः, आलिङ्गने च भुजशैथिल्यं संवृत्तं; विगलितश्च कान्तेषु प्रणयकोपः, मदनोऽपि कृतावसरः भृशमुद्दीपितः। काश्च सुराङ्गनाः मूढ़ाः "अस्मान् विहाय भवेयुरन्यासक्ताः प्रियतमाः" इति मदिरां भृशं न पपुः।

पुनः संक्षेपतः सुरतवर्णनम् ।—

अथ दयितानाम् उदियाय सहसा सम्भोगाभिलाषः, जातश्च सुतरां चुम्बन-ताडन-मणित-सीत्कार-पुरुषायितादिरूपो रतिव्यतिकरः ।

प्रभातवर्णनसंक्षेपः ।—

अथाप्सरोगन्धर्वाणां सुखमसहमानेव सहसा प्रभातप्राया रजनी । वैतालिकाश्च उद्बोधनमङ्गलध्वनिं कुर्वन्तः बोधयन्ति स्म । ततश्च निद्रया अपगतरतिश्रमाणां सूक्ष्ममङ्गलध्वनिभिः प्रबोधितानां तासां भूयोऽपि सुरतानि जनितानि ; प्रभातवायुश्च दयितानां सुरतखेदम् अपनुद्य संवाहयन्निव माल्यमदिरापरिमर्दसुरभिः मन्दं वहति स्म । विलासिनीनाञ्च अपगतपत्रतिलकादिमण्डनान्यपि मुखकमलानि मदेनैव नितरां भूषितानि । नखदन्तक्षतादिकान्तिरपि तासां प्रियसखीव सम्भाव्य विरहविह्वलं हृदयसरोजं कथंकथमपि धारयामास । इति ।

## दशमे सर्गे ।

अर्जुनप्रलोभनार्थम् अप्सरसां तत्समीपगमनवर्णनम् । –

अत्र प्रथमं तावत् धनञ्जयप्रलोभनार्थं आगन्तुकरतिपरिमलादिसहजशोभासम्पन्नाः समग्रवसनभूषणशोभमानाः रम्यहावाः सुरललनाः स्वशिविराणि परिहृत्य प्रचलन्त्यः द्रुतपदमपि, पृथुनितम्बतया जाताः खलु शिथिलपदसञ्चाराः ।

तासाञ्च चरणतलनिहितसरसयावकरसरेखाङ्किता अकृशित तृणोलपा धरणी रमणीया संवृत्ता। रसनागुणरसनमिलितानि च मञ्जीरशिञ्जितानि नगविवरेषु प्रतिरवविततानि विदधुः किल काननानि मुखरोत्कण्ठितकलहंससारसानि। ततश्च ताः काननेषु फलकुसुमसम्भृतानां तरुनिचयानां फलकुसुमावचयं, हिंस्रैः सह विचरतश्च हरिणकादीन् समीक्षमाणाः शङ्कातङ्कितमानसाः मुनिसान्निध्यम् अनुमीयुः। तस्य च मुनेः प्रभावात् सुर सचिवाप्सरसः हीनतेजसः सञ्जाताः।

अथ सैकतेषु ध्वजचक्रलाञ्छितानि पदचिह्नानि, निसर्गचारुणाञ्च तरुवीरुधां फलकुसुमावचयेऽपि रमणीयमभृद्धिमम्पदं विलोकयन्त्यः विविदुः नितरां मुनिप्रभावम्। ताभिश्च सजलवसनार्पण पल्लवग्रहणादिभिः निर्विद्यमानाः कृशोदरः कृशं विरेजे।

अर्जुनवर्णनम्।

अनन्तरञ्च भागीरथीतटे वसन्तं शशधरमिव गगनविसारिभिः मयूखैः, एकत्र स्थितमपि सकलमेव अचलशिखरं व्याप्नुवन्तं विधृतवृहज्जटाकलापम् आकारसदृशचेष्टं चेष्टासदृशारम्भम् आरम्भसदृशतपःसमृद्धिसम्पन्नं यम नियम कुशाङ्कुर्यष्टिं विजयार्थं तपश्चरन्तं मुनिमपि त्रिदशेन्द्रवत् भ्राजमानं, कृशमपि शैलसारं, शान्तमपि दुरासदं, रहसि स्थितमपि सचिवावृतम् इव विलोक्य धनञ्जयं, विजयमात्रफलमिह तपोऽनुष्ठानं विफलमेव मेनिरे; मेनिरे च महेन्द्रस्यापि विलोभितसकलमुनिदानवस्य सुराधिपत्यमपि वहुमानहेतुम्। मुनिवञ्चनप्रवृत्तानाञ्च तासां धनञ्जयदर्शनेन सहसा उदियाय कामभावः। तदानीञ्च गन्धर्व्वाः कृतवन्तः मृदङ्गवीणारावं, सर्व्वर्त्तुसमागमश्च युगपत् समजनि।

4

ऋतुवर्णनम् ।—

तथाहि नभसि सजलजलधरसमागमः, विद्युत्स्फुरणं, गभीरमेघमन्द्रध्वनिः, मालतीमुकुलप्रकाशः सम्भेदे। वर्षापातेन च तपोवनभूमिभागाः आर्द्रीकृताः। वातश्च ककुभकुसुम-सुरभिनः प्रतिदिशम् आकुलयन्निव सकामं जीवलोकं वहति स्म ; आविरभूच्च कोमलकोकिलकाकली। मयूराश्च मदमधुरं विनेदुः, मलयानिलः नितरां मनो जहार। ततश्च धूतपल्लवावलिः विकचकुमुदसम्भारा गृहीतबाणा सरोजपरिवृता शरत् घन-समयेन सम्मिलिता। अपरञ्च समद-शिलीमुखरुतानि हंसनादैः, कुमुदवनानि कदम्बपुष्पवृष्ट्या सङ्गतानि भृशं विरेजुः। केतकी-प्रियक-कुसुमेषु षट्पदावली धृतप्रेमा। इन्द्रगोपकीटविशेषाश्च विकसितबन्धुजीवकुसुमं विहाय शाद्वलेषु शुशुभिरे। प्रकाश-यंश्च प्रियङ्गुकुन्दकुसुमानि, सम्पादयंश्च सुगन्धगन्धवाहं, प्रादु-र्बभूव अकालहेमन्तः। तत्र च लवलीलतानां समेधिते पुष्पविकाशे, वहति च लोध्रकुसुमसुरभिवनवाते, नास्य मुनेः मनो विकृतमासीत्। ततश्च हिमागमात् सहकारेषु कुसुमानि सवि-रलं संवृत्तानि। सिन्दुवारोऽपि कतिपयकुसुमसुकुमारः। वसन्तलक्ष्मीरपि गिरिकाननानि पुष्पितानि विदधती, नव-किशलयलोभनीयं सहकारतरुं समुल्लासयन्ती अलिकुलगुञ्जित मञ्जीरशोभमाना नलिनवनेषु पदं चकार। इह च कुरुवक-तरवः विकचकुसुमशोभिताः ; सञ्जातानि च अशोककिशलयानि। ववौ च मलयानिलः, भ्रमरभूषितानि च नलिनवृन्दानि। शाल-लतासु च सकुसुमपल्लवासु भृशम् अलिझङ्कारः समजनि। नासीच्च ततोऽपि जितेन्द्रियस्य मुनेः मनोविकारः। अथ निदाघसमयः विरचितमल्लिकाविकाशहासैः सह ऋतुभिः मुनिविमानितम्

उपहसन्निव वसन्तमेनं सहसा प्रादुर्बभूव। त्रिभुवनविजये समर्थोऽपि ऋतुगणः परस्परविरुद्धतया नालं तदा मुनिमुन्मनी-कर्त्तुम्। गन्धर्व्वाणां हृदयहारि वीणाक्वणितं, सहजसुभगश्च ऋतुसमयः अकृतार्थौ मुनिमनोविलोभनेषु, अजनयत् सुराङ्गनासु मनोभवविकारम्।

अर्ज्जुनदर्शनात् अप्सरसां चेष्टितानि।—

अथ हरितनयाङ्गशोभां पश्यन्तीनां सुराङ्गनानां नासीत् विकाशितोत्पलेषु प्रेम, न वा सप्तपर्णकुसुमस्तवकेषु, उत्फुल्ल-मल्लिकायूथिकासु च। चित्रञ्चैतत्, यदिह सौन्दर्य्यगुणेन मुनिमभिमुखयितुम् ईहमानाः स्वयमेव मदनातुराः सम्बभूवुः सुराङ्गनाः। तथाहि लास्यचतुराः अपि ताः मुनिमुपलभ्य नर्त्तनविलासमपि विस्मृतवत्यः। तासां पदन्याससंक्रान्ता-लक्तकताम्रेषु चरणकमलेषु कमलमूढ़ा षट्पदावली धृतानुरागा। तत्र च रङ्गपूजादत्तानि कदम्बकेशराणि तासां चरणालक्तकरञ्जितानि संवृत्तानि। शृङ्गारचेष्टा च विस्पष्टा जाता। कासाञ्च तदानीं वायुना जघनांशुकानि अपहृतानि। कासाञ्च मुनिमुपलभ्य स्मराभितापितानां मृणालवलयावनद्ध-भुजवल्लीनां चन्दनरूषितपाण्डुगण्डस्थलीनां मुनिवरे बबन्ध भृशं सरसा दृष्टिः। ततश्च दूतीजनः समेत्य मुनेः सविधम् अकथयत् सखीवाक्यजातम्। तथाहि—"मुनिवर!—'सखि! दयितमानय, अहं स्मराभिसन्तप्ता, मम चेतः प्रागेव मुनिसमीपस्थितम्' इत्यादिभिः वाक्यजातैः मां प्रहितवती प्रियसखी। समागमनसमये पूर्व्वं योजितान्यपि वचनानि प्रजागरशुष्कमुखकमलतया नालमभिधातुं, नयनयुगञ्च वाष्प-कलुषितं, मनोऽपि आधिपीड़ितम्, एवं मृदुसुरभिं कुसुमशय्यां

विहाय मपत्नवां सह्रीम् अधिशयानापि सुखशीतलं भवदङ्ग मभीहते। तदनघ! मा कृशाङ्गी सफलकामा भवतु, मा च भवदर्थे गतप्राणा; परत्रापि सुलभं तपः, अनुरक्ता तु युवतिः नैव शक्यते प्राप्तं, काठिन्यं परिहर, विकाशय मुखमुद्रां, ज्ञातञ्च मया मत्सदृशा सदयं मुनिहृदयं, दुर्जनाः किल उपगतमव धीरयन्ति" इति।

काचन लास्यपरा कचसंयमनाकुलैकपाणिः विदधे कामजैत्रशरभूत मविलासकटाक्षविक्षेपम्। काचित् धृत-कुसुमितोन्नतचततल्लौ प्रयत्नस्तनभारनामिताङ्गयष्टिः गतवती मुनिमकाशात्। काचन नीविस्रस्तं नीलमधोनिचोलं करेण विधृत्य मेखलागुणसंयमिता क्षणं नैव शशाक तमभिगन्तुम्। काचित्तु सुरकामिनी उपाज्जनमभिगच्छन्ती —"शठ! तव मनसि नास्ति शान्तिः, यदयं वर्त्तते चापः, तत् प्रियतमास्तव विषयाः, नैव मुक्तिः। अस्मान् प्रति अननुरागश्च भवतः अन्यासक्ततया, न तु वैराग्यात्", इत्थम् अगणितगुरुमानत्रपा कम्पिताधरोष्ठी मात्सर्यमभिधाय स्वयं कर्णोत्पलेन ताड़यामास मुनिम्। किं बहुना, मुनिमविशेष च तासां वाक्प्रपञ्चः कारुण्यपूर्णः, लज्जा विगलिता, निपपात च भूशमत्र। विलोकनञ्च तासां कटाक्ष-सुन्दरं, लज्जा चारुतरा, गतिश्च मान्द्यसुभगा, प्रत्यङ्गं परिपाण्डुता, हृदयेषु प्रियालाभजनितः तीव्रो विषादः। इत्येवंविधम् एव सम-जनि तासां कामचेष्टितम्।

तासां चेष्टाविफलत्ववर्णना।—

अपरञ्च मुनिविलोभनप्रयासवैफल्येन तासां अलसपद-सञ्चारचारु जितकलहंसगमनं गमनम्, उरुजघनातिभारात् जनितपरिश्रमकुटिलीचरणम् ऊरुस्थानं, गाढ़कामशरसम्पात-

मोहात् अनवधारितार्थपदविन्यासघटितः वचनप्रपञ्चः ; अधिकविष्फारितनयनयुगलञ्च सभ्रूभङ्गं सरलविलोकनं. कथिकरमपि स्थिरसमाधिमुपेयुषि किल धनञ्जये सकलं विफलमेव संवृत्तम् ।

अथ गन्धर्वीणामप्सरसां स्वस्थानप्रस्थानम् ।—

इत्थम् अविलुप्तेन तपसा वासवमाराध्य रिपूच्छेदसुलभां राजलक्ष्मीम् अभिलषति धनञ्जये, तपोविघ्नमाचरितुमशक्नुवत्यः धृतनिर्वेदाः प्रार्थनाभङ्गकृतविलुप्तरुचयः सगन्धर्वास्ताः सुराङ्गनाः स्वनिकेतनं प्रतिजग्मुः । इति ।

## एकादशः सर्गः

अर्जुनस्य तपोऽनुष्ठानावेक्षणार्थं तदाश्रमे मुनिवेशधारिणः वासवस्य समागमः ।—

अथ अप्सरसां प्रतिप्रयाणानन्तरं भगवान् महेन्द्रः अप्सरोमुखात् शब्दद्वेषात् निसर्गाच्च निशम्य जितेन्द्रियभावं नितरां प्रीतः गृहीतमुनिवेशः अर्ज्जुनस्य तपोवनमाजगाम । आसीच्च तदानीं तस्य मुनिरूपता, परिकल्पितेन वार्द्धकेन, दूराध्वगमनपरिश्रमेण, मस्तकन्यस्तधवलजटासम्भारेण, पलितपाण्डुरभ्रूयुगममाच्छन्नवलितप्रान्तनयनयुगलेन, कृशताशोभमानदुर्भगाङ्गनिचयेन, करधृतदण्डवरेण च चारुतरीकृता । स च प्रच्छन्नरूपोऽपि अलौकिकधामसम्पन्नः, जराजीर्णदेहोऽपि अलोकसामान्याकृतिः, महिम्ना अभिभूय समग्रामाश्रमशोभां सभय-

मिव तपोवनं कुर्व्वाण:। संवृत्तश्च तस्मिन् महेन्द्रे अर्ज्जुनस्य कोऽपि स्नेहातिशय:।

अर्ज्जुनं प्रति वासवोक्तिवर्णनम्।—

अनन्तरञ्च भगवान् त्रिदशेन्द्र: स्वतनयात् अर्ज्जुनात् लब्धाऽतिथिसत्कार: अध्युषितविष्टरश्च तमुवाच श्वेतवाहं—"अहो! अस्माभि: स्थविरमार्थैरपि सुदुष्करं तपोऽनुष्ठानं, यौवनेऽपि त्वया समारब्धम् इति सर्व्वोपरि ते प्रभाव:। एवमनारम्भे च तव नयनलोभनीया रम्याकृतिरपि विफला सम्भाव्येत। संसारेऽस्मिन् नाकपृष्ठलक्ष्मी: मानवानां शरदम्बुधरच्छायेव क्षणविध्वंसिनी, विषयाश्च आपातरम्या अपि परिणामदु:खावहा:। ततोऽपि एतदतीव सन्तापकरं, यदिह प्राणिनां प्रथमं जन्मदु:खं, तत: जातस्य जीवनमपि सततं व्याधिशोकादिदु:खसम्भिन्नतया विषयुक्तान्नप्रायं, तदपि मृत्युग्रस्तम्; इत्येवं विवेकशालिन: भवादृशा: महात्मान: परित्यक्तसंसारभावा: मोक्षम् ईहन्ते; त्वञ्च तादृशविवेकसम्पन्न इति दर्शितं चित्तौदार्य्यम्। परन्तु तव मुमुक्षो: कैव तव कृत्ताजिनावृतस्य विषयवीतरागस्य सुकोमलाङ्गश्रेणीनि कवचकार्म्मुकनिषङ्गासिप्रभृतीनि भीमान्यायुधानि अशमोचितानि इति मम मनस: सन्देहमम्पादकानि वर्त्तन्ते। तदत्रभवान् वैरिविजयाकाङ्क्षी, नैव मोक्षाभिलाषीति मन्ये। तदिदम् अतीव गर्हितम् आचरितं, यत् किल नि:श्रेयससम्पादकं तपोऽनुष्ठानं प्राणिवधोदर्के मत्स्यवीथीषु तृष्णापहारकं सलिलम् आविलीकृतम्। अर्थकामयोरपि मोक्षवत् पुरुषार्थत्वेऽपि तत्त्वावबोधपरिपन्थित्वात् हिंसादिदोषमूलत्वाच्च तौ नितरां हेयौ। यश्चेह भूतानामभिद्रोहेण क्षणस्थायिनीमर्थसम्पदं काममान:, भवति स सर्व्वथा विपदालम्बनम्। सहायसाध्यत्वात्,

अनर्थोदर्कत्वात्, अनेकानिष्टमूलकत्वेन भीतिसम्पादकत्वाच्च नितरां दुःखहेतुः सम्पत्तिः। सा च विश्रम्भसुखभञ्जिका, प्रतिनियतदुःखजननी च। विमृश्यैतत् खलु, यदिह सर्व्वे जन्तवः श्रियं प्रति धृतप्रेमाणोऽपि नैयमन्तरम्गा क्षणस्थायिनी च, परं नीच-स्वभावाऽसौ साधुवृत्तानपि जातु विजहाति। चेदिदमच्यते—"नाहमर्थमर्थये: अपि तु वीरधर्म्ममनुपालयन् वैरनिर्यातनमिच्छामि," इति, तदपि अनिष्टसंयोगवत् इष्टविरहफलकत्वात् नातिप्रशस्तम्। प्रियसमागमो हि जगति रिक्तमपि समृद्धं सम्पादयति, व्यसनमपि महोत्सवतुल्यम्। किं बहुना, वञ्चनाऽपि लाभसूचिका तत्र, प्रियवियोगश्च रम्यमपि अरम्यं, प्रियान् प्राणानपि शल्यवत् सम्पादयन् सकलस्वजनमध्यस्थितमपि सहायहीनवत् समानयति। तदलमनेन प्रयासेन ? आत्मपीड़ावत् परपीड़नमपि नैव विधातव्यं, जन्मिनामिहावस्थानन्तु अतिचपलमिति मत्वा मा भूः न्याय्यविघातकः, सम्प्रति त्यक्तारम्भात् माङ्‌: परमपुरुषार्थं मोक्षमीहमानः शान्तो भव ; वर्त्तते चेत् विजयकण्डुतिः तदा अन्तःशत्रवः दुर्ज्जयाः इन्द्रियग्रामाः जीयन्तां ; भवति च तेन तदपनोदः, आनुषङ्गिकः सर्व्वविजयश्च। अनिगृहीतेन्द्रियग्रामस्य वृषभ इव परवान् भवति लोकानाम्। कामोऽपि तद्वत् क्षणविध्वंसी, प्रवञ्चकः, अनिष्टाधायकः, दुष्परिहरो महान् शत्रुः। अत इदानीं भागीरथीपूतसलिले पावितेऽस्मिन् इन्द्रकीले मुक्तिस्ते सुलभा भविष्यति, अलमायुधं विधृत्य। इति।

वासवं प्रति धनञ्जयप्रत्युक्तिवर्णनम्।—

एवं वाक्यप्रपञ्चं प्रपञ्चयति त्रिदशेन्द्रे धनञ्जयः उदमोचयत् मुखमुद्राम्, उवाच चेदं विनयमधुरं वाक्यजातम्—"अहो !

सकलगुणसम्पत्तिसम्भावितोऽयं भवतः भारतीप्रपञ्चः, यत्नापि भवान् अनन्यसाधारणः ।

तथाहि,—भवतो वाक्यजातम् ओजःप्रसादगुणभूयिष्ठं, शब्दाडम्बरगुम्फितमपि अर्थभूयस्त्वपरिगतं, विस्तरदोषरहितमपि नाकाङ्क्षपदकदम्बात्मकम्, अध्याहारदोषापेतमपि कृत्स्नार्थ-प्रतिपादकं, युक्तिबाहुल्यात् शास्त्रनिरपेक्षमिव प्रतिभातं, प्रतिवादिजनाबाध्यतया वेदवाक्यसंवादि, अन्यैरनुच्छेद्यतया च उद्वेलाम्भोधिगम्भीरम्, औदार्य्यगुणभूषितत्वाच्च प्रसन्नताप्रायं वर्त्तते । किन्तु तात ! मम अस्य तपोऽनुष्ठानस्य अपरिज्ञात-पौर्व्वापर्य्यो भवान्, येन मां मुनिभिः तुल्यम् उपदिशति ; अवि-ज्ञातप्रबन्धस्य वाचस्पतेरपि वाक्यं भवति सुतरां निष्फलम् । नाहं नव ईदृगुपदेशभाजनम्, अहं पुनः क्षत्रियः, पाण्डुतनयः, पार्थः, धनञ्जयः, दायादैर्दुर्य्योधनादिभिः हृतसर्व्वस्वस्य ज्येष्ठस्य भ्रातुः निदेशेन इदं सुदुस्तरं तपश्चरामि। मम तु विजिगीषैव बलवती । अतः हिंसैकरसस्य रागद्वेषकषायितचेतसः कुतो मे मोक्षाधि-कारः ? भगवता कृष्णद्वैपायनेन आदिष्टः, प्रात्तायुधः, क्षात्र-कुलैकदैवतं भगवन्तं वासवमाराधयामि । कपटपाशकैः दीव्यता राज्ञा युधिष्ठिरेण विधिवशात् सर्व्वस्वं हारितम् । साम्प्रतं मम विरहेण द्रौपदीसहितः सानुजो महाराजः नितरां शोकाकुलः संवृत्तः । किमु वक्तव्यम् !!—अरातिभिरस्माकम् उत्तरीयमपि प्रसह्य अपहृतं, वाक्यानि च मर्म्मच्छेदकानि तेषाम् । अहो ! कालप्रेरितैस्तैः गुरुजनसन्निधौ सभायां द्रौपदी अपि समानीता, सा च सदानाम् अश्रुपूर्णाक्षी कुररीव व्यलपत् । स च प्रियतम-गुणः युधिष्ठिरः समयोल्लङ्घनशङ्कितः ईदृशीमपि दुर्दशां सह-मानः प्रकटयामास सुतरां मनस्विताम् । अहो ! दुर्ज्जनमैत्री

कीदृशो अनर्थोत्पादिका ; यदिह अजातशत्रोरपि धार्त्तराष्ट्र-प्रणयात् तेषु भृशं वैरम्। खलस्वभावस्तु कार्य्यसन्दर्शनात् प्राक् नितराम् अशक्यबोधः। मानधनोऽपि युधिष्ठिरः सम्प्रति केवलं प्रतिचिकीर्षयैव जीवति। यद्यपि सर्व्वे एव वयं शत्रुभिः प्रसह्य हरिणैः तुल्यवृत्तयः सम्पादिताः, तथापि इदन्तु मदेकसाध्यं कर्म्म इति मुनिशासनात् मयैव अनुष्ठीयते। संसारेऽस्मिन् मानहीनस्य प्राणिनः तृणसमाः वर्त्तन्ते वृत्तयः, मानोन्नतश्च अचलोत्तुङ्गशृङ्गमिव सर्वेषाम् अलङ्घ्यो भवति लोकानाम्। यशोलक्ष्मीश्च तस्य करतलगतेव वर्त्तते। जगति सार्थकजन्माऽसौ यस्य खलु दुरासदवनगहनदुरावरोहम् अचलेन्द्रमपि अतिवर्त्तते औन्नत्यम्। येषां खलु यशःसन्ततिः सततमिन्दुपरिभाविणी विशदा, तैरिह वसुन्धराऽपि सार्थकाभिधेया, कुलमपि गौरवान्वितं राजते। ते च मनस्विवर्य्या रामादिवत् निदर्शनमाशीर्वादानां, येषाम् अवन्ध्यकोपता नियतैव।

अतो नाहं सुखाभिलाषी, न वा जरामरणभयेन मोक्ष मीहमानः ; परन्तु विरहतप्तवैरिवनितालोचनजलैः शत्रुकपट कृतम् अयशःपङ्कं प्रमाष्टुंकामः तपश्चरामि। तदिह मे नास्ति जनोपहासभीतिः, उत मतिस्खलनजनितप्रमादशङ्का, न वा भवतः प्रणयभङ्गात् नितराम् अवमानना, अकृतवैरिनिर्य्यातनस्य अपवर्गोऽपि विजयार्गलभूतो मे प्रतिभाति। अरिवधेन स्वयशः प्रत्याहरणमकुर्व्वाणः अजात एव, जातोऽपि मृततुल्यः, अथवा तृणवत् जीवन्मृतः, अकृतशत्रुविजयस्य सहसा कोपशान्तिः नितरां कापुरुषलक्षणम्। अलमेव पुरुषत्वजातिमात्रेण, यस्य खलु नामधेयं सभासद्भिः सादरमुच्चारितं शृण्वतां तेजोऽपहारकं मदिव सर्व्वैर्बहु मन्यते; स एव पुरुषः। किं बहुना,--तत्रभवान्

मे अग्रजातः सकलकुरुकुलगौरवः युधिष्ठिरः यथाप्रतिश्रम् अरि-वधार्थी नियतं मामेव स्मरति ; नाहं तन्मतम् उल्लङ्घयितुं समर्थः। मोक्षोपदेशस्तु भवतामाश्रमपौर्व्वापर्य्यनियमभङ्गप्रसङ्गेन नैव रोचते मह्यम्। ममायं महान् वैरनिर्य्यातनभारः, दूरवर्त्तिनी जननी, तपोऽधिकः ज्यायान् युधिष्ठिरस्य स्वातन्त्र्यं प्रतिबध्नाति। ईदृशोऽयं वीरसमयः, यदिह क्षात्रधर्म्मानुसरणं, नियतमपरा-ङ्मुखिता च युद्धेषु। श्रूयतां मे अभिनिवेशः, यदहम् अस्मिन्नेव नगशिखरे भवामि विलीनः, उत वासवं स्वाराध्यमाराध्य अयशःशल्यं समूलमुन्मूलयामि" इति।

भवाराधनार्थं वासवस्यापदेशः, स्वस्थानं प्रति प्रस्थानञ्च।—

इति निगदितवन्तं स्वतनयं धनञ्जयं भगवान् त्रिदशेन्द्रः धृतनिजविग्रहः बाहुभ्यां समालिङ्ग्य च गाढं, जयार्थं हरोपा-सनम् आदिदेश।—"प्रीते पिनाकिनि, सर्वे खलु वयं लोक-पालाः प्रसन्नाः अमितवीर्य्यं ते प्रदास्यामः ; ततश्च शत्रुपरा-भवोऽपि सुलभो भविता"। इति आशिषा संवर्द्ध्य सोऽभूदन्त-र्हितः। इति।

## द्वादशे सर्गे—

—)०(—

हराराधनार्थं धनञ्जयस्य तपोऽनुष्ठानवर्णनम्।—

अथ वासवादिष्टः अर्ज्जुनः यथाविधि त्रिलोचनम् अक्षमम् आरिराधयिषुः चचार दुश्चरं तपः। इन्द्रियाणि सम्यक् विनिगृह्य अनश्नतः विजयाभिलाषिणः सूर्य्याभिमुखम् एकचरणं निषीदतः तस्य कतिचित् दिनानि परिगतानि, किन्त्वेतदतीव विस्मयकरं,

यत् खलु—नितरां दुःखसाध्येषु इन्द्रियनिग्रहादिषु च भूधरेणेव धैर्य्यम् आकलितं; सन्निहितपक्किसुरभिषु फलेषु, शीतले स्वच्छे च सलिले. मानसवैमुख्यञ्च। न कदाचित् विस्मितः विषस्सश्च, न वा रजस्तमोगुणाभ्याम् उपहतचित्तवृत्तिः। शरीरञ्च तस्य तपः कृशमपि लोकत्रयाभ्युदयपरिभावि, तत्त्वविदामपि भीतिप्रदं तदासीत्। आसीच्च स निशीथप्रज्वलितहुताशनादपि अधिकरुचिः, जलनिधेरपि अमितधैर्य्यः, शैलतोऽपि समुन्नततरः। गूढ़ं जपतश्च तस्य सर्व्वतः प्रसारि दशनकिरणमण्डलम् उपसूर्य्यकमिव नितरां शुशुभे। स च कलितवर्म्मा विधृतसज्यकार्म्मुकः इन्द्रधनुःपरिशोभितभीमगहनः अचलेन्द्र इव विरेजे। तपःकृशस्यापि नियमस्नानाय व्रजतः तस्य पदभरविनमितः हिमाचलः चलन्निवास्ते। ऊर्द्धबाहोश्च तस्य मस्तकोपरि भ्राजमानं विततं ज्योतिर्मण्डलं मुनिदिवौकसां वर्त्मनिरोधकं जातम्। चित्रञ्च एतत्,—कृष्णपक्षेऽपि प्रतिरात्रं तमोनुदेन मुनिधाम्ना सचन्द्रमिव नभो विचकासे। किमु वक्तव्य !!—तदङ्गजन्मना किरणजालेन शमितरुचि सौरमण्डलं नभसि लज्जितमिव निष्प्रभम् आसीत्। जटांशुमण्डलभ्राजमानः अधिगुणशरासनश्च स रुद्र इव लोकलोचनभीतिप्रदः जातः। "अयन्तु देवेन्द्रः? सूर्य्यो वा? अथवा प्रज्वलज्ज्वालः ज्वलनः तपश्चरितुम् उपक्रान्तवान्? नायं साधारणो जनः" इति तत्र स्थितानां तापसानां तदानीं सन्देहः समजनि। हरितनयधाम अकृतवनदाहमपि अजनितसलिलशोषमपि सिद्धतापसैः नितरां दुःसहम् आसीत्।

अर्ज्जुनस्य तपःप्रभावमसहमानानां तापसानां शिवान्तिकगमनवर्णनम्।—

अथ तत्तेजोऽभिभूताः महर्षयः शिवं शरणार्थिनः उपगताः। गत्वा च तत्र सूर्य्यतेजोविजयिभिः स्वधामभिः

विद्योतमानं महेश्वरं प्रतिहतदृष्टयस्ते नालं सहसा विलोकयितुम्। ततश्च अभिमुख्यसम्पादनाय सुवतां, तत्र तेजसि दर्शनीयविग्रहः त्रिनयनः प्रादुर्बभूव कोऽपि पुरुषः।

अथ हरस्य रूपवर्णनम्।—

स च वृषभासनः हिमाचलशिखरे स्थितोऽपि सर्व्वलोकातिशायिना तेजसा स्थावरजङ्गमात्मकम् अखिलमेव विश्वं व्याप्नुवन्निव. जानुमध्यस्थितेन महाभोगभोगिना परिवेष्टिततया लोकालोकाचलवेष्टितः अखिलो लोक इव, उपवीतपटनिहितं हिमशुभ्रं शीर्षाहिं शितिकण्ठद्युतिभिः श्यामीकुर्व्वन्, मूर्द्धन्य भागीरथीफेनायमानं भालभासुरशशधरकिरणकदम्बं बिभ्राणः. भुजग-वलयपरिमण्डितबहुभुजतया सद्भुजगमलयजसमाकुलः मलयाचल इव बिभ्राजमानः आसीत्।

शिवान्तिके अर्ज्जुनतपोवर्णनम्।—

अथ तत्र सर्व्वे महर्षयः अभिमुखमासीनाः तस्य च नेत्रसङ्केतसङ्केतिताः धनञ्जयस्य दुश्चरतपःप्रभावैः अभिभूयमानस्य जगतः दुःखजातं भृशमाकलयितुमुपक्रान्तवन्तः। तथाहि— "भगवन्! वृत्रासुर इव सौरकिरणकलापमप्यभिभावयन् कोऽपि भीमकायः पुरुषस्तपस्यति। तत्र तु एतदेव विचित्रं. यत् खलु स तापसोऽपि कार्म्मुकं, इषुधी, वर्म्म, खड्गं. जटाः, वल्कलम्, अजिनञ्च बिभ्राणः आकलित-तापसविरुद्धवेशः वर्त्तते। यदाऽसौ चलति अवनिरपि तदा चलति. यदा च इन्द्रियसंयमनम् आचरति तदा सग्रह नक्षत्रं सदिग्दिगन्तं नभःस्थलमपि भवति भृशं निश्चलम्। किन्तु महानत्र सन्देहोऽस्माकं, यत् तेनेदं ससुरासुरं कृत्स्नमेव विश्वं स्वतेजसा अभिभूय हर्त्तुम् यतते? उत विजेतुम्?

न वा युगपत् संहर्त्तुम्, अथवा मोक्षमेव समासादयितुम्, इति। वयन्तु नालमस्य सुदुःसहं तेजो विषहितुम्। हे नाथ! भवान् सर्व्वज्ञोऽपि कथमुपेक्षते? भवन्तं शरणमागताः वयम्। हे अभयद! भवानेवास्मान् त्रातुमलं, जाग्रति च त्वयि शरण्ये परिभवो मा भूत् इति।

शिवकृतमुनिमान्त्वनार्ज्जुनस्वरूपकथनवर्णनम्।—

इति निगद्य सहसा विरतवाक्यप्रसरे तापसनिकरे तत्र-भवान् भगवान् शम्भुः ध्वनितदिग्दिगन्तरालः जलधिजल कल्लोलनादगम्भीरं व्यरचयत् वचनप्रपञ्चं,—भोः भोः तपोधनाः! अयं किल बदरीतपोवनकृतवासः सृष्टिसंहारकारिणः भगवतो नारायणस्य अंशसम्भूतः, पृथिव्याम् अवतीर्णः भगवान् नर नामधेयः हरिसखः महात्मा धनञ्जयः। सम्प्रति सकललोक सन्तापतत्पराणां वासवसमप्रतापशालिनां प्रबलवैरिणां विजय मभिलसन् मदाराधनरूपं महत् तपश्चरितुं समुद्यतः। अयं भगवान् अच्युतश्च विधातृवाक्यात् असुरवधं विधाय प्रजाः कृत्स्नाः परिरक्षितुम् आसादितमर्त्त्यलोकः गृहीतमानववेशश्च संवृत्तः। तदेतत् देवकार्य्यम् इति सम्प्रधार्य्य सहजवैरी मूकदानव एन मेव व्यापादयितुमागमिष्यति; तदत्र त्वरया मया सह अभि-गम्यताम्। यदाऽसौ रन्ध्रान्वेषी दानवः प्रकाशमभिभावयितुम समर्थः, तदा नूनमयं कपटवराहरूपमालम्ब्य विजेतुमभिलषि-ष्यति। धृतकिरातरूपेण मया निहते च तस्मिन् वैरिणि स चा-र्ज्जुनः युगपत् त्यक्तबाणः प्रसह्य मृगयाकलहं विधास्यति। तदानीञ्च सम्प्रवृत्ते घोरे सम्प्रहारे, नितरां क्रुद्धस्य तस्य स्वाभा-विकं वीर्य्यं भवतां भविष्यति प्रत्यक्षीभूतम्।

अर्जुनानुग्रहार्थं भगवतो विषमकिरातरूपधारणम्।—

इति तान् सयुक्तिकम् अनुनीय त्रिलोचनः सहसा परिजग्राह किरातवेशं, तथाहि,—विषमविन्यस्तया श्वेतचन्दनरेखया, मस्वेदरोमाञ्चैः, गजमौक्तिकावलिगुणैश्च भूषयामास वक्षःस्थलं; केशनिचयञ्च कुसुमितलताग्रान्तैः संयम्य गण्डभित्तिद्वयं चकार मयूरपिच्छलाञ्छितं, अग्राह च संहितैकबाणं जलदगम्भीर-निस्वनं बृहत् शरासनम्। इत्थम् आकलय्य किरातसेनापति-रूपं नितरां स शुशुभे।

किरातसेना-सन्निवेशवर्णनम्।—

अथ तदनुगुणञ्च किरातसेनासन्निवेशं विरचयितुं प्रमथ-गणानपि शूलचापपरशुभृतान् सम्भृतकिरातवेशान् नियोजित-वान्।

अथ अर्जुनाभिगमनवर्णनम्।—

अथ हरसमादिष्टाः तेऽपि गणाधिपाः गिरौ तस्मिन् विभज्य वनोद्देशं, उच्चैः नदन्तः मृगयाव्याजेन समन्तात् गन्तुमारब्धाः। प्रस्थानसमये च तेषां गमनसंरम्भसंक्षुब्धनिर्गतयूथभ्रष्टानां मृगशकुनिप्रभृतीनाम् अमन्दध्वनिभिः सम्भृतवनगुहाविवरः हिमाचलः सहसा भीत इव चुक्रोश। वर्त्मनि गाहमानानाञ्च तेषां भयव्याकुलानां मृगव्याघ्रश्येन-कपोतादीनां स्वाभाविकोऽपि वैरिभावः तदानीं नोदियाय। चमरीचयश्च तदा भयभीतोऽपि वेणुगुच्छेषु विषक्तबालबालधिः नितरां प्रियबालतया शङ्कमानव्यसनोऽपि निःस्पन्द एवासीत्। करिमदसुगन्धकेशरकलापः मृगेन्द्रश्च वीक्ष्यमाणभयकारणोऽपि प्रतिबुद्धः जृम्भाविवृतमुखविवरः स्वस्थमालोकयामास तं हरसेना-

निचयम्। गिरिनिर्झरिण्यश्च लुठितोदरैः शफरीवृन्दैः समाकुलाः कर्द्दमदुर्गमीकृत-तटभागाः गजभग्नचन्दननिष्यन्दारुण-सलिलाः संवृत्ताः। पवनश्च मन्द्दिषचतागुरुतमाल-नलद-सुरभिः विक्षिपन् श्यामलशिलाकुसुमानि, प्रसरंश्च मन्दंमन्दं, वनेचराणां पथिगमनक्लान्तिहरः संवृत्तः। सर्व्वेषां च प्राणिनां गमनजनितसंक्षोभः सरसां तत्रत्यानाम् अपमृद्य कदलीगवेधुक-तृणनिकायम्, आलोड्य च नलिनीचयं, संक्षोभितवान् खलु कृत्स्नानि सलिलानि।

शिवस्य धनञ्जयाश्रमप्राप्तिः, मूकदानवदर्शनं, सेनासन्निवेशश्च।—

अथैवमुमापतिः गिरिकन्दर-वृक्षकोटर-वनोदर-संस्थितान् सर्व्वानेव प्राणिसङ्घान् चपलयन् मुदितमृगीकदम्बसन्दष्टलता-सन्ततिं वसतिमिन्द्रसूनोः समाससाद। आसाद्य च तत्रैवनीलम् अर्ज्जुनाभिमुखमभियियासुं पोत्रोल्लेखनेन विदारित-भूमिभागं धृतवराहवेशं ददर्श मूकदानवम्। अथासौ त्र्यम्बकः भागीरथीकच्छान्ते संस्थापितसेनाचयः कतिपयकिरातश्रेष्ठै-रन्वितः, लतासनाथैः पादपैः अन्तरितविग्रहश्च वराहानुसरण-क्रमेण प्रस्थितः इति।

## त्रयोदशः सर्गः—

—)o(—

अर्ज्जुनस्य वराहरूपिमूकदानवदर्शनम्।—

अथासौ मुनिवर्य्यः महात्मा धनञ्जयः भीमविग्रहं भूधर-विदारणेऽपि सम्भावितसामर्थ्यं दृढदंष्ट्राविकरालमुखं धृत-वराहरूपं ददर्श मूकदानवम्। ततः कोपात् हृष्ट-

लोमानं स्वमिव अभिलक्ष्य दूरादभिधावन्तं वराहमवलोकयतः मह्जयाशङ्काकुले विजयार्थिनि चेतसि सहसाऽयं वितर्कः समजनि।

वराहदर्शनेन अर्ज्जुनस्य विविधवितर्कोदयवर्णनम्।—

कुतोऽयं शूकरः कठिनमुखाग्रभागेण तरुमूलानि विदार्य्य, विरुज्य च निबिड़स्कन्धसङ्घट्टनया सानुदेशम्, एकाकी माम् अभिधावति ? जाने खलु तपोवनमृगाः तपःप्रभावात् शान्तस्वभावाः परित्यक्तमिथोहिंसावृत्तयश्च ; अयन्तु मय्येव जिघांसापरः, अतोऽयं कोऽपि विकारः ? कस्यचिद् दैत्यस्य वराहभूमिका वा ? अथवा प्राग्भवीयवैरानुबन्धी कश्चित्, "अवसरोऽयम्" इति मत्वा माम् अभिवर्त्तते ? अन्यथा कथमयं समुज्झित-सहजवैरपशुजातः सन् मामेव प्रवृत्तमनाः ? नूनमयं कोऽपि जिघांसुः, न जातु वराहोऽसौ ; यदत्र मे चेतः कलुषितं संवृत्तम्। यत्र च दृष्टे मनः संक्षुब्धं स एव शत्रुः, प्रसन्नं चेत् मित्रमेव इति सर्व्वलोकसिद्धत्वात्। तापसस्य निरपराधस्य मे कुतः शत्रुः ? इत्यभिमानोऽपि न श्रेयसे सम्पद्यते। यदिह परश्रीकातराणां दुर्जनानां नास्ति किमपि अकार्य्यं जगति। न चासौ जिघांसुः तुच्छ इति मन्तव्यं, यतः सकलसत्त्वपरिभाविवीर्य्यमादधानः ममग्रम् अचलेन्द्रं कम्पयन्निव वर्त्तते। अतोऽयं कोऽपि दानवः, निशाचरो वा स्विदिति मां प्रतिभाति। यश्चायं शैले मृगयाकलकल इव श्रूयते, सोऽपि एतन्मायापरिकल्पित एव। अथवा दुर्य्योधनेन बहुशः सत्कृतः, तस्यैव प्रियचिकीर्षया वनेचरैः कृते अवरोधे संक्षोभितं चञ्चलञ्च मृगकुलं प्रविवेश कोऽपि वराहरूपेण। अथवा खाण्डवानलेन प्रसभं दग्धबान्धवः तक्षकसूनुरश्वसेनः कुपितः सन् सम्प्रति प्रतिचिकीर्षया भीमसेनेन जनितकोपो वा समभिगच्छति ? किं बहुना,—अस्तु अयं मायिकः,

पारमार्थिको वा जिघांसापरायणतया अवश्यमेव मया वध्यः। "अमार्गदायी विजयाय तपस्यतु" इति व्यासोपदिष्टतया इत्थमाचरतोऽपि मे नैव भविष्यति तपोविरोधिनी हिंसा।

वराहं प्रति शिवपार्थयोः सायकपातवर्णनम्।—

इति विविधं वितर्क्य धनञ्जयेन तदा सशरज्यं कार्मुकं गृहीतम् आनमितञ्च, समये च तस्मिन् गाण्डीवं शरासनम् अधिरोहति बाणे, ज्यास्फालनजनितरवैः सम्भृतकन्दरः पादाक्रमणनिपीड़ितश्च अचलोऽसौ संशयारूढ़ः सञ्जातः। अनन्तरञ्च भगवान् त्र्यम्बकः व्याकृष्टशरासनं तमर्जुनं भीमरूपम् अवलोक्य स्वीय शरासनमपि सज्यशरं विधाय मौर्व्वीम् आस्फालयन् चरणास्कन्दनेन अचलसानुमानमयन्निव तस्थौ। स च वराहः मायावपुः तयोरभ्यन्तरवर्त्ती प्रकृतिप्रत्ययमध्यगतः अनुबन्ध इव सहसा जगाम पराभवास्पदम्।

ततश्च दीपयन्नन्तरीक्षमार्गं, ध्वनयन् सकललोकं पिनाकविनिर्मुक्तः हरशरः वराहमभि, निपतितः जवात् यथा वैद्युतो वह्निः।

अथ सहसा कार्मुकात् अभिवराहं व्रजतः अस्य खलु बाणस्य विपुलपक्षनिपातसमुद्भूतः प्रतिरवमहान् महान् आरवः महोरगाणां हृदयानि कर्णविवराणि च विदारयन्निव समन्तात् समुत्पपात। पिनाकपाणेः कपालनेत्रसमुत्थैरिव मनोजवेन समुत्पततश्चास्य बाणस्य तड़ित्पिङ्गलैः किरणकदम्बैः नभसि भृशं विराजते स्म बाणगमनमार्गः। हरकार्मुकविनिर्मुक्तश्च शरोऽयं शिवान्निर्गलितानां नभश्चराणां, प्रज्वलन्निव अन्तरालवर्त्तिनां, वराहं प्रविशतीति वराहप्रत्यासन्नानां

युगपद्द्रष्टव्यः संवृत्तः। स चैवं सङ्क्रम्य विभिद्य च तमालनीलं वराहशरीरं प्राविशत् जगतीतलम्।

हरबाणप्रयोगसमय एव कपिध्वजेनाऽपि विनिर्मुक्तः प्रव्यथित-सकल-जीवजातः, आसाद्य च गगनतलं, विकीर्य्य च वनोदरेषु उल्कावत् दीर्घायमाणं तेजःपुञ्जं, ध्वनयंश्च दिग्दिगन्तरालं, प्रजवगामितया असंलक्षितनिर्गमप्रयाणः दीर्घदीर्घ इव परिदृश्यमानः बाणः, सहसा लक्ष्यं बिभेद। तदानीम् उदियाय च सर्व्वेषां मनसि यदयं नः चित्तवृत्तेः पूर्व्वं समासादितशरव्यः? उत अपतिष्यत्येव? इति।

वराहमृत्युवर्णनम्।—

ततश्च शरद्वयेन युगपत् विभिद्यमानः सुतरां प्राप्तावसादः वराहवर्य्यः भग्नवेगः आसन्नमृत्युश्च भ्रामयन्तं भुवि निपतन्तम्, अवनीमपि मण्डलीभूत-तरुमण्डली-विमण्डितामिव समुत्प्रेक्षते स्म। इत्थमेव च कियत्कालं क्षितितलनिषण्णः अभिनवक्षतजार्द्रदेहयष्टिः खुरदंष्ट्राग्रविदारितपाषाणः स्वार्थविघातरोषात् क्षणमुद्वीक्ष्य धनञ्जयम्, आक्रन्द्य च भृशमुच्चैः सहसा पञ्चत्वमगात्।

बाणाहरणाय अर्ज्जुनस्य वराहान्तिकगमनं, शिवप्रेरितवनेचरदर्शनञ्च —

अथ तत्रभवानर्ज्जुनः प्रभूतशरसञ्चयोऽपि वराहभेदेन प्रकटितपौरुषं तमेव शरं जिघृक्षन् प्रचलितः; गत्वा च निर्भिन्नवराहशरीरमधोमुखस्थितं प्रकाशितस्वप्रभावं स्वकान्त्या समुद्भासितं शरमिममवलोकयन् तत्रैव अतर्कितोपगतं शिवशासनमाचिख्यासुं सविधवर्त्तिनं गृहीतशरासनं कमपि ददर्श वनेचरम्। स च किल स्वजातिसमयेन कृतप्रणामः सामपूर्व्वकं प्रिययुक्त्या समुद्भासितं वाक्यमिदं वक्तुमुपचक्रमे।

अथ अर्जुनं प्रति वनेचरवाक्यम् ।—

तथाहि,—महीपते ! भवतः सौम्यवेशः मनसोऽपि शान्तता सूचकः ; उर्ज्जस्वलञ्च तपोऽनुष्ठानं सम्प्रदायशुद्धामिह शास्त्र शिक्षां प्रकटयति । देवोपमा अनिन्द्यसुन्दरीयमसुलभा-कृतिश्च आभिजात्यमाचक्षाणा वर्त्तते । तापसोऽपि भवान् अनुभावमाहात्म्येन दीप्तदेहः गौरवेण च व्यक्तनताचलेन्द्रः प्रकटितवासवाधिपत्य इव राजते । मुनिरपि प्रभावातिशय्येन त्वमसि सर्वसम्पदामास्पदं ; विजने स्थितोऽपि सचिवावृत इव कान्तिमान् संलक्ष्यसे । किं बहुना,—दूरमास्तां तावत् विजया-सादनकथा, मुक्तिरपि सविधवर्त्तिनीति मन्यते । जगति सत्त्व-गुणमात्रावलम्बिनां हि नास्ति दुर्लभं किमपि । भवांस्तु इत्थं स्वकान्तिच्छटाभिः विलज्जितचन्द्रचन्द्रिकः आशंसितपराक्रमः ख्यातिमान् सन्नपि वराहभेदकम् अस्मत्स्वामिनः सायकममुं नैव हर्त्तुमर्हति । आ मनोः सर्व्वैरेव साधुभिः सदाचारः प्रतिपाद्यते, यदि भवादृशः महात्मा ततो भ्रश्यते, तदिह तत्पथानुसारी न कोऽपि नाम वर्त्तेत ।

आकुमारमुपदेष्टुमिच्छूनां योगप्रभावेण जरामरणवर्ज्जि-तानां विधूतपापानां यतीनामपि एष एव अभिप्रायः सुव्यक्तं परिलक्ष्यते, यत् खलु सुशीलतैव सारं सर्वधर्म्माणाम्, अनर्थ-निवारिका च, परन्तु सा तापसानां तपो वर्द्धिका विषयैषिणां विषयभूयिष्ठत्वसम्पादिका, मुमुक्षूणाञ्च मोक्षनिदानम् । इति सर्वात्मनेयं चतुर्वर्गसाधिका, प्रियतमा च साधूनाम् । भवतापि साधुवृत्तेन नास्मत्स्वामिशरचौर्य्यं कार्य्यमिति प्रतिभाति । अथवा योऽयं भवान् परशरग्रहणलालसः ईदृशे कुमार्गे कृत-पदसञ्चारः, तत्र तु स्वसायकसादृश्योपादानक-भ्रान्तिरेव कारणं

जागर्त्ति। सम्प्रति त्वया परविद्धं मृगं विद्धाऽपि न व्रीड्यते, प्रत्युत स्तेयमेव कर्त्तुमुद्यतेन भूयते। इत्यहो! महासाहसमनुष्ठितम्।

अस्मत्प्रभुः जात्वपि नात्मानं श्लाघते, नापि सर्व्वजनाह्लादनं परमुखोच्चारितं स्वगुणजातं श्रोतुमपि सहते; न वा परदोषख्यापनमिव स्वगुणख्यापनं सुकरं तेन, तथापि यदिह किञ्चिद् वक्तुकामः, तत् केवलं कार्य्यार्थितयैव। धिक् खलु याचनां, येयं बुधस्यापि मर्य्यादामतिवर्त्तते। अस्मत्स्वामिना अनिहते च तस्मिन् वराहे, स्वबलमाश्रितोऽसौ यदकरिष्यत्, अहो! तादृशमतिभीषणं व्यसनं कदापि ते मा भूत्; तादृशः खलु अशनिकठिनदेहसम्भारः महावराहः किरातपतिमन्तरेण न केनापि शक्यते हन्तुम्। इत्थं जीवितसंशये सम्यग् उपकर्त्ता प्रियसुहृत्ते मेदिनीपतिः; भवतः तेन सह वैरं तु समूलमुन्मूलयिष्यति कृतज्ञतायाः वीजमपि। तदिह विरम्यताम् इतः व्यापारात्।

यदि वैभवावाप्तिरेव जागर्त्ति चेतसि, तत्रापि ब्रवीमि,— पश्य तावदत्र संसारे अर्थसम्पदः एकतः कष्टसाध्याः अपरतश्च रक्षणादिक्लेशावहाः, दुःखावसानाः, गत्वर्य्यश्च; मित्रं खलु सहजसाध्यं न तु दुर्लभं, स्वयञ्च रक्षकं न तु रक्ष्यं, चिरस्थायि न तु क्षणभङ्गुरं कल्याणोदर्कञ्च; अतः मित्रमेव प्रकृष्यते धनजातेभ्यः। प्रवला रिपवश्च मेदिनीमपि प्रसह्य नयन्ति। धनमपि कतिपयदिनस्थायि, अयन्तु सुहृद्, अचल इवाचलः, अन्विष्य स्वयम् एव मैत्रीं कर्त्तुम् उपगतः, महीपतिश्च; अतो नावमन्तव्यः। प्रात्तायुधं तपश्चरतः ते विजयाशा एव प्रेयसी चेतसि, न कदाचित् मुमुचेति सम्भाव्यते; सा तु महीभृता सह

मैत्रीसम्पादनेन सफला भाविनीति सख्यमेव सर्व्वथा विजयते। नायमकिञ्चनः प्रभुरस्माकं, यतो नार्हति मैत्रपदवीं ;. तस्य च अश्वाकरो भूभागः, मत्तगजेन्द्रप्रसविनी अरण्यानी, बहवः रत्ननिचयाश्च सन्ति। नायं काञ्चनशरलुब्धः, किन्तु अधिक्षेपा-सहिष्णुतया कृतमिदं दुष्करमनेन। प्रभोर्मे खलु अयमेव स्वभावः, यत् सावलेपं जिघृक्षिति रजस्यपि भवति स सविकारः। किन्तु,—दूरमास्तां धनकथा ; याचकाय जीवितमपि समर्थः प्रविहातुम्।

तदिह कृत्वाऽस्मै सायकसमर्पणं, विधेहि रामसुग्रीवयोरिव यदृच्छोपगताम् अन्योऽन्यविषयिणीमनुरूपां मैत्रीं, नैवं भवान-स्माभिः मिथ्याभियुक्तः, वञ्चिणोऽपि वीर्य्यसर्व्वस्वभूता बहवोऽत्र सायकाः कृतसद्भावाः। कुतः समास्था अकिञ्चनतापसबाणे। यदि भवानेव मार्गणार्थी वर्त्तते, याच्यताम् अस्मत्स्वामी ; स तु समा-सादितभवादृशप्रार्थिजनः समर्थः मेदिनीमपि विजित्य दातुम्। विचक्षणोऽसौ सर्व्वदैव परोपकारप्रियः, तत्सकाशात् केऽपि याचका न जातु विफलप्रयासाः। स हि विदितार्थिजन-प्रणय-भङ्ग-वेदन इव वेत्ति सर्व्वम्। स्वयंग्राहिणः किं याञ्चादैन्येन ? इत्यभिमानमपि भवतो न श्रेयसे सम्भावयामि ; यतः धनिकेषु द्वयमेव स्वयंग्राहित्वसम्पादकम् ; एकः खलु सामार्थ्यातिरेकः, अपरश्च अपराधेऽपि अविकारी प्रेमसद्भावः, वीतनिरुक्तकारण-द्वयस्य अधिकबले प्रसह्य स्वयंजिघृक्षा, फणिशिरोमणिग्रहण-साहसवत् अनर्थोदर्कैव।

शस्त्रार्थसम्पत्त्या चेत् शक्तत्वाभिमानः, तत्राप्येतदुच्यते,— अहो! ब्रूहि तावदिह विशाले भूमण्डले, तापसजनेषु ऋते जामदग्न्यं, न कोऽपि श्रूयते प्रकृष्टो धनुर्व्वेदपारङ्गमः। अतो

नावसरः ते ईदृशस्याप्यभिमानस्य। युष्मन्मृगवधशरव्हरणाभ्यां द्रोहिणी मम, तेन सह कथं सख्यम् इत्यपि मैवं वोचः, स खलु अत्युदारः, मुनिचापलविजृम्भितमिममपराधं सोढ़वान् एव। प्रमादिनां हि अन्नतैव दोषावरणिका मानवानां सर्व्वत्र। किन्तु ईदृशं पुनः जन्म वेश-तपो-विरुद्धं मा कुरु नीचकार्य्यं, कुर्व्वाणः खलु इहामुत्र च भवसि विपदास्पदम्। मुनिचापल्यमेव भवतः सुतरां प्रतिभाति, यत् किल साम्प्रतम् अचिकीर्षितदेव-पितृसमभ्यर्च्चनस्य, वृतस्य पद्वीमपि दातुं, मुनिजनविगर्हितं मृगव्यापादनम्। सम्प्रति परित्यज्य चापलः भव साधुवृत्तः। सर्व्वैः सर्व्वदा अनुष्ठीयमानः अपराधः न केनापि चन्तुं शक्यते। शश्वत् प्रवृत्ताः युगान्तवाताः निसर्गघोरं महोदधिमपिव्याकुलयन्ति। प्रभुर्नः पर्व्वतीयकिरातबुद्ध्या मा भूदवज्ञेयः। स तु सर्व्वास्त्रवेद-वित् सकलवीराग्रगण्यश्च ; या खलु पर्व्वतोदरवनवसतिः, सा च महेन्द्रस्य सानुनयप्रार्थनावशादेव कथंकथमपि स्वीकृता तेन। अब्रवीच्च सः—"यदिह मुनिचापलात् किमपि अकार्य्यम् अनु-ष्ठितं, तत्सर्वं सुतरां तितिक्षितं मया" इति। तदत्र तस्मै दत्तशरः प्राप्तविभवो भव, साधुसमागमस्तु स्वीयप्रेयःसम्पादकः, विनयादिगुणाधायकः, व्यसनतिरोधायकश्चेति कुतो न रोचते तुभ्यम्? न चायं दूरे वर्त्तते, दृश्यताञ्च अत्रैव वृक्षान्तराले तीक्ष्णायुधधारिभिः सेनासमूहैः परिवेष्टितः समयं प्रतिपालयन् भूपतिरस्माकं, सफणितरङ्गाकुल इवाम्भोनिधिः, अतीव भीषणः वहंश्च सज्यं गुरु कार्म्मुकं, वासवध्वज इव विद्योतमानः तिष्ठति। अस्य च छन्दानुवर्त्तिना भवता सर्व्वमेव अभीष्टजातम् आसादितं भविष्यति। इति सर्व्वं निरणायि।

---

# चतुर्दश सर्ग —

—)०(—

वनेचरं प्रति अर्ज्जुनप्रतिवाक्यवर्णनम् ।—

अथ तस्यैव सावलेपैः वचनप्रपञ्चैः जलधिज लताड़ित इव शैलराजः, नितराम् अभिहतः, भृशं कुपितोऽपि नासीत् तदानीं कोऽपि तस्य चेतसो विकारः ; परन्तु वाग्मिप्रवरः तेनैवानुमित-भावाभिप्रायः समयोचितञ्च विवक्षुः श्वेतवाहनः, अक्षुभित इव प्रापञ्चयत् वाक्यप्रपञ्चम् ।

तथा हि,—लोकेऽस्मिन् विस्पष्टवर्णाभरणा प्रसन्नगम्भीरपदा श्रुतिमनोहरा द्विषामपि हृदयाह्लादिनी वाणी अकृतपुण्यकर्म्मणां न जातु प्रसरति । भवद्वाणी खलु तादृशगुणशालिनीति सर्वत्र विजयते । केचन सन्ति केवलवाग्जालव्याख्यानपराः, केचन तादृशा अपि वचनरचनासु मनोगतभावसन्निवेशनपटवः, कति च निगूढार्थमपि प्रकाशसादयन्ताः ; ते च सर्वे यथोत्तरं प्रकृष्यन्ते सभ्येषु सम्मानिताश्च ; त्वयि तु सकलमविकलं विराजते, इत्यहो ! वैचित्र्यं किरातस्य । केषाञ्चिदिह पण्डितानाम् अर्थगौरवशालिनी वाणी किल हृदयाह्लादिनी, केचन सर्व्वदा शब्दाडम्बरप्रियाः वर्त्तन्ते । एवं च रुचौ भिन्नायां सकल-जनलोभनीया भवदुक्तसदृशी भृशमसुलभैव वाणी । त्वया तु इत्थं विरचिताशेषगुणभूषितवाक्यतया वनेचरेणाऽपि वाग्मिजनाग्रे-सरेण भूयते । अहो ! नु वचनरचनभङ्गिः भवतः,—यदिह सान्त्वताप्रदर्शनपुरःसरं प्रलोभनमुत्कीर्त्तितं ; बाणार्थिना च तथाऽभियुक्तं यथा अन्याय्यमपि न्याय्यमिव प्रतिभाति । उच्यते

खलु,—यदासौ फलविघातकम् अस्मदास्कन्दनरूपम् अन्याय्यमाय्यं मच्चिकीर्षुस्ते भूपतिः, तदा न कथं प्रतिषिद्धः? समान-सुखदुःखभागिना खलु भृत्येन सर्व्वत्रैव हिते नियोज्यते स्वामी। भवद्वाणस्तु कुत्रचित् अदृष्टीभूतः तदर्थं शैलानुसन्धानमेव साम्प्रतम्। अत्र सज्जनातिक्रमः कथमपि न युज्यते, खाण्डववनं बुभुक्षुणा च भगवता कृशानुना विहिताशेषशरकलापस्य सुर-सायकेष्वपि विधृतावज्ञस्य मे कथमिह साम्प्रतं शैलजनबाण-जिघृक्षा बलवती वर्त्तते? यदि सदाचारः प्रमीयते, ततो निरागसि कृततिरस्कारस्य कोऽयं सद्भावप्रकाशः? दोषमासज्य गुणापकर्षेण सुजनस्यापि स्कन्धोपरि भृशं दत्तहस्तस्य सततं संवृतभावस्यापि दुर्ज्जनस्य वाक्यमेव सकलरहस्योद्भेदकं परि-लक्ष्यते।

यदुक्तं भवता—"मुनिचापस्यैव मृगव्यापादने प्रतिभाति", तत्रेदमुच्यते,—मृगा अत्र वने निवसन्ति, ते च कस्य परिग्रहाः? अपि तु तान् यः प्रसह्य निहन्ति, तस्यैव ते परिग्राह्या भवितुं युक्ताः; विनाशितश्च मयैव वराहः। अत्र भवत्स्वामिनः ममेत्य-भिमानः नितरां हेयः, अन्यथा श्रेयः न भविष्यति। भगवता व्यासेन कस्मैचिदमार्गप्रदानपूर्व्वकमेव व्रतम् उपदिष्टम्, अतः जिघांसुरयं व्यापादितः। आत्मत्राणार्थम् अस्य बधः न निष्कारणः भवितुमर्हति। स्वभावश्चायं किरातानां यदिह स्वार्थसम्पा-दनार्थं तैर्मृगो व्यापाद्यते, अस्यापि तथा कुर्व्वतः कथं तापसे मयि दयाप्रदर्शनम्? यदि कृपैवात्र भवति, तदा किं शुष्ककालहेन? पिष्टपेषणं भवता कृतमिति यदुक्तं तत्रेदं पृच्छामि,—मृगः खलु युगपदेव विद्धः तत्रावयोः पौर्व्वापर्य्ये किं प्रमाणम्? अपि च निरायुधे सत्त्वजिघांसिते तापसे एव

महताम् अकृत्रिमा कृपा परिलक्ष्यते। धृतसज्जशरासने च मयि सा कुतः सम्भाव्यते ?

अथ चेत् मम त्राणार्थम् इह तस्य शरविक्षेपः, तस्य तु शत्रुनाशः एव फलं, तच्च फलं सम्पूर्णं मया स्वीकृते भवद्रूपतः अतीव साफल्यम् उपजातम्। स्वायुधस्य परत्राणशत्रुवधपात्र-प्रतिपादनानाम् एकहेलयैव सिद्धेः। तथापि अयं शरलोभः इति अहो! कृपालतायाः मूलान्यपि निकृन्तति। "भवता म याच्यताम्" इति यदात्थ, तदपि मनस्विनां नैव युज्यते। ये च प्रसभं स्ववीर्य्यबलात् सर्व्वम् आजिहीर्षवः, न जातु तेभ्यः रोचन्ते परावनतिमलदूषिताः सम्पदः। भवत्स्वामी सम्प्रति कृत-मिथ्याऽभियोगः दुर्लभं किमपि विपरीतं लब्धुमिच्छति। नैतत् चित्रं तस्मिन्,—"विनाशकाले विपरीतबुद्धिः" इति सार्व्वजनीन-प्रवादात्। अथ आयुधेन तस्य नितरां प्रयोजनं वर्त्तते, तदनेन किम् ? मम सकाशे अन्यदपि शरासिवर्म्मकार्म्मुकादिकं विलसति, न कुतः प्रार्थ्यताम् ? शक्तिरस्ति,किमिदं याच्ञादैन्येन ? शक्तिमतां हि स्वयंग्रहः भूषणमेव। निरागसि तापसे असूयापरायणोऽसौ सर्व्वापि मे गुरुः कथं भवितुं पार्य्यते ? परन्तु परश्रीकातराः दुर्ज्जनाः स्वभावशत्रवः साधूनाम्। अपि च वयं वर्णाश्रमधर्म्मप्रति-पालनपटवः, विशुद्धवृत्तयः, क्षत्रियाः ; स खलु जातिहीनः हिंसाजीवी किरातः,इत्यावयोः सङ्गतमिह गजगोमायुसङ्गतमिव सर्व्वथा असम्भाव्यमेव। मोहान्धस्य अवमानना शृगालस्येव सिंहानां न धैर्य्यविघातिका समुन्नतानां ; समानवीर्य्यान्वयपौरुषस्य तु सा सुतरामेव सिंहस्येव सिंहानाम्। अपरश्च विवेचकः नीच-जनेन सह वैरसख्ये गुणयशोमालिन्याधायकत्वात् नियतमेव उपेक्षते। मया तत एव तव किरातभूपतेः अतिपरुषमपि तिरस्कार-

वचनं सर्व्वथा सोढ़ुं ; यदि पुनरयं शरजिघृक्षुः अत्रैवागमिष्यति, तदा दृष्टिविषात् विषधरात् शिरोमणिमाजिहीर्षोरिव शोचनीयां गतिं लप्स्यते ।

अर्जुनवाक्यं श्रुत्वा किरातस्य हरसमीपगमनम् ।—

इति निगदितवन्तं श्वेताश्वम् "अस्मान् जित्वा क्व गमिष्यति" इति स्वप्रतापेन भापयन् किरातदूतः सेनासङ्गतस्य भगवतः त्र्यम्बकस्य समीपं प्रस्थितः ।

दूतवाक्यमाकर्ण्य ससैन्यस्य भगवतः अर्ज्जुनजयार्थमागमनम् ।—

अनन्तरञ्च भगवतः किरातवेशधारिणः सेनापतेरादेशेन भृशं शब्दायमाना युगान्तवाताहता जलधिवीचिसन्ततिरिव प्रचलितुमारेभे किल किरातसेना । तदानीञ्च रणाय त्वरयन्निव, सञ्जाततरङ्गं पताकानिचयमाकलयन्, सान्द्रशीकरकरम्बितः प्रससार शनैः सुरभितरः पवनः । सेनाकलकलश्च जयारवैः, सिंहनादैः, मौर्व्वी-करतलध्वनिभिश्च नितरां वर्द्धमानः, भूधरगह्वरोदरेषु अवकाशमलभमानः प्रकम्पितधरातलः दिग्दिगन्तरालं समश्नुवानः जातः । सौरकिरणाश्च चमूनां निशितायुधसंक्रान्ताः विस्फुरन्त्यः समुद्भासयन्तो दिगन्तरालं, विद्योतमानाः संवृत्ताः । शिवोऽपि विशालवक्षसा प्रच्छाद्यैकदिग्भागं, विस्फार्य्य च धनुर्मण्डलं, स्वप्रभावेण वितत्य च पार्श्वद्वयं, मध्यस्थितोऽपि चमूनामुपरीव राजते स्म । सुगमेषु दुर्गमेषु च वनोदरेषु समसञ्चारैः अहमहमिकया यियासुभिः सेनाचयैः निरन्तरनिरुद्धं तदानीं गिरिवनगह्वरं विगतप्राणमिव सर्व्वतः सञ्जातम् । केचनात्र वनभूभागाः किरातसैन्यैः अतितरां प्रतिरुद्धनिर्म्मुक्ताः यथाक्रमम् अतिरिक्तनिम्नीकृता इव संवृत्ताः । वनेषु महती लतासन्ततिः क्वचित् सेनानां परितः प्रसरन्तीनां

विशालैः जङ्घाभिः विच्छिन्नाः । शालचन्दनतरवश्च प्रजविपवनेन विघूर्णिता जाताः ।

अथ तेषाम् अर्ज्जुनान्तिकप्राप्तिः ।—

अथ तं तपसा कृशाङ्गयष्टिम् अभिमानिनं समग्ररिपुराज-दहनोद्यतं दहनमिव द्योतमानं, निषङ्गात् बाणमेकं हेलयैव उद्धृत्य विधृतवन्तं विजिगीषुम् अपूर्णप्रतिकारपेलवे किरातसैन्ये शनैःशनैः कृतदृष्टिनिक्षेपं,विपत् प्रतिकारसमर्थे च स्थिरे स्वशरासने कृतनिर्भरं, निर्व्विकारचित्तमपि परैर्दुष्प्रधर्षम् अदूरवर्त्तिनः वराहस्य बधात् सम्भृतान्तकसमानकान्तिं, निसर्गेण धैर्य्येण च भूयसा असाधारणगाम्भीर्य्यशालिनं वृषस्कन्धं स्थूलकन्धरं वृहत्-शिलाफलककठोरवक्षःस्थलं, धरणीधरणोद्यतं जलधिजलोन्मज्जितं महावराहमिव, मरकतमणिश्यामलं देहौज्ज्वल्येन च सर्व्वानेव प्राणिनः परिभूय प्रकाशमानं धृतमानुषविग्रहं पुरातनं पुरुषं नरमिहाभ्युपेतं सफलकर्म्मारम्भं त्रिलोकोपरिभावि तेजः दधानं धनञ्जयं ग्रीष्मावसाने सम्भृतसलिला घननिचया इव अचलेन्द्रं, समासेदुः ते प्रमथगणाः ।

अथ तेषाम् अर्ज्जुनेन सह युद्धवर्णनम् ।—

पूर्व्वं खलु अदृष्ट्वा धनञ्जयम् "अहमेव जेष्यामि" इति प्रक-टितपराक्रमास्ते सम्प्रति तत्प्रभावेण विहतप्रभावाः सन्तः अप्रति-पत्तिमूढ़ाः सञ्जाताः । ततश्च प्रत्येकमपारयन्तः सम्भूय पुनः तं प्रमथाः प्रहृतवन्तः । तैश्च प्रक्षिप्ताः प्रजविनः प्रवृत्तपत्त्रस्वनाः बाणसमूहाः वनतः समं समुत्थिता विहगा इव समन्तात् समुत्-पतिताः । आसीच्च तदानीम् अचलसानुषु प्रवृत्तप्रतिरवसम्मू-र्च्छितः विदारयन्निव दिगन्तरालं महीयान् धनुर्निनादः । समजनि च वनानि विकम्पयन्तो, उपान्तानन्तदिगन्तराणि

मंछादयन्तो, ध्वनयन्तो च सज्जेत:· प्रबलवाताभिहतेव वृष्टि: गणबाणसन्तति:। अर्ज्जुनस्य तु पवमासान् अनिलाशिनोऽपि सम्प्रति धृतरणोत्साहस्य शिथिलमपि वर्म्म मर्म्मत्र मिव सुदृढ़ं सञ्जातं; स च दृष्ट्वाऽतिमात्रशरसम्पातं विकृष्टशरासन: प्रलय घोरदर्शन: अर्ज्जुन:, स्वशरै: सङ्कोचयन्निव ककुभं, विक्षिपन्निव सौरकिरणं, घूर्णयन्निव समीरणं, चलयन्निव सशैलं महीतलं, तानन् प्रस्थातुमारेभे; प्रस्थाय च अन्तरैव तेषां किरातानाम् आयुध जालं स्वशरसम्पातै: व्यर्थमकरोत्। तैश्च दूरप्रसृतै: शरसमूहै: मुनि: सुतरां प्रवृद्धो बभूव। तैश्च किरातै: खलु अर्ज्जुनविक्षिप्ता: विश्वमन्तर्धायाभिपतिता: बाणा:, अन्तरीक्षात्, क्षितितलात्, दिङ्मण्डलात् उत सौरबिम्बात्, अथवा सङ्कृदिकृष्टात् मुने: शरासनात्, तस्य शरीराद्वा इति भृशं सन्दिह्यन्ते स्म। एतदेव महदाश्चर्य्यं—यत् अर्ज्जुनविनिर्म्मुक्ता: माशका: मर्म्मोच्छेदपटवोऽपि गणाधिपानां मरणमापा दयितुमशक्नुवन्त: कृतापराधा इवावाङ्मुखा: ·हिमाचले वेगेन प्रविष्टा:, ते च नाकार्षु: पिष्टपेषणम्। समकोचयंश्च हिमांशोरंशव इव पङ्कजावलीं, सर्व्वानेव प्रमथगणान्। प्रमथाश्च सर्व्वात्मना दु:सहान् तान् मुनिविक्षिप्तान् शरनिचयान् न सोढुमशक्नुवन्। यदाऽसौ बाणकिरणभास्वरवपुषा द्योतमान: धनञ्जय: प्रवृत्त: योद्धुं तदा सर्व्वा हरसेना: प्रत्येकम् अग्रत: स्फुरन्तमिव तं ददृशु:। तस्य च शरौघेण महोग्ररंहसा विधूनिता: सङ्गिनीं भ्रान्तिमीयु:।

संशयोऽपि खलु एष समजनि तासाम्,—अहो! किमयं तप:प्रभावेण भूयसी: अदृश्या: तनू: विधाय अस्मान् प्रहरति? उत अस्मदायुधान्येव सायाविहतानि पुन: प्रतीपमानि रंह-

त्तानि ? अथवा देवा एव किल अस्य गुणेन भयेन वा समाकृष्टाः संवृतदेहाः प्रहर्त्तुमुद्यताः ? अन्यथा कथममी सन्ततं जलधेः तरङ्गा इव अनेके भवन्ति बाणाः ? किमयं समासादित विजयः विरमेत् ? त्रिभुवनस्य मङ्गलं नु भवेत् ? इति ।

अतः परं च सर्व्वाण्येव बलानि धनञ्जयबाणविद्धानि, नितरां प्रव्यथितानि च न किञ्चित् विविदुः ; सर्वतः चक्राकारमण्डलताञ्च विदधुः । इत्थं शरजालैः सम्यक् संछादिते दिग्दिगन्तराले, क्रियमाणे च सुतरां स्वकार्म्मुकविधूननम् अनेन, तदानीं जयलक्ष्मीः भीतभीता कथंकथमपि हरसेनापक्षपातं परित्यक्तवती । एतानि सुष्ठु वर्णितानि ।

## पञ्चदशे सर्ग—

शिवार्ज्जुनयोः युद्धवर्णनम् ।—

अथात्रभवता महाकविना यमकादिशब्दचित्रविचित्ररचनाप्रपञ्चैः प्रपञ्चितः निजसहजपाण्डित्यप्रकर्षः । तथाहि—अथ तत्र सकलमेव भूतजातम् अर्ज्जुनबाणभीतं संवृत्तम् । सेना च महेश्वरस्य सन्त्यज्य स्वायुधानि भृशं पलायिता । तदानीं पुरोवर्त्तिनमपि त्र्यम्बकं न दृष्टवती । धनञ्जयोऽपि तदीयदुर्द्दशां दृष्ट्वा कृपाविष्टो बभूव । महतां खलु महिमाऽयं विलसति, यत् नीचेष्वपि वैरिषु सकरुणोज्ज्वला वृत्तिः । स चार्ज्जुनः सशरशरासनं खड्गञ्च बिभ्राणः सुवर्णगजादिलाभार्थी आकलितशमदैवः रोचमानः स्कन्दमभियियासुः द्रुतात्वा नितरां

शुशुभे। भयविह्वलञ्च तत् सैन्यजातं पलायमानं सोऽपि मन्दमन्वियाय।

अर्ज्जुनशराघातकातरां सेनां प्रति स्कन्दवाक्यवर्णनम्।—

अथ सैन्यभङ्गदर्शनात् किञ्चित् स्मयमानः ईषद्व्याकुलितचित्तः तत् प्रतिषेद्धुं तिर्य्यगवस्थाय रणलब्धवर्णः स्कन्दः इदमुक्तवान्,—"अहो! क्रीड़ासमरयोस्तुल्यवृत्तयः! चमूपतयः! न त्यजत यूयं संग्रामम्। पुरा असुरानपि विजित्य लब्धं सुयशः, सम्प्रति अप्रमथैरिव कथं विलुप्यते? दृश्यतां खलु सूर्य्यकिरणसम्पर्केण द्विगुणतरोज्ज्वला तथोद्यता अमी खड्गा अपि वः कृतपोहासा इव वर्त्तन्ते। रक्षकेऽस्मिन् वने मृगवत् पलायमानानां भवतां बाणपातजनितदुःखप्रशमनोपायम् अहमेव चिन्तयामि। उन्नतानामपि औन्नत्यं विखण्डयद्भिः प्रभूतकीर्त्तिभिः सम्प्रति कस्याः विपदः प्रतिचिकीर्षया युद्धनिवृत्तिरूपम् अतीव साहसम् अनुष्ठितम्? नायं असुरपन्नगराक्षसानामन्यतमः; परन्तु धृतोत्साहः रजोगुणसम्पन्नः धरणीतलगतः सुखसाध्यः कोऽपि मानवः। अहो! तापसोऽसौ कृपालुः सन् शनैः निक्षिप्तबाणः हेलयैव वः पशुमारममारयत्। हे विविधास्याः! प्रमथगणाः! ये खलु नीचजनेन ताड्यन्ते यः तैरपि, ते नैव पुरुषपदवाच्याः। यश्च स्वप्रभुम् अक्षतशरीरं कर्त्तुमर्हति, स ताड़ितोऽपि सम्मानितः। पिष्टपेषकोऽपि कृतापराधः भवति। भ्रष्टमणेः मणिहीन इव, भ्रष्टगुणात् निर्गुणोऽपि श्रेष्ठो मन्यते पुरुषः। ततो भवतां न किमपि भयकारणम् अवैमि; यतोऽस्य न सन्ति प्रजवना रथाः, क्षिप्रगामिनः तुरगाः, मदमत्ता वा गजाः, उत पदातयोऽपि प्रबलाः। शत्रुनिर्ज्जितानाञ्च साम्प्रतं वः यशोऽपि मालिन्यमुपगतम्। स्वर्गेऽपि असुरविजयिनां युष्माकं वह्नुपादप-

युतेऽस्मिन् नगे क्षुद्रशत्रौ पलायनं नैव युज्यते। न खलु यूय मनाथाः भवताम् अधिपतिः भगवान् त्र्यम्बकः सर्व्वात्मना गोपायिता भविष्यति। यूयं सर्वत्र शक्तिमन्तः, घोररूपाः, स्वामिभक्ताः, रक्षकाः, विशुद्धस्वभावाः, भीमाः, अभयदाश्च सर्व्वेषां ; कथमिदानीमेवं क्रियते ?

ये च न जातु देवान् मानुषानपि गणयन्ति, यैः सदृश-गुणाश्च भुवि अन्ये नावलोक्यन्ते, ते तेजस्विनः कथमधुना मानितां परित्यक्तुं यतन्ते ? दृश्यतामिह भवतां शत्रुरपि खड्ग-पाणिः स्वप्रभावेण द्योतमानः रणसहिष्णुः सन् निर्भीक इव अप्रकम्प्यः वर्त्तते, तद् भवद्भिरपि स्थातव्यमेव। चित्रश्चैतत्,— पुरा लोकभयङ्करे हताश्वगजपदातौ रुधिराम्बुनदाकुले ताण्ड वितमहाकबन्धे सञ्जातवीरमहाकोलाहले असुरसङ्ग्रामे प्रवृद्धं वः पौरुषम् अधुना विलुप्यते खलु"। इति।

सेनां प्रति शिवस्याश्वासनम्।—

अथ तान् पलायमानान् प्रतिषिध्य शासति तत्र स्कन्दे, भग-वान् हरः सस्मितः प्रतिषेधवाक्येन आप्याययामास। तेऽपि शरताड़िताः भयभीताः प्रमथगणाः अभयवाक्येन तेनाश्वस्ताः शिवं जलधौ पारमिव प्राप्य अभिननन्दुः।

अथ तयोः तुमुलसंग्रामवर्णनम्।—

सोऽपि छायां तरुरिव आत्मैकशरणां तां चमूं न मुमोच। अपि तु पिनाकनिस्वनेन आपूरयन् दश दिशः प्रत्यर्ज्जुनं बाणान् चिक्षेप ; प्रमथाश्च चित्रार्पिता इव अवलोकितभीमविग्रहाः विस्मिता आसन्। अभ्यासपाटवेन भगवान् धनञ्जयप्रयुक्तान् सर्व्वानेव बाणान् चिच्छेद। अर्ज्जुनोऽपि सुशिक्षावशेन तस्य तानाक्षिप्य समरेऽस्म चारु चचार। प्रकम्पयंश्च सज्यं

गाण्डीवं भानुमानिवाबभौ। तत्प्रयुक्ताश्च बाणनिचया नीरन्ध्र सुरशरसंछादकाः संवृत्ताः।

अथ महेश्वरः सव्यसाचिप्रयुक्तां महतीं शरवृष्टिं विधूय नीरपथमपि भृशमवरुरोध; किन्तु मुमोच खलु कृपालुतया नारुन्तुदान् बाणान्। तदानीञ्च सर्व्वतः प्रसारिणी हिरण्मयी बाणावली नितरां निर्ह्रादवती विद्युदावलीव शोभमाना संवृत्ता। अर्ज्जुनश्च विद्धोऽपि हरशरेण न प्राकम्पत, परन्तु नागराज इव विराजते स्म नितरां धैर्य्यसम्पन्नः। अथ हरनिवारितबाणपङ्क्तिः व्यर्थप्रयत्नः असौ, निरराम् अभिवृद्धः विकिरन् तेजोनिचयम्, ओषधिप्रदीप्तः हिमाचल इव ददृशे। महेश्वरोऽपि प्रदर्शिताप्रतिहतवीरभावः तस्मै किल ऊर्ज्जस्वलमपि अघातुकं बाणमेकं प्रयुक्तवान्। प्रतिचिकीर्षुश्च तं हरशरं श्वेताश्वोऽपि शरजालच्छायावृतां धरणीमकरोत्। तथापि हरसायकः घनमपि निरस्य बाणजालं सहसा प्रससार। महर्षिभिरपि तत्रासन्नैः प्रदर्शितविविधगतिलाघवः स धनञ्जयः बुबुधे खलु एकोऽप्यनेकः।

अथ पाण्डवशरजाले नितरां रोचमाने, सभङ्गे च हरसायके मानवस्य युद्धनैपुण्यम् अवलोकयन्तः विस्मिताः सर्व्वे प्रमथाः। रणमीक्षितुम् आगताश्च देवमहर्षिप्रभृतयः अन्तरीक्षगाः संवृत्ताः; ईदृश एव लोमहर्षणसंग्रामः सञ्जातः यत्र तत्त्वविदामपि मुनीनां तद्दर्शनविस्मितानां गात्राणि पुलकितानि संवृत्तानि।

---

## षोडशः सर्गः—

लीलाकिरातस्य भगवतः समरसन्दर्शनेन अर्ज्जुनस्य वितर्कवर्णनम्।—

अथ तत्रभवान् अर्ज्जुनः समुत्प्रेक्षितकिरातपतिसमरव्यापारः भृशमुद्दीप्तमन्युः कारणकलापमनुसन्दधानः इत्थं वितर्कितवान्,—"अहो! संग्रामेऽस्मिन् मदस्राविणः वीरपुरुषाध्युषिताः गिरिकूटसन्निकाशाः न सन्ति वारणाः? न वा मणिखचितपताकासमलङ्कृतैः पयोदमन्द्रनिर्घोषैः आवृता धरणी महास्यन्दनैः? न वा श्वेतचामरसंशोभिता विलसत्प्रास-रमणीया वाजिसन्ततिः प्रतिदिशं समभ्रवाना वर्त्तते? अस्त्राणि वा अभ्यमित्रं योधप्रयुक्तानि सौरकिरणसम्पृक्तानि गगनमध्यमध्यारोपितानि? न वा सकललोकग्रसनोद्यतस्येव महाकालस्य सन्ततधूमधूम्रं प्रभामण्डलमिव अम्बरथचक्रसमुत्थं धूलिपटलं विक्षिपन्तः न प्रवान्ति वाताः? न वा वीरवरणार्थमागतानां सुरसुन्दरीणां भूरेणुसमाच्छादिते लोचनपथे दिवसेषु प्रदोषभ्रान्तिः? न वा दुन्दुभिनादसंवादिनः रथाङ्गवाजिवारणध्वनयः उज्जृम्भन्ते? न वा यशःपौरुषलोलुपानाम् अरातिभिरतिमात्रं विद्धानां मूर्च्छापनोदनपटवः आसारशीतला वारिशीकराः? न वा रुधिरनद्यः रजतरुप्यचीयमानाः प्रवहन्ति? न वा सुरनिर्मुक्ता मन्दारमाला गजाभियायिनां वीराणां गजदशनविक्षतवक्षःस्थलानां नैव मूर्च्छापहारिकाऽवर्त्तत? न वा करिमदशीकरधारासु संप्रवृत्तासु, विलसितेषु च निषादिकवचमणिकिरणजालेषु, सौरकरसम्पादितं नोदेति वासवशरासनम्। न वा वैरिवारणनिर्भिन्ना वाहिनी चात्र दरिद्रन्ती

निर्ह्रादवती वर्त्तते ? न वा परगजाभिमुखमभिधावतां महारथानां गमनमार्गः छिन्नकरिकरपरिप्लुतः सञ्जातः ? न वा निषादिनः केऽपि तोमराभिहताः चात्र दृश्यन्ते ? न वा अत्रवस्थात्र वीराः शस्त्रघातयातजीवा वर्त्तन्ते ? इदमतीव विस्मयकरं,—यत् इह मे सकलवीरप्रमाथिनी शक्तिः सम्प्रति किरातयुद्धे नितरामवसादमुपागता। तत् किमियं माया ? मतिभ्रमो वा ? उत मे विक्रमः प्राप्तशैथिल्यः ? अथवा नाहं स अर्ज्जुनः अपरः कोऽपि संवृत्तः ? यत् इमे सायकाः गाण्डीवनिर्म्मुक्ताः यथापूर्व्वं किरातेषु न प्रकटितनिजविक्रमाः वर्त्तन्ते। नायं किरातः इति सम्भाव्यते, यतोऽसौ स्वधनुषा गगनमण्डलं विदारयन्निव वर्त्तते, तथा शरासनाकर्षणमौर्व्वीविधूनन-बाणसन्धानमोक्षणादिषु विचित्रम् अस्य हस्तलाघवं प्रतिभाति। शरीरमपि वीरोचितसंस्थानपरिशोभितम् आलीढ़ादिस्थानकेषु सततं स्थैर्य्यसम्पन्नं विलसति। शरसम्पातोऽपि अतीव सौष्ठवसम्पन्नः चलाचलेषु सर्व्वत्राविसंवादी परिलक्ष्यते। किं बहुना ;—यथाऽस्य पररन्ध्रान्वेषित्वपाटवम्, आत्मविवरसंरक्षणकौशलञ्च संदृश्यते, तथा वीरधुरन्धरे भीष्मे द्रोणे वा न कदाचित् सम्भाव्यते। अत एव साम्प्रतम् अप्राकृतस्यापि रणदुर्म्मदस्य खलु वीर्य्यं, दिव्यास्त्रप्रभावेण मया अवश्यं निवार्य्यते, अन्यथा महाऽनिष्टपातः"। इति।

धनञ्जयस्य दिव्यास्त्रयुद्धवर्णनम्।—

अथ इत्थम् अवधारितनिजकर्त्तव्यः तत्रभवानर्ज्जुनः स्वधनुषि प्रस्वापनं नाम महास्त्रं सन्निवेशितवान्। तत्प्रभावेण च सर्व्वा एव सेना भीमान्धतमसावृताः संवृत्ताः। झटिति प्रादुर्भूता काचिन्निद्रा च तासां चेतनापहारिणी समजनि। तत्र

च केचन शरासनानि समाश्रित्य तस्थुः। केषाञ्चित् इत्थम्भूते काले स्वायुधानि च करतलभ्रष्टानि जातानि। केचन तदानी-मपि अच्युतधैर्य्याः स्वांग्रभागसन्नद्धतरूणां स्कन्धेषु न्यस्तहस्ताः निषेदुः। तदानीं किरातवेशप्रच्छन्नशशिशेखरस्यापि शशिशेख-रस्य भालदेशात् सहसा पिशङ्गी ज्योतिःसन्ततिः प्रादुर्बभूव। तया च निर्धूतभीमतमोनिद्रया हरभालसमुत्थया गणेभ्यः विहितवस्तुप्रकाशया नितरां दिदीपे। ते च प्रमथगणाः सहसा वीतनिद्राः सन्तः भूयः प्रात्तायुधाः संवृत्ताः। अन्तरीक्षं समुन्नत-तरमिव जातं, दिशः प्रसेदुः,सौरकराश्च यथापूर्व्वं विकाशमीयुः। अर्ज्जुनश्च प्रस्वापनास्त्रं विफलं मत्वा पुनः भुजङ्गपाशान् योजित-वान्। विलसत्क्ष्विषरसनशतभीषणानाञ्च तेषां नागपाशानां प्रभावेण नभश्चरा इतस्ततः अपसस्रुः। आकाशमार्गोऽपि सार्गलः संवृत्तः। तेषां मणिमण्डितभोगशतैश्च नभो व्याकीर्णम्। भगवान् भानुरपि तन्निश्वासधूमस्थगितकरजालः अस्ता-न्मख इव सुखदृश्यः सञ्जातः। दिङ्मण्डलं पिशङ्गमुपजातं; तदानीं नासीत् विहायसि विहगसम्पातः, न वा स्वाभाविकी कान्तिः; परन्तु सधूममिव सर्व्वं समजनि।

भगवतो दिव्यास्त्रयुद्धवर्णनं, परस्परं दिव्यास्त्रपातवर्णनञ्च।—

अथ भगवान् पशुपतिः गारुडास्त्रेण तान् नागपाशान् विनिवारयितुं वियदखिलं गरुड़मयमिव विहितवान्। सुपर्ण-पक्षसम्पातजन्मा च प्रबलः पवनः उत्पाट्य तरुगहनानि, भ्रम-यन् आकाशम् आनिनाय। तदङ्गप्रभापिञ्जरितं तद्विशालवक्षसा विनोद्यमानञ्च नभोमण्डलं तमनुसरदिव रराज सुपर्णसङ्घः। हिमाचलोऽपि तत्पक्षप्रभवपवनप्रकम्पितसानुः सहसा क्षीव इव चकम्पे। तेषाञ्च सर्व्वतः प्रसृतया पिङ्गलभासा क्वापि अन्त-

च्छिता वनच्छाया। सर्पभिषयोऽपि सहसा समगात् प्रशान्त भावम्।

अथाऽसौ श्वेताश्वः स्वमायुधं वैरिप्रभावेण विफलमवलोक्य नितरां क्रुद्धः सन् पुनरपि दहनास्त्रं स्वधनुषि समयोजयत्। तत्प्रभवश्च भीषणः हुताशनः समन्तात् प्रज्वलज्ज्वालाजटः ग्रसमान इव सर्व्वम्, अस्त्रमुत्पपात। विभिन्नमीरकिरणः विश्वतः विच्छिन्नस्फुलिङ्गः विहितमहानिनादश्च स प्रबलवात्यानोदितः सन् क्वचित् हिरण्मयप्राकार इव, क्वचित् तुङ्गशृङ्गः सौवर्णाचल इव, क्वचित् काञ्चनभासुरं नगरमिव, क्वचिच्च कुसुमितकिंशुकानां महावनमिव ददृशे।

इत्थं सर्व्वेतोऽकं ग्रसितुमुद्यते चयकालदारुणे चलज्ज्वाले भैरयति ज्वलने, भगवान् महेश्वरः वारुणास्त्रं प्रयोजितवान्। ततः सहसा अचलेन्द्रसमाकाराः चपलाकुलकलितनीलमूर्त्तयः आविर्भूताः जलदाः; तेभ्यः पपात च नीरन्ध्रजलधारा। निपत्य च तत्र दहनदेहे ज्वालाकुलकराले भृशं शब्दायमाना जनितफेनमाला सकलमेव गगनं सधूमं वितताम। तदा नीरच शवलितधूमसङ्गता ज्वालाऽपि ज्वलनस्य, चित्रचीनांशुक-चारुतामकलयत्। अनन्तरं किञ्चित् प्रवृद्धः धूमायमानः पावकोऽसौ झटिति निर्व्वौ। आकाशोऽपि प्रशमितदहनैः मेघ-जालैः विनिर्म्मुक्तः धूमसहजश्यामलिमा संवृत्तः।

इत्यञ्च यदेवास्त्रं धनञ्जयेन वैरिवधार्थं धनुषि संयोजितं तदखिलमेव हरः व्यर्थताम् आनिनाय। ततोऽसौ धनञ्जयः शिव-संहृतसकलायुधजालः भूयोऽपि तं भुजबलेन जेतुमियेष।

## सप्तदशे सर्ग—

—)०(—

अथ अर्ज्जुनस्य हरसेनाभिः सह पुनः युद्धवर्णनम्।—

अथ धनञ्जयः निरस्तसकलदिव्यास्त्रः महानुभवेन सह विग्रहवशात् भीतोऽपि तदीयविजयलक्ष्म्या ईषन्मलिनच्छायः भूयो धैर्य्यम् अवलम्ब्य समाश्रितनिजनिसर्गवीर्य्यसम्पद्, प्राणेभ्योऽपि समधिकप्रेमास्पदीभूतां कीर्त्तिमासादयितुं कृताभिलाषः, समुन्मूलयितुम् अभिलषंश्च तरसा गिरिगुरुकमपि विपक्षवर्य्यं, स्वशरेषु पुनः विजयम् आशशंसे। तदनन्तरञ्च "अपूर्व्व-मेतत् युद्धं शक्तिसादकरम्" इति नितरां प्रव्यथितः सन् कोपातिशयेन विमुक्ताश्रुबिन्दुः, भूयोऽपि विग्रहीतुं मनो निवेशितवान्। तदानीञ्च क्रोधवशात् तस्य नयने लोहिते, मुखे च स्वेदलवाः, तिस्रश्च भ्रूभङ्गरेखाः सञ्जाताः। स च ध्वनयित्वा शरासनं शरजालैरभितापय्य च शम्भोर्बलानि नितरां जज्वाल। किन्तु शितिकण्ठकाये च सर्व्वा शरशक्तिः सम्यग् विकुण्ठिता समवर्त्तत। सायकाश्च ते हेमन्तोदितसौरपादा इव अचलेन्द्रसानुं नालं तं व्यथयितुमपि। शम्भुना च प्रीतेनैव तस्य तीव्रमपि पराक्रमम् अनुभूय विषेहे।

अर्ज्जुनस्य पराक्रमं विलोकयतः हरस्य वितर्कवर्णनम्।—

अचिन्तयच्च सः—"अहो! परेण सम्यग् निगृहीतोऽपि सोत्-साहः पुनर्ज्यायसि कृतविक्रमप्रकाशः लोकेऽस्मिन् वीर्य्योज्ज्वलानि यशांसि अर्ज्जयितुं शक्नोति। कृतविक्रमप्रकाशाच्च जनात् बिभेति वैरी, भीताच्च विलुप्यते तेजः, निस्तेजाश्च अभिमानात् च्यवते, त्यक्ताभिमानश्च तादृशः विजिगीषुणा सुतरां सुजयः", इति।

इत्थं बहु वितर्कयन् विधास्यंश्च तस्य सर्व्वत्र मौलीन्दुलेखाविशदां कीर्त्तिं भूयोऽपि योद्धुमियेष।

पुनर्भियस्तुमुलयुद्धवर्णनम्।—

अथ अर्ज्जुनशरावविद्धानि च शम्भोर्बलानि भीतानि, सम्स्तविपर्य्यूनि गोकुलानि इव वृष्टिजलपराहतानि, केवलं शरवर्षणरवं शुश्रुवुः। तदानीं कृतशरवर्षस्य स श्वेताश्वः भयविप्लुतैः प्रमथगणैः एकोऽपि अनेक इव ददृशे। त्र्यम्बकोऽपि दृष्टस्वगणसंक्षोभः विकृतिमापन्नः। किन्तु नास्य कोप उदियाय, केवलमाकृतिवैषम्यं किञ्चित् संलक्ष्यते स्म।

अथासौ भूतपतिः सध्यं शरासनं विस्फारयन् साक्षादन्तक इव लोकलोचन भीषणः समभवनि। सव्यदक्षिणभुजाभ्यां ध्वनयन्तं शरासनञ्च तं पर्य्यायसम्पादितकर्णतालं द्विरदमिव दुष्टं ददर्श धनञ्जयः। यावन्तो वाणाः अर्ज्जुनविनिक्षिप्ताः तदासन्, तेषु केचन हरसायकैः विश्लेषिताः, केऽपि मार्गे एव प्रतिरुद्धाः, केचिच्च सम्यग् विध्वस्ताः संवृत्ताः। तदानीञ्च तादृशं शरभङ्गम् अवलोक्य धनञ्जयोऽपि किञ्चिद्विलुप्तधैर्य्यः सञ्जातः। ततः स पुनः हस्तलाघवं प्रदर्शयन् हरसैनिकानामुपरि भूयः चकार वाणपातं; हरोऽपि स्वसायकपातमञ्जिन्ना तं सर्व्वथा निराचकार। चित्रं चैतदासीत्,—यदिह हरविनिर्मुक्ताः सर्व्व एव वाणाः सुहृत्प्रयुक्ता नर्म्मवादा इव तस्य प्रीतिकरा बभूवुः। इत्थं क्वचित् समानां क्वचिदतिरिक्ताञ्च मुनिबाणशक्तिमवलोक्य सेनाद्वयोऽपि विषम्प्रायः।

अथ भगवान् प्रकटीकृतस्वप्रभावः अर्ज्जुनस्य कृत्स्नमिव महेषुं युगपत् संजहार। धनञ्जयः च बाणशून्ये तूणीरे कृतकरार्पणः अनवाप्य च बाणमेकं, संघट्य च बहुशः, पश्चात्

तापमुपागतः, आह च—"अहो ! किं मे वृत्तम् ? नास्ति मे कश्चिदपि बाणः" इति। ततः तूणीरात् हस्तमानीय विषसः क्षणं तस्थौ। अत्रान्तरे शम्भुरपि भगवान् मर्म्मोपघातिभिः बाणैः नितरां तुतोद। तदा स भगवन्मायया मुक्तकञ्चुकः सन् मुनिः, मेघनिर्म्मुक्तः सूर्य्य इव, कोषनिःसृतः खड्ग इव, मुक्तकञ्चुकः सर्प इव, निरस्तमुखावरणः गज इव, गिरिगुहावहिर्गतः सिंह इव, निरस्तधूमः रात्रिवह्नि रिव भृशं दिदीपे। व्यगलच्च शरीरात् सहसा तस्य तूणीरद्वयम्। तदा रोषवशात् न किञ्चित् दारुणमपि प्रहारदुःखमज्ञासीत्। परन्तु महाबाहुरर्ज्जुनः लोहितदिग्धदेहः प्रविमुक्तसिंहनादः पादाघातेन विकम्पितभूमिभागः कुलिशकठोरेण चन्द्रलेखाकृतिपाण्डुरेण स्वधनुषा भूयः शम्भुं निपीड़ितवान्। ततः स हरेण अन्तर्मिलायितकार्म्मुकः अतितराञ्च विध्यमानः शरजालैः, भृशं सन्तप्तः बभूव। अनन्तरं संगृह्य महाखड्गं वनेषु चित्रं विचरन् प्राणभृतां भयङ्करः सहस्ररश्मिरिव नभसि जले च प्रतिविम्बितविविधमूर्त्तिः सर्व्वैः भूतगणैः ददृशे। अथ हरेण पुनः छिन्नखड्गः आच्छिन्नचापावरणेषुजालश्च स विरहितोद्यानः भूमिभाग इव रिक्तः प्रकाशश्च बभूव।

स च इत्थं पराभूतः तदानीं निरस्त्रोऽपि भूयः विजेतुमिच्छन् भृशं शिलावृष्टिमकरोत्; तस्यामपि भगवता विफलीकृतायां संछादितदिगन्तरालं चिक्षेप पादपजालम्। किन्त्वहो ! दैवदुर्विलसितं ! तदपि हरेण खण्डशः कल्पितमासीत्। तदा अनन्योपायः धनञ्जयः भुजाभ्यामेव तं पिहितवान्। महेश्वरोऽपि तं वैरिविजयमभिलषन्तं समागतञ्च चरणान्तिकं समुत्प्रेक्ष्य, जनकः शैशवे स्वतनयस्येव तस्य सुतरामविनयमपि विषेहे।

---

# अष्टादशे सर्गे

—)०(—

अथ हरपार्थयो: बाहुयुद्धवर्णनम् ।—

अथ तत्रभवता महाकविना भगवदर्ज्जुनयो: बाहुयुद्धमुपवर्णितं ; दर्शितश्चात्र महान् पाण्डित्यप्रकर्ष: । तथाहि,—भुजप्रहरणे तत्रभवति अर्ज्जुने रणमुपेयुसि भगवान् भूतभावन: परित्यक्तशरासन: समुद्यम्य च मुष्टिं तम् अभिहतवान् । तदानीं तयो: युध्यमानयो: महानेव पाणिपीड़नध्वनि: प्रतिध्वनयन् समग्रं भूधरकन्दरं सहसा उदचरत् ; उभावपि शिवपार्थौ क्षतजोच्चितदेहयष्टी संवृत्तौ । न तयो: कियानपि विशेष: परिलक्ष्यते स्म । कदाचित् भगवदुरसि पार्थदत्तमुष्टिपाता: सह्याचलसानुषु सिन्धुमहोर्म्मिघातप्राया: संवृत्ता:, कदाचिच्च धनञ्जय: ग्रीवायां हरेण मुष्टिभिरभिहत: घूर्णितलोचन: त्रिचतुरपदानि स्खलितगति: बभूव । ततश्च परिभवेण भृशं कोपित: स तरसा तमभिसरन् स्वभुजद्वयेन हरस्य पाणियुग्मं वियुज्य विधृतवान् । एवं संप्रवृत्ते द्वन्द्वसम्प्रहारे तिष्ठदवस्थायां पुमानयं भगवान्, उत पाण्डव: ? पतनावस्थायां च मुनिरयम् अध:स्थित: महेश्वरो वा ? अथवा अन्यथा वर्त्तते ? इति वेगवशात् नितरां बभ्रमु: खलु प्रमथगणा: । किं बहुना.—हिमाचलोऽपि तयो: भारं वोढुम् असमर्थ: सन् प्रचलिते चलित:, उन्नते समुन्नत:, अवनते अवनत:, स्थिते स्थितश्च संवृत्त: । गिरिसरितश्च तत्र कुलपातक्षोभात् उद्वेलसलिला: सर्व्वत: स्थलानि प्रामज्जयन् । कदाचित् कपिध्वज: वियति समुत्पतितस्य च भगवत: चरणौ स्वकराभ्यां परिजग्राह । इत्थं चरणधारणरूपदुष्करकार्य्यानुष्ठानेन

जातविस्मयः महेश्वरः परिरभ्य च तं गाढं यथा मुदमाप न तथा दुष्करेण तपसापि ।

अर्ज्जुनस्य वीर्य्यातिशयमवलोक्य भगवतः प्रसेदुषः स्वमूर्त्तिप्रकटनम् ।—

अथ भगवान् विहाय किरातरूपं हिमशुभ्रभस्मशोभितां शशिकलाविराजितभालदेशां परिजग्राह स्वीयमूर्त्तिं ; पाण्डवोऽपि तमीदृशम् अवलोक्य प्रणतवान्। उत्थाय च स्वशरीरमपि यथापूर्व्वं बाणबाणधिबाणासनचर्म्मवर्म्मखड्गपरिशोभितं पश्यन् परं विस्मयमुपागतः ।

तदानीञ्च नेदुः दुन्दुभयो दिव्याः । भूतले विचित्रसुरकुसुमपाताः, वारिदाश्च वारिवर्षोन्मुखाः संवृत्ताः ।

तत्र च वासवादिसमागमवर्णनम् ।—

ततश्च वासवप्रमुखाः लोकपालाः समध्युषितविमानाः परितः समुद्भासयन्तः गगनतलं विरेजुः । विमानवाहैश्च हंसनिचयैः क्वणत्किङ्किणीकण्ठभूषणैः धावद्भिश्च समन्तात् पश्चाग्रभागैरालिङ्गितमिव व्योमतलं समजनि । पवनोऽपि भ्रमद्भ्रमरभूषिताम् उपरि वितत्य मन्दारमालां वृषभासनं प्रह्लादयामास । प्रमथगणाश्च तदा तं साधु साधु इति प्रशशंसुः ।

धनञ्जयकृतभगवत्स्तुतिवर्णनम् ।—

अर्ज्जुनोऽपि तपसः साफल्यमुपगम्य संहृष्टः भगवन्तं स्तोतुम् आरेभे,—"हे भव ! परमकारुणिकं भक्तिमात्रसुलभम् आशुतोषं भवन्तं शरणमुपेयिवांसः जितमृत्यवश्च जगतोऽभयदाः भवन्ति । हे ईश ! यावत् तव चरणयोरवनतिं न गताः पुरुषाः, तावदेव ते व्यसनभाजनानि, तावदेव नाभीष्टलाभफलभाजः ; नापि वशमायान्ति केचन तेषां भुवि लोकाः । भगवन् ! केचन भवन्तमेवोद्दिश्य दानमाचरन्ति ; केऽपि जन्मदुःखमसह-

माना: मुमुक्षव: भवन्तमेवोपासते, प्राप्नुवन्ति च यथाऽभिलषितं फलानि। किन्तु चित्रञ्चैतत्,—यत् प्रणतेभ्य: स्पृहारहित: फलं वितरसि, तत् स्वार्थरहितोज्ज्वला करुणा एव भवत: प्रतिभाति। यदिह मानवैर्दूरमगत्वापि सुलभं, यच्च पारलौकिक-फलदायि, भवसागरतारणक्षमं सार्व्वकामिकञ्च तीर्थं,तदनन्यसाधारणं भवानेव भवे भूतभावन:। स्वकर्म्मवशेनैव प्राणिन: मुक्तिभाज: निरयगामिनश्च वर्त्तन्ते ; नात: तत्रापि ते वैषम्यनैर्घृण्ये। हे भव! प्रणतकामद! किं बहुना,—तत्त्वज्ञानं विनापि भक्तिपूर्व्विका तव संस्मृति: मुक्तिनिदानं संसारिणाम्। इह जगति विमृष्यकारी खलु दृष्टद्रष्टव्य: कृतकृत्यश्च जितमृत्यु: वर्त्तते ; किन्तु य: किल त्वामेव पुरुषोत्तमत्वेन सर्व्वोत्कृष्टं पश्यति, तेनैव च भावेन त्वाम् उपास्ते च, तस्य दर्शनमपि सम्यगदर्शनं, कर्त्तव्यमपि साधु कर्त्तव्यं मन्ये। व्यासप्रभृतय: महर्षय: यथाशक्ति विहितयोगानुष्ठाना: योगिन: संवृत्ता:, तथा स्मृतीतिहासपुराणप्रणयनमपि विधाय कृतोपकाराश्च प्रजानां, तथाऽपि नालं ते त्वामृते शरणागतकर्म्मबन्धनान्यवदातुम्। हे करुणामय! मायाऽतीतोऽपि भवान् केवलं त्रिजगतां दुरुच्छेद्यमतिदारुणं नरकभयम् अपहर्त्तुकाम: मायामनुवर्त्तते। न जानीमो वयं भवत: केयमीहा विचित्रा विलसति ; यदिह भवत: रागरहितेऽपि मनसि, तौर्य्यत्रिकव्यसनितया निरतिशया विलासिता विराजते वपुषि। अर्द्धांशे च वधू: त्रिभुवनललामभूता प्रतिभाति नितरां त्यक्तकामस्य; विश्वैकवन्द्यस्य च प्रत्यषे विधातृवन्दनमपि विलक्षणं संलक्ष्यते।

अपरञ्च तव भूषणमपि विस्मयकरं सर्व्वेषाम्। तथा हि,—उत्तरीयं भवत: लोमजालाकुलं कर्कशं करिचर्म्म मणि-

मण्डितफणिभूषणञ्च कटितटे, कपालमालाङ्गतमण्डनञ्च गलदेशे, चन्दनास्पदमुपगतञ्च शवभस्म, भाले च विधुलेखा विशदा, चित्रमेतत्!—यदेतानि सममेव रोचमानानि वर्त्तन्ते। अशरीरस्यापि तव शरीरं, तदपि स्त्रीपुंसात्मकभागद्वयसमुपेतं प्रकटितविरुद्धवेशं, तत्रापि अलोकसामान्या कान्तिः; इत्यहो! माहात्म्यं विजयते। हे देव! त्वं भूतसङ्घ इव न जन्मजरामरणधर्म्मा, नातः उपमानोपमेययोरपि कोऽपि। त्वं खलु सर्व्व जगताम् अन्तकः पालयिता च, योगिनामपि कर्म्मपाशविमोचकः। त्वञ्च प्रकृतिद्वारेण महदादीनामपि निखिलतत्त्वानां कारणमसि चैतन्यरूपम्। रावणादयः दुर्म्मदाः राक्षसवराः, वासवप्रमुखाः दिवौकसः, मनुप्रभृतयश्च मनुजवर्य्याः, लब्धाधिपत्याः भुवि विद्योतमानाः समभवन्। तत्तदाधिपत्यञ्च तेषां तव चरणवन्दनस्यैव फलमवैमि।

हे शिव! येयं ते विश्वव्यापिनी मूर्त्तिः, प्राणात्मना त्रिभुवनं बिभर्त्ति, यतश्च शब्दात्मकं परं ब्रह्म विलसति, या च जगतां दुरितपावनी वर्त्तते, तस्मै पवनात्मने नमस्ते।

हे भव! ब्रह्ममये योगात्मने निविशतां स्वलभवच्चरणपङ्कजानां संसारनिदानकर्म्मसङ्घातविदाहिने नमस्ते दहनात्मने शिवाय।

हे भीम! भवानल-दह्यमानानां संसेवया सन्तापशान्तिं वितरते नमस्ते जलमयात्मने हराय।

या किल निराधारापि जगदाधारा, तव तनुः अतीन्द्रिया नित्या च वर्त्तते सर्व्वत्र, नमस्ते व्योमरूपाय तस्मै।

हे महेश्वर! त्वं सूक्ष्मतमोऽपि विश्वविधारकः, अन्तिकस्थोऽपि दूरवर्त्ती, वाङ्मनसयोरगोचरोऽपि तव प्रभावेणैव वाक् मनश्च स्फुरति, अतः तुभ्यं नमो नमः।

हे ज्ञानेश ! अज्ञानान्धस्य मे दुश्चरितं क्षन्तुमर्हसि । जाने खलु,—'मोहवशात् वैरमुत्पाद्य पुनः शरणमागतानां भवानेव गतिः परमा' इति ।

अर्ज्जुनस्य वरप्रार्थना ।—

हे धर्म्मप्रिय ! येन खलु अस्त्राधिगमेन तत्रभवान् वैदिक-वर्णाश्रमधर्म्मप्रतिपालकः मे ज्यायान् युधिष्ठिरः कृतापराधे शत्रुवर्गे लब्धविजयः सम्पद्यते,—हे भूतनाथ ! तथा विधेहि ।

अर्ज्जुनाय भगवतः पाशुपतास्त्रसहितकृत्स्नधनुर्व्वेदप्रदानम् ।—

इति विविधमभिष्टुवन्तं प्रणतशिरसं धनञ्जयं भगवान् सान्त्वयित्वा सरहस्यपाशुपतास्त्रसहितं समग्रं धनुर्व्वेदम् अध्यापितवान् ।

अथ पिङ्गलाक्षः स्वतेजसा ज्वलितमूर्त्तिः शूलप्रहरणः मूर्त्तिमान् धनुर्व्वेदः सुरगणैः स्तुतिभिः पुष्कलाभिः संस्तूयमानः त्रिः प्रदक्षिणीकृत्य महेशं धनञ्जयमुपाजगाम ।

भगवदादिष्टानां वासवादीनां वरप्रदानम्, अस्त्रप्रदानञ्च ।—

अथ वासवप्रमुखाः अपि सुरवर्य्याः लोकपालाः समादिष्टाः भूतपतिना, पाण्डवाय प्रयुक्तामोघाशीर्व्वादाः जयशीलं स्वं स्वं विविधमस्त्रं वितेरुः । ततश्च इत्थं कृतकृत्यं संप्राप्तदिव्यास्त्रलाभम् अलौकिकधामोज्ज्वलं धनञ्जयम् अभि सकललोकपालानां "महाभाग्योऽसि" इति साधुवादः सहसा उच्चैरुदचरत् ।

लब्धास्त्रस्य धनञ्जयस्य युधिष्ठिरान्तिकगमनं, ग्रन्थसमापनञ्च ।—

भगवता त्र्यम्बकेणापि—"व्रज, जय रिपुवर्गम्" इति साधु समादिष्टः, अवनत्य च तस्य चरणयोः, संस्तूयमानश्च सुरसङ्घैः, स्वभवनमभिजगाम । चकार च तत्र गत्वा सादरं धर्म्मराजचरणाभिवन्दनम् इत्यन्तमुपवर्ण्य परिसमापितं च काव्यं किराता-र्ज्जुनीयं तत्रभवता महाकविना भारविणा । इति शम् ।

---

# किरातार्जुनीयम् ।



## प्रथमः सर्गः ।

**श्रियः कुरूणामधिपस्य पालनीं**
**प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।**

अथ तत्रभवान् भारविनामा कविः "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मित-तयोपदेशयुजे ॥" इत्याद्यालङ्कारिकवचनप्रामाण्यात् काव्यस्य अनेकश्रेयःसाधनताम्, "काव्यालापांश्च वर्जयेत्" इति निषेध-शास्त्रस्य असत्काव्यविषयताञ्च पश्यन् किरातार्जुनीयाख्यं महा-काव्यं चिकीर्षुः चिकीर्षितार्थाविघ्नपरिसमाप्तिसम्प्रदायाविच्छेद-लक्षणफलसाधनत्वात् "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मु-खम्" इत्याद्याशीर्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च वने-चरस्य युधिष्ठिरप्राप्तिरूपं वस्तु निर्दिशन् कथामुपक्षिपति, श्रिय इति ।—आदितः श्रीशब्दप्रयोगाद् वर्णगणादिशुद्धिः अत्र उप-युज्यते। तदुक्तम् ।—"देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा" इति । कुरूणां निवासाः कुरवो जनपदाः । "तस्य निवासः" (४।२।६९ पा०) इत्यण्प्रत्ययः । "जनपदे लुप्" (४।२।८१ पा०) । तेषां [कुरूणा-मधिपस्य] दुर्योधनस्य सम्बन्धिनीम् । "शेषे षष्ठी" "षष्ठी शेषे" (२।३।५०पा०) [ श्रियः ] राज्यलक्ष्म्याः । "कर्त्तृकर्मणोः कृति" (२।३।६५ पा०) इति कर्मणि षष्ठी । पाल्यतेऽनयेति पालनी

स वर्णिलिङ्गी विदितः समाययौ
युधिष्ठिरं द्वैतवने वनेचरः ॥ १ ॥

---

तां [पालनीं] प्रतिष्ठापिकामित्यर्थः। प्रजारागमूलत्वात् सम्पद इति भावः। "करणाधिकरणयोश्च" (३।३।११७ पा०) इति करणे ल्युट्। "टिड्ढाणञ्" (४।१।१५ पा०) इत्यादिना ङीप्। [प्रजासु] जनेषु विषये। "प्रजा स्यात् सन्ततौ जने" इत्यमरः। [वृत्तिं] व्यवहारं [वेदितुं] ज्ञातुं [यं] वनेचरम् [अयुङ्क्त] नियुक्तवान्। वर्णः प्रशस्तिरस्यास्तीति वर्णी ब्रह्मचारी। तदुक्तम्।—"स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम्"॥ एतदष्टविधमैथुनाभावः प्रशस्तिः। "वर्णाद्ब्रह्मचारिणि" (५।२।१३४ पा०) इतीनिप्रत्ययः। तस्य लिङ्गं चिह्नमस्यास्तीति [वर्णिलिङ्गी] ब्रह्मचारिवेशवानित्यर्थः। [सः] नियुक्तः वने चरतीति [वनेचरः] किरातः। "भेदाः किरातशबरपुलिन्दाः म्लेच्छजातयः" इत्यमरः। "चरेष्टः" (३।२।१६ पा०) इति टप्रत्ययः। "तत्पुरुषे कृति बहुलम्" (६।३।१४ पा०) इत्यलुक्। विदितं वेदनमस्यास्तीति [विदितः] परवृत्तान्तज्ञानवान् इत्यर्थः। "अर्शआदिभ्योऽच्" (५।२।१२७ पा०) इत्यच्प्रत्ययः। अथवा कर्त्तरि कर्मधर्मोपचारात् विदितवृत्तान्तो विदित इत्युच्यते। उभयत्रापि "पीता गावः" "भुक्ता ब्राह्मणाः" "विभक्ता भ्रातरः" इत्यादिवत् साधुत्वं, न तु कर्त्तरि क्तः। सकर्मकेभ्यस्तस्य विधानाभावात्। अत एव भाष्यकारः।—"अकारो मत्वर्थीयः। विभक्तमेषामस्तीति विभक्ताः, पीतमेषामस्तीति पीताः, भुक्तमेषामस्तीति भुक्ताः" इति सर्वत्र। अथवा उत्तरपदलोपोऽत्र द्रष्टव्यः।

कृतप्रणामस्य महीं महीभुजे
जितां सपत्नेन निवेदयिष्यतः ।

विभक्तधना विभक्ताः, पीतोदकाः पीताः, भुक्तान्ना भुक्ता इति । अत्र लोपशब्दार्थमाह कैयटः ।—"गम्यार्थस्याप्रयोग एव लोपोऽभिमतः । 'विभक्ता भ्रातरः' इत्यत्र च धनस्य यद्विभक्तत्वं तद्भ्रातृषूपचर्य्यते । 'पीता गावः' इत्यत्राप्युदकस्य पीतत्वं गोषु आरोप्यते । 'भुक्ता ब्राह्मणाः' इत्यत्र अन्नस्य भुक्तत्वं ब्राह्मणेषु उपचर्य्यते" इति । तद्वदत्रापि वृत्तिगतं विदितत्वं वेदितरि वनेचरे उपचर्य्यते । एतेन "वनाय पीतप्रतिबद्धवत्साम्" इति "पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या ।" एवमादयो व्याख्याताः । अथवा विदितो विदितवान् सकर्मकादप्यविवक्षिते कर्मणि कर्त्तरि क्तः । यथा "आश्रितः कर्त्ता" इत्यादौ । यथाहुः ।—"धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" इति । प्रतीहारादिना ज्ञापित इति वा । [द्वैतवने] द्वैताख्ये तपोवने, यद्वा द्वे इते गते यस्मात्तद्-द्वीतम् । द्वीतमेव द्वैतम् । तच्च तद्वनञ्च तस्मिन् । शोकमोहादि-रहिते इत्यर्थः । युधि रणे स्थिरं [युधिष्ठिरं] धर्मराजम् । "हलऽदन्तात् सप्तम्याः संज्ञायाम्" (६।३।८ पा०) इत्यलुक् । "गवियुधिभ्यां स्थिरः" (८।३।९५ पा०) इति षत्वम् । [समाययौ] सम्प्राप्तः । अत्र "वने वनेचरः" इति द्वयोः स्वरव्यञ्जन-समुदाययोरेकधैव आवृत्त्या वृत्त्यनुप्रासो नामालङ्कारः । अस्मिन् सर्गे वंशस्थं वृत्तम् । तस्य लक्षणम् ।—"जतौ तु वंशस्थमुदीरितं जरौ" इति ॥ १ ॥

सम्प्रति तत्कालोचितत्वमादिशयंस्तस्य तद्गुणसम्पन्नत्वमादर्शयन्नाह, कृतप्रणामस्येति ।—[कृतप्रणामस्य] तत्कालोचित-

न विव्यथे तस्य मनो न हि प्रियं
प्रवक्तुमिच्छन्ति मृषा हितैषिणः॥ २॥
द्विषां विघाताय विधातुमिच्छतो
रहस्यनुज्ञामधिगम्य भूभृतः।

त्वात् कृतनमस्कारस्य [सपत्नेन] रिपुणा दुर्य्योधनेन। "रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः" इत्यमरः। [जितां] स्वायत्तीकृतां [महीं महीभुजे] युधिष्ठिराय। क्रियाग्रहणात् सम्प्रदानत्वम्।* [निवेदयिष्यतः] ज्ञापयिष्यतः। "लृटः सद्वा" (३।३।१४ पा०) इति शतृप्रत्ययः। [तस्य] वनेचरस्य [ मनो न विव्यथे]। कथमीदृगप्रियं राज्ञे विज्ञापयामीति मनसि न चचालेत्यर्थः। "व्यथ भयचलनयोः" इति धातोर्लिट्। उक्तमर्थमर्थान्तरोपन्यासेन समर्थयते, न हीति।—[हि] यस्मात्, हितमिच्छन्तीति [हितैषिणः] स्वामिहितार्थिनः पुरुषाः [मृषा] मिथ्याभूतं [प्रियं प्रवक्तुं नेच्छन्ति]। अन्यथा कार्य्यविघातकतया स्वामिद्रोहिणः स्युरिति भावः। "अमौल्यममाम्यममृषाभाषित्वमभ्यूहकत्वं चेति चारगुणाः" इति नीतिवाक्यामृते॥ २॥

तथापि प्रियार्हे राज्ञि कटुनिष्ठुरोक्तिर्न युक्तेत्याशङ्क्य स्वाम्यनुज्ञायां न दुष्यतीत्याशयेनाह, द्विषामिति।—[रहसि] एकान्ते [ सः ] वनेचरो [द्विषां] शत्रूणाम्। कर्मणि षष्ठी† [विघाताय ] द्विषो विहन्तुमित्यर्थः। "तुमर्थाच्च भाववचनात्" (२।३।१५ पा० ) इति चतुर्थी। "भाववचनाश्च" (३।३।११ पा० ) इति तुमर्थे घञ्प्रत्ययः। अत्र तादर्थ्ये चतुर्थ्यामपि न दोषः। तथापि प्रयोगवैचित्र्यविशेषस्याप्यलङ्कारत्वादेवं व्याचक्षते।

---

* क्रियार्थोपपदस्य कर्मणि स्थानिनः ( २।३।१४ पा०)।
† कर्त्तृकर्म्मणोः कृति ( २।३।६५पा०)।

स सौष्ठवौदार्य्यविशेषशालिनीं
विनिश्चितार्थामिति वाचमाददे ॥ ३ ॥
क्रियासु युक्तैर्नृप ! चारचक्षुषो
न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा
हितं मनोहारि च दुर्लभं वचः ॥ ४ ॥

[विधातुं] व्यापारं कर्त्तुम् [इच्छतः] "समानकर्त्तृकेषु तुमुन्" (३।३।१५८ पा०)। द्विषो विहन्तुमुद्युक्तस्यानस्येत्यर्थः। अत एव [भूभृतः] युधिष्ठिरस्य [अनुज्ञामधिगम्य] प्राप्य। सुष्ठु भावः सौष्ठवं शब्दसामर्थ्यम्। सुष्ठुशब्दादव्ययादुद्गात्रादित्वादञ्प्रत्ययः। उदारस्य भाव औदार्य्यमर्थसम्पत्तिः तयोर्द्वन्द्वः सौष्ठवौदार्य्ये। अत्र औदार्य्य-शब्दस्याजाद्यदन्तत्वेऽपि "लक्षणहेत्वोः क्रियायाः" (३।२।२६ पा०) इत्यत्राल्पस्वरस्यापि हेतुशब्दस्य पूर्वनिपातमकुर्वता सूत्रकृतैव पूर्वनिपातशास्त्रस्य अनित्यत्वज्ञापनान्न पूर्वनिपातः। उक्तञ्च काशिकायाम्।—"अयमेव लक्षणहेत्वोरिति निर्देशः पूर्वनिपात-व्यभिचारचिह्नम्" इति। ते एव विशेषः, तयोर्वा विशेषः। तेन शालते शोभत इति तां [सौष्ठवौदार्य्यविशेषशालिनीं] ताच्छील्ये णिनिः। [विनिश्चितार्थां] विशेषतः प्रमाणतो निर्णीतार्थाम् [इति] वक्ष्यमाणरूपां [वाचमाददे] स्वीकृतवान् उवाच इत्यर्थः ॥ ३ ॥

प्रथमं तावदप्रियनिवेदकमात्मानं प्रति अक्षोभं याचते, क्रियास्विति।—हे [नृप! क्रियासु] कृत्यवस्तुषु [युक्तैः] नियुक्तैः [अनुजीविभिः]भृत्यैः चारादिभिरित्यर्थः। चरन्तीति चराः, पचाद्यच्। त एव चाराः, चरेः पचाद्यजन्तत्। प्रज्ञादित्वादण्प्रत्ययः।

स किंसखा साधु न शास्ति योऽधिपं
हिताञ्च यः संशृणुते स किम्प्रभुः।
सदानुकूलेषु हि कुर्वते रतिं
नृपेष्वमात्येषु च सर्वसम्पदः॥ ५॥

त एव चक्षुर्येषां ते [चारचक्षुषः]। "स्वपरमण्डलकार्य्याकार्य्य-विलोकने चाराश्चक्षूंषि क्षितिपतीनाम्" इति नीतिवाक्यामृते। तदुक्तम्।—"गावः पश्यन्ति गन्धेन वेदैः पश्यन्ति पण्डिताः। चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः" इति। [प्रभवः] निग्रहानुग्रहसमर्थाः स्वामिनः [न वञ्चनीयाः] न प्रतारणीयाः, सत्यमेव वक्तव्या इत्यर्थः। चारापचारे चक्षुरपचारवद्राज्ञां पदे पदे निपात इति भावः। [अतः] अप्रतार्य्यत्वाद्धेतोः [असाधु] अप्रियं [साधु] प्रियं [वा] मदुक्तमिति शेषः. वाशब्दोऽप्यर्थे। [क्षन्तुं] सोढ़म् [अर्हसि] कुतः? [हितं] पथ्यं [मनोहारि च] प्रियंच [वचः दुर्लभम्]। अतो मद्वचोऽपि हितत्वादप्रियमपि क्षन्तव्यमित्यर्थः॥ ४॥

तर्हि तूष्णीम्भाव एव वरमित्याशङ्क्याह, स इति।—[यः] सखा अमात्यादिः [अधिपं] स्वामिनं [साधु] हितं [न शास्ति] न उपदिशति। "ब्रुवि शासि" इत्यादिना शासेर्दुहादि-पाठाद्द्विकर्मकत्वम्। [सः] हितानुपदेष्टा, कुत्सितः सखा [किंसखा] दुर्मन्त्रीत्यर्थः। "किमः क्षेपे" (५।४।७० पा०) इति समासान्तप्रतिषेधः। तथा [यः] प्रभुः निग्रहानुग्रहसमर्थः स्वामी [हितात्] आप्तजनात् हितोपदेष्टुः सकाशात्। "आख्यातोपयोगे" (१।४।२८ पा०) इत्यपादानत्वात् पञ्चमी। [न संशृणुते] न शृणोति, हितमिति शेषः। "समो गम्यृच्छि"

निसर्गदुर्बोधमबोधविक्लवाः
क्व भूपतीनां चरितं ? क्व जन्तवः ? ।
तवानुभावोऽयमवेदि यन्मया
निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥ ६ ॥

( १।३।२८ पा० ) इत्यादिना सम्पूर्वाच्छृणोतेरकर्मकत्वादात्मनेपदम् । अकर्मकत्वं वैवक्षिकम् । [ सः ] हितमश्रोता प्रभुः [ किम्प्रभुः ] कुत्सितस्वामी पूर्ववत् समासः । सर्वथा सचिवेन वक्तव्यं श्रोतव्यं च स्वामिना । एवञ्च राजमन्त्रिणोः ऐकमत्यं स्यादित्यर्थः । ऐकमत्यस्य फलमाह सदेति ।—[ हि ] यस्मात् [ नृपेषु ] स्वामिषु अमा सह भवाः अमात्यास्तेषु [अमात्येषु च] अव्ययात्त्यप् । ( ४।२।१०४ पा० ) [ अनुकूलेषु ] परस्परानुरक्तेषु सत्सु [ सर्वसम्पदः सदा रतिम् ] अनुरागं [ कुर्वते ] कुर्वन्ति, न जातु जहतीत्यर्थः । अतो मया वक्तव्यं त्वया च श्रोतव्यमिति भावः । अत्रैवं राजमन्त्रिणोर्हितानुपदेश-तदश्रवणनिन्दासामर्थ्यसिद्धैरैकमत्यलक्षणकारणस्य निर्दिष्टस्य सर्वसम्पत्सिद्धिरूपकार्य्येण समर्थनात् कार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । तदुक्तम् ।—"सामान्यविशेषकार्य्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः" इति ॥ ५ ॥

सम्प्रति स्वाहङ्कारं परिहरति, निसर्गेति ।—[निसर्गदुर्बोधं] स्वभावदुर्ग्रहम् । "ईषद्दुः" (३।३।१२६ पा०) इत्यादिना खल्-प्रत्ययः । [ भूपतीनां चरितं क्व ? अबोधविक्लवाः ] अज्ञानोपहताः [जन्तवः ] मादृशाः पामरजना इत्यर्थः [क्व ?] क्वापि, नोभयं सङ्घटत इत्यर्थः । तथापि [ निगूढतत्त्वं ] संवृतयाथार्थ्यं

विशङ्कमानो भवतः पराभवं
नृपासनस्थोऽपि वनाधिवासिनः ।
दुरोदरच्छद्मजितां समीहते
नयेन जेतुं जगतीं सुयोधनः ॥ ७ ॥

[ विद्विषां नयवर्त्म ] षाड्गुण्यप्रयोगः—"सन्धिविग्रहयानानि संस्थाप्यासनमेव च । द्वैधीभावश्च विज्ञेयाः षड् गुणा नीतिवेदिनाम्" इत्यादिरूपो [यत् मया अवेदि] ज्ञातमिति यावत् । विदेः कर्मणि लुङ् । [ अयम् ] इदं वेदनमित्यर्थः विधेयप्राधान्यात् पुंलिङ्गनिर्देशः [ तव अनुभावः ] सामर्थ्यम् । अनुमतो भावोऽनुभावः राज्ञां प्रकृष्टो भाव इति घञन्तेन प्रादिसमासः । न तूपसृष्टात् घञ् प्रत्ययः "श्रिणीभुवोऽनुपसर्गे" (३।३।२४ पा०) इत्यनुपसर्गाद्भवतेर्धातोर्घञ् विधानात् । अत एव काशिकायाम् ।—"कथं प्रभावो राज्ञां प्रकृष्टो भाव इति प्रादिसमासः" इति । दोषपरिहारौ सम्यग् ज्ञात्वैव विज्ञापयामि । न तु वृथा कर्णकठोरं प्रलपामि इत्याशयः ॥ ६ ॥

सम्प्रति यद्वक्तव्यं तदाह. विशङ्कमान इति ।—सुखेन युध्यते सः [सुयोधनः] । "भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः (वा०)" । [नृपासनस्थः] सिंहासनस्थः [अपि] वनमधिवसतीति [वनाधिवासिनः] वनस्थात् राज्यभ्रष्टादपीत्यर्थः । [भवतः]त्वत्तः पराभवं] पराजयं [विशङ्कमानः] उत्प्रेक्षमाणः सन् [दुरोदरच्छद्मजितां] दुष्टमुदरमस्येति दुरोदरं द्यूतम् । पृषोदरादित्वात् साधु । "दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्" इत्यमरः । तस्य छद्मना मिषेण जितां लब्धां दुर्नयार्जितां [ जगतीं ] महीम् । "जगती विष्टपे मह्यां वास्तुच्छन्दोविशेषयोः" इति

तथापि जिह्मः स भवज्जिगीषया
तनोति शुभ्रं गुणसम्पदा यशः ।
समुन्नयन् भूतिमनार्य्यसङ्गमाद्
वरं विरोधोऽपि समं महात्मभिः ॥ ८ ॥

वैजयन्ती। [ नयेन ] नीत्या [ जेतुं ] वशीकर्त्तुं [ समीहते ] व्याप्रियते, न तूदास्त इत्यर्थः। बलवत्स्वामिकमविशुद्धागमं च धनं भुञ्जानस्य कुतो मनःसमाधिरिति भावः। अत्र "दुरोदरच्छद्मजिताम्" इति विशेषणद्वारेण पदार्थस्य चतुर्थपादार्थं प्रति हेतुत्वेनोपन्यासाद्द्वितीयकाव्यलिङ्गमलङ्कारः। तदुक्तम्।— "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति ॥ ७ ॥

"नयेन जेतुं जगतीं समीहते" इत्युक्तम्, तत्प्रकारमाह तथापीति।—[ तथापि ] साशङ्कोऽपि [ जिह्मः ] वक्रः वञ्चक इति यावत्। [ सः ] दुर्य्योधनः [ भवज्जिगीषया ] गुणैर्भवन्तमाक्रमितुमिच्छयेत्यर्थः। "हेतौ" (२।३।२३ पा०) इति तृतीया। [ गुणसम्पदा ] दानदाक्षिण्यादिगुणगरिम्णा करणेन [ शुभ्रं यशस्तनोति ]। स खलो गुणलोभनीयां त्वत्सम्पदमात्मसात् कर्त्तुं त्वत्तोऽपि गुणवत्तामात्मनः प्रकटयतीत्यर्थः। नन्वेवं गुणिनः सतोऽपि सज्जनविरोधो महानस्त्यस्य दोष इत्याशङ्क्य सोऽपि सत्संसर्गलाभे नीचसङ्गमाद्वरमुत्कर्षावहत्वादित्याह समिति।—तथाहि [ भूतिं समुन्नयन् ] उत्कर्षमापादयन्। "लटः शतृशानचौ" ( ३।२।१२४ पा० ) इत्यादिना शतृप्रत्ययः। पुनर्लड्ग्रहणसामर्थ्यात् प्रथमासामानाधिकरण्यम्। [ महात्मभिः समं ] सहेत्यर्थः। "साकं सत्रा समं सह" इत्यमरः। [ अनार्य्यसङ्गमात् ] दुर्जनसंसर्गात्

कृतारिषड्वर्गजयेन मानवीम्
अगम्यरूपां पदवीं प्रपित्सुना ।
विभज्य नक्तन्दिवमस्ततन्द्रिणा
वितन्यते तेन नयेन पौरुषम् ॥ ९ ॥

---

"पञ्चमी विभक्ते" (२।३।४० पा०) इति पञ्चमी । [ विरोधोऽपि वरं ] मनाक् प्रियः । "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक् प्रिये" इत्यमरः । अत्र मैत्र्यपेक्षया मनाक्प्रियत्वं विरोधस्य "भूतिं समुन्नयन्" इत्यस्य पूर्ववाक्यान्वये समाप्तस्य वाक्यार्थस्य पुनरादानात् समाप्तपुनरात्ताख्यानदोषापत्तिः । तदुक्तं काव्यप्रकाशे ।—"समाप्तपुनरादानात् समाप्तपुनरात्तकम्" इति । न च वाक्यान्तरमेतत् येनोक्तदोषपरिहारः स्यात् । अर्थान्तरन्यासोऽलङ्कारः । स च भूतिसमुन्नयनस्य पदार्थविशेषणद्वारा विरोधवरत्वं प्रति हेतुत्वाभिधानरूपकाव्यलिङ्गानुप्राणित इति ॥ ८ ॥

ननु "कातर्यं केवला नीतिः" इत्याशङ्क्य नीतियुक्तं पौरुषमस्येत्याह, कृतेति ।—[ कृतारिषड्वर्गजयेन ] षण्णां वर्गः षड्वर्गः । अरीणामन्तःशत्रूणां कामक्रोधादीनां षड्वर्गोऽरिषड्वर्गः शिवभागवतवत् समासः । तस्य जयः कृतो येन तेन तथोक्तेन विनीतेनेत्यर्थः । विनीताधिकारं प्रजापालनमिति भावः । [ अगम्यरूपां ] पुरुषमात्रदुष्प्राप्याम् । मनोरिमां [ मानवीं ] मनूपदिष्टसदाचारलक्षणामित्यर्थः । [पदवीं] प्रजापालनपद्धतिं [ प्रपित्सुना ] प्रपत्तुमिच्छुना, प्रपद्यतेः सन्नन्तादुप्रत्ययः । "सनि मीमा" ( ७।४।५४ पा० ) इत्यादिनेसादेशः । "अत्र लोपोऽभ्यासस्य" ( ७।४।५८ पा० ) इत्य-

सखीनिव प्रीतियुजोऽनुजीविनः
समानमानान् सुहृदश्च बन्धुभिः।

---

व्यासलोपः। अस्ता तन्द्रिः आलस्यं यस्य तेन [अस्ततन्द्रिणा] अनलसेनेत्यर्थः। तदिः सौत्रो धातुः। तस्मात् "वह्न्यादयश्च" (उ० ४पा० ६६) इत्यौणादिकः क्रिन्प्रत्ययः।" कृदिकारादक्तिनः" (वा०) इति वा ङीष्। "वन्दीघटीतरीतन्द्रीति ङीषन्तोऽपि" इति क्षीरस्वामी। तथा रामायणप्रयोगः।— "निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित्" इति। [तेन] दुर्य्योधनेन। पुरुषस्य कर्म [पौरुषं] पुरुषकारः उद्योग इति यावत्। युवादित्वादण्प्रत्ययः। "पौरुषं पुरुषस्योक्ते भावे कर्म्मणि तेजसि" इति विश्वः। नक्तं च दिवा च [नक्तन्दिवम्] अहोरात्रयोरित्यर्थः। "अचतुर" (५।४।७७ पा०) इत्यादिना सप्तम्यर्थवृत्त्योरव्यययोर्द्वन्द्वनिपातितोऽच्समासान्तः। [विभज्य] अस्यां वेलायामिदं कार्य्यमकार्य्यमिति विभागं कृत्वा [नयेन] नीत्या [वितन्यते] विस्तार्य्यते॥ ८॥

सम्प्रति भृत्याद्यनुरागमाह, सखीनिति।—[गतस्मयः] निरहङ्कारोऽत एव [सः] दुर्य्योधनः [सन्ततम्] अनारतं [साधु] सम्यक् अकपटम् इत्यर्थः। [अनुजीविनः] भृत्यान् [प्रीतियुजः] स्निग्धान् [सखीनिव] मित्राणि इव [दर्शयते] लोकस्येति शेषः। "हेतुमति च" (३।१।२६ पा०) इति णिच्। "णिचश्च" (१।३।७४ पा०) इति आत्मनेपदम्। शोभनं हृदयं येषां तान् [सुहृदः] मित्राणि [च]। "सुहृद्दुर्हृदौ मित्रामित्रयोः" (५।४।१५० पा०) इति निपातः। [बन्धुभिः] भ्रात्रादिभिः [समानमानान्] तुल्यसत्कारान् दर्शयते। [बन्धुतां] बन्धूनां समूहो बन्धुता ताम्।

स सन्ततं दर्शयते गतस्मयः
कृताधिपत्यामिव साधु बन्धुताम् ॥ १० ॥

"ग्रामजनबन्धुभ्यस्तल्" (४।२।४३ पा०)। कृतम् आधिपत्यं स्वाम्यं यस्यास्तां [कृताधिपत्यामिव] दर्शयते। बन्धून् अधिपतीनिव दर्शयत इत्यर्थः। यथा भृत्यादिषु सख्यादिबुद्धिर्जायते लोकस्य तथा तान् सम्भावयतीत्यर्थः। अनुजीव्यादीनाम् "कर्त्तुरीप्सिततमं कर्म" (१।४।४८ पा०) इति कर्मत्वम्। पूर्वं त्वस्मिन्नेव पदान्वये वाक्यार्थमित्थं वर्णयन्ति।—स राजा अनुजीव्यादीन् सख्यादीनिव दर्शयते। सख्यादय इव ते तु तं पश्यन्ति। सख्यादिभावेन पश्यतस्तांस्तथा दर्शयते। स्वयमेव छन्दानुवर्त्तितया स्वदर्शनं तेभ्यः प्रयच्छतीत्यर्थः। अर्थात्तस्येप्सितकर्मत्वम् अणिकर्त्तुरनुजीव्यादेः "अभिवादिदृशोरात्मनेपदमुपसंख्यानम्" (वा०) इति पाक्षिकं कर्मत्वम्। एवं चात्राण्यन्तकर्मणो राज्ञोऽण्यन्ते कर्त्तृत्वेऽपि "आरोहयते हस्ती स्वयमेव" इत्यादिवत् अश्रूयमाणकर्मान्तरत्वाभावात् नायं "णेरणौ" (१।३।६७ पा०) इति सूत्रस्य विषय इति मत्वा "णिचश्च (१।३।७४ पा०) इत्यात्मनेपदं प्रतिपेदिरे। भाष्ये तु—णेरणाविति सूत्रविषयत्वमपि अस्योक्तम्। यथाह।—'पश्यन्ति भृत्या राजानम्' 'दर्शयते भृत्यान् राजा' 'दर्शयते भृत्यै राजा' अत्र आत्मनेपदं सिद्धं भवति" इति। अत्राह कैयटः। "ननु कर्मान्तरसद्भावादत्रात्मनेपदेन सम्भाव्यम्।" उच्यते।—अस्मादेवोदाहरणाद्भाष्यकारस्यायमेवाभिप्राय उन्नीयते। अण्यन्तावस्थायां ये कर्त्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावात् आत्मनेपदं न भवति। यथा—"स्थलमारोहयति मनुष्यान्" इति।

असक्तमाराधयतो यथायथं
विभज्य भक्त्या समपक्षपातया ।
गुणानुरागादिव सख्यमीयिवान्
न बाधतेऽस्य त्रिगणः परस्परम् ॥ ११ ॥

इह तु अवस्थावस्थायां कर्तॄणां भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपदम् इति ॥ १० ॥

न चायं त्रिवर्गात् प्रमाद्यतीत्याह, असक्तमिति ।—[यथायथं] यथास्वं [ विभज्य ] असङ्कीर्णरूपं विविच्येत्यर्थः । "यथास्वे यथायथम्"(८।१।१४पा०)इति निपातनाद्द्विर्भावो नपुंसकत्वञ्च । "ह्रस्वो नपुंसके प्रातिपदिकस्य" (१।२।४७ पा०) इति ह्रस्वत्वम् । पक्षे पातः पक्षपातः आसक्तिविशेषः समः तुल्यो यस्यां सा तथा तया [समपक्षपातया भक्त्या] अनुरागविशेषेण, पूज्येषु अनुरागो भक्तिरित्युपदेशः । पूज्यस्य अयं त्रिवर्गः इति भावः । [असक्तम्] अनासक्तम् अव्यसनितयेति यावत् । [आराधयतः] सेवमानस्य [अस्य] दुर्य्योधनस्य त्रयाणां धर्मार्थकामानां गणः [ त्रिगणः ] त्रिवर्गः । "त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः" इत्यमरः । [ गुणानुरागात्] तदीयगुणेषु अनुरागात्, गुणवदाश्रयलोभादित्यर्थः । [ सख्यं ] मैत्रीम् । "सख्युर्यः" (५।१।१२५ पा० ) इति यप्रत्ययः । [ईयिवान्] उपगतवान् [इव] इति उत्प्रेक्षा । "उपेयिवाननाश्वाननूचानश्च" ( ३।२।१०८ पा० ) इति क्वसुप्रत्ययान्तो निपातः । "नात्रोपसर्गस्तन्त्रम्" इति काशिकाकार आह स्म । [ परस्परं न बाधते ] समवर्त्तित्वादस्य धर्मार्थकामाः परस्परानुमर्देन वर्द्धन्ते इत्यर्थः । उक्तञ्च ।—"धर्मार्थ-

निरत्ययं साम न दानवर्जितं
न भूरि दानं विरहय्य सत्क्रियाम्।
प्रवर्त्तते तस्य विशेषशालिनी
गुणानुरोधेन विना न सत्क्रिया॥ १२॥

---

कामाः सममेव सेव्या यो ह्येकसक्तः स जनो जघन्यः" इति॥ ११॥

अथ श्लोकत्रयेण उपायकौशलं दर्शयन् आदौ सामदाने दर्शयति, निरत्ययमिति।—[ तस्य ] दुर्य्योधनस्य [ निरत्ययं ] निर्बाधम् अमायिकमित्यर्थः। अन्यथा जनानां दुर्ग्रहत्वादिति भावः। [साम] सान्त्वम्। "साम सान्त्वमुभे समे" इत्यमरः। [ दानवर्जितं न प्रवर्त्तते ] अन्यथा लुब्धाद्यावर्ज्जनस्य शुष्कप्रियैर्वाक्यैर्दुष्करत्वादिति भावः। उक्तञ्च।—"लुब्धमर्थेन गृह्णीयात् साधुमञ्जलिकर्मणा। मूर्खं छन्दानुरोधेन तत्त्वार्थेन च पण्डितम्॥" इति। तथा [ भूरि ] प्रभूतं, न तु कदाचित् स्वल्पमित्यर्थः। [दानं] धनत्यागः। सदित्यादरार्थेऽव्ययम्। "आदरानादरयोः सदसती" (१।४।६३ पा०) इति निपातसंज्ञास्मरणात्। तस्य क्रियां [ सत्क्रियां विरहय्य ] विहाय। "ल्यपि लघुपूर्वात्" (६।४।५६ पा०) इत्ययादेशः। न प्रवर्त्तते, अनादरे दानवैफल्यादिति भावः। न चैवं सर्वत्र, येनाविवेकित्वं कोषहानिश्च स्यादित्याह—प्रवर्त्तते इति। [ विशेषशालिनी ] अतिशययोगिनो [ सत्क्रिया ] आदरक्रिया [गुणानुरोधेन ] गुणानुरागेण [ विना न प्रवर्त्तते ]। "पृथग्विना" (२।३।३२ पा० ) इत्यादिना तृतीया। गुणेष्वेवादरो भूरिदानञ्च

वसूनि वाञ्छन् न वशी न मन्युना
स्वधर्म इत्येव निवृत्तकारणः ।
गुरूपदिष्टेन रिपौ सुतेऽपि वा
निहन्ति दण्डेन स धर्मविप्लवम् ॥ १३ ॥

इति न उक्तादोषावकाश इत्यर्थः । अत्र उत्तरोत्तरस्य पूर्वपूर्व-विशेषणतया स्थापनात् एकावल्यलङ्कारः । तदुक्तं काव्यप्रकाशे— "स्थाप्यतेऽपोह्यते वापि यथापूर्वं परम्परम् । विशेषणतया यत्र वस्तु सैकावली द्विधा ॥" इति ॥ १२ ॥

अथ दण्डप्रकारमाह, वसूनीति ।—[ वशी सः ] दुर्य्योधनो [ वसूनि ] धनानि [ वाञ्छन् न ] लोभात् न इत्यर्थः, "वसु तोये धने मणौ" इति वैजयन्ती, निहन्तीति शेषः । तथा [मन्युना] कोपेन [न] च । "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः । "धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः" इति स्मरणादित्यर्थः । किन्तु [निवृत्तकारणः ] निवृत्तलोभादिनिमित्तः सन् [स्वधर्म इत्येव ] स्वस्य राज्ञः सतो मम अयं धर्मो ममेदं कर्त्तव्यमित्य-स्मादेव हेतोरित्यर्थः । "अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चै-वाप्यदण्डयन् । अयशो महदाप्नोति नरकञ्चैव गच्छति ॥" इति स्मरणादिति भावः । [ गुरूपदिष्टेन ] प्राड्विवाकोपदिष्टेन । "धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः । समाहितमतिः पश्येत् व्यवहाराननुक्रमात् ॥" इति नारदस्मरणात् । [दण्डेन] दमेन शिक्षयेत्यर्थः । [ रिपौ सुतेऽपि वा ] स्थितमिति शेषः । एतेन अस्य समदर्शित्वम् उक्तम् । [ धर्मविप्लवं ] धर्मव्यति-क्रमम् अधर्ममिति यावत् । [ निहन्ति ] निवारयति । दुष्ट

विधाय रक्षान् परितः परेतरान्
अशङ्किताकारमुपैति शङ्कितः।
क्रियापवर्गेष्वनुजीविसात्कृताः
कृतज्ञतामस्य वदन्ति सम्पदः॥ १४॥
अनारतं तेन पदेषु लम्भिता
विभज्य सम्यग्विनियोगसत्क्रियाः।

एव अस्य शत्रुः, शिष्ट एव बन्धुः, न तु सम्बन्धनिबन्धनः पक्षपातोऽस्तीत्यर्थः॥ १३॥

सम्प्रति भेदकौशलं दर्शयति, विधायेति।— शङ्का सञ्जाता अस्य [ शङ्कितः ] अविश्वस्तः सन् [ परितः ] सर्वत्र स्वपरमण्डले [परेतरान्] आत्मीयान्, अवञ्चकान् इति यावत्। यद्वा परान् इतरयन्ति भेदेन आत्मसात् कुर्वन्तीति परेतरान्, तत्करोतीति ण्यन्तात् कर्मणि अण्प्रत्ययः। रक्षन्तीति [ रक्षान् ] रक्षकान् मन्त्रगुप्तिसमर्थान् इत्यर्थः। "नन्दिग्रहि" ( ३।१।१३४ पा० ) इत्यादिना पचाद्यच्। [विधाय] कृत्वा नियुज्य इत्यर्थः। [अशङ्किताकारम् उपैति] स्वयम् अविश्वस्तोऽपि विश्वस्तवत् एव व्यवहरन् परमुखेणैव परान् भिनत्ति इत्यर्थः। न च तान् रक्षान् उपेक्षते येन तेऽपि विकुर्वीरन् इत्याह, क्रियेति।—[क्रियापवर्गेषु] कर्मसमाप्तिषु [अनुजीविसात्कृताः] भृत्याधीनाः कृताः अपरावर्जिततया दत्ता इत्यर्थः। "देये वा च" ( ५।४।५५ पा०) इति सातिप्रत्ययः। [ सम्पदोऽस्य ] राज्ञः [ कृतज्ञताम् ] उपकारितां [ वदन्ति ] प्रीतिदानैः एव अस्य कृतज्ञत्वं प्रकाशयन्ति, न तु वाङ्मात्रेण इत्यर्थः। कृतज्ञे राजनि अनुजीविनोऽनुरज्यन्ते अनुरक्ताश्च तं रक्षन्तीति भावः॥ १४॥

फलन्त्युपायाः परिबृंहितायतीः
उपेत्य सङ्घर्षमिवार्थसम्पदः ॥ १५ ॥
अनेकराजन्यरथाश्वसङ्कुलं
तदीयमास्थाननिकेतनाजिरम् ।
नयत्ययुग्मच्छदगन्धिरार्द्रतां
भृशं नृपोपायनदन्तिनां मदः ॥ १६ ॥

अथ उपायप्रयोगस्य फलवत्तां दर्शयति, अनारतमिति ।— [ तेन ] राज्ञा दुर्य्योधनेन [ पदेषु ] उपायवस्तुषु । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । [ सम्यक् ] असङ्कीर्णम् अव्यस्तं च [ विभज्य ] विविच्य [ विनियोगसत्क्रियाः ] विनियोग एव सत्क्रिया अनुग्रहः, सत्कार इति यावत्, यासां ताः [ लम्भिताः ] स्थानेषु सम्यक् प्रयुक्ता इत्यर्थः । उपायविशेषणं वा [ उपायाः ] सामादयः [सङ्घर्षं] परस्परस्पर्द्धाम् [ उपेत्य इव ] इति उत्प्रेक्षा । [ परिबृंहितायतीः ] प्रचितोत्तरकालाः स्थिरा इत्यर्थः । [ अर्थसम्पदोऽनारतम् ] अजस्रं [ फलन्ति ] प्रसुवते इत्यर्थः ॥ १५ ॥

अर्थसम्पदमेवाह, अनेकेति ।—अयुग्मच्छदस्य सप्तपर्णपुष्पस्य गन्ध इव गन्धो यस्य असौ [अयुग्मच्छदगन्धिः] । "सप्तम्युपमान" इत्यादिना बहुव्रीहिरुत्तरपदलोपश्च । "उपमानाच्च" (५।४।१३७ पा०) इति समासान्त इकारः । [नृपोपायनदन्तिनां मदः ] नृपाणाम् उपायनानि उपहारभूता ये दन्तिनः तेषां मदः । "उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरः । [ अनेकराजन्यरथाश्वसङ्कुलं ] राज्ञाम् अपत्यानि पुमांसो राजन्याः क्षत्रियाः । "राजश्वशुराद्यत्" (४।१।१३७ पा०) इति

सुखेन लभ्या दधतः कृषीवलै-
रकृष्टपच्या इव शस्यसम्पदः।
वितन्वति क्षेममदेवमातृकाः
चिराय तस्मिन् कुरवश्चकासति॥ १७॥

---

यत्प्रत्ययः। राज्ञोऽपत्ये जातिग्रहणात् अण्। रथाश्चाश्वाश्च रथाश्वं. सेनाङ्गत्वादेकवद्भावः। अनेकेषां राजन्यानां रथाश्वेन सङ्कुलं व्याप्तम्। [तदीयमास्थाननिकेतनाजिरं] सभामण्डपाङ्गणम्। "अङ्गणं चत्वराजिरे" इत्यमरः। [भृशम्] अत्यर्थम् [आर्द्रतां] पङ्किलत्वं [नयति]। एतेन महासमृद्धिः अस्य उक्ता, अत एव उदात्तालङ्कारः। तथाचालङ्कारसूत्रम्।— "समृद्धिमद्वस्तुवर्णनमुदात्तः" इति॥ १६॥

सम्प्रति जनपदक्षेमकरत्वमाह, सुखेनेति।—[चिराय तस्मिन्] दुर्य्योधने [क्षेमं वितन्वति] क्षेमङ्करे सति, देवः पर्जन्य एव माता येषां ते देवमातृका वृष्ट्यम्बुजीविनो देशाः, ते न भवन्ति इति [अदेवमातृकाः] नदीमातृका इत्यर्थः। "देशो नद्यम्बुवृष्ट्यम्बुसम्पन्न-व्रीहिपालितः। स्यान्नदीमातृको देवमातृकश्च यथाक्रमम्॥" इत्यमरः। एतेन अस्य कुल्यादिपूर्त्तप्रवर्त्तकत्वमुक्तम्। कुरूणां निवासाः [कुरवः] जनपदविशेषाः। कृष्टेन पच्यन्त इति कृष्टपच्याः। "राजसूय" (३।१।११४ पा०) इत्यादिना कर्मकर्त्तरि क्यप्प्रत्ययान्तो निपातः। तद्विपरीताः [अकृष्टपच्या इव]। कृषिः एषाम् अस्तीति [कृषीवलैः] कर्षकैः इत्यर्थः। "रजःकृषि" (५।२।११२ पा०) इत्यादिना वलच् प्रत्ययः। "वले" (६।३।११८ पा०) इति दीर्घः। [सुखेन] अक्लेशेन [लभ्याः] लब्धुं शक्याः

उदारकीर्त्तेरुदयं दयावतः
प्रशान्तबाधं दिशतोऽभिरक्षया ।
स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता
वसूपमानस्य वसूनि मेदिनी ॥ १८ ॥

---

[ शस्यसम्पदः दधतः ] धारयन्तः । "नाभ्यस्ताच्छतुः" (७।१।७८ पा०) इति नुमागमप्रतिषेधः । [ चकासति ] सर्वोत्कर्षेण वर्त्तन्ते इत्यर्थः । "अदभ्यस्तात्" ( ७।१।४ पा० ) इति झेरदादेशः । "जक्षित्यादयः षट्" (६।१।६ पा०) इति अभ्यस्तसंज्ञा । सम्पन्नजनपदत्वात् असन्तापकरत्वाच्च दुःसाध्योऽयमिति भावः ॥ १७ ॥

ननु एवं जनपदानुवर्त्तिनः कथम् अर्थलाभ इत्यत आह, उदारेति ।—[ उदारकीर्त्तेः ] महायशसः । "उदारो दातृमहतोः" इत्यमरः । [ दयावतः ] परदुःखप्रहाणेच्छोः । अत एव [ प्रशान्तबाधं ] प्रशमितोपद्रवं यथा स्यात् तथेति क्रियाविशेषणम् उदयविशेषणं वा । "वा दान्तशान्त" (७।२।२७ पा०) इत्यादिना शमिधातोर्ण्यन्तान्निष्ठान्तो निपातः । [अभिरक्षया] सर्वतस्त्राणेन [उदयं ] वृद्धिं [ दिशतः ] सम्पादयतः [ वसूपमानस्य ] कुबेरोपमस्य । "वसुर्मयूखाग्निधनाधिपेषु" इति विश्वः । [ अस्य ] दुर्योधनस्य [ गुणैः ] दयादाक्षिण्यादिभिः [ उपस्नुता ] द्राविता [ मेदिनी वसूनि ] धनानि । "वसु तोये धने मणौ" इति वैजयन्ती । [ स्वयं प्रदुग्धे ] अक्लेशेन दुह्यते इत्यर्थः । दुहेः कर्मकर्त्तरि लट् । "न दुहस्नुनमां यक्चिणौ" (३।१।८९ पा०) इति यक्प्रतिषेधः । यथा केनचिद् विदग्धेन नवप्रसूता च रक्षिता गौः स्वयं प्रदुग्धे तद्वदिति भावः ।

महौजसो मानधना धनार्च्चिता
धनुर्भृतः संयति लब्धकीर्त्तयः ।
नसंहतास्तस्य नभिन्नवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥ १९ ॥

अलङ्कारस्तु—"विशेषणमात्रसाम्यात् अप्रस्तुतस्य गम्यत्वे समासोक्तिः" इति सर्वस्वकारः। अत्र प्रतीयमानया गवा सह प्रकृताङ्गया मेदिन्या भेदेऽभेदलक्षणा अतिशयोक्तिवशादपोह्यत्वेन* र्सोक्तिरिति संक्षेपः ॥ १८ ॥

वीरभटानुकूल्यमाह, महौजस इति ।— [महौजसः] महाबलाः अन्यथा दुर्बलानाम् अनुपकारित्वादिति भावः। मानः कुलशीलाद्यभिमान एव धनं येषां ते [ मानधनाः ]। अन्यथा कदाचिद् बलदर्पाद् विकुर्वीरन् इति भावः। [धनार्च्चिताः ] धनैरर्च्चिताः सत्कृताः। अन्यथा दारिद्र्यात् एनं जह्युरिति भावः। [ संयति ] संग्रामे [ लब्धकीर्त्तयः ] बहुयशस इत्यर्थः। अन्यथा कदाचित् मुह्येयुरिति भावः। संहता मिथःसङ्गताः स्वार्थनिष्ठा न भवन्तीति [नसंहताः] नञर्थस्य नशब्दस्य सुप्सुपेति समासः। भिन्नवृत्तयो मिथो विरोधात् स्वामिकार्य्यविघातकरा न भवन्तीति [ नभिन्नवृत्तयः] पूर्ववत्समासः। अन्यथा स्वामिकार्य्यविघातकतया स्वामिद्रोहिणः स्युः इति उभयत्रापि तात्पर्य्यार्थः। [धनुर्भृतः] धानुष्काः। आयुधीयमात्रोपलक्षणमेतत्। प्राधान्यात् धनुर्ग्रहणम्। [ तस्य ] दुर्य्योधनस्य [ असुभिः ] प्राणैः [प्रियाणि समीहितुं ] कर्त्तुं [ वाञ्छन्ति ] आनृण्यार्थं प्राणान् दातुम्

*"अपोहः अतदव्यावृत्तिः" इति महेश्वरः। तिरस्कार्य्यत्वेन इत्यर्थः।

महीभृतां सच्चरितैश्चरैः क्रियाः
स वेद निःशेषमशेषितक्रियः।
महोदयैस्तस्य हितानुबन्धिभिः
प्रतीयते धातुरिवेहितं फलैः॥ २०॥

इच्छन्ति, अन्यथा दोषस्मरणादिति भावः। अत्र महीज* आदिपदार्थानां प्राणदानकर्त्तव्यतां प्रति विशेषणगत्या हेतुत्वाभिधानात् काव्यलिङ्गम् अलङ्कारः। लक्षणन्तु उक्तम्। तथा साभिप्रायविशेषणत्वात् परिकरालङ्कारः। इति द्वयोः तिलतण्डुलवत् विभक्ततया स्फुरणात् संसृष्टिः॥ १९॥ †

सम्प्रति स्वराष्ट्रवत् परराष्ट्रवृत्तान्तमपि वेत्तीत्याह, महीभृतामिति—[अशेषितक्रियः] समापितकृत्यः आफलोदयकर्मेत्यर्थः। [सः] दुर्य्योधनः [सच्चरितैः] शुद्धचरितैः, अवञ्चकैः इत्यर्थः। चरन्तीति चराः तैः [चरैः] प्रणिधिभिः। पचाद्यच्। [महीभृतां क्रियाः] प्रारम्भान् [निःशेषं वेद] वेत्ति। "विदो लटो वा" (३।४।८३ पा०) इति णलादेशः। स्वरहस्यं तु न कश्चिद् वेद इत्याह, महोदयैरिति।—[धातुरिव तस्य] दुर्य्योधनस्य [ईहितम्] उद्योगः [महोदयैः] महावृद्धिभिः। [हितानुबन्धिभिः] हितम् अनुबध्नन्ति अनुरुन्धन्ति इति हितानुबन्धिनः ‡ तैः इत्यर्थः। [फलैः] कार्य्यसिद्धिभिः [प्रतीयते] ज्ञायते। फलानुमेयाः तस्य प्रारम्भा इत्यर्थः॥ २०॥

* अत्र महीजसादीति केषुचिद् ग्रन्थेषु पाठस्तु प्रामादिकः, समासे संहिताया नित्यत्वात् वत्वयत्वयलोपे सिद्धम्।

† मानधना इति रूपकानुप्राणितः, धनाधना तयः तयः इत्यादिषु सकलकाव्यनिबन्धनः वृत्त्यनुप्रासोऽप्यत्रावभासते इति केचित्।

‡ सुप्यजातौ णिनिस्ताच्छील्ये (३।२।७८ पा०) इति णिनिः।

न तेन सज्यं क्वचिदुद्यतं धनुः
कृतं न वा कोपविजिह्ममाननम् ।
गुणानुरागेण शिरोभिरुह्यते
नराधिपैर्माल्यमिवास्य शासनम् ॥ २१ ॥
स यौवराज्ये नवयौवनोद्धतं
निधाय दुःशासनमिद्धशासनः ।
मखेष्वखिन्नोऽनुमतः पुरोधसा
धिनोति हव्येन हिरण्यरेतसम् ॥ २२ ॥

मित्रबलमाह नेति ।—[तेन] राज्ञा [क्वचित्] कुत्रापि । सह ज्यया मौर्व्या [सज्यम्] । "मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः । "तेन सहेति तुल्ययोगे" (२।२।२८ पा०) इति बहुव्रीहिः । [धनुः न उद्यतं] न ऊर्द्ध्वीकृतम् [आननं वा कोपविजिह्मं] कोपेन कुटिलं [ न कृतं ] "यस्य कोप एव न उदेति कुतस्तस्य युद्ध-प्रसक्तिः" इति भावः । कथं तर्हि आज्ञां कारयति राज्ञ इत्यत्राह, गुणेति । - [गुणानुरागेण] गुणेषु दयादाक्षिण्यादिषु अनुरागेण प्रेम्णा । माल्यपक्षे—सूत्रानुषङ्गेण यद्वा सौरभ्यगुणलोभेन । [नरा-धिपैः] अन्यभूपालैः [अस्य शासनम्] आज्ञाम् । [माल्यमिव] माला एव माल्यं तदिव । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्"* इति क्षीरस्वामी । [ शिरोभिः उह्यते ] धार्य्यते । "वचिस्वपि-यजादीनां किति" ( ६।१।१५ पा० ) इति यकि सम्प्रसारणम् । अत्र उपमा स्फुटैव ॥ २१ ॥

सम्प्रति अस्य धार्मिकत्वमाह, स इति ।—[इद्धशासनः] अप्रतिहताज्ञः [ सः ] दुर्य्योधनः [ नवयौवनोद्धतं ] नव-

* चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यानम् (वा०) ।

प्रलीनभूपालमपि स्थिरायति
प्रशासदावारिधि मण्डलं भुवः ।
स चिन्तयत्येव भियस्त्वदेष्यतीः
अहो ! दुरन्ता बलवद्विरोधिता ॥ २३ ॥

यौवनेन उद्धतं प्रगल्भं, धुरन्धरम् इत्यर्थः । [दुःशासनं] दुःखेन शिष्यते इति दुःशासनः तम् । "भाषायां शासियुधि" (वा०) इत्यादिना खलर्थे युच् प्रत्ययः । [यौवराज्ये] युवराजकर्मणि । ब्राह्मणादित्वात् ष्यञ् * । [निधाय] नियुज्य इत्यर्थः । [पुरोधसा] पुरोहितेन [अनुमतः] अनुज्ञातः, तस्मिन् याजके सति इत्यर्थः, तदुल्लङ्घने दोषस्मरणादिति भावः । "निष्ठा" (३।२।१०२ पा०) इति भूतार्थे क्तः, न तु "मतिबुद्धि" (३।२।१८८ पा०) इत्यादिना वर्त्तमानार्थे । अन्यथा पुरोधसा इत्यत्र "क्तस्य च वर्त्तमाने" (२।३।६७ पा०) इति षष्ठी स्यात् । [अखिन्नः] अनलसः [मखेषु] क्रतुषु [हव्येन] हविषा । हिरण्यं रेतो यस्य तं [हिरण्यरेतसम्] अनलं [धिनोति] प्रीणयति । धिन्वेः प्रीणनार्थात् "धिन्विकृण्व्योर च" (३।१।८० पा०) इत्यु-प्रत्ययः । अकारस्यान्तादेशः ॥ २२ ॥

स चेत् तादृश उद्योगी तर्हि अस्माभिर्न निरुद्योगैर्भाव्यमित्याशङ्क्य उद्योगाशां दर्शयति, प्रलीनेति ।—[सः] दुर्य्योधनः [प्रलीनभूपालं] निःसपत्नम् इत्यर्थः । [स्थिरायति] चिरस्थायि इत्यर्थः । [भुवो मण्डलम्] आ वारिधिभ्यः [आवारिधि] । "आङ् मर्य्यादाभिविध्योः" (२।१।१३ पा०) इति अव्ययीभावः । [प्रशासत्] आज्ञापयन् [अपि] । "जक्षि-

* गुणवचनब्राह्मणादिभ्यः कर्मणि च (५।१।१२४ पा०) ।

कथाप्रसङ्गेन जनैरुदाहृतात्
अनुस्मृताखण्डलसूनुविक्रमः ।
तवाभिधानाद् व्यथते नताननः
स दुःसहात् मन्त्रपदादिवोरगः ॥ २४ ॥

त्यादयः षट्" (६।१।६ पा०) इति अभ्यस्तसंज्ञा । "नाभ्यस्ताच्छतुः" (७।१।७८ पा०। इति नुमागमप्रतिषेधः । [त्वदेष्यतीः] त्वत् त्वत्त एष्यतीः आगमिष्यतीः आगामिनीरिति यावत् । धातूनामनेकार्थत्वादुक्तार्थसिद्धिः । अथवा आङ्पूर्वः पाठः । "एत्येधत्यूठ्सु" ( ६।१।८९ पा० ) इति वृद्धिः । * "लृटः सद्वा" (३।३।१४ पा०) इति शतृप्रत्ययः । "उगितश्च" (४।१।६ पा०) इति ङीप् । "आच्छीनद्योर्नुम्" ( ७।१।८० पा० ) इति विकल्पान्नुमभावः । [भियः] भयहेतून् विपद इत्यर्थः । [चिन्तयति] आलोचयति [एव] । [अहो ! बलवद्विरोधिता दुरन्ता] दुष्टावसाना, सार्वभौमस्यापि प्रबलैः सपत्नैः सह वैरम् अनर्थपर्य्यवसायि एवेति तात्पर्य्यम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ २३ ॥

ननु गूढ़ाकारेङ्गितस्य तस्य भयं त्वया कथं निरधारि इत्यत्राह, कथेति ।—[कथाप्रसङ्गेन] गोष्ठीवचनेन [जनैः] तत्रत्यैः इत्यर्थः । अन्यत्र—कथाप्रसङ्गेन विषवैद्येन । "कथाप्रसङ्गो वार्त्तायां विषवैद्येऽपि वाच्यवत्" इति विश्वः । एकवचनस्य अतन्त्रत्वात् जनविशेषणम् । यद्वा कथाप्रसङ्गे इनाश्च तं जनाश्च इत्येकं पदम् । [उदाहृतात्] उच्चारितात् [तवाभि-

* "एत्येधत्यूठ्सु" इति सर्वेण वृद्धौ कृतायां "ऐष्यतीः" इत्येव स्यात् । अतः "अथवा" इत्यारभ्य "वृद्धिः" इत्यन्तं यावत् लिपिकरप्रमादः इति सुधीभिर्विभाव्यम् ।

तदाशु कर्त्तुं त्वयि जिह्ममुद्यते
विधीयतां तत्र विधेयमुत्तरम्।
परप्रणीतानि वचांसि चिन्वतां
प्रवृत्तिसाराः खलु मादृशां गिरः ॥ २५ ॥

धानात्] नामधेयात् स्मारकाद्धेतोः। "हेतौ" (२।३।२३ पा०) इति पञ्चमी। "आख्याह्वे अभिधानञ्च नामधेयञ्च नाम च" इत्यमरः। अन्यत्र तवाभिधानात्। "नामैकदेशग्रहणे नाममात्रग्रहणम्" इति न्यायात्। तश्च वश्च तवौ तार्क्ष्यवासुकी तयोः अभिधानं यस्मिन् पदे तस्मात् [अनुस्मृताखण्डलसूनुविक्रमः] स्मृतार्जुनपराक्रमः सन् [दुःसहात्] अतिदुःसहात् [मन्त्रपदात्] मन्त्रशब्दात् स्मारकाद्धेतोः। आखण्डलसूनुः इन्द्रानुजः उपेन्द्रो विष्णुरिति यावत्। "सूनुः पुत्रेऽनुजे रवौ" इति विश्वः। तस्य विः पक्षी गरुड़ इत्यर्थः। तस्य क्रमः पादविक्षेपः, सोऽनुस्मृतो येन, [सः] तथोक्तः। स्मृतगरुड़महिमा [उरग इव नताननः] सन्। "उरगः पन्नगो भोगी" इत्यमरः। [व्यथते] दुःखायते। "पीड़ा बाधा व्यथा दुःखम्" इत्यमरः। अत्युत्कटभयदोषादिविकारा दुर्वारा इति भावः। "सर्वतो जयमन्विच्छेत् पुत्रादिच्छेत् पराजयम्" इति न्यायादर्जुनोत्कर्षकथनं युधिष्ठिरस्य भूषणमेवेति सर्वमवदातम् ॥ २४ ॥

निगमयति, तदिति।—[तत्] तस्मात् कारणात् [त्वयि जिह्मं] कपटं [कर्त्तुम् उद्यते] त्वां जिघांसौ इत्यर्थः। * [तत्र] तस्मिन् दुर्य्योधने [विधेयं] कर्त्तव्यम् [उत्तरं] प्रतिक्रियां [आशु विधीयतां] क्रियताम्। ननु कर्त्तव्यमपि त्वयैव

* सत्यविकरणे च (२।३।३६ पा०) इति विषयाधिकरणे सप्तमी।

इतीरयित्वा गिरमात्तसत्क्रिये
गतेऽथ पत्यौ वनसन्निवासिनाम् ।
प्रविश्य कृष्णासदनं महीभुजा
तदाचचक्षेऽनुजसन्निधौ वचः ॥ २६ ॥

निशम्य सिद्धिं द्विषतामपाकृती:
ततस्ततस्त्या विनियन्तुमक्षमा ।

---

उच्यतामिति चेत्? तत्राह परेति ।—[परप्रणीतानि] परोक्तानि [वचांसि चिन्वतां] गवेषयतां [मादृशां] वार्त्ताहारिणाम् इत्यर्थः । [गिरः प्रवृत्तिसाराः] वार्त्तामात्रसाराः [खलु] । "वार्त्ता प्रवृत्तिर्वृत्तान्तः" इत्यमरः । वार्त्तामात्रवादिनो वयं, न तु कर्त्तव्यार्थोपदेशसमर्थाः, अतस्त्वयैव निर्धार्य्य कार्य्यमिति भावः । सामान्येन विशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः ॥२५॥

इतीति ।—[वनसन्निवासिनां पत्यौ] वनेचराधिपे * [इति गिरम् ईरयित्वा] उक्त्वा [आत्तसत्क्रिये] गृहीतपारितोषिके [गते] सति । "तुष्टिदानमेव चाराणां हि वेतनं, ते हि तल्लोभात् स्वामिकार्य्येषु अतीव त्वरयन्ते" इति नीतिवाक्यामृते । [अथ महीभुजा] राज्ञा [कृष्णासदनं] द्रौपदीभवनं [प्रविश्य अनुजसन्निधौ तत्] वनेचरोक्तं [वचः] वाक्यम् [आचचक्षे] आख्यातम् । अथवा —कृष्णेति परिच्छेदः । सदनं प्रविश्य अनुजसन्निधौ तद् वचः कृष्णा आचचक्षे आख्याता । चक्षिङो दुहादेर्द्विकर्म्मकत्वादप्रधाने कर्म्मणि लिट् ॥ २६ ॥

निशम्येति ।—अथ [द्रुपदात्मजा] द्रौपदी [द्विषतां

---

* यस्य च भावेन भावलक्षणम् (२।३।३७ पा०) इति सप्तमी ।

नृपस्य मन्युव्यवसायदीपिनी-
रुदाजहार द्रुपदात्मजा गिरः ॥ २७ ॥

भवादृशेषु प्रमदाजनोदितं
भवत्यधिक्षेप इवानुशासनम् ।
तथापि वक्तुं व्यवसाययन्ति मां
निरस्तनारीसमया दुराधयः ॥ २८ ॥

मिद्धिं ] वृद्धिरूपां [ निशम्य ततः ] तदनन्तरम् । ततो द्विषद्भ्य आगताः [ ततस्त्याः ]। "अव्ययात् त्यप्" (४।२।१०४ पा०) इति त्यप् । [ अपाकृतोः ] विकारान् [ विनियन्तुं ] निरोद्धुम् [ अक्षमा ] सती [ नृपस्य ] युधिष्ठिरस्य [मन्युव्यवसायदीपिनीः] मन्युव्यवसाययोः क्रोधोद्योगयोः दीपिनीः संवर्द्धिनीः [ गिरः ] वाक्यानि [ उदाजहार ] जगाद इत्यर्थः ॥ २७ ॥

भवादृशेष्विति ।—[ भवादृशेषु ] भवादृशा भवद्विधाः पण्डिता इत्यर्थः । तेषु विषये । "त्यदादिषु" (३।२।६० पा०) इत्यादिना कञ् । "आ सर्वनाम्नः" (६।३।९१ पा०) इत्याकारादेशः । [ प्रमदाजनोदितं ] स्त्रीजनोक्तम् । वदेः क्तः । "वचिस्वपि" (६।१।१५ पा०) इत्यादिना सम्प्रसारणम् । [अनुशासनं ] नियोगवचनम् [ अधिक्षेपः ] तिरस्कार [इव भवति]। अतो न युक्तं वक्तुमित्यर्थः । [ तथापि ] वक्तुमनुचितत्वेऽपि [ निरस्तनारीसमयाः ] त्याजितशालीनतारूपस्त्रीसमाचाराः । "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः । [ दुराधयः ] समयोल्लङ्घनहेतुत्वात् दुष्टा मनोव्यथाः । "पुंस्याधि-

अखण्डमाखण्डलतुल्यधामभिः
चिरं धृता भूपतिभिः स्ववंशजैः ।
त्वयात्महस्तेन मही मदच्युता
मतङ्गजेन स्रगिवापवर्जिता ॥ २९ ॥

व्रजन्ति ते मूढधियः पराभवं
भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधान्
असंवृताङ्गान् निशिता इवेषवः ॥ ३० ॥

मानसी व्यथा" इत्यमरः । [ मां वक्तुं व्यवसाययन्ति ] प्रेरयन्ति । न किञ्चिदयुक्तं दुःखिनामिति भावः ॥ २८ ॥ *

अखण्डमिति ।—[ आखण्डलतुल्यधामभिः ] इन्द्रतुल्यप्रभावैः । "धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः" इति हैमः । [ स्ववंशजैः भूपतिभिः ] भरतादिभिः [ चिरम् अखण्डम् ] अविच्छिन्नं [ धृता मही त्वया मदच्युता ] मदं च्योततीति मदच्युत् क्विप् । तेन मदस्राविणा [मतङ्गजेन स्रगिव आत्महस्तेन ] स्वकरेण, स्वचापल्येन इत्यर्थः । [ अपवर्जिता ] परिहृता त्यक्ता । स्वदोषादेव अयम् अनर्थागम इत्यर्थः ॥ २९ ॥

स्वदोषादेवायमनर्थागम इत्युक्तम् । स च दोषः कुटिलेषु अकौटिल्यमेव इत्याह. व्रजन्तीति ।—[ मूढधियः ] निर्विवेक-

* त्याजितार्हत्सम्माननादिसमुचितकर्त्तव्याचाराः अत एव वक्तुं प्रेरयन्ति इति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । अन्याय्यवागव्यवहारः न चास्मद्दोषेण भवदनुत्साहदोषेणैव इति वस्तु व्यङ्ग्यम् ।

गुणानुरक्तामनुरक्तसाधनः
कुलाभिमानी कुलजां नराधिपः।
परैस्त्वदन्यः क इवापहारयेत्
मनोरमामात्मवधूमिव श्रियम् ॥ ३१ ॥

बुद्धयः [ ते पराभवं व्रजन्ति ]; [ ये मायाविषु ] मायावत्सु विषये। "अस् मायामेधा" (५।२।१२१ पा०) इत्यादिना विनि-प्रत्ययः। [ मायिनः ] मायावन्तः। व्रीह्यादित्वात् इनि-प्रत्ययः।* [ न भवन्ति ]। अत्रैव अर्थान्तरं न्यस्यति,—प्रविश्येति।—[ शठाः ] अपकारिणो धूर्त्ताः [ तथाविधान् ] अकुटिलान् [ असंवृताङ्गान् ] अवर्मितशरीरान् [ निशिता इषव इव प्रविश्य ] प्रवेशं कृत्वा आत्मीया भूत्वा [घ्नन्ति हि]। "आर्जवं हि कुटिलेषु न नीतिः" इति भावः ॥ ३० ॥

न च लक्ष्मीचाञ्चल्यादयमनर्थागमः, किन्तु स्वोपेक्षादोष-मूलत्वादित्याशयेनाह, गुणेति।—[ अनुरक्तसाधनः ] अनुकूल-सहायवान्। उक्तञ्च कामन्दकीये,—"उद्योगादनिवृत्तस्य सुसहायस्य धीमतः। छायेवानुगता तस्य नित्यं श्रीः सह-चारिणी॥" इति। [कुलाभिमानी] क्षत्रियत्वाभिमानी कुलीन-त्वाभिमानी च [ त्वदन्यः ] त्वत्तोऽन्यः।† "अन्यारात्" ( २।३।२९ पा० ) इत्यादिना पञ्चमी। [ क इव नराधिपः ]। [गुणानुरक्तां ] गुणैः सन्ध्यादिभिः सौन्दर्य्यादिभिश्च अनुरक्ताम्

* व्रीह्यादिभ्यश्च (५।२।११६ पा० )।

† अत्र न सर्व्वादित्वात्तसिल्। "अपादाने चाहीयरुहोः" (५।४।४५ पा० ) इति अनपादानपञ्चम्यास्तसिल्निषेधात्।

भवन्तमेतर्हि मनस्विगर्हिते
विवर्त्तमानं नरदेव! वर्त्मनि।
कथं न मन्युर्ज्वलयत्युदीरितः
शमीतरुं शुष्कमिवाग्निरुच्छिखः॥ ३२॥

अनुरागिणीं [ कुलजां ] कुलक्रमादागतां कुलीनाञ्च [मनोरमां श्रियम्] आत्मवधूमिव ] स्वभार्य्यामिव। "वधूर्जाया स्नुषा स्त्री च" इत्यमरः। [ परैः ] शत्रुभिः अन्यैश्च [ अपहारयेत् ? ] स्वयमेव अपहारं कारयेदित्यर्थः। कलत्रापहारवत् लक्ष्म्यपहारोऽपि राज्ञा मानहानिकरत्वात् अनुपेक्षणीय इति भावः॥ ३१॥

अथ दशभिः कोपोद्दीपनं करोति, भवन्तमिति।—हे [ नरदेव! ] नरेन्द्र! [ एतर्हि ] इदानीम्, अस्मिन् आपत्कालेऽपीत्यर्थः। "एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा" इत्यमरः। "इदमो र्हिल्" (५।३।१६ पा०) इति र्हिल् प्रत्ययः। "एतेतौ रथोः" (५।३।४ पा०) इत्येतादेशः। आपदमेवाह।—[ मनस्विगर्हिते ] शूरजनजुगुप्सिते [ वर्त्मनि ] मार्गे [ विवर्त्तमानं ] शत्रुकृतां दुर्दशामनुभवन्तमित्यर्थः। [ भवन्तं ] त्वाम् [ उदीरितः ] उद्दीपितः [ मन्युः ] क्रोधः [ शुष्कं ] नीरसम्। "शुषः कः" (८।२।५१ पा०) इति निष्ठातकारस्य ककारः। [ शमीतरुं ] शमी चासौ तरुश्चेति विशेषणसमासः, तम्। शमीग्रहणं शीघ्रज्वलनस्वभावात् कृतम्। [ उच्छिखः ] उद्गतज्वालः। "वृणिज्वाले अपि शिखे" इत्यमरः। [अग्निरिव कथं न ज्वलयति ? ] ज्वलयितुमुचितमित्यर्थः। "मितां ह्रस्वः" (६।४।९२ पा०) इति ह्रस्वः॥ ३२॥

अवन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना
न जातहार्देन न विद्विषादरः ॥ ३३ ॥

ननु अन्तःशत्रुत्वादयं क्रोधः त्याज्य एव इत्याशङ्क्याह, अवन्ध्येति ।—अवन्ध्यः कोपो यस्य तस्य [अवन्ध्यकोपस्य] अत एव [आपदां विहन्तुः] निग्रहानुग्रहसमर्थस्य इत्यर्थः, पुंस इति शेषः । [देहिनः] जन्तवः [स्वयमेव वश्याः] वशङ्गताः [भवन्ति]। "वशङ्गतः" (४।४।८६ पा०) इति यत् प्रत्ययः । अतस्त्वया कोपिना भवितव्यमित्यर्थः । व्यतिरेके तु अनिष्टमाचष्टे ।—[अमर्षशून्येन] निष्कोपेण [जन्तुना]। "कन्यया शाकः" इतिवत् "हेतौ" (२।३।२३ पा०) इति तृतीया । हृदयस्य कर्म हार्दं स्नेहः । "प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः । युवादित्वादण् । * "हृदयस्य हृल्लेखयदण्लासेषु" (६।३।५० पा०) इति हृदादेशः । [जातहार्देन] जातस्नेहेन सता [जनस्य आदरो न]। [विद्विषा] द्विषता च सता [दरो न]। अमर्षहीनस्य रागद्वेषौ अकिञ्चित्करत्वात् अगण्यौ इत्यर्थः । अथवा विद्विषा सता दरो भयं न । "दरोऽस्त्रियां भये श्वभ्रे" इत्यमरः । एतस्मिन्नेव प्रयोगे सन्धिवशाद् द्विधा पदच्छेदः । पुंवाक्येषु न दोषः । अतः स्थाने कोपः कार्य्यस्त्याज्यस्तु अस्थाने कोप इति भावः ॥ ३३ ॥

* हायनान्तयुवादिभ्योऽण् (५।१।१३० पा०)।

परिभ्रमँल्लोहितचन्दनोचितः
पदातिरन्तर्गिरि रेणुरूषितः।
महारथः सत्यधनस्य मानसं
दुनोति नो कच्चिदयं वृकोदरः? ॥ ३४ ॥
विजित्य यः प्राज्यमयच्छदुत्तरान्
कुरूनकुप्यं वसु वासवोपमः।

परिभ्रमन्निति।—[लोहितचन्दनोचितः] उचितलोहितचन्दनः। "वाहिताग्न्यादिषु" (२।२।३७ पा०) इति साधुः। अभ्यस्तरक्तचन्दनः इत्यर्थः। "अभ्यस्ते तूचितं न्याय्यम्" इति यादवः। [महारथः] रथचारी। उभयत्रापि प्रागिति शेषः। अद्य तु [रेणुरूषितः] धूलिच्छुरितः। पद्भ्यामतति गच्छतीति [पदातिः] पादचारी। "अज्यतिभ्यां च" (उणा० पा० ४।१३०) इत्यनुवृत्तौ "पादे च" (उणा० पा० ४।१३१) इति औणादिकः इन्प्रत्ययः। "पादस्य पदाज्यातिगोपहतेषु" (६।३।५२ पा०) इति पदादेशः। [अन्तर्गिरि] गिरिषु अन्तः। विभक्त्यर्थेऽव्ययीभावः। "गिरेश्च सेनकस्य" (५।४।११२ पा०) इति विकल्पात् समासान्ताभावः। [परिभ्रमन् अयं वृकोदरः] भीमः। [सत्यधनस्य] इति सोल्लुण्ठनवचनम्। अद्यापि त्वया सत्यमेव रक्ष्यते, न तु भ्रातर इति भावः, तवेति शेषः। [मानसं नो दुनोति?]। "चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः। [कच्चित्] न परितापयति? "कच्चित् कामप्रवेदने" इत्यमरः। (स्वाभिप्रायाविष्करणं कामप्रवेदनम्) ॥ ३४ ॥

विजित्येति।—वासवः इन्द्रः उपमा उपमानं यस्य सः

स वल्कवासांसि तवाधुनाऽऽहरन्
करोति मन्युं न कथं धनञ्जयः ? ॥ ३५ ॥
वनान्तशय्याकठिनीकृताकृती
कचाचितौ विष्वगिवागजौ गजौ ।
कथं त्वमेतौ धृतिसंयमौ यमौ
विलोकयन्नुत्सहसे न बाधितुम् ? ॥ ३६ ॥

[ वासवोपमः ] इन्द्रतुल्यः [ यः ] धनञ्जयः । [ उत्तरान् कुरून् ] मेरोरुत्तरान् मानुषान् देशविशेषान् [ विजित्य प्राज्यं ] प्रभूतम् । "प्रभूतं प्रचुरं प्राज्यम्" इत्यमरः । कुप्यात् अन्यत् [ अकुप्यं ] हेमरूप्यात्मकम् । "स्यात् कोशश्च हिरण्यं च हेमरूप्ये कृताकृते । ताभ्यां यत् अन्यत् तत् कुप्यम्" इत्यमरः । [ वसु ] धनम् [ अयच्छत् ] दत्तवान् । "पाघ्रा" (७।३।७८ पा०) इत्यादिना दाणो यच्छादेशः । [ सः ] धनं जयतीति [ धनञ्जयः ] अर्जुनः । संज्ञायां भृतॄवृजि" (३।२।४६ पा०) इत्यादिना खच्प्रत्ययः । "अरुर्द्विषत् (६।३।६६ पा०) इत्यादिना मुमागमः । [ अधुना ] अस्मिन् काले । "अधुना" (५।३।१७ पा०) इति निपातनात् साधुः । [ वल्कवासांसि आहरन् कथं तव मन्युं ] क्रोधं दुःखं वा [ न करोति ? ] ॥३५॥

वनान्तेति ।—[ वनान्तशय्याकठिनीकृताकृती ] वनान्तो वनभूमिरेव शय्या तया कठिनीकृताकृती कठिनीकृतदेहौ । "आकारो देह आकृतिः" इति वैजयन्ती । [ विष्वक् ] समन्तात् । "समन्ततस्तु परितः सर्वतो विष्वगित्यपि" इत्यमरः । [ कचाचितौ ] कचव्याप्तौ, विशीर्णकेशौ इत्यर्थः । अत एव

इमामहं वेद न तावकीं धियं
विचित्ररूपाः खलु चित्तवृत्तयः।
विचिन्तयन्त्या भवदापदं परां
रुजन्ति चेतः प्रसभं ममाधयः॥ ३७॥

[ अगजौ ] गिरिसम्भवौ [ गजौ इव ] स्थितौ [ एतौ ] [ यमौ ] युग्मजातौ, माद्रीसुतौ इत्यर्थः। "यमो दण्डधरे ध्वाङ्क्षे संयमे यमजेऽपि च" इति विश्वः। [ विलोकयन् त्वं कथं धृति-संयमौ ] सन्तोषनियमौ। "धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु" इति विश्वः। [ बाधितुं न उत्सहसे ? ] न प्रवर्त्तसे ? "शकधृष" (३।४।६५ पा०) इत्यादिना तुमुन्। अहो ते महत् धैर्यमिति भावः॥ ३६॥ *

अथ राज्ञो दुर्दशां दर्शयितुमुपोद्घातमाह, (प्रकृतार्थं वर्णयितुम् अर्थान्तरवर्णनम् उपोद्घातः) इमामिति।—[ इमां ] वर्त्तमानां तव इमां [ तावकीं ] त्वदीयाम्। "तस्येदम्" (४।३।१२० पा०) इति अण्प्रत्ययः। "तवकममकावेकवचने" (४।३।३ पा०) इति तवकादेशः। [ धियं ] त्वदापद्विषयां चित्तवृत्तिम् [ अहं न वेद ] कीदृशी वा न वेद्मि, परबुद्धेरप्रत्यक्षत्वादिति भावः। "विदो लटो वा" (३।४।८३ पा०) इति लटो णलादेशः। न चात्मदृष्टान्तेनापन्नत्वाद् दुःखित्वमनुमातुं शक्यते धीरादिष्वनैकान्तिकत्वादित्याशयेनाह।—[ चित्तवृत्तयः विचित्ररूपाः ] धीराधीराद्यनेकप्रकाराः

---

* अगजौ गजौ संयमौ यमौ इत्यत्र गज-य-मानां सकृत्साम्यावृत्त्या वृत्त्यनुप्रासो-नामालङ्कारः। कृत आकृतीवाञ्जनयोः सकृदावृत्त्यार्थैकश्च त्येतयोः संसृष्टिः।

पुराधिरूढः शयनं महाधनं
विबोध्यसे यः स्तुतिगीतिमङ्गलैः।
अदभ्रदर्भामधिशय्य स स्थलीं
जहासि निद्रामशिवैः शिवारुतैः॥ ३८॥

---

[खलु,] किन्तु [पराम्] उत्कृष्टां [भवदापदं विचिन्तयन्त्याः] भावयन्त्याः [मम चेतः] चित्तम् [आधयः] मनोव्यथाः। "उपसर्गे घोः किः" (३।३।९२ पा०) इति कि-प्रत्ययः। [प्रसभं] प्रसह्य [रुजन्ति] भञ्जन्ति। "रुजो भङ्गे" इति धातोर्लट्। पश्यतामपि दुःसहा दुःखजननी त्वद्विपत्तिः अनुभवितारं त्वां न विकरोतीति महच्चित्रमित्यर्थः। चेत इति "रुजार्थानां भाववचनानामज्वरेः" (२।३।५४ पा०) इति षष्ठी न भवति। तत्र शेषाधिकाराच्छेषत्वस्य विवक्षितत्वादिति॥ ३७॥

तदापदमेव श्लोकत्रयेणाह, पुरेति।—[यः] त्वं [महाधनं] बहुमूल्यं श्रेष्ठम्। "महाधनं महामूल्ये" इति विश्वः। [शयनं] शय्याम् [अधिरूढः] सन् [स्तुतिगीतिमङ्गलैः] स्तुतयो गीतयश्च ता एव मङ्गलानि तैः करणभूतैः [पुरा विबोध्यसे] वैतालिकैरिति शेषः, पूर्वं बोधित इत्यर्थः। "पुरि लुङ् चास्मे" (३।२।१२२ पा०) इति भूतार्थे लट्। [सः] त्वम् [अदभ्रदर्भां] बहुकुशाम्। "अस्त्री कुशं कुथो दर्भः" इति "अदभ्रं बहुलं बहु" इति उभयत्राप्यमरः। [स्थलीम्] अकृत्रिमभूमिम्। "जानपद" (४।१।४२ पा०) इत्यादिना अकृत्रिमार्थे ङीष्। एतेन दुःसहस्पर्शत्वमुक्तम्। "अधिशीङ्स्थासां कर्म" (१।४।४६ पा०) इति कर्मत्वम्। [अधिशय्य] शयित्वा। "अयङ् यि क्ङिति" (७।४।२२ पा०) इत्ययङादेशः। [अशिवैः] अमङ्गलैः [शिवारुतैः] क्रोष्टु-

पुरोपनीतं नृप ! रामणीयकं
द्विजातिशेषेण यदेतदन्धसा ।
तदद्य ते वन्यफलाशिनः परं
परैति कार्श्यं यशसा समं वपुः ॥ ३९ ॥
अनारतं यौ मणिपीठशायिनौ
अरञ्जयद्राजशिरःस्रजां रजः ।
निषीदतस्तौ चरणौ वनेषु ते
मृगद्विजालूनशिखेषु वर्हिषाम् ॥ ४० ॥

रसितैः। "शिवा हरीतकी क्रोष्टा शमी नद्यामलक्युभे" इति वैजयन्ती। [निद्रां जहासि] अद्येति शेषः ॥ ३८ ॥

पुरेति।— हे [नृप ! यदेतत्] पुरोवर्त्ति [वपुः पुरा द्विजातिशेषेण] द्विजभुक्तावशिष्टेन [अन्धसा] अन्नेन। "भिस्सा स्त्री भक्तमन्धोऽन्नम्" इत्यमरः। द्वे जातौ येषां ते द्विजातयः। तदुक्तम्।—"जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते" इति। "दन्तविप्राण्डजा द्विजाः" इत्यमरः। रमणीयस्य भावो [रामणीयकं] मनोहरत्वम् [उपनीतं] प्रापितम्। नयतेर्द्विकर्मकत्वात् प्रधाने कर्मणि क्तः। "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इति वचनात्। [अद्य वन्यफलाशिनस्ते] तव [तत्] वपुः [यशसा समं परम्] अतिमात्रं [कार्श्यं परैति] प्राप्नोति। उभयमपि क्षीयते इत्यर्थः। अत्र सहोक्तिरलङ्कारः। तदुक्तं काव्यप्रकाशे।—"सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्" इति ॥ ३९ ॥

अनारतमिति।—[अनारतम्] अजस्रं [मणिपीठशायिनौ]

द्विषन्निमित्ता यदियं दशा ततः
समूलमुन्मूलयतीव मे मनः ।
परैरपर्य्यासितवीर्य्यसम्पदां
पराभवोऽप्युत्सव एव मानिनाम् ॥ ४१ ॥

विहाय शान्तिं नृप ! धाम तत् पुनः
प्रसीद सन्धेहि बधाय विद्विषाम् ।

मणिमयपादपीठस्थायिनौ [ यौ ] चरणौ [ राजशिरःस्रजां ] नमद्भूपालमौलिस्रजां [ रजः ] परागः [अरञ्जयत् तौ ते चरणौ मृगद्विजालूनशिखेषु ] मृगैर्द्विजैश्च तपस्विभिः आलूनशिखेषु छिन्नाग्रेषु [ बर्हिषां ] कुशानाम् । "बर्हिः कुशहुताशयोः" इति विश्वः । [ वनेषु निषीदतः ] तिष्ठतः ॥ ४० ॥

ननु सर्वप्राणिसाधारणामापदि का परिदेवना इत्यत्राह, द्विषदिति ।—[ यत् ] यतः कारणात् [ इयं दशा ] अवस्था, "दशा वर्त्तावस्थायाम्" इति विश्वः । द्विषन्तो निमित्तं यस्याः सा [ द्विषन्निमित्ता ] "द्विषोऽमित्रे" ( ३।२।१३१ पा० ) इति शतृ-प्रत्ययः । [ततः मे मनः समूलं ] निःशेषम् [ उन्मूलयति इव] उत्पाटयति इव । दैविकी तु आपत् न दुःखायेत्याह, परैरिति ।—[ परैः ] शत्रुभिः [ अपर्य्यासितवीर्य्यसम्पदाम् ] अपर्य्यासिता अपर्य्यावर्त्तिता वीर्य्यसम्पद् येषां तेषां [मानिनां पराभवः ] विपद् [ अपि उत्सव एव] इति । वैधर्म्येण अर्थान्तर-न्यासः । मानहानिर्दुःसहा, न तु आपत् इति भावः ॥ ४१ ॥

विहायेति ।—हे [ नृप ! शान्तिं ] शमं [ विहाय तत् ] प्रसिद्धं [ धाम ] तेजो [विद्विषां बधाय पुनः सन्धेहि] अङ्गीकुरु,

व्रजन्ति शत्रूनवधूय निःस्पृहाः
शमेन सिद्धिं मुनयो न भूभृतः॥ ४२॥
पुरःसरा धामवतां यशोधनाः
सुदुःसहं प्राप्य निकारमीदृशम्।
भवादृशाश्चेदधिकुर्वते रतिं
निराश्रया हन्त! हता मनस्विता॥ ४३॥

प्रमोदे] प्रार्थनायां लोट्। ननु शमेन कार्य्यसिद्धौ किं क्रोधेन इत्यत आह, व्रजन्तीति।—[ निःस्पृहाः मुनयः शत्रून् ] कामादीन् [ अवधूय ] निर्जित्य [ शमेन ] क्रोधवर्ज्जनेन [सिद्धिं] मोक्षाख्यां [ व्रजन्ति। भूभृतः ] तु [ न ]। कैवल्यकार्य्यवत् राजकार्य्यं न शान्तिसाध्यमित्यर्थः॥ ४२॥

पुर इति।—किं च [धामवतां] तेजस्विनाम्। परनिकारासहिष्णूनामित्यर्थः। पुरः सरन्तीति [ पुरःसराः ] अग्रेसराः। "पुरोऽग्रतोऽग्रेषु सर्त्तेः" ( ३।२।१८पा० ) इति ट-प्रत्ययः। [ यशोधनाः भवादृशाः सुदुःसहम् ] अतिदुःसहम् [ ईदृशम् ] उक्तप्रकारं [ निकारं ] पराभवं [ प्राप्य रतिं ] सन्तोषं [ अधिकुर्वते] स्वीकुर्वते चेत्? तर्हि [हन्त! ] इति खेदे। [मनस्विता] अभिमानिता [ निराश्रया ] सती [हता]। तेजस्विजनैकशरणत्वात् मनस्वितायाः इत्यर्थः। अतः पराक्रमितव्यमिति भावः। यद्यपि अत्र प्रसहनस्य असङ्गतेः अधिपूर्व्वात् करोतेः "अधेः प्रसहने" ( १।३।३३पा० ) इत्यात्मनेपदं न भवति ( "प्रसहनं परिभवः" इति काशिका ) तथापि अस्याः कर्त्त्रभिप्रायविवक्षायामेव प्रयोजकत्वात् कर्त्त्रभिप्राये "स्वरितञितः" ( १।३।७२पा० ) इति आत्मनेपदं प्रसिद्धम्॥ ४३॥

अथ क्षमामेव निरस्तविक्रमः
चिराय पर्य्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं
जटाधरः सन् जुहुधीह पावकम् ॥ ४४ ॥

न समयपरिरक्षणं क्षमं ते
निकृतिपरेषु परेषु भूरिधाम्नः ।
अरिषु हि विजयार्थिनः क्षितीशाः
विदधति सोपधि सन्धिदूषणानि ॥ ४५ ॥

---

अथेति ।—[ अथ ] पश्चान्तरे [ निरस्तविक्रमः ] सन् [ चिराय] चिरकालेनापि [क्षमां] क्षान्तिमेव । "क्षितिक्षान्त्योः क्षमा" इत्यमरः । [ सुखस्य साधनं पर्य्येषि ] अवगच्छसि नहि [ लक्ष्मीपतिलक्ष्म ] राजचिह्नं [ कार्मुकं विहाय ] । धरतीति धरः । पचाद्यच् । जटानां धरो [ जटाधरः सन् इह ] वने [ पावकं जुहुधि ] पावके होमं कुरु इत्यर्थः । अधिकरणे कर्मत्वोपचारः । विरक्तस्य किं धनुषा ? इत्यर्थः । "हुझल्भ्यो हेर्धिः" ( ६।४।१०१पा० ) ॥ ४४ ॥

अथ समयाल्लङ्घनाद्बिभेषि तदपि न किञ्चित् इत्याह, नेति ।—[ परेषु ] शत्रुषु [ निकृतिपरेषु ] निकृतिः शाठ्यं परं प्रधानं येषु तेषु तथोक्तेषु अपकारतत्परेषु सत्सु [ भूरिधाम्नः ] महौजसः प्रतीकारक्षमस्य [ते] तव [समयपरिरक्षणं] समयः "त्रयोदशसंवत्सरान् वने वत्स्यामि" इत्येवंरूपा संवित् । "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः । तस्य परिरक्षणं प्रतीक्षणं [न क्षमं ] न युक्तम् । "युक्ते, क्षमं शक्ते हिते त्रिषु" इत्यमरः । [ हि ] यस्मात् [ विजयार्थिनः ] विजिगीषवः

विधिसमयनियोगाद् दीप्तिसंहारजिह्मं
शिथिलवसुमगाधे मग्नमापत्पयोधौ ।
रिपुतिमिरमुदस्योदीयमानं दिनादौ
दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥४६॥

*इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये प्रथमः सर्गः ॥१॥

---

जिगीषाः अरिषु ] विषये [ सोपधि ] सकपटं यथा तथा । "कपटोऽस्त्री व्याजदम्भोपधयः छद्मकैतवे" इत्यमरः । [ सन्धिदूषणानि विदधति]। केनचित् व्याजेन दोषमापाद्य सन्धिं दूषयन्ति, विघट्टयन्ति इत्यर्थः । शक्तस्य हि विजिगीषोः सर्वथा कार्य्यसाधनं प्रधानम्, अन्यत् समयरक्षणादिकम् अशक्तस्य इति भावः । अर्थान्तरन्यासोऽलङ्कारः । पुष्पिताग्रा वृत्तम् ॥ ४५ ॥

उक्तमर्थमाशीर्वादपूर्वकमुपसंहरति, विधीति ।— [ विधिसमयनियोगात्] विधिर्दैवम् । "विधिर्विधाने दैवे च" इत्यमरः । समयः कालः तयोः नियोगात् नियमनाद्धेतोः, तयोर्दुरतिक्रमत्वादिति भावः । [अगाधे] दुस्तरे । आपत् पयोधिरिवेत्युपमितसमासः, दिनकृतमिवेति वक्ष्यमाणानुसारात् । तस्मिन् [ आपत्पयोधौ मग्नम् ]। सूर्य्योऽपि सायं सागरे मज्जति परेद्युरुन्मज्जति इत्यागमः । [ दीप्तिसंहारजिह्मं ] दीप्तिः प्रताप आतपश्च तस्याः संहारेण जिह्मम् अप्रसन्नं, [शिथिलवसुं] शिथिलधनम्, अन्यत्र—शिथिलरश्मिम् । "वसुर्देवेऽग्नौ रश्मौ च वसु तोये धने मणौ" इति वैजयन्ती। ("शिथिलबलम्" इति पाठे तु—उभयत्रापि शिथिलशक्तिकमित्यर्थः ।) रिपुस्तिमिरमिव इति [रिपुतिमिरम् ] [ उदस्य ] निरस्य [उदीयमानम्] उद्यन्तम् । "ईङ् गतौ" इति धातोर्दैवादिकात् कर्त्तरि शानच् । [त्वां दिनादौ दिनकृतमिव लक्ष्मीः भूयः समभ्येतु] भजतु । "आशिषि

लिङ्लोटौ" ( ३।३।१७३ पा० ) इति लोट् । चमत्कारकारितया मङ्गलाचरणरूपतया च सर्गान्त्यश्लोके लक्ष्मीशब्दप्रयोगः । यथाह भगवान् भाष्यकारः ।—"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि आयुष्मत्पुरुषकाणि च भवन्ति, अध्येतारश्च प्रवक्तारो भवन्ति" इति । पूर्णोपमेयम् मालिनी वृत्तम् । सर्गान्तत्वाद् वृत्तभेदः । यथाह दण्डी ।—"सर्गैरनतिविस्तीर्णैः अव्यवृत्तैः सुसन्धिभिः । सर्वत्र भिन्नवृत्तान्तैः उपेतं लोकरञ्जकम् ॥" इति ॥ ४६ ॥

* अथ कविः काव्यवर्णनीयाख्यानपूर्वकं सर्गपरिसमाप्तिं कथयति, इतीत्यादि ।—इतिशब्दः सर्गसमाप्तौ । भारविकृतौ इति कविनामकथनम् । महाकाव्ये इति महच्छब्देन लक्षणसम्पत्तिः सूचिता । किरातार्जुनीय इति काव्यवर्णनीययोः कथनम् । प्रथमः सर्गः, समाप्त इति शेषः । एवमुत्तरत्रापि द्रष्टव्यम् । किरातार्जुनौ अधिकृत्य कृतोऽयं ग्रन्थः किरातार्जुनीयम् । "शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः" । ( ४।३।८८ पा० ) इति द्वन्द्वाच्छ-प्रत्ययः. राघवपाण्डवीयशब्दवत् । तथाहि ।—अर्जुन एव अत्र नायकः । किरातस्तु तदुत्कर्षाय प्रतिभटतया वर्णितः । यथाह दण्डी ।—"वंशवीर्य्यश्रुतादीनि वर्णयित्वा रिपोरपि । तज्जयान्नायकोत्कर्षवर्णनञ्च धिनोति नः ॥" इति । अथ अयं संग्रहश्लोकः ।—

"नेता मध्यमपाण्डवो भगवतो नारायणस्यांशजः
तस्योत्कर्षकृतेऽनुवर्ण्यचरितो दिव्यः किरातः पुनः ।
शृङ्गारादिरसोऽङ्गमत्र विजयी वीरः प्रधानो रसः
शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलम् ॥"

इति ।

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां प्रथमः सर्गः ॥ १ ॥

---

## द्वितीयः सर्गः ।

---

विहितां प्रियया मनःप्रियाम्
अथ निश्चित्य गिरं गरीयसीम् ।
उपपत्तिमदूर्जिताश्रयं
नृपमूचे वचनं वृकोदरः ॥ १ ॥

विहितामिति ।—[ अथ वृकोदरः ] भीमः [ प्रियया ] द्रौपद्या । प्रियाग्रहणम् अस्या हितोपदेशतात्पर्य्यसूचनार्थम् । [ विहिताम् ] अभिहिताम् इत्यर्थः । विपूर्वस्य दधातेः क्रियासामान्यवाचिनो * योग्यविशेषपर्य्यवसानात् । [ मनःप्रियाम् ] अभिमतार्थयोगात् मनोहरां, विशेषणद्वयेन अपि गिरां ग्राह्यत्वम् उक्तम् । [ गिरं गरीयसीं ] सारवत्तरां [ निश्चित्य नृपं ] धर्मराजम् [ उपपत्तिमत् ] युक्तियुक्तम् [ऊर्जिताश्रयम्] उदारार्थं [वचनम् ऊचे] उक्तवान् । कर्त्तरि लिट् । ब्रुवो वचिरादेशः । "ब्रुविशासि" इत्यादिना द्विकर्मकत्वम् । "अकथितञ्च" (१।४।५१ पा०) इति नृपस्य कर्मत्वम् ॥ १ ॥ †

* "विपूर्व्वो धाः करोत्यर्थे अभिपूर्व्वस्तु भाषणे" इत्युक्तेः "क्रिया सर्व्वे धात्वर्थाः, करोत्यर्थो वा" इति जुमरोक्तेश्च विदधातेः करोत्यर्थकत्वात् सामान्यक्रियावाचकत्वम् ।

† अस्मिन् सर्गे सुन्दरी वा वियोगिनी नाम छन्दः । "अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा" "सभरा लोऽथ गुरुर्वियोगिनी" इति च लक्षणात् ।

यदवोचत वीक्ष्य मानिनी
परितः स्नेहमयेन चक्षुषा ।
अपि वागधिपस्य दुर्वचं
वचनं तद् विदधीत विस्मयम् ॥ २ ॥

विषमोऽपि विगाह्यते नयः
कृततीर्थः पयसामिवाशयः ।

किं तद्वचनं तदाह, यदिति ।—[मानिनी] क्षत्रियकुलाभिमानवती द्रौपदी [स्नेहमयेन] स्नेहप्रचुरेण । "तत्प्रकृतवचने मयट् ।" (५।४।२१ पा०) । [चक्षुषा] ज्ञानचक्षुषा । एतेन आप्तत्वम् उक्तम् । [परितः वीक्ष्य] समन्ताद् विविच्य [यत्] वचनम् [अवोचत] । ब्रुवो वक्तेर्वा लुङ् । "वच उम्" (७।४।२० पा०) इति उमागमः । [वागधिपस्य] बृहस्पतेः [अपि दुर्वचं] वक्तुम् अशक्यम् । शेषे षष्ठी इयं, न कृद्योगलक्षणा । अतो "न लोक" (२।३।६९ पा०) इत्यादिना षष्ठीप्रतिषेधो नास्ति । [तत् वचनं विस्मयं विदधीत] सर्वस्य आप्नोति शेषः । अथवा वागधिपस्य अपि विस्मयं विदधीत इति सम्बन्धः । दुर्वचं न केनापि वक्तुं शक्यम् इति शेषः । यतः स्त्रैणमपि शास्त्रम् अनुरुणद्धि हितं च अनुबध्नाति । अतो विस्मयकरं ग्राह्यं च एतद्वचनम् इति तात्पर्य्यार्थः ॥ २ ॥

विस्मयकरत्वे हेतुमाह, विषम इति । [विषमोऽपि] दुर्बोधोऽपि । अन्यत्र—दुष्प्रवेशोऽपि । [नयः] नीतिशास्त्रं [पयसाम् आशयः] ह्रद [इव] । [कृततीर्थः] कृताभ्यामाद्युपायः सन् । "तीर्थं शास्त्रेऽध्वरे क्षेत्रोपायोपाध्यायमन्त्रिषु । योनौ जला-

स तु तत्र विशेषदुर्लभः
सदुपन्यस्यति कृत्यवर्त्म यः ॥ ३ ॥
परिणामसुखे गरीयसि
व्यथकेऽस्मिन् वचसि क्षतौजसाम् ।
अतिवीर्य्यवतीव भेषजे
बहुरल्पीयसि दृश्यते गुणः ॥ ४ ॥

वतारेषु मन्त्राद्यष्टादशस्वपि" इति विश्वः । अन्यत्र—कृतजलावतारः सन् । "तीर्थं योनौ जलावतारे च" इति हलायुधः । [विगाह्यते] गाह्यते प्रविश्यते च । [तु] किन्तु [तत्र] नये जलाशये च [ सः ] तादृशः पुरुषो [ विशेषदुर्लभः] अत्यन्तदुर्लभः[ यः ] [कृत्यवर्त्म ] कृत्यं सन्धिविग्रहादिकार्य्यं स्नानादिकं च तस्य वर्त्म [सत्] साधु देशकालाद्यविरुद्धं यथा तथा । अन्यत्र—गर्त्तग्राहपाषाणादिरहितं यथा तथा [ उपन्यस्यति ] उदाहरति । "उपन्यासस्तु वाङ्मुखम् । उपोद्घात उदाहारः" इत्यमरः । यथा केनचित् कृततीर्थे पयसि गम्भीरेऽपि प्रवेष्टारः सन्ति, तीर्थकरस्तु विरलः, तद्वत् नीतौ अपि निगूढ़मपि तत्त्वं वक्तरि सति बोद्धारः सन्ति, वक्ता तु न सुलभः, अत इयं च साधु वक्तीति युज्यते विस्मय इति तात्पर्य्यार्थः ॥ ३ ॥

अथ ग्राह्यत्वे हेतुमाह, परिणामेति ।—[ परिणामसुखे ] परिणामः फलकालः परिपाकावस्था च, तत्र सुखे हिते । "शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च" इत्यमरः । इति सुखशब्दस्य विशेष्यलिङ्गत्वम् । [ गरीयसि ] गुर्वर्थप्रतिपादके भूयिष्ठे श्रेष्ठे च [ क्षतौजसाम् ] उभयत्र अपि क्षीणशक्तीनां

इयमिष्टगुणाय रोचतां
रुचिरार्था भवतेऽपि भारती।
ननु वक्तृविशेषनिःस्पृहाः
गुणगृह्या वचने विपश्चितः ॥ ५ ॥

---

[व्यर्थके] शुद्धापोद्बलकत्वाद् भयङ्करे। अन्यत्र—आदौ संशय-सन्तापादिदुःखजनके [अल्पीयसि] अल्पाचरे अल्पमात्रे च। उक्तञ्च—"स्वल्पा च मात्रा बहुलो गुणश्च" इति। [अस्मिन् वचसि] द्रौपदीवाक्ये [अतिवीर्य्यवति] अत्यन्तसामर्थ्यवति [भेषजे] औषधे [इव]। "भेषजौषधभैषज्यम्" इत्यमरः। [बहुः] अनेकः [गुणः] मानत्राणराज्यलाभादिः आरोग्यबल-पोषादिश्च [दृश्यते]। अतो ग्राह्यमस्या वचनमिति भावः * ॥४॥

सत्यमेवं तथापि मह्यं न रोचते, किं करोमि? इति अत्राह, इयमिति।—[रुचिरार्था] महितार्थसम्पन्ना इति रुचि-हेतूक्तिः। [इयं भारती] द्रौपदीवाक्यम् [इष्टगुणाय] अभिमत-गुणाय गुणग्राहिणे इत्यर्थः [भवते] तुभ्यम् [अपि]। "रुच्यर्थानां प्रीयमाणः" (१।४।३३पा०) इति सम्प्रदानत्वात् चतुर्थी। [रोचतां] स्वदताम्। विध्यर्थे लोट्। हितवचने बलादपि इच्छां कुर्य्यात् औषधवत् इति भावः। तथापि स्त्रैणे वचसि का श्रद्धा? तत्राह, ननु इति।—गुणानां गृह्याः [गुणगृह्याः] गुण-पक्षपातिन इत्यर्थः। "पदास्वैरिवाह्यापक्ष्येषु च" (३।१।११९ पा०)इति ग्रहेः क्यप्। [विपश्चितः] विद्वांसः। "विद्वान् विपश्चिद् दोषज्ञः" इत्यमरः। [वचने] विषये [वक्तृविशेषनिःस्पृहाः]

---

* अत्र वाग्वैचित्र्यक्रमोद्भासितं सम्मानसुनयोपपत्तिमत् द्रौपदीवचः तस्यानुमोदनं प्रस्तुतं गम्यम् इति पर्य्यायोक्तालङ्कृतिः सा चोपमाङ्गसङ्करा बोद्धव्या।

चतसृष्वपि ते विवेकिनी
नृप ! विद्यासु निरूढ़िमागता ।
कथमेत्य मतिर्विपर्य्ययं
करिणी पङ्कमिवावसीदति ? ॥ ६ ॥
विधुरं किमतः परं ? परैः
अवगीतां गमिते दशामिमाम् ।

---

वक्तृविशेषे स्त्रीपुंसादिलक्षणे निःस्पृहाः [ ननु ] निरास्थाः खलु । "बालादपि सुभाषितं ग्राह्यम्" इति न्यायादिति भावः ॥ ५ ॥

सम्प्रति स्वयम् उपालभते, चतसृष्विति ।—हे [ नृप ! चतसृषु अपि विद्यासु] आन्वीक्षिक्यादिषु । "आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती । विद्या ह्येताश्चतस्रस्तु लोकसंस्थितिहेतवः ॥" इति कामन्दकः । [ निरूढ़िमागता ] प्रसिद्धिं गता, अत एव [विवेकिनी ] सदसद्विवेकवती । यथाह मनुः ।—"आन्वीक्षिक्यां तु विज्ञानं धर्माधर्मौ त्रयीस्थितौ । अर्थानर्थौ च वार्त्तायां दण्डनीत्यां नयानयौ" ॥ इति । [ते मतिः कथं करिणी पङ्कमिव विपर्य्ययं ] वैपरीत्यम् अविवेकरूपम् [ एत्य अवसीदति ] नश्यति ? तत् न युक्तमिति भावः ॥ ६ ॥

किं नः छिन्नम् इदानीं येन इत्थम् उपालभ्येमहीत्यत्राह, विधुरमिति ।—[ त्वयि परैः ] शत्रुभिः [ इमाम् ] ईदृशीम् [ अवगीतां ] गर्हिताम् । "अवगीतञ्च निर्वादे मुहुर्दृष्टे च गर्हिते" इति विश्वः । [ दशां गमिते ] प्रापिते सति । [ सुरैरपि सम्भावितवृत्ति ] बहुकृतप्रसारम् । अथवा निश्चितसद्भावम्

अवसीदति यत् सुरैरपि
त्वयि सम्भावितवृत्ति पौरुषम् ॥ ७ ॥
द्विषतामुदयः सुमेधसा
गुरुरस्वन्ततरः सुमर्षणः ।
न महानपि भूतिमिच्छता
फलसम्पत्प्रवणः परिक्षयः ॥ ८ ॥

[ पौरुषं ] पुरुषकारः । युवादित्वादण्-प्रत्ययः । [अवसीदति ] नश्यति इति यत् [ अतः परम् ] अतोऽन्यत् अधिकं [ किं विधुरं ?] किं कष्टम् ? न किञ्चिदित्यर्थः । "विधुरं प्रत्यवाये स्यात् कष्टविश्लेषयोरपि" इति वैजयन्ती । अस्तीति शेषः । "अस्तिर्भवन्तीपरः, प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति" इति भाष्य-कारः । भवन्तीति लटः पूर्वाचार्य्याणां संज्ञा । यद्वा पुरुषाधि-कारस्य दुर्दशा सा च शत्रुकृता, तदुपरि महत् कष्टं तच्च त्वदुपे-क्षया इति उपालभ्यसे इत्यर्थः ॥ ७ ॥

अथ उपेक्षाकालत्वात् इयम् उपेक्षा इत्याशङ्क्य न अयम् उपेक्षाकाल इति वक्तुं तदेव तावत् श्लोकद्वयेन विविनक्ति द्विषतामिति ।—[ भूतिम् ] उदयम् [इच्छता ] । शोभना मेधा यस्य तेन [ सुमेधसा ] सुधिया "नित्यमसिच् प्रजामेधयोः" (५।४।१२२पा० ) इति असिच्-प्रत्ययः । [ गुरुः ] महान् अपि [ अस्वन्ततरः ] अत्यन्तदुरन्तः, क्षयोन्मुख इत्यर्थः । [ द्विषताम् उदयः ] वृद्धिः [ सुखेन मृष्यत इति [सुमर्षणः ] सुसहः, उपेक्ष्य इत्यर्थः । स्वन्तश्चेत् दुर्मर्षण इति भावः । "भाषायां शासि" (वा०)

अचिरेण परस्य भूयसीं
विपरीतां विगणय्य चात्मनः।
क्षययुक्तिमुपेक्षते कृती
कुरुते तत् प्रतिकारमन्यथा॥ ९॥

इत्यादिना खलर्थे युच् प्रत्ययः। [महानपि फल-सम्पत्प्रवणः] फलसिद्धग्रन्मुखः। "प्रनिरन्तर" (८।४।५ पा०) इत्यादिना णत्वम्। [परिक्षयो न] सुमर्षणः न उपेक्ष्य इत्यर्थः। अन्यथा तु उपेक्ष्य इति भावः। न हि उदय एव प्रतीकार्य्यः न च क्षय एव उपेक्ष्यः, किन्तु स्वन्तत्वास्वन्तत्वाभ्याम् उभौ अपि प्रतीकार्य्यौ उपेक्ष्यौ च भवत इत्यर्थः॥ ८॥

अथ उभयोरपि मध्ये एकतरस्य उदयक्षययोः गतिमुक्त्वा इदानीं युगपत्परिक्षयागमे गतिमाह, अचिरेणेति।—कृतम् अनेन इति [कृती] कुशल इत्यर्थः। "इष्टादिभ्यश्च" (५।२।८८ पा०) इति इनि-प्रत्ययः। [परस्य] शत्रोः [क्षययुक्तिं] क्षययोगम् [अचिरेण] आशुभाविनीं [भूयसीं] दुरन्तां च तथा [आत्मनः क्षययुक्तिं विपरीतां] चिरभाविनीम् अल्पीयसीं [च विगणय्य] विचार्य्य। "ल्यपि लघुपूर्वात्" (६।४।५६ पा०) इत्ययादेशः। [उपेक्षते। अन्यथा] उक्तवैपरीत्ये—परस्य क्षययुक्तौ अल्पीयस्यां स्वस्य भूयस्याञ्च सत्याम् इत्यर्थः। [तत्प्रतिकारं] तस्याः क्षययुक्तेः प्रतिकारम् [अचिरेण] आशु [कुरुते]। एवं सति यदा शत्रोः अभ्युदयः स्वस्य च अतिपरिक्षयो यथा अस्माकं तदा किं वक्तव्यम्? सद्यः प्रतिकुरुते इत्यर्थात् सिद्धम् अनुसन्धेयम्॥ ९॥

अनुपालयतामुदेष्यतीं
प्रभुशक्तिं द्विषतामनीहया ।
अपयान्त्यचिरात् महीभुजां
जननिर्वादभयादिव श्रियः ॥ १० ॥
क्षययुक्तमपि स्वभावजं
दधतं धाम शिवं समृद्धये ।

तथापि उपेक्षायाम् अनिष्टम् आचष्टे, अनुपालयतामिति ।—[ उदेष्यतीं ] वर्द्धिष्यमाणाम् । "आच्छीनद्योर्नुम्" ( ७।१।८० पा० ) इति विकल्पान्नुमभावः । [द्विषतां प्रभुशक्तिं ] कोषदण्डजं तेजः । "स प्रभावः प्रतापश्च यत् तेजः कोषदण्डजम्" इत्यमरः । [अनीहया] अनुत्साहेन [अनुपालयताम्] उपेक्षमाणानां [ महीभुजां श्रियः ] सम्पदः [जननिर्वादभयात्] निकृष्टपुरुषानुरागोत्थलोकापवादभयात् [इव] इति हेतूत्प्रेक्षा । [ अचिरात् अपयान्ति ] अपसरन्ति । यथाह कामन्दकः ।— "स्त्रीभिः षण्ढ इव श्रीभिरलसः परिभूयते" इति । अतः पराक्रमितव्यमिति भावः ॥ १० ॥

ननु परिक्षीणः कथं प्रबलेन अभियुज्यते ? इत्यत्राह, क्षयेति ।—[ क्षययुक्तमपि ] तथा क्षीणमपि सन्तं [ स्वभावजं ] सहजं [ शिवं ] सर्वलोकाह्लादकं [धाम ] क्षात्रं तेजः प्रकाशञ्च [ दधतं समृद्धये] वृद्ध्यर्थम् [ उत्थितम्] उद्युक्तं वर्द्धिष्णुम् उत्सहमानम् इति यावत् । अन्यत्र—उत्थितम् उदितम् अत एव [ अनपायम् ] अविनाशिनं वर्द्धिष्यमाणम् इत्यर्थः । [ नृपं

प्रणमन्त्यनपायमुत्थितं
प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥ ११ ॥
प्रभवः खलु कोषदण्डयोः
कृतपञ्चाङ्गविनिर्णयो नयः ।

---

प्रजाः प्रतिपच्चन्द्रमिव] द्वितीयाचन्द्रम् इवेत्यर्थः । प्रतिपच्छब्देन द्वितीयाग्रहणं, प्रतिपदि तस्य अदृश्यत्वादिति भावः । [ प्रणमन्ति ] प्रह्वीभावेन वर्त्तन्ते इति भावः । चन्द्रं तु नमस्कुर्वन्ति । क्षीणस्य अपि उत्साहः कार्य्यसिद्धेः निदानमित्यर्थः । "श्रियं हि सततोत्साही दुर्बलोऽपि समश्नुते" इति कामन्दकः ॥ ११ ॥

ननु प्रभुशक्तिशून्यस्य उत्साहः कुत्र उपयुज्यते ? इत्यत्र आह, प्रभव इति ।—[कृतपञ्चाङ्गविनिर्णयः ] कर्म्मणाम् आरम्भोपायः पुरुषद्रव्यसम्पत् देशकालविभागः विनिपातप्रतीकारः कार्य्यसिद्धिश्च इति पञ्चाङ्गानि । यथाह कामन्दकः—"सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते" इति पञ्चानाम् अङ्गानां विनिर्णयः । "तद्धितार्थ" ( २।१।५१ पा० ) इत्यादिना उत्तरपदसमासः । कृतः पञ्चाङ्गविनिर्णयो यस्य येन वा स तथोक्तः [ नयः ] नीतिः मन्त्र इति यावत् । कोषोऽर्थराशिः । "कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः" इत्यमरः । दण्डश्चतुरङ्गसैन्यम् । "दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे यमे । यात्रायां सैन्यभेदे" इति वैजयन्ती । तयोः [ कोषदण्डयोः] प्रभुशक्तेरित्यर्थः । प्रभवति अस्मादिति [ प्रभवः ] कारणम् [ खलु ] । "ऋदोरप्" ( ३।३।५७ पा० ) । [सः] नयः नीति-

स विधेयपदेषु दक्षतां
नियतिं लोक इवानुरुध्यते ॥ १२ ॥
अभिमानवतो मनस्विनः
प्रियमुच्चैः पदमारुरुक्षतः ।
विनिपातनिवर्त्तनक्षमं
मतमालम्बनमात्मपौरुषम् ॥ १३ ॥

---

शास्त्रं [ विधेयपदेषु ] कार्यवस्तुषु । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । [ दक्षतां ] क्षिप्रकारित्वम् उत्साहमित्यर्थः । [ लोकः ] कृष्यादिप्रवृत्तो जनः [ नियतिं ] दैवम् [ इव ] "नियतिः नियमे दैवे" इति विश्वः । [ अनुरुध्यते ] अनुसरति । रुधेर्दैवादिकात् कर्त्तरि लट् । मन्त्रस्य अपि मूलम् उत्साहः, तन्मूलाया: प्रभुशक्तेः मूलमिति किमु वक्तव्यम् ? अतः स एव आश्रयणीयः, यतो नक्तन्दिवं मन्त्रयतः तस्यापि प्रभोः निरुत्साहस्य न किञ्चित् सिध्यति इति ॥ १२ ॥

ननु सोत्साहस्य असहायस्य कथम् अर्थसिद्धिः ? इत्यत्राह, अभिमानवत इति ।—[ अभिमानवतः ] मानधनस्य [प्रियम्] इष्टम् [उच्चैः ] उन्नतं [ पदं ] स्थानं राज्यादिकम् [आरुरुक्षतः ] आरोढुमिच्छतः प्राप्तुकामस्य [ मनस्विनः ] धीरस्य [ आत्मपौरुषं ] स्वपुरुषकारः एव [ विनिपातनिवर्त्तनक्षमं ] अनर्थप्रतीकारसमर्थम् [ आलम्बनं ] सहकारि [ मतम् ] इष्टम् । यथा कस्यचित् तुरङ्गमारोहतः किञ्चित् पतनप्रतिबन्धकानुचरहस्तादिकमालम्बनं तद्वदिति ध्वनिः । किं पौरुषादन्यैः सहायैः शूराणाम् ? इति भावः ॥ १३ ॥

विपदोऽभिभवन्त्यविक्रमं
रहयत्यापदुपेतमायतिः।
नियता लघुता निरायतेः
अगरीयान् न पदं नृपश्रियः॥ १४॥
तदलं प्रतिपक्षमुन्नतेः
अवलम्ब्य व्यवसायवन्ध्यताम्।

पौरुषानङ्गीकारे दोषमाह, विपद इति।—[अविक्रमं] पौरुषहीनं [विपदोऽभिभवन्ति] तिरस्कुर्वन्ति। [आपदुपेतं] विपन्नम [आयतिः] उत्तरकालः "उत्तरः काल आयतिः" इत्यमरः। [रहयति] त्यजति। [निरायतेः] आगमन्नाशस्य इत्यर्थः [लघुता] अगौरवं [नियता] अवश्यम्भाविनी, न कश्चिदेनमाद्रियते इत्यर्थः। [अगरीयान्] लघीयान् [नृपश्रियः] राजलक्ष्म्याः [पदम्] आस्पदं [न] भवति। यद्वा नृपेति पदच्छेदः। तस्मात् पौरुषं कर्त्तव्यमेव इत्यर्थः। अत्र पूर्वपूर्वस्याविक्रमत्वादेरुत्तरोत्तरविपदादिकं प्रति कारणत्वात् कारणमालाख्योऽलङ्कारः। तथा च सूत्रम्।—"पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे कारणमाला" इति॥ १४॥

फलितमाह, तदिति।—[तत्] तस्मात् उपेक्षायां दोषसम्भवात् इत्यर्थः। [उन्नतेः] अभ्युदयस्य [प्रतिपक्षम्] अन्तरायं [व्यवसायवन्ध्यताम्] उद्योगशून्यताम् [अवलम्ब्य अलम्] उद्योगशून्यतावलम्बनेन अलम् इत्यर्थः। "अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा" (३।४।१८ पा०) इति क्त्वा-प्रत्ययः।

निवसन्ति पराक्रमाश्रया

न विषादेन समं समृद्धयः ॥ १५ ॥

अथ चेदवधिः प्रतीच्यते

कथमाविष्कृतजिह्मवृत्तिना ।

धृतराष्ट्रसुतेन सुत्यजाः

चिरमास्वाद्य नरेन्द्रसम्पदः ? ॥ १६ ॥

---

तस्य ल्यबादेशः *। तथाहि ।—[ पराक्रमाश्रयाः ] पराक्रमः आश्रयः कारणं यासां ताः तथोक्ताः [ समृद्धयः ] सम्पदो [ विषादेन समम् ] अनुत्साहेन सह [ न निवसन्ति ]। पौरुषसाध्याः सम्पदो न अनुत्साहसाध्याः, उभयोः सहावस्थानविरोधादित्यर्थः। वैधर्म्येण कार्य्यकारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ १५ ॥

ननु समयः प्रतीच्यते, किं वेगेन ? इति अत आह, अथेति ।—[अथ अवधिः] कालः [प्रतीच्यते चेत्] "अवधिस्त्ववधाने स्यात् सीम्नि काले बिलेऽपि च" इति विश्वः। [आविष्कृतजिह्मवृत्तिना] प्रकटितकपटव्यवहारेण [धृतराष्ट्रसुतेन] दुर्य्योधनेन [ नरेन्द्रसम्पदः ] राज्यसम्पदः नरेन्द्रेति वा पदच्छेदः। [चिरं] चतुर्दश वर्षाणि [आस्वाद्य] अनुभूय [कथं सुत्यजाः ? ] ज्ञातास्वादेन तेन पश्चादपि सुखेन युद्धक्लेशं विना न त्यज्यन्ते एव इति अवधिप्रतीक्षणं व्यर्थमित्यर्थः ॥ १६ ॥

* समासेऽनञ्पूर्वे क्त्वो ल्यप् ( ७।१।३७ पा० )।

द्विषता विहितं त्वयाथवा
यदि लब्धा पुनरात्मनः पदम्।
जननाथ! तवानुजन्मनां
कृतमाविष्कृतपौरुषैर्भुजैः॥ १७॥

मदसिक्तमुखैर्मृगाधिपः
करिभिर्वर्त्तयते स्वयं हतैः।

अथ यदि दैवात् स्वयमेव दुर्य्योधनः सम्पदो दास्यति तथापि तत् कथं रोचयेमहि इत्याह, द्विषतेति।—[अथवा द्विषता] दुर्य्योधनेन [विहितं] समर्पितमित्यर्थः। [आत्मनः पदं] राज्यं [पुनः] अपि [त्वया लब्धा] लप्स्यते [यदि] लभेः कर्मणि लुट्। हे [जननाथ!] [तव अनुजन्मनाम्] अनुजानाम् [आविष्कृतपौरुषैः] प्रकटितपराक्रमैः [भुजैः कृतम्] अलं, व्यर्थमिति यावत्। अस्मद्भुजैर्न किञ्चित् साध्यमित्यर्थः। राज्यदानादानयोर्द्विषतामेव स्वातन्त्र्ये अस्मद्भुजनैष्फल्यात् "क्षत्रियस्य विजितव्यम्" इति शास्त्रात् क्षात्रेणैव राज्यं ग्राह्यमिति भावः। कृतमिति प्रतिषेधार्थमव्ययं चादिषु पठ्यते। "कृतमिति निवारणनिषेधयोः" इति गणव्याख्याने। भुजैरिति गम्यमानसाधनक्रियापेक्षया करणत्वात् तृतीया। उक्तञ्च न्यासोद्द्योते।—"न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्यापि तु गम्यमानापि" इति॥ १७॥

ननु साम्नैव कार्य्यसिद्धौ किं क्षात्रेण? यथाह मनुः।—"साम्ना दानेन भेदेन समस्तैरथवा पृथक्। विजेतुं प्रयतेतारीन् न युद्धेन कदाचन॥" इति। तत् किम् आग्रहेण? इति

लघयन् खलु तेजसा जगत्
न महानिच्छति भूतिमन्यतः ॥ १८ ॥
अभिमानधनस्य गत्वरैः
असुभिः स्थास्नु यशश्चिचीषतः ।

आशङ्क्याह, मदेति ।—[ मृगाधिपः ] सिंहः [ मदसिक्तमुखैः मदवर्षिभिरित्यर्थः । [ स्वयं ] स्वेनैव [ हतैः करिभिर्वर्त्तयते ] वृत्तिं करोति, तैरेव जीवतीत्यर्थः । चौरादिकाद् वृतेर्लट्. भौवादिकस्य तु "अणावकर्मकाच्चित्तवत्कर्त्तृकात्" (१।३।८८पा०) इति परस्मैपदनियमादिति । तथाहि - [ तेजसा ] प्रभावेण । "तेजो बले प्रभावे च ज्योतिष्यर्चिषि रेतसि" इति वैजयन्ती । [ जगत् लघयन् ] लघूकुर्वन् [ महान् ] तेजस्वी [ अन्यतः अन्यस्मात् पुरुषात् [ भूतिं ] वृद्धिं [ न इच्छति खलु ] । न हि तेजस्विनः परायत्तवृत्तित्वं युक्तम् । मनुवचनं तु अशूरविषयम् इति भावः । विशेषेण वच्यमाणसामान्यसमर्थनरूपोऽर्थान्तर-न्यासोऽलङ्कारः ॥ १८ ॥

ननु युद्धात् पाक्षिको लक्ष्मीलाभः, उपायान्तरैस्तु न तथा इत्याशङ्क्याह, अभिमानेति ।—[ अभिमानधनस्य ] वैरि-निर्य्यातनमात्रनिष्ठस्य अत एव [गत्वरैः] गमनशीलैः अस्थिरैः । "गत्वरश्च" (३।२।१६४पा०) इति क्वरबन्तो निपातः । [असुभिः] प्राणैः करणैः । "पुंसि भूम्न्यसवः प्राणाः" इत्यमरः । [ स्थास्नु ] स्थिरम् । "ग्लाजिस्थश्च ग्स्नुः" ( ३।२।१३९ पा० ) इति ग्स्नुप्रत्ययः । [ यशश्चिचीषतः ] चेतुं संग्रहीतुमिच्छतः चिनोतेः सन्नन्तात् शतृ-प्रत्ययः । [ अचिरांशुविलासचञ्चला ] अचिरम् अंशवो यस्याः सा अचिरांशुर्विद्युत् तस्या विलासः

अचिरांशुविलासचञ्चला
ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ १९ ॥
ज्वलितं न हिरण्यरेतसं
चयमास्कन्दति भस्मनां जनः ।
अभिभूतिभयादसूनतः
सुखमुज्झन्ति न धाम मानिनः ॥ २० ॥

स्फुरणं तद्वत् चञ्चला, क्षणिका इत्यर्थः । [लक्ष्मीः] सम्पत् अनुषङ्गादागतम् [आनुषङ्गिकम्] अन्वाचय*शिष्टमल्पं [फलं] मानत्राणजं यश एव मुख्यं फलम् अभ्युच्चयस्तु लक्ष्मीरिति मानिनामिदमेव श्लाघ्यमित्यर्थः । अत्र अस्थिरप्राणत्यागेन स्थिरयशःस्वीकाराभिधानात् न्यूनाधिकविनिमयाख्यः परिवृत्त्यलङ्कारः । उक्तञ्च काव्यप्रकाशे ।—"परिवृत्तिर्विनिमयो योऽर्थानां स्यात् समासमैः" इति ॥ १९ ॥

ननु अल्पस्य मानस्य हेतोः कथं प्राणत्यागः शक्यते कर्त्तुं ? यतः "जीवन् नरो भद्रशतानि पश्येत्" इत्याशङ्क्याह, ज्वलितमिति ।—[जनः भस्मनां चयं] पुञ्जम् [आस्कन्दति] पादादिना आक्रामति अदाहकत्वादिति भावः । [ज्वलितं] ज्वलन्तम् । कर्त्तरि क्तः । "मतिबुद्धि" (३।२।१८८ पा०) इत्यादिसूत्रे चकाराद्वर्त्तमानार्थत्वम् । हिरण्यं रेतो यस्य तं [हिरण्यरेतसम्] अग्निं [न आस्कन्दति] दाहकत्वादिति

* मुख्यासिद्धौ अप्रधानसिद्धिसम्भावना अन्वाचयः

किमपेक्ष्य फलं पयोधरान्
ध्वनतः प्रार्थयते मृगाधिपः ?
प्रकृतिः खलु सा महीयसः
सहते नान्यसमुन्नतिं यया ॥ २१ ॥
कुरु तन्मतिमेव विक्रमे
नृप ! निर्धूय तमः प्रमादजम् ।

भावः । [ अतः ] हेतोः [मानिनः अभिभूतिभयात् ] प्राणलाभेन तेजस्त्यागे परिभवो भविष्यतीति भयाद् [असून्] एव [ सुखम् ] अक्लिष्टम् [ उज्झन्ति ] त्यजन्ति, [ धाम ] तेजस्तु [ न ] उज्झन्ति । मानहानिकरात् जीवनात् स्वतेजसा मरणमेव वरम् इत्यर्थः । पूर्वतरश्लोकवत् अर्थान्तरन्यासोऽलङ्कारः ॥ २०॥

अथवा किमत्र प्रयोजनं चिन्तया ? किन्तु तेजस्विनामयं स्वभाव एव यज्जिगीषुत्वम् इत्याशयेनाह, किमिति ।—[ मृगाधिपः] सिंहः [ किं फलं ] प्रयोजनम् [अपेक्ष्य ध्वनतः] गर्जतः । धरन्तीति धराः, पचाद्यच् । पयसां धराः तान् [ पयोधरान् ] मेघान् [ प्रार्थयते ] अभियाति ? "याञ्चायामभियाने च प्रार्थना कथ्यते बुधैः" इति केशवः । अथवा प्रार्थयते अवरुणद्धि इत्यर्थः । प्रा अर्थयते । "प्रा स्याद् याञ्चावरोधयोः" इत्यभिधानात् प्रा अवरोधेन । प्रा इति तृतीयान्तम् । आकारान्तस्य प्रा-शब्दस्य योगविभागात् "आतो धातोः" ( ६।४।१४० पा० ) इत्यालोपः । तथाहि—[ महीयसः ] महत्तरस्य [ सा प्रकृतिः खलु ] स्वभावः [ यया ] प्रकृत्या [अन्यसमुन्नतिं] परवृद्धिं [न सहते] । महतः परभञ्जनमेव पुरुषार्थ इत्यर्थः । पूर्ववत् अलङ्कारः ॥ २१ ॥

ध्रुवमेतदवेहि विद्विषां
त्वदनुत्साहहता विपत्तयः ॥ २२ ॥
द्विरदानिव दिग्विभावितान्
चतुरस्तोयनिधीनिवायतः ।
प्रसहेत रणे तवानुजान्
द्विषतां कः शतमन्युतेजसः ? ॥ २३ ॥

---

उक्तं प्रयोजनं निगमयति, कुरु तदिति ।—हे [नृप ! तत्] तस्मात् उक्तरीत्या पराक्रमावसरत्वाद्धेतोः । "यत्तद्यतस्ततो हेतौ" इत्यमरः । [प्रमादजं तमः] मोहं [निर्धूय] निरस्य [विक्रमे] पौरुषे [एव मतिं कुरु,] विक्रममेव अङ्गीकुरु, न तु उपायान्तरमित्यर्थः । न च विक्रमवैफल्यशङ्का कार्य्या इत्याह, ध्रुवमिति ।—[विद्विषां विपत्तयः त्वदनुत्साहहताः] तव अनुत्साहेन अव्यवसायेन हताः प्रतिबद्धाः । अन्यथा प्रागेव विपद्येरन्निति भावः । इति [एतत् ध्रुवं] निश्चितम् [अवेहि] विद्धि । "ध्रुवं नित्ये निश्चिते च" इति शाश्वतः ॥ २२ ॥

न च नः पराजयशङ्का कार्य्येत्याह, द्विरदानिति ।—[दिग्विभावितान्] दिक्षु प्रसिद्धान् तान् [आयतः] आगच्छतः । आङ्पूर्वादिण्-धातोः शतृ-प्रत्ययः । चतुरः [द्विरदान्] दिग्गजान् [इव] तथात्वविशेषणान् चतुरः [तोयनिधीन् इव रणे] आयतः दिग्विभावितान् [शतमन्युतेजसः] इन्द्रविक्रमान् [चतुरः तव अनुजान् द्विषतां] मध्ये [कः प्रसहेत ?] सोढुं शक्नुयादित्यर्थः । "शकि लिङ् च" (३।३।१७२ पा०) इति शक्यार्थे लिङ् । अतो निःशङ्कं प्रवर्त्तस्वेति भावः ॥ २३ ॥

ज्वलतस्तव जातवेदसः
सततं वैरिकृतस्य चेतसि ।
विदधातु शमं शिवेतरा
रिपुनारीनयनाम्बुसन्ततिः ॥ २४ ॥

इति दर्शितविक्रियं सुतं
मरुतः कोपपरीतमानसम् ।
उपसान्त्वयितुं महीपतिः
द्विरदं दुष्टमिवोपचक्रमे ॥ २५ ॥

आशीर्वादव्याजेन फलितमाह, ज्वलत इति ।—[तव चेतसि सततं ज्वलतो वैरिकृतस्य जातवेदसः] क्रोधाग्नेः इत्यर्थः [शिवेतरा] अशिवा अमङ्गला, वैधव्यदुःखजनकत्वादिति भावः। [रिपुनारीनयनाम्बुसन्ततिः] वैरिवनिताश्रुप्रवाहः [शमं विदधातु]। वैरिकृतस्य क्रोधस्य वरिबधमन्तरेण शान्त्यसम्भवात् अवश्यं तद्वधस्त्वया कर्त्तव्य इत्यर्थः। क्रोधस्य विषयस्य निगरणेन विषयिणो जातवेदस एव उपनिबन्धनात् अतिशयोक्तिरलङ्कारः। तदुक्तम्—"विषयस्यानुपादानाद्विषय्युपनिबध्यते। यत्र सातिशयोक्तिः स्यात् कवेः प्रौढ़ोक्तिजीविता॥" इति। तत्रापि क्रोधस्य जातवेदसो भेदेऽपि अभेदाध्यवसायाद् भेदेऽभेदरूपा, तत एव अम्बुनिर्वाप्यत्वोक्तिश्च घटते। तथा च, यथा अम्बुसेकेन अग्निः सम्यक् शाम्यति तथा शत्रुवधेन क्रोध इति औपम्यं गम्यते ॥२४॥

इतीति।—[इति] उक्तरीत्या [दर्शितविक्रियं] दर्शिता विक्रिया विकारो वागारम्भात्मको येन तं [कोपपरीतमानसं] कोपाक्रान्तचित्तम्। इदं विशेषणद्वयं द्विरदेऽपि योज्यम्।

अपवर्जितविप्लवे शुचौ
हृदयग्राहिणि मङ्गलास्पदे ।
विमला तव विस्तरे गिरां
मतिरादर्श इवाभिदृश्यते ॥ २६ ॥

[ मरुतः सुतं ] भीमं [महीपतिः] युधिष्ठिरः [दुष्टं द्विरदमिव] । एतेन अस्य शौर्य्यमेव, न बुद्धिः अस्तीति गम्यते । [उपसान्त्वयितुम् ] अनुनेतुम् [उपचक्रमे] प्रवृत्तः । "प्रोपाभ्यां समर्थाभ्याम्" ( १।३।४२ पा० ) इति आत्मनेपदम् । राज्ञा तावत् भाव्युपकारविशेषापेक्षया कथञ्चित् अवशो जनः शनैः शनैः द्विरदवत् वशीकरणीयः, न तु त्याज्य इति भावः ॥ २५ ॥

प्रथमं तावत् स्तुत्यादिभिः प्रसादयति, अपवर्जितेति ।— विप्लवः प्रमाणबाधः । अन्यत्र—वाह्यमलसङ्गमः । सोऽपवर्जितो यस्य तस्मिन् [अपवर्जितविप्लवे । शुचौ] शुचित्वं, सौशब्द्यं लोकशुद्धिश्च तद्वति । अत एव [हृदयग्राहिणि] मनोरमे [मङ्गलास्पदे] एकत्र हितार्थप्रतिपादकत्वात् अन्यत्र मङ्गलवस्तुत्वात् च श्रेयस्करे । "रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम् । गुरून् अग्निं तथा सूर्य्यं प्रातः पश्येत् सदा बुधः ॥" इति पुराणवचनात् । [ तव गिरां विस्तरे] वाक्यप्रपञ्चे । "प्रथने वावशब्दे"(३।३।३३ पा०) इति घञ्प्रतिषेधात्, "ऋदोरप्" (३।३।५७ पा०) इत्यप् । अत एव "विस्तारो विग्रहो व्यासः स तु शब्दस्य विस्तरः" इत्यमरः । [ मतिः ] त्वद्बुद्धिः [आदर्शे] दर्पणे [ इव । ] "दर्पणे मुकुरादर्शौ" इत्यमरः । [ विमला ] विशदा [ अभिदृश्यते ] वाक्यश्रवणादेव प्रतिबिम्बवम् अनुमीयते । तत्पूर्वकत्वात् तस्येत्यर्थः ॥ २६ ॥

स्फुटता न पदैरपाकृता
न च न स्वीकृतमर्थगौरवम् ।
रचिता पृथगर्थता गिरां
न च सामर्थ्यमपोहितं क्वचित् ॥ २७ ॥

अथ युग्मेनाह, स्फुटतेति उपपत्तिरिति च ।—[ पदैः ] सुप्तिङन्तशब्दैः [ स्फुटता ] विशदार्थता [ न अपाकृता ] न त्यक्ता । [ अर्थगौरवम् ] अर्थभूयस्त्वं वा [ न च न स्वीकृतम् ?] स्वीकृतमेवेत्यर्थः । वैशद्यप्रसक्तार्थगौरवाभावनिवर्त्तनार्थं नञ्-द्वयम्, "सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ" इति वामनः । [गिरां] पदानाम् अवान्तरवाक्यानां च [पृथगर्थता] भिन्नार्थता, अपुनरुक्तार्थतेति यावत् [ रचिता ] कृता । तथा [क्वचित्] अपि [ सामर्थ्यं ] गिराम् अन्योन्यसाकाङ्क्षत्वं [न च अपोहितं ] न वर्जितम् । अन्यथा दशदाडिमादिशब्दवत् एकवाक्यता न स्यात् । यथाहुः—"अर्थैकत्वादेकवाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति । ननु अर्थगौरवमित्यत्र कथं षष्ठीसमासः ; "पूरणगुण" (२।२।११पा०) इत्यादिना प्रतिषेधात् ? नैष दोषः । ये शुक्लादयः शब्दा गुणे गुणिनि च वर्त्तन्ते ; यथा—"पटस्य शौक्ल्यं" "शुक्लः पटः" इति च, तेषाम् एव अत्र निषेधात्, ये पुनः स्वतो गुणमात्रवचनाः ;—यथा गौरवं प्राधान्यं रसो गन्धः स्पर्श इत्येवमादयः, तेषामनिषेधात् । तथा "तत्स्थैश्च गुणैः षष्ठी समस्यते" इति वचनाद्बहुलमभियुक्तप्रयोगदर्शनाच्च, बलाकायाः शौक्ल्यमित्यादौ तु भाष्यकारवचनादसमासः । अत एव आह वामनः,—"पत्रपीतिमादिषु गुणवचनसमासो बलो स्यात्" इति ॥ २७ ॥

उपपत्तिरुदाहृता बलात्
अनुमानेन न चागमः क्षतः।
इदमीदृगनीदृगाशयः
प्रसभं वक्तुमुपक्रमेत कः? ॥२८॥ [युग्मम्]
अविदृप्ततया तथापि मे
हृदयं निर्णयमेव धावति।

---

उपपत्तिरिति।—किञ्च [बलात्] स्वबलमाश्रित्य। कर्मणि ल्यब्लोपे पञ्चमी वक्तव्या *। [उपपत्तिः] युक्तिः [उदाहृता]। पराक्रमपक्ष एव श्रेयानिति युक्तिः उक्ता इत्यर्थः। उचितं चैतत् महावीरस्येति भावः। तथा [अनुमानेन] युक्त्या [आगमः] शास्त्रं [च न क्षतः] न हतः। किन्तु आगमाविरुद्धमेव उक्तम्. अन्यथा तद्विरोधात् अनुमानस्यैव प्रामाण्यभङ्गप्रसङ्गादिति भावः। [ईदृक्] इत्थं न्याययुक्तम् [इदं] वचनम् अविद्यमान ईदृगाशय इत्थं न्याययुक्ताभिप्रायो यस्य सः [अनीदृगाशयः]। "अभिप्रायश्छन्द आशयः" इत्यमरः। [कः प्रसभं] हठात् [वक्तुमुपक्रमेत?] न कोऽपीत्यर्थः। इत्थं वक्तुमुपक्रमितैव नास्ति. वक्ता तु दूरापास्त एवेति भावः। केचिदेतत् श्लोकत्रयं निन्दापरत्वेनापि योजयन्ति, तदसत्। हितोपदेशमात्रतत्परस्य अतिवत्सलस्य राज्ञो मत्सरिण इव महावीरे भ्रातरि विधेये सर्वानर्थमूलभूत-निन्दातात्पर्य्यकल्पनानौचित्यादिति ॥ २८ ॥

यदि साधूक्तं तर्हि तथैव क्रियतामित्याशङ्क्याह, अविदृप्त-

* ल्यब्लोपे कर्मण्यधिकरणे च (वा०)।

अवसाययितुं क्षमाः सुखं
न विधेयेषु विशेषसम्पदः ॥ २८ ॥
सहसा विदधीत न क्रियाम्
अविवेकः परमापदां पदम् ।

तथेति ।—[ तथापि ] त्वया सम्यङ्निर्णीतेऽपि [ मे हृदयम् अवितृप्ततया] असन्तुष्टतया । अद्यापि संशयगतत्वेन इत्यर्थः । [निर्णयमेव धावति] अनुसरति, अपेक्षते इति यावत् । अद्यापि निर्णयस्य अनुदयादिति भावः । निर्णयानुदये हेतुमाह, अवेति ।—[ विधेयेषु ] सन्धिविग्रहादिकर्त्तव्यार्थेषु याः [ विशेषसम्पदः ] अवान्तरभेदभूमानस्ताः [ सुखम् ] अक्लेशेन [ अवसाययितुं ] पुरुषान् प्रत्यायकत्वेन स्वस्वरूपं स्वयमेव शीघ्रं प्रत्याययितुमित्यर्थः । स्यतेर्ण्यन्तादणिकर्मकर्त्तृकात् तुमुन् । गत्यावितिसूत्रस्य अयं विषयः * । क्षमन्ते इति [ क्षमाः ] पचाद्यच् । शक्ताः [ न ] भवन्ति । "क्षमं शक्ते हिते त्रिषु" इत्यमरः । विधेयमात्रस्य सुगमत्वेऽपि तद्विशेषाणां सौक्ष्म्याद् बाहुल्याच्च दुर्ज्ञेयत्वात् अद्यापि निर्णयाकाङ्क्षेति तात्पर्य्यार्थः । अत्र निर्णयधावनं प्रत्युत्तरवाक्यार्थस्य हेतुत्वाभिधानाद् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । तदुक्तम् ।—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति ॥ २८ ॥

वस्तुविशेषावधारणमन्तरेणैव प्रवृत्तिरित्याशङ्क्याह, सहसेति ।—[ क्रियां ] क्रियते इति क्रिया कार्य्यं तां [सहसा] अविमृश्येत्यर्थः । "सहसेत्याकस्मिकाविमर्शयोः" इति गणव्याख्याने स्वरादिपाठादव्ययम् । [ न विदधीत ] न कुर्वीत ।

* गतिरणौ यत्कर्म णौ चेत्कर्त्ताऽनाध्याने ( १।४।५२ पा० )

वृणते हि विमृश्यकारिणं
गुणलुब्धाः स्वयमेव सम्पदः ॥ ३० ॥
अभिवर्षति योऽनुपालयन्
विधिवीजानि विवेकवारिणा ।

कुतः ?—[ अविवेकः ] अविमृश्यकारित्वं [ परम् ] अत्यन्तम् [ आपदां पदं ] स्थानम्। विपत्तिकारणमित्यर्थः। व्यतिरेकेण उक्तमर्थमन्वयेनाह, वृणते इति।—[ गुणलुब्धाः ] गुणगृध्नाः। गुणगृध्नव इति स्वयंवरणहेतूक्तिः। [ सम्पदः ] श्रियः [ विमृश्यकारिणं ] विमृश्य करोतीति विमृश्यकारी, "उपपद-मतिङ्" ( २।२।१८ पा० ) इति समासः। तं [ स्वयमेव वृणते ] भजन्ते [ हि ]। "वृङ् सम्भक्तौ" इति धातुः। तस्मात् विमृश्य एव प्रवर्त्तितव्यमित्यर्थः। अत्र सहसा विधाननिषेधलब्ध-विमृश्यकारित्वरूपकारणस्य आपद्रूपव्यतिरेककार्य्येण समर्थ-नात् वैधर्म्येण अर्थान्तरन्यासः। द्वितीयार्द्धेन च स एव साधर्म्येण इति ज्ञेयम् ॥ ३० ॥

ननु साहसिकस्यापि फलसिद्धिर्दृश्यत एव, तत् किं विवे-केन ? इति अत्र आह, अभीति।—[ यः ] पुमान् विधीयन्ते इति विधयः, कृत्यवस्तूनि वीजानीवेति उपमितसमासः। शरदं लोक इवेति वाक्यगतोपमानुसारात्। तानि [ विधि-वीजानि ] विवेको वारीव विवेकवारि तेन [ विवेकवारिणा ] पूर्ववत् समासः। [ अनुपालयन् ] प्रतीक्षमाणः संरक्षन् [ अभिवर्षति ] सिञ्चति, [ सः ] पुमान् [ फलशालिनीं ] फलं साधननिष्पाद्योऽर्थः सस्यञ्च, "सस्ये हेतुकृते फलम्" इति उभयत्रापि अमरः। तत्शालिनीं [ क्रियां ] कर्म्म

स सदा फलशालिनीं क्रियां
शरदं लोक इवाधितिष्ठति ॥ ३१ ॥
शुचि भूषयति श्रुतं वपुः
प्रशमस्तस्य भवत्यलङ्क्रिया।
प्रशमाभरणं पराक्रमः
स नयापादितसिद्धिभूषणः ॥ ३२ ॥

[ लोकः ] जनः। "लोकस्तु भुवने जने" इत्यमरः। [ शरदमिव सदा ] नित्यम् [ अधितिष्ठति ] सदा क्रियाफलं प्राप्नोत्येव, न कदाचिद् व्यभिचरति इत्यर्थः। साहसिकस्य काकतालीय-न्यायेन फलसिद्धिर्विवेकिनस्तु नियता इति भावः। अत्र फल-शब्देन शस्यहेतुकृतयोः अर्थयोः अभेदाध्यवसायात् श्लेषमूलाति-शयोक्तिः, तदनुग्राहीता च उपमा इत्यनुसन्धेयम् ॥ ३१ ॥

नियता विवेकिनः फलसिद्धिरित्युक्तम्। सम्प्रति तामेव कच्चश्च स्ताति, शुचीति। --[शुचि] सम्प्रदायशुद्धं [श्रुतं] शास्त्र-श्रवणं कर्त्तृ [वपुः भूषयति] अन्यथा "अविद्वान् पुरुषः शोच्यः" इति भावः। [तस्य] श्रुतस्य [ प्रशमः ] क्रोधोपशान्तिः [ अल-ङ्क्रिया ] भूषणं भवति, अन्यथा श्रुतवैफल्यात् इति भावः। [ पराक्रमः ] सति अवसरे शौर्यं [ प्रशमाभरणं ] प्रशमस्य आभरणं भवति, अन्यथा सर्वैः परिभूयते इति भावः। [ सः ] पराक्रमः [ नयापादितसिद्धिभूषणः ] नयापादिता नीतिसम्पादिता, विवेकपूर्विका इति यावत्। सा चासौ सिद्धिश्च सैव भूषणं यस्य स तथोक्तः। अन्यथा साहसिकस्य सिद्धेः काकतालीयत्वेन पक्षे पराक्रमवैयर्थ्यात् इति भावः। "वपुषो भूष्यतैवात्र सिद्धेः भूषणतैव तु। उभयं मध्यमानां

मतिभेदतमस्तिरोहिते
गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः
कुरुते दीप इवार्थदर्शनम् ॥ ३३ ॥
स्पृहणीयगुणैर्महात्मभिः
चरिते वर्त्मनि यच्छतां मनः ।

तु तेषां पूर्व्वोत्तरेच्छया ॥" इति विवेकः । एवं विशिष्टसिद्धेः अनन्यभूषिताया एव भूषणत्वोक्त्या सर्वोत्तरतया स्तुतिर्गम्यते । अत्र उत्तरोत्तरस्य पूर्वपूर्वविशेषणत्वात् एकावल्यलङ्कारः । तदुक्तम् ।—"यत्र विशेषणभावं पूर्वं पूर्वं प्रति क्रमेणैव । भजति परम्परमेषालङ्कृतिरेकावली कथिता ॥" इति ॥ ३२ ॥

विमृश्य कुर्य्यादिति स्थितम् । तत्र "विमर्शोपायः कः" इत्युक्ते शास्त्रमेवेत्याह मतीति ।—[मतिभेदतमस्तिरोहिते] मतिभेदः कार्य्यविप्रतिपत्तिः । मतिभेदः तम इवेति उपमितसमासः । दीप इवेति उपमानुसारात् । तेन तिरोहिते आच्छन्ने अत एव [गहने] दुरवगाहे [कृत्यविधौ] कार्य्यानुष्ठाने [विवेकिनां सुकृतः] स्वभ्यस्तः अत एव [परिशुद्धः] निश्चितः अन्यत्र— सुरक्षितः प्रवातादिदोषरहितश्च [आगमः] शास्त्रम् । "आगमः शास्त्र आयाते" इति विश्वः । [दीप इव अर्थदर्शनं] कार्य्यज्ञानं वस्तुप्रतिभासनञ्च [कुरुते] ॥ ३३ ॥

एवं विमृश्य कुर्वतो दैवात् अनर्थागमोऽपि न कश्चित् अपराध इत्याह, स्पृहणीयेति ।—[स्पृहणीयगुणैः] लोकश्लाघ्यगुणैः [महात्मभिः] सज्जनैः [चरिते] अनुष्ठिते [वर्त्मनि] आचारे [मनो यच्छतां] निदधतां, सन्मार्गेण व्यवहरतामित्यर्थः ।

विधिहेतुरहेतुरागसां
विनिपातोऽपि समः समुन्नतेः ॥ ३४ ॥
शिवमौपयिकं गरीयसीं
फलनिष्पत्तिमदूषितायतीम् ।
विगणय्य नयन्ति पौरुषं
विजितक्रोधरया जिगीषवः ॥ ३५ ॥

[विधिहेतुः] दैवनिमित्तकः । "विधिर्विधाने दैवे च" इत्यमरः । अत एव [ आगसाम् ] अपराधानाम् [ अहेतुर्विनिपातोऽपि ] दैविकानर्थोऽपि । "विनिपातोऽवपाते स्यात् दैवादिव्यसनेऽपि च" इति विश्वः । [ समुन्नतेः ] अतिवृद्धेः [ समः ] तुल्यः । दैविकेषु पुरुषस्य अनुपालभ्यत्वादिति भावः । यथाह कामन्दकः ।—"यत्तु सम्यगुपक्रान्तं कार्य्यमेति विपर्य्ययम् । पुमांस्तत्रानुपालभ्यो दैवान्तरितपौरुषः ॥" इति ॥ ३४ ॥

सम्प्रति यत् विमृश्य तदाह, शिवमिति ।—[जिगीषवः] विजयेच्छवः नृपाः [विजितक्रोधरयाः] विजितक्रोधवेगाः सन्तः [ गरीयसीं ] प्रभूताम् [ अदूषितायतीम् ] अक्षतोत्तरकालां स्वन्ताम् इत्यर्थः, [ फलनिष्पत्तिं ] फलसिद्धिं [ विगणय्य] फलवत्त्वं निश्चित्य इत्यर्थः । [ पौरुषं ] पुरुषकारं [ शिवम् ] अनुकूलम् [ औपयिकम् ] उपायम् । विनयादित्वात् स्वार्थे ठक्*"उपायात् ह्रस्वत्वञ्च"(वृत्तिः) । [नयन्ति] प्रापयन्ति, पौरुषम् उपायेन योजयन्ति इत्यर्थः ; नानिश्चितफलं कर्म कुर्वीतेति भावः । यथाह कामन्दकः ।—"निष्फलं क्लेशबहुलं सन्दिग्ध-

* विनयादिभ्यष्ठक् ( ५।४।३४ पा० ) ।

अपनेयमुदेतुमिच्छता
तिमिरं रोषमयं धिया पुरः ।
अविभिद्य निशाकृतं तमः
प्रभया नांशुमताप्युदीयते ॥ ३६ ॥
बलवानपि कोपजन्मनः
तमसो नाभिभवं रुणद्धि यः ।

फलमेव च । न कर्म कुर्य्यात् मतिमान् सदा वैरानुबन्धि च ॥" इति । नयतिः प्रापणार्थे द्विकर्मकः । अत्र पौरुषस्य कर्त्तृस्थ-कर्मत्वेऽपि उपायस्य अतथात्वात् क्रोधं विनयत इत्यादिवत् । "कर्त्तृस्थे चाशरीरे कर्मणि" (१।३।३७ पा०) इति आत्मने-पदं न भवति ॥ ३५ ॥

यदुक्तं विजितक्रोधरया इति तदावश्यकमाह, अपनेय-मिति ।—[ उदेतुम् ] अभ्युदेतुम् [ इच्छता ] पुरुषेण [ पुरः ] प्रथमं [रोषमयं] रोषात् आगतम् । "मयट् च" (४।३।८२ पा०) इति मयट् । [ तिमिरं ] अज्ञानं [ धिया ] विवेकबुद्ध्या करणेन [ अपनेयम् ] अपनोद्यम् । तथाहि [ अंशुमतापि ] कर्त्रा [ प्रभया ] तेजसा करणेन [ निशाकृतं तमः ] ध्वान्तम् [ अविभिद्य न उदीयते ] किन्तु विभिद्य एव इत्यर्थः । "सूर्य्यस्य अपि एवं किमुत अन्येषाम् ?" इति अपिशब्दार्थः । इणो भावे लट् ॥ ३६ ॥ *

ननु दुर्बलस्य एवम् अस्तु, बलीयसस्तु क्रोधादेव कार्य्यसिद्धि-

* अत्र हि भविष्यदुन्नतिलाभेच्छावतो जनस्य रोषमयाज्ञानविनाशरूपवस्तुनः उदयाभिलाषिसूर्य्यप्रभाद्वारान्धतमसविनाशरूपसमानधर्म्मवस्तुनि प्रतिबिम्बनात् दृष्टान्ता-लङ्कारः । स च "रोषमयम्" इति रूपकेण अनुप्राणितः ।

क्षयपक्ष इवैन्दवीः कलाः
सकला हन्ति स शक्तिसम्पदः॥ ३७॥
समवृत्तिरुपैति मार्दवं
समये यश्च तनोति तिग्मताम्।
अधितिष्ठति लोकमोजसा
स विवस्वानिव मेदिनीपतिः॥ ३८॥

रिति अत आह, बलवानिति।—[ बलवान् ] शूरः [ अपि यः ] कोपात् जन्म यस्य तस्य [ कोपजन्मनः। ] "अवर्ज्यो बहुव्रीहि- र्व्यधिकरणो जन्माद्युत्तरपदः" इति वामनः। [तमसः] मोहस्य। कृद्योगात् कर्त्तरि षष्ठी। * [अभिभवम्] आक्रान्तिं [न रुणद्धि] न निवारयति। [सः] नृपः क्षयस्य पक्षः [क्षयपक्षः] कृष्णपक्षः [ ऐन्दवीः ] इन्दुसम्बन्धिनीः [ कला इव ]। "कला तु षोड़शो भागः" इत्यमरः। [ सकलाः ] समग्राः [ शक्तिसम्पदः ] प्रभु- मन्त्रोत्साहशक्तीः तिस्रोऽपि [ हन्ति ] नाशयति। अन्धस्य जङ्घाबलमिव क्रोधान्धस्य लोकोत्तरमपि सामर्थ्यं व्यर्थम् एव इत्यर्थः। अत्र कालस्य सर्वकारणत्वात् क्षयपक्षस्य कलाक्षय- कारित्वम् अस्ति एव। तमसस्तु तत्कालविजृम्भणात् तथा व्यपदेशः॥ ३७॥

विमृश्य कुर्वतः क्रियाप्रकारमाह, समेति।—[ यः ] समा नातिमृदुः नातितिग्मा वृत्तिः यस्य सः [ समवृत्तिः ] सन् [समये] सति अवसरे [मार्दवं] मृदुवृत्तित्वम् [उपैति तिग्मतां] तीव्रवृत्तित्वं [च तनोति, स मेदिनीपतिः विवस्वान् इव ] सूर्य्य

* कर्त्तृकर्मणोः कृति ( २।३।६५ पा० )।

क्व चिराय परिग्रहः श्रियां
क्व च दुष्टेन्द्रियवाजिवश्यता ?
शरदभ्रचलाश्चलेन्द्रियै-
रसुरक्षा हि बहुच्छलाः श्रियः ॥ ३९ ॥
किमसामयिकं वितन्वता
मनसः क्षोभमुपात्तरंहसः।

इव [ ओजसा ] तेजसा [ लोकम् अधितिष्ठति ] आक्रामति। सूर्य्योऽपि ऋतुभेदेन समवृत्तिः इत्यादि योज्यम् ॥ ३८ ॥

उक्तान्यथाकरणेऽनिष्टमाह, क्वेति।—[ श्रियां ] सम्पदां [ चिराय ] बहुकालं [ परिग्रहः ] स्वायत्तीकरणं [ क्व ? ] [दुष्टेन्द्रियवाजिवश्यता] इन्द्रियाणि वाजिन इव इति उपमितसमासः। दुष्टानाम् अमार्गधाविनाम् इन्द्रियवाजिनां वश्यो वशङ्गतः तस्य भावः तत्ता [ च क्व ? ] न उभयम् एकत्र तिष्ठति इत्यर्थः। कुतः ?—[ हि ] यस्मात् [ शरदभ्रचलाः ] शरदभ्रवत् चलाः चञ्चलाः। किञ्च [ बहुच्छलाः ] बहुव्याजाः बहुरन्ध्रा इति यावत्। "छलं तु स्खलिते व्याजे" इति विश्वः। [ श्रियः ] सम्पदः, [चलेन्द्रियैः ] अजितेन्द्रियैः [ असुरक्षाः ] रक्षितुमशक्याः। कथञ्चित् प्राप्ता अपि श्रियो न अविनीतेषु तिष्ठन्ति इत्यर्थः। वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ३९ ॥

क्रोधस्य दुष्टताम् उक्त्वा तस्य त्यागम् उपदिशति, किमिति।—[ उपात्तरंहसः ] प्राप्तत्वरस्य [ मनसः। असामयिकं ] समयोऽस्य प्राप्तः सामयिकः। "समयस्तदस्य प्राप्तम्" (५।१। १०४ पा० ) इति ठञ्। स न भवति इति असामयिकः तम्

क्रियते पतिरुच्चकैरपां
भवता धीरतयाऽधरीकृतः ? ॥ ४० ॥
श्रुतमप्यधिगम्य ये रिपून्
विनयन्ते न शरीरजन्मनः ।
जनयन्त्यचिराय सम्पदाम्
अयशस्ते खलु चापलाश्रयम् ॥ ४१ ॥
अतिपातितकालसाधना
स्वशरीरेन्द्रियवर्गतापनी ।

---

अप्राप्तकालं [ क्षोभं वितन्वता भवता धीरतया ] धैर्य्यगुणेन । "मनसो निर्विकारत्वं धैर्य्यं सत्स्वपि हेतुषु" इति रसिकाः । [ अधरीकृतः ] तिरस्कृतः प्राक् इति शेषः । [ अपां पतिः ] समुद्रः [ किं ] किमर्थम् [ उच्चकैः ] अधिकः [ क्रियते ? ] न पराजितं पुनः उच्चकैः कुर्य्यादिति भावः । अत्र वितन्वता इति क्षोभविशेषणत्वेन अपांपतिपदार्थस्य उच्चैःकरणे हेतुत्वोक्त्या काव्यलिङ्गमलङ्कारः ॥ ४० ॥

श्रुतमिति ।—किञ्च [ ये श्रुतं ] शास्त्रम् [ अधिगम्यापि शरीरजन्मनः ] शरीरप्रभवान् [ रिपून् ] कामक्रोधलोभमोह-मदमात्सर्य्यादीन् [ न विनयन्ते ] न नियच्छन्ति । "कर्त्तृस्थे चाशरीरे कर्मणि" ( १।३।३७ पा० ) इति आत्मनेपदम् । [ ते खलु अचिराय ] झटिति [ सम्पदां ] श्रियां [ चापलाश्रयम् ] अस्थैर्य्यनिवन्धनम् [ अयशः ] दुष्कीर्त्तिं [ जनयन्ति ] । आश्रय-दोषात् अस्थैर्य्यं सम्पदां न स्वदोषात् इत्यर्थः । अजितारिषड्-वर्गस्य कुतः सम्पद इति भावः ॥ ४१ ॥

जनवत् न भवन्तमक्षमा
नयसिद्धेरपनेतुमर्हति ॥ ४२ ॥
उपकारकमायतेर्भृशं
प्रसवः कर्मफलस्य भूरिणः ।
अनपायि निबर्हणं द्विषां
न तितिक्षासममस्ति साधनम् ॥ ४३ ॥

तथा क्रोधात् कार्य्यहानिः इत्याशयेन आह, अतिपातितेति ।—[ अतिपातितकालसाधना ] अतिपातितानि अतिक्रान्तानि कालः समयोऽनुरूपः साधनानि सहायादीनि च यया सा तथोक्ता [ स्वशरीरेन्द्रियवर्गतापनी ] तापयतीति तापनी । कर्त्तरि ल्युट् । टित्त्वात् ङीप् । * स्वस्य यच्छरीरम् इन्द्रियवर्गश्च तयोः तापनी [ अक्षमा ] क्रोधः [ भवन्तं जनवत् ] पृथग्जनमिव । "तेन तुल्यम्" (५।१।११५ पा० )इति वतिप्रत्ययः । तेन एव अर्थो लभ्यते । "तद्धितश्चासर्वविभक्तिः"(१।१।३८ पा०) इति अव्ययम् । [ नयसिद्धेः ] नयसाध्यफलात् [ अपनेतुं ] पृथक्कर्त्तुं [ नार्हति । ] असमयक्रोधस्य आत्मसन्तापातिरिक्तं फलं नास्ति इत्यर्थः ॥ ४२ ॥

दुष्टः क्रोध इत्युक्तम् । अथ क्षमाया गुणानाह, उपकारकमिति ।—[ आयतेः ] उत्तरकालस्य [ भृशम् ] अत्यन्तम् [ उपकारकं ] स्थिरफलहेतुरित्यर्थः । [ भूरिणः ] प्रभूतस्य [ कर्मफलस्य ] । प्रसूयतेऽनेनेति [ प्रसवः ] कारणम् । अपायि न भवतीति [ अनपायि ] स्वयम् अविनश्यदेव [द्विषां निबर्हणं।

* टिड्ढाणञ् द्वयसज् दघ्नञ् मात्रच् तयप् ठक् ठञ् कञ् क्वरपः (४।१।१५ पा० )

प्रणतिप्रवणान् विहाय नः
सहजस्नेहनिबद्धचेतसः ।
प्रणमन्ति सदा सुयोधनं
प्रथमे मानभृतां न वृष्णयः ॥ ४४ ॥

सुहृदः सहजास्तथेतरे
मतमेषां न विलङ्घयन्ति ये ।

विनाशकम् एवंगुणकं [साधनं तितिक्षासमं] क्षमातुल्यं [नास्ति]। "क्षान्तिः क्षमा तितिक्षा च" इत्यमरः । "तिज-निशाने" इति धातोः "गुप्तिज् किद्भ्यः सन्" (३।१।५ पा०) इति क्षमार्थे सन् प्रत्ययः । तितिक्षासममित्यनुक्तोपमेया समासे श्रार्थी लुप्तोपमा, भृशायत्यनपायिशब्दैः साधनान्तरवैलक्षण्याद् व्यतिरेकश्च व्यज्यते । "भेदप्राधान्ये उपमानादुपमेयस्याधिक्ये विपर्य्यये वा व्यतिरेकः" इति अलङ्कारसर्वस्वम् ॥ ४३ ॥

ननु तितिक्षया कालक्षेपे दुर्य्योधनः सर्वान् राज्ञो वशी-कुर्य्यादित्यत्राह, प्रणतीति ।—[सहजस्नेहनिबद्धचेतसः] सहज-स्नेहेन अकृत्रिमप्रेम्णा निबद्धचेतसोऽस्मासु गाढं लग्नचित्ताः । सुयोधने तु न तथेति भावः । किञ्च [मानभृताम्] अहङ्कारिणां [प्रथमे] अग्रेसराः । सुयोधनस्तु ततोऽपीति भावः । [वृष्णयः] यादवाः [प्रणतिप्रवणान्] प्रणामपरान् । सुयोधनस्तु न तथेति भावः । [नः] अस्मान् [विहाय सुयोधनं सदा न प्रणमन्ति] न नमन्ति नानुसरन्ति । किन्तु कार्य्यकाले त्यक्ष्यन्ति एव इत्यर्थः । सति यादवविग्रहे न किञ्चित् अस्माकमसाध्यं भवेदिति भावः । अनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४४ ॥

विनयादिव यापयन्ति ते
धृतराष्ट्रात्मजमात्मसिद्धये ॥ ४५ ॥
अभियोग इमान् महीभुजो
भवता तस्य कृतः कृतावधेः।
प्रविघाटयिता समुत्पतन्
हरिदश्वः कमलाकरानिव ॥ ४६ ॥

किञ्च कारणान्तरमाह, सुहृद इति।—किञ्च [एषां] कृष्णीनां [ये सहजाः] सहजाताः, सहजाः मातृपितृपक्षा इत्यर्थः। "अन्येष्वपि दृश्यते" (३।२।१०१ पा०) इति ड-प्रत्ययः। [सुहृदः] मित्राणि [तथा इतरे] कृत्रिमसुहृदश्च एषां [मतं] कृष्णिपक्षं [न विलङ्घयन्ति] न अतिक्रामन्ति। [ते] इयेऽपि नृपाः, दुर्य्योधनोपजीविनोऽपीति भावः। [आत्मसिद्धये] आत्मजीवनाय [धृतराष्ट्रात्मजं] दुर्य्योधनं [विनयात्] आनुकूल्यात् [इव यापयन्ति] कालं गमयन्ति। कार्य्यकाले तु वृष्णिपक्षप्रवेशिन एव इत्यर्थः। यातेर्ण्यन्तात्लट्। "अर्त्तिह्री" (७।३।३६ पा०) इत्यादिना पुगागमः ॥ ४५ ॥

किञ्च नायमभियोगकाल इत्याशयेनाह, अभियोग इति।—[कृतावधेः] परिभाषितकालस्य। "अवधिस्त्ववधाने स्यात्सीम्नि काले बिलेऽपि च" इति विश्वः। [तस्य] सुयोधनस्य कर्मणि षष्ठी। [भवता कृतः] अवधिमनपेक्ष्येति शेषः। [अभियोगः] आक्रमणं अभिभव इति यावत्। "अभियोगस्तु शपथे स्यादार्द्रे च पराभवे" इति विश्वः। [इमान्] पूर्वोक्तान् [महीभुजः] राज्ञः [हरिदश्वः] उष्णरश्मिः [कमलाकरानिव समुत्पतन्] उद्यन् एव

उपजापसहान् विलङ्घयन्
स विधाता नृपतीन् मदोद्धतः ।
सहते न जनोऽप्यधःक्रियां
किमु लोकाधिकधाम राजकम् ? ॥४७॥
असमापितकृत्यसम्पदां
हतवेगं विनयेन तावता ।

[प्रविघाटयिता] भेत्स्यति । घाटयतेर्भौवादिकाल्लुट् । चौरादिकस्य तु "मितां ह्रस्वः" ( ६।४।९२ पा० ) इति ह्रस्वत्वं स्यात् ॥ ४६ ॥

अथ न ये दृष्णिपक्षास्तान् प्रत्याह, उपजापेति ।—[मदोद्धतः सः] दुर्योधनः [नृपतीन्] अन्यान् नृपान् [विलङ्घयन्] मदाद् अवमानयन् । [उपजापसहान्] सहन्त इति सहाः, पचाद्यच् । उपजापस्य सहान् भेदयोग्यान् । "समौ भेदोपजापौ" इत्यमरः । [विधाता] विधास्यति, विपूर्वस्य दधातेर्लुट् । अवमानितो जनः सुभेद्य इति भावः । न च ते सहिष्यन्त इत्याह —[जनः] प्राकृतोऽपि [अधःक्रियाम्] अपमानं [न सहते । लोकाधिकधाम] लोकोत्तरप्रतापं [राजकं] राजसमूहः । "गोत्रोक्षोष्ट्र" ( ४।२।३९ पा० ) इत्यादिना वुञ्प्रत्ययः । [किमु] किमुत सहते इति किं वक्तव्यमित्यर्थः । तथा सति कृत्स्नमेव राजमण्डलम् अस्मानेव अवलम्बिष्यते इति भावः ॥ ४७ ॥

ननु सखीनिवेत्यादिवर्णनचरोक्त्या तस्य मदसम्भावनापि कथमित्यत्राह, असमापितेति ।—[असमापितकृत्यसम्पदाम्]

प्रभवन्त्यभिमानशालिनां
मदमुत्तम्भयितुं विभूतयः ॥ ४८ ॥
मदमानसमुद्धतं नृपं
न वियुङ्क्ते नियमेन मूढ़ता।
अतिमूढ़ उदस्यते नयात्
नयहीनादपरज्यते जनः ॥ ४९ ॥
अपरागसमीरणेरितः
क्रमशीर्णाकुलमूलसन्ततिः।

अकृतकृत्यानाम् अतः [अभिमानशालिनाम्] अहङ्कारिणां [विभूतयः] सम्पद एव [तावता] स्वल्पेन [विनयेन] कार्य्यवशात् आरोपितेनेति शेषः। [हतवेगं] प्रतिबद्धवेगं, न तु स्वरूपतो हतं, [मदम् उत्तम्भयितुं] वर्द्धयितुं [प्रभवन्ति]। सर्वथा दुर्जनं सम्पदो विकारयन्ति इति भावः ॥ ४८ ॥

अथ मदस्य अनर्थहेतुतां युग्मेनाह, मदेति, अपरागेति च।—[मदमानसमुद्धतं] मदमानाभ्यां दर्पाहङ्काराभ्यां समुद्धतं [नृपं, मूढ़ता] कार्य्यापरिज्ञानं [नियमेन] अवश्यं [न वियुङ्क्ते] न विमुञ्चति। [अतिमूढ़ः, नयात्] नीतिमार्गात् [उदस्यते] उत्क्षिप्यते। कर्मकर्त्तरि लट्। [नयहीनात् जनः] लोकः [अपरज्यते] अपरक्तो भवति। "स्वरितञितः" (१।३।७२पा०) इत्यादिना आत्मनेपदम् ॥ ४९ ॥

अपरागेति।—[अपरागसमीरणेरितः] अपरागोऽप्रीतिः, द्वेष इति यावत्, समीरण इव, तेनेरितः नोदितः अत एव [क्रमशीर्णा-

सुकरस्तरुवत् सहिष्णुना
रिपुरुन्मूलयितुम् महानपि ॥५०॥ युग्मम्।
अणुरप्युपहन्ति विग्रहः
प्रभुमन्तःप्रकृतिप्रकोपजः।
अखिलं हि हिनस्ति भूधरं
तरुशाखान्तनिघर्षजोऽनलः ॥ ५१ ॥

---

कुलमूलसन्ततिः] क्रमेण शीर्णा शीर्णीभूता आकुला चला च मूलसन्ततिः प्रकृत्यादिस्वजनवर्गः शिफासङ्घातश्च यस्य स तथोक्तः। "मूलं वशीकृते स्वीये शिफातारान्तिकादिषु" इति वैजयन्ती। [रिपुर्महानपि तरुवत्] वृक्ष इव [सहिष्णुना] क्षमावता [उन्मूलयितुम्] उद्धर्तुं [सुकरः] सुसाध्यः, सुकरो न्मूलनः इत्यर्थः। अत्र मदादेः पूर्वपूर्वस्य उत्तरोत्तरं प्रति कारणत्वात् कारणमाला, तरुवदित्युपमा चेति द्वयोः संसृष्टिः॥५०॥

ननु अन्तर्भेदमात्रेण कथं सुसाध्यः? तत्राह, अणुरिति।—[अणुः] अल्पोऽपि [अन्तःप्रकृतिप्रकोपजः] अन्तरङ्गामात्याद्यपरागसमुत्थः। "प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे। छन्दःकारणगुह्येषु जन्वमात्यादिकेष्वपि॥" इति वैजयन्ती। [विग्रहः] वैरं [प्रभुम् उपहन्ति] नाशयति। अत्र दृष्टान्तमाह।—[तरुशाखान्तनिघर्षजः] तरुशाखान्तानां निघर्षो घर्षणं तज्जः [अनलः] अग्निः। [भूधरं] गिरिम् [अखिलं] साकल्येन [हिनस्ति हि] दहति इत्यर्थः। अत्र उपमानोपमेयसमानधर्माणां प्रतिबिम्बतया निर्देशेन दृष्टान्तालङ्कारः॥ ५१ ॥

मतिमान् विनयप्रमाथिनः
समुपेक्षेत समुन्नतिं द्विषः ।
सुजयः खलु तादृगन्तरे
विपदन्ता ह्यविनीतसम्पदः ॥ ५२ ॥

लघुवृत्तितया भिदां गतं
वहिरन्तश्च नृपस्य मण्डलम् ।
अभिभूय हरत्यनन्तरः
शिथिलं कूलमिवापगारयः ॥ ५३ ॥

तथापि कथं वर्द्धमानं शत्रुम् उपेक्षेत इति आशङ्क्य दुर्विनीतत्वात् इति आह, मतिमानिति ।— [मतिमान्] प्राज्ञः । विनयं प्रमथ्नाति त्यजति इति [विनयप्रमाथिनः] दुर्विनीतस्य [द्विषः समुन्नतिं] वृद्धिं [समुपेक्षेत] । उपेक्षायाः फलमाह ।— [तादृक्] अविनीतः [अन्तरे] क्वचित् रन्ध्रे [सुजयः] सुखेन जेतुं शक्यः [खलु, हि] यस्मात् [अविनीतसम्पदः विपदन्ताः] विपन्मर्य्यादकाः, अनर्थोदर्काः इत्यर्थः ॥ ५२ ॥

कथं दुर्विनीतस्य शत्रोः सुजयत्वमित्याशङ्क्य भेदजर्जरितत्वात् इति आह, लघ्विति ।—[लघुवृत्तितया] स्वस्य दुर्वृत्तरूपतया [वहिः] मित्रादिजनपदेषु [अन्तः] अमात्यादिषु च [भिदां] भेदं [गतम्] । "षिद्भिदादिभ्योऽङ्" (३।३।१०४पा०) इति अङ्प्रत्ययः । [नृपस्य मण्डलं] राष्ट्रम् [अनन्तरः] सन्निहितो जिगीषुः [आपगारयः] नदीवेगः [शिथिलम्] अन्तर्भेदजर्जरं । [कूलमिव अभिभूय] आक्रम्य [हरति] ॥ ५३ ॥

अनुशासतमित्यनाकुलं
नयवर्त्माकुलमर्जुनाग्रजम्।
स्वयमर्थ इवाभिवाञ्छितः
तमभीयाय पराशरात्मजः॥ ५४॥

मधुरैरवशानि लम्भयन्
अपि तिर्य्यञ्चि शमं निरीक्षितैः।
परितः पटु बिभ्रदेनसां
दहनं धाम विलोकनक्षमम्॥ ५५॥

---

अन्विति।—[इति] इत्थम् [आकुलम्] अरिनिकार-स्मरणात् क्षुभितम् [अर्जुनाग्रजं] भीमसेनं [नयवर्त्म] नीतिमार्गम् [अनाकुलम्] असङ्कीर्णं यथा तथा [अनुशासतम्] उपदिशन्तम्। "जक्षित्यादयः षट्" (६।१।६ पा०) इत्यभ्यस्ताच्छतुर्नुमभावः [तं] युधिष्ठिरं [पराशरात्मजः] पराशरस्य आत्मजः पुत्रः वेद-व्यासः। [स्वयमभिवाञ्छितोऽर्थ इव] साक्षात् मनोरथ इव इति उत्प्रेक्षा। [अभीयाय] प्राप्तः॥ ५४॥

अथ युग्मेनाह, मधुरैरिति।—[मधुरैः] शान्तैः [निरीक्षितैः] अवलोकनैः। "नपुंसके भावे क्तः" (३।३।११४ पा०) न विद्यते वशम् आयत्तत्वं येषां तानि [अवशानि] प्रति-कूलानि। "वशमायत्ततायां च" इति विश्वः। [तिर्य्यञ्चि] मृगपक्ष्यादीनि [शमं] शान्तिं [लम्भयन्] प्रापयन्। "लभेश्च" (७।१।६४ पा०) इति नुमागमः। "गत्यर्थ" (२।६।१२ पा०) इत्यादिना द्विकर्मकत्वम्। [परितः पटु] उज्ज्वलम् [एनसाम्]। दह्यतेऽनेनेति [दहनं] निवर्त्तकं

सहसोपगतः सविस्मयं
तपसां सूतिरसूतिरापदाम् ।
ददृशे जगतीभुजा मुनिः
स वपुष्मानिव पुण्यसञ्चयः ॥५६॥ युग्मम् ।
अथोच्चकैरासनतः परार्द्ध्यात्
उद्यन् स धूतारुणवल्कलाग्रः ।
रराज कीर्णाकपिशांशुजालः
शृङ्गात् सुमेरोरिव तिग्मरश्मिः ॥ ५७॥

तथापि [ विलोकनक्षमं ] दर्शनीयम् । वज्रादिविलक्षणमिति भावः । [ धाम ] तेजः [ बिभ्रत् ] ॥ ५५ ॥

सहसेति ।—पुनः [ सहसा उपगतः ] अकस्मात् आगतः [ तपसां सूतिः ] प्रसवः [ आपदाम् असूतिः ] अप्रभवः, निवर्त्तक इति यावत् । [ स मुनिः ] व्यासः [ वपुष्मान् ] देहधारी [ पुण्यसञ्चयः ] पुण्यराशिः [इव] इति उत्प्रेक्षा [ जगतीभुजा ] राज्ञा [ सविस्मयं ददृशे ] दृष्टः ॥ ५६ ॥

अथेति ।—[ अथ ] दर्शनानन्तरम् । [ उच्चकैः ] उन्नतात् [ परार्द्ध्यात् ] श्रेष्ठात् । "अर्द्धाद्यत्" ( ४।३।४ पा० ) "परावराधमोत्तमपूर्वाच्च" ( ४।३।५ पा० ) इति यत्प्रत्ययः । [ आसनतः ] सिंहासनात् [ उद्यन् ] उत्तिष्ठन् अत एव [धूतारुणवल्कलाग्रः ] धूतानि कम्पितानि अरुणानि वल्कलाग्राणि यस्य स तथोक्तः । [ सः ] नृपः [ कीर्णाकपिशांशुजालः ] कीर्णं विस्तृतम् आकपिशम् अंशुजालं यस्य स तथोक्तः । [ सुमेरोः शृङ्गात्] उद्यन् [ तिग्मरश्मिरिव रराज ] ॥ ५७ ॥ *

* इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ।

अवहितहृदयो विधाय सोऽर्हाम्
ऋषिवदृषिप्रवरे गुरूपदिष्टाम् ।
तदनुमतमलञ्चकार पश्चात्
प्रशम इव श्रुतमासनं नरेन्द्रः ॥ ५८ ॥

व्यक्तोदितस्मितमयूखविभासितोष्ठः
तिष्ठन् मुनेरभिमुखं स विकीर्णधाम्नः ।

अवहितेति ।—[ स नरेन्द्रः अवहितहृदयः ] अप्रमत्तचित्तः सन् । "चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः । [ ऋषिप्रवरे ] मुनिश्रेष्ठे । [ ऋषिवत् ] ऋष्यर्हाम् । अर्हार्थे वतिप्रत्ययः * । [ गुरूपदिष्टां ] शास्त्रीयामित्यर्थः । [अर्हां] पूजाम् । "गुरोश्च हलः" ( ३।३।१०३ पा० ) इति अकारप्रत्ययः । [ विधाय पश्चात् ] अनन्तरं [ तदनुमतं ] तेन अनुज्ञातम् [ आसनम् ] [ प्रशमः ] शान्तिः [ श्रुतं ] शास्त्रश्रवणम् [ इव अलञ्चकार ] । उक्तञ्च पूर्वम् ।—"प्रशमस्तस्य भवत्यलङ्क्रिया" इति । मुन्याज्ञया उपविष्टवान् इत्यर्थः ॥५८॥ †

व्यक्तेति ।—[ व्यक्तोदितस्मितमयूखविभासितोष्ठः ] व्यक्तोदितैः स्फुटोद्गतैः स्मितमयूखैः विभासितौ ओष्ठौ यस्य स तथोक्तः । [ विकीर्णधाम्नः ] विस्तृततेजसः [ मुनेः अभिमुखं तिष्ठन् सः ] नृपः [ इद्धं ] समृद्धं दीप्तमिति यावत् । [ अंशुजालं तन्वन्तं गुरुं ] गीष्पतिम् । "गुरुर्गीष्पतिपित्रादौ" इत्यमरः । "अभितः परितः" (वा०) इत्यादिना द्वितीया । [अभितः]

* तदर्हम् ( ५।१।११७ पा० ) ।

† पुष्पिताग्रा वृत्तम् ।

तन्वन्तमिद्धमभितो गुरुमंशुजालं
लक्ष्मीमुवाह सकलस्य शशाङ्कमूर्त्तेः ॥ ५८ ॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये
द्वितीयः सर्गः ॥ २ ॥

अभिमुखं, तिष्ठत इति शेषः । [ सकलस्य ] सम्पूर्णस्य [ शशाङ्क-मूर्त्तेः ] शशाङ्का मूर्त्तिः यस्य तस्य इन्दोः [ लक्ष्मीमुवाह ] वहति स्म । अत्र उपमेयस्य राज्ञः उपमानेन्दुधर्मेण लक्ष्म्याः साक्षात्सम्बन्धासम्भवात् तत्सदृशीं लक्ष्मीमिवेति प्रतिबिम्ब-करणाक्षेपात् असम्भवद्वस्तुसम्बन्धात् पदार्थवृत्तिनिदर्शना-लङ्कारः । तदुक्तम्—"प्रतिबिम्बस्याकरणं सम्भवता यत्र वस्तुयोगेन । तत्साम्यमसम्भवता निदर्शना सा द्विधाभिमता ॥" इति ॥ ५८ ॥ *

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीय-काव्यव्याख्यायां घण्टापथसमाख्यायां व्यासागमनो नाम
द्वितीयः सर्गः ॥ २ ॥

* वसन्ततिलकं वृत्तम् ।

# तृतीयः सर्गः ।

ततः शरच्चन्द्रकराभिरामै-
रुत्सर्पिभिः प्रांशुमिवांशुजालैः ।
बिभ्राणमानीलरुचं पिशङ्गी-
र्जटास्तडित्वन्तमिवाम्बुवाहम् ॥ १ ॥
प्रसादलक्ष्मीं दधतं समग्रां
वपुःप्रकर्षेण जनातिगेन ।

अथ त्रिभिर्मुनिं विशिंषन् चतुर्भिः कलापकमाह, * तत इति ।—[ ततः ] उपवेशनानन्तरं [ शरच्चन्द्रकराभिरामैः ] आह्लादकैः इत्यर्थः । [ उत्सर्पिभिः ] ऊर्द्धं प्रसारिभिः [ अंशुजालैः ] प्रभापटलैः [ प्रांशुम् ] उन्नतम् [ इव ] स्थितमिति उत्प्रेक्षा । पुनः [आनीलरुचं] कृष्णवर्णं [पिशङ्गीः ] पिङ्गलवर्णाः । गौरादित्वात् ङीष् । † [ जटा बिभ्राणं ] धारयन्तम् अत एव [ तडित्वन्तं ] विद्युद्युक्तम् [ अम्बुवाहमिव] स्थितम् इति उत्प्रेक्षा । "धर्मात्मजः युधिष्ठिर एतादृशं मुनिमाबभाषे" इति चतुर्थश्लोकेन अन्वयः ॥ १ ॥ ‡

प्रसादेति ।—पुनः [ समग्रां ] सम्पूर्णां [प्रसादलक्ष्मीं] प्रसादः सौम्यता तस्य लक्ष्मीं सम्पदं [ दधतम् ] अत एव जन-

* तदुक्तम्—"द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् । कलापकं चतुर्भिः स्यात्तदूर्द्ध्वं कुलकं स्मृतम् ॥" इति ।

† षिद्गौरादिभ्यश्च ( ४।१।४१ पा० ) ।

‡ अस्मिन् सर्गे उपजातिः वृत्तम् ।

प्रसह्य चेतःसु समासजन्तम्
असंस्तुतानामपि भावमार्द्रम् ॥ २ ॥
अनुद्धताकारतया विविक्तां
तन्वन्तमन्तःकरणस्य वृत्तिम् ।
माधुर्य्यविस्रम्भविशेषभाजा
कृतोपसम्भाषमिवेक्षितेन ॥ ३ ॥

---

मतिगच्छतीति [ जगदतिगेन ] लोकातिशायिना । "अन्येष्वपि दृश्यते" ( ३।२।१०१पा० ) इति डप्रत्ययः । [ वपुःप्रकर्षेण ] आकारसम्पदा [ असंस्तुतानाम् ] अपरिचितानाम् [ अपि व्यासोऽयम् इति अजानतामपि इत्यर्थः । "संस्तवः स्यात् परिचयः" इत्यमरः । [ चेतःसु ] चित्तेषु [ आर्द्रं ] स्नेहार्द्रं [ भावम् ] अभिप्रायं [ प्रसह्य ] बलात् [ समासजन्तं ] लगयन्तम् इति यावत् । "दंशसञ्जस्वञ्जां शपि" ( ६।४।२५पा० ) इत्युपधालोपः । प्रसन्नाकारेषु सर्वोऽपि स्निह्यतीति भावः ॥ २ ॥

अनुद्धतेति ।—पुनः [ अनुद्धताकारतया ] शान्ताकारत्वेन लिङ्गेन [ विविक्तां ] पूतां, शान्ताम् इति यावत् । "विविक्तौ पूतविजनौ" इत्यमरः । [ अन्तःकरणस्य वृत्तिं तन्वन्तं ] प्रकटयन्तम्, आकृतिः एव अस्य चित्तशुद्धिं कथयति इत्यर्थः । पुनः [माधुर्य्यविस्रम्भविशेषभाजा] माधुर्य्यं निसर्गसौम्यता, विस्रम्भो विश्वासः । "समौ विस्रम्भविश्वासौ" इत्यमरः । तयोः विशेषम् अतिशयं भजतीति तद्भाक्तेन [ ईक्षितेन ] दर्शनेन एव [ कृतोपसम्भाषं ] कृतोपसम्भाषा सम्भाषणं येन तम् [ इव ] इति उत्प्रेक्षा । दृष्टिविशेषेण एव उपसम्भाषणमिव कृत्वा स्थितम्

धर्मात्मजो धर्मनिबन्धिनीनां
प्रसूतिमेनःप्रणुदां श्रुतीनाम्।
हेतुं तदभ्यागमने परीप्सुः
सुखोपविष्टं मुनिमाबभाषे॥ ४॥ कलापकम्॥
अनाप्तपुण्योपचयैर्दुरापा
फलस्य निर्धूतरजाः सवित्री।

इत्यर्थः। काशिकायां तु—"उपसम्भाषणमुपसान्त्वनम्" इति भासनादिसूत्रे॥ ३॥

धर्मेति।—पुनः, धर्मं निबध्नन्ति इति [धर्मनिबन्धिनीनाम्] अग्निहोत्रादिधर्मप्रतिपादिकानाम् [एनःप्रणुदाम्] अघच्छिदां क्विप्। [श्रुतीनां] वेदानाम् "श्रुतिः स्त्री वेद आम्नायः" इत्यमरः। [प्रसूतिं] प्रभवं [सुखोपविष्टं] सुखेन उपविष्टं [मुनिं तदभ्यागमने] तस्य मुनेरागमने [हेतुं] कारणं [परीप्सुः] जिज्ञासुः। आप्नोतेः सन्नन्तात् उप्रत्ययः। "आप्ज्ञप्यृधामीत्" (७।४।५५ पा०) इतीकारः। "अत्र लोपोऽभ्यासस्य" (७।४।५८ पा०) इत्यभ्यासलोपः। [आबभाषे] उवाच॥ ४॥

अनाप्तेति।—[अनाप्तपुण्योपचयैः] अकृतपुण्यसङ्घैः [दुरापा] दुर्लभा [फलस्य सवित्री] श्रेयस्करीत्यर्थः। [निर्धूतरजाः] हतरजोगुणा। अन्यत्र निरस्तधूलिः। "रजो रजोगुणे धूलौ परागार्त्तवयोरपि" इति शाश्वतः। [एषा भवद्दर्शनसम्पत्] सम्पत्तिः, लाभ इति यावत्। सम्पदादिभ्यः क्विपो भावार्थत्वात्। [वीतबलाहकायाः] गतमेघायाः [दिवः] आकाशस्य सम्बन्धिन्याः [वृष्टेः तुल्या] इति उपमालङ्कारः।

तुल्या भवद्दर्शनसम्पदेषा
वृष्टेर्दिवो वीतबलाहकायाः ॥ ५ ॥
अद्य क्रियाः कामदुघाः क्रतूनां
सत्याशिषः सम्प्रति भूमिदेवाः।
आ संसृतेरस्मि जगत्सु जातः
त्वय्यागते यद्बहुमानपात्रम् ॥ ६ ॥

अनभ्रवृष्टिवत् अतर्कितोपपन्नं भवद्दर्शनं सर्वथा कस्यचित् श्रेयसो निदानम् इत्यर्थः। वारि वहतीति बलाहकः। पृषोदरादित्वात् साधुः॥ ५ ॥ *

अद्येति।—[ अद्य क्रतूनां क्रियाः ] अनुष्ठानानि। कामान् दुहन्ति इति [ कामदुघाः ] फलदा इत्यर्थः। "दुहः कब्घश्च" ( ३।२।७० पा० ) इति कप्प्रत्ययो घादेशश्च। [ सम्प्रति ] अद्य [ भूमिदेवाः ] ब्राह्मणाः। "द्विजात्यग्रजन्मभूदेववाडवाः। विप्रश्च ब्राह्मणः" इत्यमरः। [ सत्याशिषः ] जाताः। ब्राह्मणाशिषोऽद्य फलिता इत्यर्थः। [ यत् ] यतः कारणात् [ त्वयि आगते ] सति त्वदागमनेन निमित्तेन इत्यर्थः। [ अस्मि ] इत्यहमर्थेऽव्ययम्। "अस्मीत्यस्मदर्थानुवादेऽहमर्थेऽपि" इति गणव्याख्याने। "दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि नास्मि दूये" इति प्रयोगाच्च। [आ संसृतेः] आ संसारात्, यावत् संसारम् इत्यर्थः। अभिविधावाङ् विकल्पादसमासः † [जगत्सु बहुमानपात्रं] बहुयोग्यताभाजनं

* पृषोदरादीनि यथोपदिष्टम् ( ६।३।१०९ पा० )।

† आङ् मर्यादाभिविध्योः ( २।१।१३ पा० )।

श्रियं विकर्षत्यपहन्त्यघानि
श्रेयः परिस्नौति तनोति कीर्त्तिम्।
सन्दर्शनं लोकगुरोरमोघं
तवात्मयोनेरिव किं न धत्ते? ॥ ७ ॥
श्च्योतन्मयूखेऽपि हिमद्युतौ मे
न निर्वृतं निर्वृतिमेति चक्षुः।

[ जातः ]। सकलसत्कर्मफलभूतं त्वदागमनं येन मे जगन्मान्यता इति भावः ॥ ६ ॥

श्रियमिति।—[ आत्मयोनेः ] ब्रह्मणः [इव लोकगुरोः तव अमोघम् ] अविफलं [ सन्दर्शनं श्रियं विकर्षति ] आकृष्य ददाति। [ अघानि ] दुःखानि [ अपहन्ति ]। "अंहोदुःखव्यसनेष्वघम्" इत्यमरः। [ श्रेयः ] पुरुषार्थं [ परिस्नौति ] स्रवति। 'परिस्तौति' इति पाठेऽपि स एवार्थः, धातूनामनेकार्थत्वात्। [ कीर्त्तिं ] च [तनोति ]। किं बहुना [ किं न धत्ते ? ] किं न करोति ? सर्वं करोतीत्यर्थः ॥ ७ ॥ *

श्च्योतदिति।—हे भगवन्! [ श्च्योतन्मयूखे ] सुधास्राविकरे [ हिमद्युतौ ] इन्दौ [ अपि ] विषये [ न निर्वृतम् ] नञर्थस्य न-शब्दस्य सुप्सुपेति समासः। [ मे चक्षुः त्वत्सन्निधौ निर्वृतिं ] सुखम् [ एति ]। तथा [ चेतः ] च [ समुज्झितज्ञातिवियोगखेदं] त्यक्तबन्धुविरहदुःखं [ समुच्छ्वसतीव ] अनुप-

* अत्रैकस्य महामुनिदर्शनरूपकर्त्तृपदस्य श्रीविकर्षणाद्यनेकक्रियानुबन्धसम्बन्धात् दीपकालङ्कृतिं विगणयन्ति केचित्।

समुज्झितज्ञातिवियोगखिन्नं
त्वत्सन्निधावुच्छ्वसतीव चेतः ॥ ८ ॥
निरास्पदं प्रश्नकुतूहलित्वम्
अस्मास्वधीनं किमु निःस्पृहाणाम् ? ॥
तथापि कल्याणकरीं गिरं ते
मां श्रोतुमिच्छा मुखरीकरोति ॥ ९ ॥

राधेन प्राणिति इव इति उत्प्रेक्षा । पूर्वार्द्धे तु निर्वृतिकारणे सत्यपि इन्दौ अनिर्वृतिकथनाद् विशेषोक्तिः । तदुक्तम्—"तत्सामग्र्यामनिर्वृत्तिः विशेषोक्तिर्निगद्यते" इति ॥ ८ ॥

निरास्पदमिति ।—[प्रश्नकुतूहलित्वं निरास्पदम्] त्वदागमनप्रयोजनप्रश्नो निरास्पद इत्यर्थः । "आस्पदं प्रतिष्ठायाम्" (६।१।१४६ पा०) इति निपातः । प्रश्नानवकाशे हेतुमाह ।—[निःस्पृहाणां] युष्मत्सदृशानाम् इत्यर्थः । [अस्मासु अधीनम्] आयत्तं [किमु ?] न किञ्चित् अस्मत्तो लभ्यमित्यर्थः । आधारत्वविवक्षायां सप्तमी । [तथापि कल्याणकरीम्] अस्मद्धितैकहेतुम् इत्यर्थः । निःस्पृहवृत्तेः पारार्थ्यादिति भावः । "कृञो हेतु" (३।२।२०पा०) इति टप्रत्यये ङीप् । अतः [ते गिरं श्रोतुमिच्छा मां] । मुखं वाक् अस्य अस्तीति मुखरो निरन्तरभाषी । "रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्" । (वा०) इति रः । "दुर्मुखे मुखराबद्धमुखौ" इत्यमरः । ततः च्विप्रत्ययः* [मुखरीकरोति] व्याहारयति इत्यर्थः । निःस्पृहस्य अपि ते वाक्यम् अस्मद्धितकरत्वात् श्रोतव्यमिति भावः ॥ ९ ॥

* कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः । (५।४।५० पा०) अभूततद्भाव इति वक्तव्यम् (वा०) ।

इत्युक्तवानुक्तिविशेषरम्यं
मनः समाधाय जयोपपत्तौ ।
उदारचेता गिरमित्युदारां
द्वैपायनेनाभिदधे नरेन्द्रः ॥ १० ॥
चिचीषतां जन्मवतामलघ्वीं
यशोऽवतंसामुभयत्र भूतिम् ।

इतीति ।—[ इति ] इत्थम् [ उक्तिविशेषरम्यम् ] उक्तिवैचित्र्यचारु यथा तथा [ उक्तवान् । उदारचेताः ] महामनाः [ नरेन्द्रो द्वैपायनेन ] व्यासेन । द्वीपमयनं स्थानं जन्मभूमिर्यस्य स द्वीपायनः स एव द्वैपायनः, तेन । "प्रज्ञादिभ्यश्च" ( ५।४ ३८पा० ) इति स्वार्थेऽण्प्रत्ययः । न अपत्यार्थे "नडादिभ्यः फक्" ( ४।१।९९ पा० )। तेषु एव पाठात् बाधितार्थत्वाच्च । [ जयोपपत्तौ मनः समाधाय ] जयसिद्धिम् अपेक्ष्य इत्यर्थः । [ इति ] वक्ष्यमाणप्रकाराम् [ उदाराम् ] अर्थवतीं [ गिरम् अभिदधे ] उक्तः । दुहादित्वात् अप्रधाने कर्म्मणि लिट् । "प्रधानकर्म्मण्याख्येये लादीनाहुर्द्विकर्म्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्म्मणः ॥" इति वचनात् ॥ १० ॥

आदौ तावत् तस्य माध्यस्थ्य भङ्गदोषं युग्मेन परिहरति, चिचीषतामिति ।—[ अलघ्वीं ] गुर्वीम् । "वोतो गुणवचनात्" ( ४।१।४४पा० ) इति ङीष् । [ यशोऽवतंसां ] कीर्त्तिभूषणाम् [ उभयत्र ] इह च अमुत्र च [ भूतिं ] श्रेयः [ चिचीषतां ] सञ्चेतुं संग्रहीतुमिच्छताम् । चिनोतेः सन्नन्तात् शतृप्रत्ययः । [ जन्मवतां ] शरीरिणां [ बन्धुषु ] विषये [ तुल्यरूपा ] एक-

अभ्यर्हिता बन्धुषु तुल्यरूपा
वृत्तिर्विशेषेण तपोधनानाम् ॥ ११ ॥
तथापि निघ्नं नृप! तावकीनैः
प्रह्वीकृतं मे हृदयं गुणौघैः।
वीतस्पृहाणामपि मुक्तिभाजां
भवन्ति भव्येषु हि पक्षपाताः ॥ १२ ॥ [युग्मम्]

विधा [ वृत्तिः ] व्यवहारः [ अभ्यर्हिता ] उचिता [ तपोधनानां ] तु अस्मत्सदृशानां [ विशेषेण ] नियमेन अभ्यर्हिता उचिता ॥ ११ ॥

तथापीति।—[ तथापि ] तुल्यवृत्तौ चित्तेऽपि हे [ नृप! तावकीनैः ] त्वदीयैः। "युष्मदस्मदोः अन्यतरस्यां खञ् च" ( ४।३।१पा० ) इति खञ् प्रत्ययः। "तवकममकौ एकवचने" ( ४।३।३पा० ) इति तवकादेशः। [ गुणौघैः प्रह्वीकृतम् ] आवर्जितं [ मे हृदयं निघ्नं ] त्वदायत्तम्। "अधीनो निघ्न आयत्तः" इत्यमरः। ननु निःस्पृहस्य कोऽयं पक्षपात इत्यत आह वीतेति।—[ वीतस्पृहाणां ] विरक्तानां [ मुक्तिभाजां ] मुमुक्षूणाम् [ अपि ] इत्यर्थः। [ भव्येषु ] भवन्तीति भव्याः साधवः। "भव्यगेय" (३।४।६८ पा०) इत्यादिना कर्त्तरि निपातः। तेषु [ पक्षपाताः ] स्नेहाः [ भवन्ति हि ]। न तु माध्वनुग्रहो महतां माध्यस्थ्यभञ्जक इति भावः ॥ १२ ॥

* यतः विरक्तानां महात्मनां खलु पक्षपाताः अवश्यं भवन्त्येव इति भवत्सु मदनुग्रहः नौदासीन्यभञ्जकः। अत्र सामान्येनविशेषसमर्थनरूपोऽर्थान्तरन्यासः।

सुता न यूयं किमु तस्य राज्ञः ?
सुयोधनं वा न गुणैरतीताः ? ।
यस्त्यक्तवान् वः स वृथा बलाद् वा
मोहं विधत्ते विषयाभिलाषः ॥ १३ ॥
जहातु नैनं कथमर्थसिद्धिः ?
संशय्य कर्णादिषु तिष्ठते यः ।

अथ नृपस्य गुणवत्तां प्रकटयितुं धृतराष्ट्रस्य दुश्चेष्टाम् उद्घाटयति, सुता इति ।—[यूयं तस्य राज्ञः] धृतराष्ट्रस्य [सुताः] पुत्राः [न किमु ?] अपि तु सुता एवेत्यर्थः । [गुणैः] शान्तिदानदाक्षिण्यादिभिः [सुयोधनं न अतीताः] न अतिक्रान्ताः [वा ?] अतीता एव इत्यर्थः । कर्त्तरि क्तः । असुतत्वम् अगुणत्वं च त्यागे हेतुः, युष्मासु तन्नास्ति इत्यर्थः । उपालम्भे कारणमाह, य इति ।—[यः] धृतराष्ट्रः [वः] युष्मान् [वृथा] निष्कारणमेव [त्यक्तवान्] । यदि वयं सुताः गुणाधिकाश्च तर्हि कथम् अत्याक्षीत् तत्राह, बलादिति ।—[सः विषयाभिलाषः] भोगतृष्णा [बलाद् वा] बलादिव "वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये" इति विश्वः । [मोहम्] अविवेकं [विधत्ते] विषयाभिलाषातिरिक्तो न कश्चित् युष्मत्त्यागहेतुः अस्ति इत्यर्थः । अत्र कार्य्यकारणसमर्थनरूपोऽर्थान्तरन्यासः ॥ १३ ।

अथ राज्ञ उत्साहवर्द्धनाय शत्रोर्हानिं सूचयति, जहात्विति ।—[एनं] धृतराष्ट्रम् [अर्थसिद्धिः कथं न जहातु ?] जहातु एव इत्यर्थः । "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च"

असाधुयोगा हि जयान्तरायाः
प्रमाथिनीनां विपदां पदानि ॥ १४ ॥
पथश्च्युतायां समितौ रिपूणां
धर्म्यां दधानेन धुरं चिराय ।
त्वया विपत्स्वप्यविपत्तिरम्यम्
आविष्कृतं प्रेम परं गुणेषु ॥ १५ ॥

( ३।३।१६३ पा० ) इति प्राप्तकाले लोट् । तस्य हानिकालः प्राप्त इत्यर्थः । कुतः ? [ यः ] धृतराष्ट्रः [ संशय्य ] सन्दिह्य [ कर्णादिषु तिष्ठते ] । कर्णादीन् दुर्मन्त्रिणः सन्दिग्धार्थे निर्णेतृत्वेन अवलम्बते इत्यर्थः । "प्रकाशनस्थेयाख्ययोश्च" ( १।३।२३ पा० ) इति स्थेयाख्यायाम् आत्मनेपदम् । तिष्ठतेऽस्मिन्निति स्थेयो विवादपदनिर्णेता । तथाहि [ असाधुयोगाः ] दुर्जनसंसर्गाः [ जयान्तरायाः ] जयविघातकाः । किञ्च [ प्रमाथिनीनाम् ] उन्मूलनशीलानां [ विपदां पदानि ] स्थानानि । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । न केवलं जयघातिनः किन्तु अनर्थकारिणश्च इत्यर्थः । धृतराष्ट्रोऽपि दुर्जनविधेयत्वाद् विनङ्क्ष्यतीति भावः ॥ १४ ॥ *

एवं शत्रोः अनर्थं सूचयित्वा राज्ञोऽर्थसिद्धिं सूचयति, पथ इति ।—[ रिपूणां समितौ ] सभायाम् । "सभासमितिसंसदः" इत्यमरः । [ पथश्च्युतायां ] मार्गाद् भ्रष्टायाम् । दुरात्मनो दुःशासनस्य स्त्रीग्रहणसाहसम् अङ्गीकृतवत्याम् इत्यर्थः [ चिराय धर्म्यां ] धर्मात् अनपेताम् । "धर्मपथ्यर्थन्यायादनपेते"

* अत्र कार्य्यकारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ।

विधाय विध्वंसमनात्मनीनं
शमैकवृत्तेर्भवतश्छलेन ।
प्रकाशितत्वन्मतिशीलसाराः
कृतोपकारा इव विद्विषस्ते ॥ १६ ॥

(४।४।८२पा०) इति यत्प्रत्ययः । [ धुरं ] भारं [ दधानेन ] * कृच्छ्रेषु अपि धर्मात् अचलता इत्यर्थः । [ त्वया विपत्स्वपि अविपत्ति ] अविनाशि अत एव [ रम्यं गुणेषु ] शान्त्यादिषु विषये [ परम् ] उत्कृष्टं [ प्रेम आविष्कृतं ] प्रकटीकृतम् । दुःसहमपि सोढ़वता त्वया साधुकृतमिति भावः ॥ १५ ॥

विधायेति ।—किञ्च [ शमैकवृत्तेः ] शम एव एका मुख्या वृत्तिर्यस्य तस्य अपरोपतापिन इत्यर्थः । [ भवतः छलेन ] कपटेन [अनात्मनीनं] आत्मने हितः आत्मनीनः, स न भवतीति अनात्मनीनः, स्वस्य एव अनर्थहेतुरित्यर्थः, तम् । "आत्मन्विश्व-जनभोगोत्तरपदात् खः" ( ५।१।८पा० ) इति खप्रत्ययः । [ विध्वंसम् ] अपकारं [विधाय] कृत्वा [प्रकाशितत्वन्मतिशील-साराः ] प्रकाशितः प्रख्यापितः त्वन्मतिशीलयोः तव प्रज्ञा-स्वभावयोः सारः प्रकर्षो यैः ते तथोक्ताः । [ ते ] तव [ विद्विषः कृतोपकारा इव ] उपकृतवन्त इव, जाता इति शेषः । अपकारो-ऽपि उपकाराय एव संवृत्तः, यदेषां दौर्जन्यं युष्मत्सौजन्यं च जगति सुव्यक्तम् आसीदित्यर्थः । विद्यमानस्य अपि सुजनस्य चन्दनदारुण इव गुणाः परिभव इव प्रचुरीभवन्तीति भावः ॥ १६ ॥

* लटः शतृशानचावप्रथमासमानाधिकरणे ( ३।२।१२४पा० ) इति शानच् ।

लभ्या धरित्री तव विक्रमेण
ज्यायांश्च वीर्य्यास्त्रबलैर्विपक्षः ।
अतः प्रकर्षाय विधिर्विधेयः
प्रकर्षतन्त्रा हि रणे जयश्रीः ॥ १७ ॥
त्रिःसप्तकृत्वो जगतीपतीनां
हन्ता गुरुर्यस्य स जामदग्न्यः ।

अथ प्रयोजनान्तरमाह, लभ्येति ।—[ तव ] त्वया इत्यर्थः "कृत्यानां कर्त्तरि वा" ( २।३।६१ पा० ) इति षष्ठी । [ धरित्री विक्रमेण लभ्या ] । प्राप्या । न च सुलभ्या तं विना इत्याह ।—[ विपक्षश्च ] शत्रुरपि [ वीर्य्यास्त्रबलैः ] वीर्य्यं शौर्य्यम्, अस्त्राणि आग्नेयादीनि, बलानि सैन्यानि तैः [ ज्यायान् ] प्रशस्यतरः, अधिकतर इति यावत् । ज्येष्ठस्य "ज्यादादीयसः" ( ६।४।१६० पा० ) इति ज्यादेशः । [ अतः प्रकर्षाय ] आधिक्याय [ विधिः ] उपायः [ विधेयः ] कर्त्तव्यः । कुतः ? [ हि ] यस्मात् [ रणे जयश्रीः प्रकर्षतन्त्रा ] प्रकर्षप्रधाना, उत्कर्षायत्ता इत्यर्थः । "तन्त्रं प्रधाने सिद्धान्ते" इत्यमरः बलिन एव जयः, न तु दुर्बलस्य इति भावः ॥ १७ ॥

अथ "त्रिः" इत्यादिना श्लोकचतुष्टयेन विपक्षज्यायस्त्वं वर्णयति, त्रिःसप्तेति ।—त्रिरावृत्तान् सप्त वारान् [ त्रिःसप्तकृत्वः ] एकविंशतिकृत्वः इत्यर्थः । त्रिःसप्तशब्दयोः सुप्सुपेति समासः । "संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" (५।४।१७ पा०) इति कृत्वसुच् प्रत्ययः । [ जगतीपतीनां ] महीपतीनां [ हन्ता ] नाशकः [ गुरुः ] अस्त्रवेदोपदेष्टा [ सः ] प्रसिद्ध इत्यर्थः ।

वीर्य्याविधूतः स्म तदा विवेद
प्रकर्षमाधारवशं गुणानाम्॥ १८॥
यस्मिन्ननैश्वर्य्यकृतव्यलीकः
पराभवं प्राप्त इवान्तकोऽपि।
धुन्वन् धनुः कस्य रणे न कुर्य्यात्
मनो भयैकप्रवणं स भीष्मः?॥ १९॥

अत एव यच्छब्दानपेक्षत्वम्। तदुक्तं काव्यप्रकाशे—"प्रक्रान्त-प्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते" इति। जमदग्नेरपत्यं पुमान् [जामदग्न्यः] "गर्गादिभ्यो यञ्" (४।१।१०५पा०) इति यञ्प्रत्ययः। [यस्य] भीष्मस्य [वीर्य्याविधूतः] विक्रमाभिभूतः अम्बिकास्वयंवरे इत्यर्थः। [तदा] भङ्गप्राप्तिसमये [गुणानां] शौर्य्यादीनां [प्रकर्षम्] अतिशयं, वीर्य्यातिशयमित्यर्थः [आधारवशम्] आश्रयाधीनं [विवेद] जज्ञे [स्म]। स्वविद्यायाः स्वशिष्ये भीष्मे स्वस्मात् अपि प्रकर्षाधानदर्शनादिति भावः। "स्म पादपूरणे भूतेऽर्थे च" इति विश्वः॥ १८॥

यस्मिन्निति।—[यस्मिन्] भीष्मे विषये [अनैश्वर्य्यकृत-व्यलीकः] अनीश्वरस्य भावोऽनैश्वर्य्यम् असामर्थ्यम्। "नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्" (७।३।३० पा०) इति विकल्पान्नञः पूर्वपदवृद्ध्यभावः। तेन कृतव्यलीको जनित-वैलक्ष्यः। "दुःखे वैलक्ष्ये व्यलीकम्" इति यादवः। [अन्तकोऽपि] यमोऽपि [पराभवं प्राप्त इव] भीष्मस्य इच्छामरणत्वात् अन्त-कोऽपि पराजित इव आस्ते, किमुत अन्यः? इति भावः।

सृजन्तमाजाविषुसंहतीर्वः
सहेत कोपज्वलितं गुरुं कः ? ।
परिस्फुरल्लोलशिखाग्रजिह्वं
जगज्जिघत्सन्तमिवान्तवह्निम् ॥ २० ॥
निरीक्ष्य संरम्भनिरस्तधैर्य्यं
राधेयमाराधितजामदग्न्यम् ।

[ स भीष्मो रणे धनुर्धुन्वन् ] कम्पयन् [कस्य मनो भयैकप्रवणं ] भये एकप्रवणम् एकोन्मुखं, शिवभागवतवत् समासः । [ न कुर्य्यात् ? ] सर्वस्य अपि मनसि भयं कुर्य्यादेवेत्यर्थः ॥ १८ ॥

सृजन्तमिति ।—[ आजौ ] रणे [ इषुसंहतीः ] वाणसङ्घान् [ सृजन्तं ] वर्षन्तं [ कोपज्वलितम् ] अत एव [ परिस्फुरल्लोल शिखाग्रजिह्वं ] परिस्फुरन्त्यो लोलाश्च शिखाग्राणि एव जिह्वा यस्य तं तथोक्तं [ जगत् ] लोकं [ जिघत्सन्तम् ] अत्तुम् इच्छन्तम् । अदेः सन्नन्तात् शतृप्रत्ययः । "लुङ्सनोर्घस्लृ" ( २।४।३७ पा० ) इति घस्लादेशः । [ अन्तवह्निं ] कालाग्निम् [ इव ] स्थितं [ गुरुं ] द्रोणं [वः] युष्माकं मध्ये [ कः सहेत ? ] सोढ़ुं शक्नुयात् ? न कोऽपीत्यर्थः । "शकि लिङ् च" ( ३।३।१७२ पा० ) इति शक्यार्थे लिङ् ॥ २० ॥

निरीक्ष्येति ।—[संरम्भनिरस्तधैर्य्यं] संरम्भेण कोपेन निरस्तं त्याजितं धैर्य्यं निर्विकारचित्तत्वं येन तं तथोक्तम् । आटोपेन एव परधैर्य्यापहारिणम् इत्यर्थः । [ आराधितजामदग्न्यं ] शुश्रूषितभार्गवं जामदग्न्यात् अधिगतास्त्ररहस्यमित्यर्थः । [ राधेयं ] राधासुतं कर्णम् । "स्त्रीभ्यो ढक्" (४।१।१२० पा०)।

असंस्तुतेषु प्रसभं भयेषु
जायेत मृत्योरपि पक्षपातः ॥ २१ ॥
यया समासादितसाधनेन
सुदुश्चरामाचरता तपस्याम् ।

[ निरीक्ष्य मृत्योरपि असंस्तुतेषु ] अपरिचितेषु । "संस्तवः स्यात्परिचयः" इत्यमरः । [ भयेषु प्रसभं पक्षपातः ] परिचयः [ जायेत ] मृत्युरपि अस्मात् बिभीयात् किमुत अन्यः ? इति भावः । सम्भावनायां लिङ् । अत्र जनिक्रियापेक्षया समानकर्त्तृकत्वाभावेऽपि पक्षपातक्रियापेक्षया तत्सम्भवात् निरीक्ष्येति ल्यब् निर्देशः समर्थनीयः । "प्रधानोपसर्जनभावस्त्वप्रयोजकः" इति व्यक्तिविवेककारः । अत्र भयसम्बन्धरहितस्य मृत्योः भयसम्बन्धाभिधानात् असम्बन्धे सम्बन्धरूपा अतिशयोक्तिः अलङ्कारः ॥ २१ ॥

अथ अनन्तरं करणीयम् आगमनप्रयोजनञ्च युग्मेनाह, ययेति ।—[ यया ] विद्यया करणेन [ सुदुश्चराम् ] अतिदुष्करां [ तपस्यां ] तपश्चर्य्याम् । "कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः" (३।१।१५ पा०) इति क्यङ् । "अः प्रत्ययात्" (३।३।१०२ पा०) इति स्त्रियाम् अ-प्रत्ययः । [आचरता] पशुपतिं प्रति तपः कुर्वता इत्यर्थः । अत एव [ समासादितसाधनेन ] समासादितं प्राप्तं साधनं पाशुपतास्त्ररूपं येन तेन [ कपिकेतनेन ] कपिः हनुमान् केतनं चिह्नं यस्य तेन, अर्जुनेन इत्यर्थः । [ दुरापम् ] अन्यस्य दुर्लभं [ वीर्य्यं ] तेजः [ समवाप्य एते ] पूर्वोक्ता भीष्मादयः [ उन्मूलितारः ] उन्मूलयिष्यन्ते । उन्मूलयतेर्ण्यन्तात् कर्मणि लुट् । अत्र चिण्वदिडागमेऽपि तस्य "असिद्धवत् अत्रा-

एते दुरापं समवाप्य वीर्य्यम्
उन्मूलितारः कपिकेतनेन ॥ २२ ॥
महत्त्वयोगाय महामहिम्नाम्
आराधनीं तां नृप ! देवतानाम् ।
दातुं प्रदानोचित ! भूरिधाम्नीम्
उपागतः सिद्धिमिवास्मि विद्याम् ॥२३॥

भात्" (६।४।२२ पा०) इति असिद्धत्वात् "णेरनिटि" (६।४।५१ पा०) इति णिलोपः। तन्निमित्तस्य एव "अनिटि" इति निषेधात्। उक्तञ्च—"चिण्वदृद्धिर्युक् च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणोति। इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती" ॥ इति ॥ २२ ॥

महत्त्वेति।—हे [ नृप ! महत्त्वयोगाय ] प्रकर्षलाभाय [ महामहिम्नां ] महानुभावानां [ देवतानाम् ] इन्द्रादीनाम् आराध्यते अनयेति [ आराधनीं तां ] प्रसादयित्रीम् इत्यर्थः। करणे ल्युट् ङीप्। [ भूरिधाम्नीं ] महाप्रभावाम्। "धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः" इति विश्वः। "अन उपधालोपिनोऽन्यतरस्याम्" (४।१।२८ पा०) इति वा ङीप्। [ विद्याम् ] इन्द्रमन्त्ररूपां [ सिद्धिं ] साक्षात्कार्य्यसिद्धिम् [इव] इति विद्यायाः अमोघत्वोक्तिः। हे [ प्रदानोचित ! ] दानपात्रभूत ! फलभोक्तृत्वात् अस्य पात्रत्वोक्तिः। [ दातुम् उपागतोऽस्मि ] ॥ २३ ॥

इत्युक्तवन्तं व्रज साधयेति
प्रमाणयन् वाक्यमजातशत्रोः ।
प्रसेदिवांसं तमुपाससाद
वसन्निवान्ते विनयेन जिष्णुः ॥ २४ ॥

निर्याय विद्याऽथ दिनादिरम्याद्-
बिम्बादिवार्कस्य मुखात् महर्षेः ।
पार्थाननं वह्निकणावदाता
दीप्तिः स्फुरत् पद्ममिवाभिपेदे ॥ २५ ॥

इतीति ।—[इति उक्तवन्तं प्रसेदिवांसं] प्रसन्नम् । "भाषायां सदवसश्रुवः" (३।२।१०८ पा०) इति क्वसुः । [तं] मुनिं [जिष्णुः] जयशीलोऽर्जुनः । "ग्लाजिस्थश्च" (३।२।१३८ पा०) इति ग्स्नुप्रत्ययः । [व्रज साधय] अनुतिष्ठ [इति] एवंरूपम् [अजातशत्रोः] धर्मराजस्य स्वयम् अविद्वेषणशीलत्वात् इयं संज्ञा । [वाक्यं प्रमाणयन्] तदादिष्टः सन्नित्यर्थः । [अन्ते-वसन्] छात्रः [इव] "छात्रान्तेवासिनौ शिष्ये" इत्यमरः । [विनयेन] अनौद्धत्येन [उपाससाद] समीपं प्राप ॥ २४ ॥

निर्यायेति ।—[अथ वह्निकणावदाता] स्फुलिङ्गवत् उज्ज्वला, देवतासान्निध्यादिति भावः । [विद्या] इन्द्रमन्त्ररूपा [दिनादि-रम्यात् अर्कस्य] प्रभातभास्करस्य [बिम्बादिव महर्षेः] व्यासस्य [मुखात् निर्याय] निर्गत्य "समासेऽनञ्पूर्वे क्त्वो ल्यप्" (७।१।३७पा०) । [दीप्तिः] अर्कदीधितिः [स्फुरद्] विकसत् [पद्ममिव पार्थाननम्] अर्जुनस्य मुखम् [अभिपेदे] प्रविष्टा ॥ २५ ॥

योगञ्च तं योग्यतमाय तस्मै
तपःप्रभावाद् विततार सद्यः।
येनास्य तत्त्वेषु कृतेऽवभासे
समुन्मिमीलेव चिराय चक्षुः॥ २६॥
आकारमाशंसितभूरिलाभं
दधानमन्तःकरणानुरूपम्।

योगं चेति।—सः [योग्यतमाय] अर्हतमाय [तस्मै] पार्थाय [तं] वक्ष्यमाणमहिमानं [योगं] ध्यानविधिं च। "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः। [तपःप्रभावात् सद्यः विततार] ददौ, चिरकालग्राह्यमपीति भावः। [येन] योगेन [तत्त्वेषु] प्रकृतिमहदादिषु। तथा च। "मूलप्रकृतिः महान् अहङ्कारो मनश्च पञ्च तन्मात्राणि पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च महाभूतानि" इति चतुर्विंशतितत्त्वानि। तत्र [अवभासे] साक्षात्कारे [कृते] सति [अस्य] अर्जुनस्य [चक्षुः] अक्षि [चिराय समुन्मिमीलेव] उन्मिषितमिव इत्युत्प्रेक्षा। तदा तस्य कोऽपि महान् अखिलाज्ञानभञ्जनः तत्त्वावभासः चिरात् अन्धस्य दृष्टिलाभ इव अभवदिति भावः॥ २६॥

आकारमिति।—[आशंसितभूरिलाभम्] आशंसितः आख्यातो भूरिलाभो अनेकश्रेयःप्राप्तिः येन तं तथोक्तं, महाभाग्यसूचकम् इत्यर्थः। [अन्तःकरणानुरूपम्] अन्तःकरणशब्देन तद्वृत्तिरुत्साहो लक्ष्यते। तदनुरूपं तदनुकूलम्, उत्साहानुगुणव्यापारक्षमम् इत्यर्थः। [आकारं] मूर्त्तिं [दधानं तम्]

नियोजयिष्यन् विजयोदये तं
तपःसमाधौ मुनिरित्युवाच ॥ २७ ॥

अनेन योगेन विवृद्धतेजाः
निजां परस्मै पदवीमयच्छन् ।
समाचराचारमुपात्तशस्त्रो
जपोपवासाभिषवैर्मुनीनाम् ॥ २८ ॥

करिष्यसे यत्र सुदुश्चराणि
प्रसत्तये गोत्रभिदस्तपांसि ।

अर्जुनं [ मुनिर्विजयोदये ] विजयफलके [ तपःसमाधौ ] तपोनियमे । "समाधिर्नियमे ध्याने मौने चैव समर्थने" इति विश्वः । [ नियोजयिष्यन् ] नियोजयितुम् इच्छन्नित्यर्थः । "लृट् शेषे च" ( ३।३।१३ पा० ) इति लृट् । "लृटः सद्वा" ( ३।३।१४ पा० ) इति सत्-प्रत्ययः । [ इति ] वक्ष्यमाणम् [ उवाच ] ॥ २७ ॥

अनेन इति ।—[ अनेन ] स्वोपदिष्टेन [ योगेन विवृद्धतेजाः निजां पदवीं परस्मै अयच्छन् ] परस्य प्रवेशम् अयच्छन्नित्यर्थः । [ उपात्तशस्त्रः ] गृहीतायुधः सन् । हे अर्जुन ! [जपोपवासाभिषवैः ] स्वाध्यायानशनस्नानैः [ मुनीनाम् आचारं समाचर ] अनुतिष्ठ ॥ २८ ॥

क्षेत्रविशेषे तपःसिद्धिः इति आशयेन तं निदर्शयन्नाह, करिष्यसे इति ।—[ यत्र ] शिलोच्चये [ गोत्रभिदः ] इन्द्रस्य [ प्रसत्तये ] प्रसादाय [ सुदुश्चराणि तपांसि करिष्यसे, चारु-

शिलोच्चयं चारुशिलोच्चयं तम्
एष चणात् नेष्यति गुह्यकस्त्वाम् ॥२९॥
इति ब्रुवाणेन महेन्द्रसूनुं
महर्षिणा तेन तिरोबभूवे।
तं राजराजानुचरोऽस्य साक्षात्
प्रदेशमादेशमिवाधितष्ठौ ॥ ३० ॥
कृतानतिर्व्याहृतसान्त्ववादे
जातस्पृहः पुण्यजनः स जिष्णौ।

शिलोच्चयं] रम्यशिखरं [तं शिलोच्चयं] गिरिम् इन्द्रकीलरूपम्। "अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः" इत्यमरः। [त्वाम् एष गुह्यकः] यक्षः। अनन्तरम् एव अस्य पुरःप्रादुर्भावात् एष इति निर्देशः। [क्षणात् नेष्यति] प्रापयिष्यति ॥ २९ ॥

इतीति।—[इति] इत्थं [महेन्द्रसूनुम्] अर्जुनं [ब्रुवाणेन] उक्तवता। "वर्त्तमानसामीप्ये" (३।३।१३१ पा०) इति भूते वर्त्तमानवत् प्रत्ययः तिरोधानस्य अविलम्बसूचनार्थः। [तेन महर्षिणा] व्यासेन [तिरोबभूवे] अन्तर्दधे, भावे लिट्। [राजराजानुचरः] राजराजो यक्षराजः। "राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः" इति विश्वः। तस्य अनुचरः पूर्वोक्तयक्षः [अस्य] मुनेः [आदेशं साक्षात् इव तं प्रदेशम्] अर्जुनाधिष्ठितस्थानम् [अधितष्ठौ] प्राप्त इत्यर्थः। "स्थादिष्व-भ्यासेन चाभ्यासस्य" (८।३।६४ पा०) इति षत्वम् ॥ ३० ॥

कृतेति।—[स पुण्यजनः] यक्षः [कृतानतिः] कृतप्रणामः। [व्याहृतसान्त्ववादः] व्याहृतः उक्तः सान्त्ववादः प्रियवचनं येन

इयाय सख्याविव सम्प्रसादं
विश्वासयत्याशु सतां हि योगः ॥ ३१ ॥
अथोष्णभासेव सुमेरुकुञ्जान्
विहीयमानानुदयाय तेन ।
बृहद्द्युतीन् दुःखकृतात्मलाभं
तमः शनैः पाण्डुसुतान् प्रपेदे ॥ ३२ ॥

---

तस्मिन् । "व्याहार उक्तिर्लपितम्" इत्यमरः । [ जिष्णौ ] अर्जुने [जातस्पृहः] जाता स्पृहा आकाङ्क्षा यस्य तथा, जातानुरागः सन्, [सख्यौ] सुहृदि [इव] । "अथ मित्रं सखा सुहृत्" इत्यमरः । [ सम्प्रसादं ] विस्रम्भम् [ इयाय ] प्राप । [ हि ] तथाहि । [ सतां ] साधूनां [ योगः ] सङ्गतिः [ आशु विश्वासयति ] विश्वासं जनयति । सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः ॥ ३१ ॥

अथेति ।—[ अथ उष्णभासा ] सूर्य्येण [ उदयाय ] पुनः उद्गमाय [ विहीयमानान् ] त्यज्यमानान् । इति तमःप्राप्तिकारणोक्तिः । [ बृहद्द्युतीन् ] सौवर्णत्वात् दीप्यमानान् इत्यर्थः । इति तमसः सङ्कोचकारणोक्तिः । [ सुमेरुकुञ्जान् इव] । अत्र सुमेरुग्रहणं कुञ्जानां सौवर्णत्वद्योतनार्थम् । [ तेन ] अर्जुनेन उदयाय श्रेयसे विहीयमानान् बृहद्द्युतीन् अनेकबुद्धिप्रकाशान् । पूर्ववद्विशेषणद्वयस्य प्रयोजनम् अनुसन्धेयम् । [ पाण्डुसुतान् ] चतुर इति शेषः । [ दुःखकृतात्मलाभं ] दुःखेन कृच्छ्रेण कृतः उपपादितः आत्मलाभः उत्पत्तिः यस्य तत् तथोक्तम्, तेषां विवेकित्वात् कथञ्चिद् लब्धोदयम् इत्यर्थः । [ तमः ] शोको अन्धकारश्च । "तमोऽन्धकारे स्वर्भानौ" "तमः

असंशयालोचितकार्य्यनुन्नः
प्रेम्णा समानीय विभज्यमानः ।
तुल्याद् विभागादिव तन्मनोभिः
दुःखातिभारोऽपि लघुः स मेने ॥ ३३ ॥

शोके गुणान्तरे" इत्युभयत्रापि विश्वः । [शनैः] मन्दं [प्रपेदे] । तेषां विवेकित्वाद् भीतभीतमिवेति भावः । अत्र तमःशब्दस्य श्लिष्टत्वात् श्लेषानुप्राणिता इयम् उपमा ॥ ३२ ॥

असंशयेति ।—[ असंशयालोचितकार्य्यनुन्नः ] असंशयम् असन्दिग्धं यथा तथा आलोचितं विवेचितं यत् कार्य्यं तेन नुन्नो निरस्त इति लघुत्वहेतूक्तिः । "नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्" ( ८।२।५६ पा० ) इति निष्ठानत्वम् । कार्य्यगौरवम् आलोच्य निरस्त इत्यर्थः । तथापि [ प्रेम्णा ] भ्रातृवात्सल्येन कर्त्रा । [ समानीय ] पुनः आकृष्य [ विभज्यमानः ] समशोक भागीक्रियमाणः । तुल्येन प्रेम्णा तुल्यदुःखत्वं भवतीति भावः । [ सः ] पूर्वोक्तः [ दुःखातिभारोऽपि ] दुःखम् एव अतिभारोऽपि, अतिभारभूतम् अपि दुःखमित्यर्थः । [ तन्मनोभिः ] तेषां चतुर्णां पार्थानां मनोभिः [ तुल्यात् विभागादिव ] पूर्वोक्तात् प्रेमकृतात् समविभागात् इवेत्यर्थः । वस्तुतस्तु विवेकात् एवेति भावः । पुनः विभागग्रहणं तस्य हेतुत्वोत्प्रेक्षार्थम् अनुवादाददोषः । [ लघुर्मेने ] अमानि । यथा एकोऽनेकधा विभज्य बहुभिः उह्यमानो महान् अपि भारो लघुर्मन्यते तद्वदित्यर्थः ॥ ३३ ॥

धैर्य्येण विश्वास्यतया महर्षेः
तीव्रादरातिप्रभवाच्च मन्योः ।
वीर्य्यञ्च विद्वत्सु सुते मघोनः
स तेषु न स्थानमवाप शोकः ॥ ३४ ॥
तान् भूरिधाम्नश्चतुरोऽपि दूरं
विहाय यामानिव वासरस्य ।

अथैवं प्रेम्णा आक्रम्यमाणम् अपि शोकं विवेकी निर्जिगायेत्याह, धैर्य्येणेति ।—[ धैर्य्येण ] तेषां निसर्गतो निर्विकारचित्तत्वेन तथा [ महर्षेः ] व्यासस्य प्रवर्त्तकस्य इति शेषः । [ विश्वास्यतया ] अश्रेयवचनत्वेन इत्यर्थः । [ अरातिप्रभवात् ] अरातिहेतुकात् [ तीव्राद् ] दुःसहात् [ मन्योः ] क्रोधाद्धेतोः ८.ा अर्जुनप्रभावपरिज्ञानाच्चेति हेत्वन्तरं विशेषणमुखेनाह,—[ मघोनः सुते ] अर्जुने [ वीर्य्यञ्च ] । "न लोक" (२।३।६९ पा०) इत्यादिना षष्ठीप्रतिषेधः । [ विद्वत्सु ] ज्ञातवत्सु इति यावत् । "विदेः शतुर्वसुः" (७।१।३६ पा०) इति वैकल्पिको वस्वादेशः । [ तेषु ] पार्थेषु [ स शोकः स्थानं ] स्थितिं [ न अवाप ] न प्राप ॥ ३४ ॥

तानिति ।—[ तत् ] पार्थात्यागवत् शर्म सुखम् । "शर्मशातसुखानि च" इत्यमरः । तद्विरुद्धम् [ अशर्म ] दुःखम् । "नञ्" ( २।२।६ पा० ) इति नञ्समासः । [ भूरिधाम्नः ] अतितेजस्विन इति हानिहेतुत्वोक्तिः । [ चतुरः तान् ] पार्थान् [ अपि वासरस्य ] भूरिधाम्नः चतुरः [ यामान् ] प्रहरान् [ इव, दूरं विहाय ] त्यक्त्वा [ एकौघभूतम् ] एकराशिभूतं सत् । "अस्या-

एकौघभूतं तदशर्म कृष्णां
विभावरीं ध्वान्तमिव प्रपेदे॥ ३५ ॥

तुषारलेखाकुलितोत्पलाभे
पर्य्यश्रुणी मङ्गलभङ्गभीरुः।
अगूढ़भावाऽपि विलोकने सा
न लोचने मीलयितुं विषेहे॥ ३६ ॥

अकृत्रिमप्रेमरसाभिरामं
रामार्पितं दृष्टिविलोभि दृष्टम्।

दयः कृतादिभिः" (२।१।५८) इत्यर्थे कर्मधारयः। "श्रेण्यादिराकृतिगणः" इति शाकटायनः। कृष्णां [विभावरीं] कृष्णपक्षरात्रिं [ध्वान्तमिव, कृष्णां] द्रौपदीं [प्रपेदे] प्राप॥ ३५ ॥

तुषारेति।—[सा] द्रौपदी [विलोकने] अर्जुनावलोकने [अगूढ़भावा] अगूढ़ाभिप्राया [अपि] स्फुटाभिलाषिणी इति यावत्। :"भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु" इति वैजयन्ती। [मङ्गलभङ्गभीरुः] मङ्गलहानेः भीता सती [पर्य्यश्रुणी] परिगताश्रुके, वाष्पावृते इत्यर्थः। अत एव [तुषारलेखाकुलितोत्पलाभे] हिमबिन्दुसहिते इन्दीवरसन्निभे इति उपमालङ्कारः। [लोचने मीलयितुं न विषेहे] न शशाक। अश्रुणः दृष्ट्यावरकत्वेऽपि तन्निपातस्य अमङ्गलत्वात् तन्निर्वर्त्तकं निमीलनं सा न चकार इत्यर्थः॥ ३६ ॥

अकृत्रिमेति।—[इन्द्रसूनुः] अर्जुनः [अकृत्रिमप्रेमरसाभिरामं] क्रियया निर्वृत्तः कृत्रिमः। "ड्वितः क्त्रिः" (३।३।८८ पा०)

मनःप्रसादाञ्जलिना निकामं
जग्राह पाथेयमिवेन्द्रसूनुः ॥ ३७ ॥
धैर्य्यावसादेन हृतप्रसादा
वन्यद्विपेनेव निदाघसिन्धुः ।
निरुद्धवाष्पोदयसन्नकण्ठम्
उवाच कृच्छ्रादिति राजपुत्री ॥ ३८ ॥

इति क्तिः । "क्तेर्मम्नित्यम्" (वा०) इति मप्प्रत्ययः । तद्विरुद्धं, प्रेमैव रसः । अकृत्रिमेण प्रेमरसेन अभिरामम् । अन्यत्र—प्रेमरसेन मधुरादिना च अभिरामम् । [रामार्पितं] रामया रमण्या अर्पितम् । दृष्टिं विलोभयतीति [दृष्टिविलोभि] दृष्टिप्रियम् इत्यर्थः । [दृष्टं] दर्शनम् । "नपुंसके भावे क्तः" (३।३।११४ पा०) । मनःप्रसादः प्रसन्नं मन इत्यर्थः । सोऽञ्जलिरिव इति उपमितसमासः । तेन [मनःप्रसादाञ्जलिना] । पथि साधु [पाथेयं] शम्बलम् [इव] । "पथ्यतिथिवसतिस्वपतेर्ढञ्"(४।४।१०४ पा०) । [निकामम्] अतिशयेन [जग्राह] । रामार्पितं पाथेयं पथि क्षेमाय भवति इति आगमः ॥ ३७ ॥

धैर्य्येति ।—[वन्यद्विपेन] वन्यग्रहणम् उच्छृङ्खलत्वद्योतनार्थम् । [निदाघसिन्धुः] ग्रीष्मनदी [इव] । निदाघग्रहणं दौर्बल्यद्योतनार्थम् । [धैर्य्यावसादेन] धैर्य्यभ्रंशेन कर्त्रा । [हृतप्रसादा] हृतनैर्म्मल्या, क्षोभं गमिता इत्यर्थः । [राजपुत्री] क्षत्रियसुता द्रौपदी । अतः क्षात्रयुक्तम् एव वक्ष्यति इति भावः । [निरुद्धवाष्पोदयसन्नकण्ठं] निरुद्धवाष्पोदयं संरुद्धरोदनं, सन्नकण्ठं हीनकण्ठस्वरम् । अथ तयोः उभयोः कृतवहुव्रीह्योः क्रिया-

मग्नां द्विषच्छद्मनि पङ्कभूते
सम्भावनां भूतिमिवोद्धरिष्यन् ।
आधिद्विषामा तपसां प्रसिद्धे:
अस्मद् विना मा भृशमुन्मनीभू: ॥ ३९ ॥
यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसङ्ख्यामतिवर्त्तितुं वा ।

विशेषणयो: विशेषणसमास: । [ कृच्छ्रात् ] कथञ्चित् [ इति ] वक्ष्यमाणम् [ उवाच ] ॥ ३८ ॥

मग्नामिति ।—[ पङ्कभूते ] पङ्कोपमिते । "भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयो:" इति विश्व: । [ द्विषच्छद्मनि ] शत्रुकपटे [ मग्नां ] दुरुद्धराम् इत्यर्थ: । [सम्भावनां] योग्यतां, गौरवम् इति यावत् । [ भूतिं ] सम्पदम् [ इव ] । "भूतिर्भस्मनि सम्पदि" इत्यमर: । [ उद्धरिष्यन् ] उद्धारक: त्वम् इति शेष: । [ आधिद्विषां ] दु:खच्छिदां [ तपसाम् आ प्रसिद्धे: ] सम्यक्सिद्धिपर्य्यन्तम् [ अस्मद् विना ] अस्माभि: विना इत्यर्थ: । "पृथग्विना" ( २।३।३२ पा० ) इत्यादिना विकल्पात् पञ्चमी । [भृशं मा उन्मनीभू:] अस्मद्विरहाद् दुर्मना मा भू: इत्यर्थ: । दौर्मनस्यस्य तप:परिपन्थित्वात् इति भाव: । "माङि" ( ३।३।१७५ पा० ) इति आशीरर्थे लुङ् । "न माङ्योगे" ( ६।४।७४ पा० ) इत्यडागमप्रतिषेध: । अनुन्मना: उन्मना: सम्पद्यमान: (भूत:) उन्मनी । अभूततद्भावे च्वि: । "अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च" ( ५।४।५१ पा० ) इति सकारलोप: । "अस्य च्वौ" ( ७।४।३२ पा० ) इतीकार: ॥ ३९ ॥

निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ४० ॥
लोकं विधात्रा विहितस्य गोप्तुं
क्षत्रस्य मुष्णन्.वसु जैत्रमोजः।
तेजस्वितायां विजयैकवृत्तेः
निघ्नन् प्रियं प्राणमिवाभिमानम् ॥ ४१ ॥

अथ अनौत्सुक्यदार्ढ्यार्थं तस्य सर्वार्थसिद्धिनिदानत्वमाह, यश इति।—[ यशः अधिगन्तुं ] कीर्त्तिं लब्धुम् इत्यर्थः। [ सुखलिप्सया ] सुखस्य लिप्सया लब्धुमिच्छया [ वा। मनुष्य-संख्यां ] मनुष्यगणनाम् [ वा अतिवर्त्तितुम् ] अतिक्रमितुं वा, अमानुषं कर्म कर्त्तुम् वा इत्यर्थः। [ अभियोगभाजाम् ] अभिनिवेशवतां [ निरुत्सुकानाम् ] अनुत्सुकानाम्, अदुर्मनाय-मानानाम् इत्यर्थः। [सिद्धिः] पूर्वोक्तं यशः सुखाद्यर्थसिद्धिश्च, [ समुत्सुका इव ] अनुरक्तकान्ता इव [ अङ्कम् ] उत्सङ्गम् अन्तिकञ्च [ उपैति ]। तस्मात् अस्मद्विरहदुःखम् आ तपःसिद्धेः सोढ़व्यम् इति भावः ॥ ४० ॥

अथ अस्य मन्यूद्दीपनद्वारा तपःप्रवृत्तिं प्रथयितुम् अरि-निकारं तावच्चतुर्भिः उद्घाटयति, लोकमिति।—[ विधात्रा ] ब्रह्मणा [ लोकं गोप्तुं विहितस्य ] सृष्टस्य [ क्षत्रस्य ] क्षत्रिय-जातेः सम्बन्धि। जयनशीलं जेतृ तदेव [ जैत्रम् ]। जेतृ-शब्दात् तृन्नन्तात् "प्रज्ञादिभ्यश्च" ( ५।४।३८ पा० ) इति स्वार्थ अण्प्रत्ययः। [ ओजः ] बलं दीप्तिः वा। "ओजो बले च दीप्तौ च" इति विश्वः। तदेव [ वसु ] धनमिति रूपकालङ्कारः।

व्रीडानतैराप्तजनोपनीतः
संशय्य कृच्छ्रेण नृपैः प्रपन्नः ।
वितानभूतं विततं पृथिव्यां
यशः समूहन्निव दिग्विकीर्णम् ॥ ४२

[ मुष्णन् ] अपहरन्, अरिनिकृतस्य कुतः चार्वं तेजः इति भावः । किञ्च [ विजयैकवृत्तेः ] विजयैकजीवितायाः । "क्षत्रियस्य विजेतव्यम्" इति स्मरणात् इति भावः । "वृत्ति- वर्त्तनजीवने" इत्यमरः । [ तेजस्वितायाः ] तेजस्विनाम् इत्यर्थः । तेजःप्राधान्यद्योतनार्थं भावप्रधानो निर्देशः । [ प्रियं प्राणम् इव ] प्राणसमम् इत्यर्थः । [ अभिमानम् ] अहङ्कारं [निघ्नन्] खण्डयन्, तेजस्विनां प्राणहानिप्राया मानहानिः इति भावः ॥ ४१ ॥

अधिक्षेपाद्यसहनं तेजः प्राणात्ययेषु अपि न त्याज्यम् इति आह, व्रीडेति ।—पुनश्च [ आप्तजनोपनीतः ] आप्तजनेन विश्वस्तजनेन उपनीतः साधितः प्रापितः इत्यर्थः । तथापि [ संशय्य ] सन्दिह्य, असम्भावितबुद्ध्या इति भावः । [व्रीडानतैः] जुगुप्सितवृत्तान्तश्रवणात् इति भावः । [ नृपैः ] देशान्तरस्थैः [ कृच्छ्रेण प्रपन्नः ] प्राप्तः, आप्तोक्तत्वात् कथञ्चित् विश्वस्तः इत्यर्थः । यः शृण्वताम् अपि दुःसहः किमुत अनुभवताम् इति भावः । इत्येषा पूर्वेषां व्याख्या । अन्यथा अपि व्याख्यायते ।— [ आप्तजनोपनीतः ] ज्ञातिकृतः [ संशय्य ] कथम् इदम् अन्याय्यम् उपेक्ष्यम् इति विचार्य [ व्रीडानतैः ] जुगुप्सितकर्मदर्शनात् इति भावः । [ नृपैः ] सभास्थैः [ कृच्छ्रेण प्रपन्नः ] अङ्गीकृतः । गोत्रकलहेषु मध्यस्थैः उदासितव्यम् इति बुद्ध्या

वीर्य्यावदानेषु कृतावमर्षः
तन्वन्नभूतामिव सम्प्रतीतिम् ।
कुर्वन् प्रयामक्षयमायतीनाम्
अर्कत्विषामह्न इवावशेषः ॥ ४३ ॥
प्रसह्य योऽस्मासु परैः प्रयुक्तः
स्मर्त्तुं न शक्यः किमुताधिकर्त्तुम् ? ।

उपेक्षित इत्यर्थः । पक्षद्वये अपि प्रपन्न इत्यत्र आप्तजनोपनीतत्वस्य पदार्थभूतस्य विशेषणगत्या हेतुत्वोक्त्या काव्यलिङ्गम् अलङ्कारः । [ पृथिव्यां वितानभूतम् ] उल्लोचतुल्यम् । "युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु" इत्यमरः, "अस्त्री वितानमुल्लोचः" इत्यमरः । [ दिग्विकीर्णं ] दिगन्तलग्नं वितानमपि दिगन्तलग्नम् इति भावः । [ विततं ] प्रथितं [ यशः समूहन् इव ] सङ्कोचयन् इव इति उत्प्रेक्षा । अरातिपरिभूतस्य कुतः कीर्त्तिः इति भावः ॥ ४२ ॥

वीर्य्येति ।—पुनश्च [ वीर्य्यावदानेषु ] वीर्य्याणि एव अवदानानि तेषु [ कृतावमर्षः ] कृतास्कन्दनः । पुराकृतपराक्रमाङ्कितानि अपि प्रमृजन् इत्यर्थः । "अवदानं कर्म वृत्तम्" इत्यमरः । अत एव [ सम्प्रतीतिं ] ख्यातिम् । "प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः" इत्यमरः । [ अभूताम् ] अविद्यमानाम् [ इव ] इति उत्प्रेक्षा । सतोऽपि असत्त्वम् उत्प्रेक्ष्यते [ तन्वन् ] कुर्वन् । पुनश्च [ अह्नः अवशेषः ] दिनान्तः [ अर्कत्विषाम् इव आयतीनाम् ] उत्तरकालानां [ प्रयामक्षयं ] दैर्घ्यनाशं [कुर्वन्] इति श्रौती पूर्णा इयम् उपमा । अरिनिराकृतस्य कुतः चिरावस्थानम् इति भावः ॥ ४३ ॥

नवीकरिष्यत्युपशुष्यदार्द्रः

स त्वद् विना मे हृदयं निकारः ॥ ४४ ॥

कलापकम् ॥

प्राप्तोऽभिमानव्यसनादसह्यं

दन्तीव दन्तव्यसनाद् विकारम् ।

द्विषत्प्रतापान्तरितोरुतेजाः

शरद्घनाकीर्ण इवादिरह्नः ॥ ४५ ॥

---

प्रसह्येति।—पुनश्च [परैः] शत्रुभिः [अस्मासु प्रसह्य प्रयुक्तः] आचरितः [ यः निकारः ] परिभवः केशाकर्षणरूपः [ स्मर्त्तुं न शक्यः । अधिकर्त्तुम् ] अनुभवितुं [ किमुत ? ] यस्य स्मरणमपि दुःसहम् अनुभवस्तु सुतरां दुःसह इति किमुत वक्तव्यम् इत्यर्थः । [ सः ] निकारः [त्वद् विना] त्वया विना। "पृथग्विना" ( २।३।३२ पा० ) इत्यादिना पञ्चमी । [ आर्द्रः ] सन् कुतश्चित् अभिभूतात् पुराणप्रहार इव, त्वद्विरहदुःखात् पुनः [उपशुष्यत्] त्वया विना शुष्कम् इति भावः। दुःखस्तम्भनं शोषपदार्थः [ मे हृदयं नवीकरिष्यति ] आर्द्रीकरिष्यति, व्रणम् इव इति भावः। दुःखितस्य पुनः दुःखोपचयः प्रशान्तप्रायमपि दुःखहेतुं पुनः उद्घाटयति इत्यर्थः। अत्र शोषादिविशेषणसाम्यात् व्रणाद्यप्रस्तुतार्थप्रतीतिः समासोक्तिरलङ्कारः ॥ ४४ ॥

पुनः प्रकारान्तरेण मन्युम् उद्दीपयति "प्राप्तः" इत्यादिभिः त्रिभिः। तत्र वक्ष्यमाणप्रत्यभिज्ञानहेतुभिः धनञ्जयं विशिनष्टि।—[अभिमानव्यसनात्] अभिमानस्य व्यसनात् भ्रंशात्। "व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः। [ दन्तव्यसनात् ] दन्तभङ्गात् [ दन्ती इव असह्यं विकारं ] वैरूप्यं

सव्रीड़मन्दैरिव निष्क्रियत्वात्
नात्यर्थमस्त्रैरवभासमानः ।
यशःक्षयक्षीणजलार्णवाभः
त्वमन्यमाकारमिवाभिपन्नः ॥ ४६ ॥
दुःशासनाऽऽकर्ष*रजोविकीर्णैः
एभिर्विनाथैरिव भाग्यनाथैः ।

[ प्राप्तः ] । अतो न प्रत्यभिज्ञायते इति भावः । एवम् उत्तरत्रापि अनुसन्धेयम् । पुनश्च [द्विषत्प्रतापान्तरितोरुतेजाः] द्विषत्प्रतापेन शत्रुतेजसा अन्तरितं तिरस्कृतम् उरु तेजः प्रतापो यस्य स तथोक्तः । अत एव [ शरद्घनाकीर्णः ] शरन्मेघाच्छन्नः [अर्क आदिः ] प्रत्यूषः [ इव ] स्थितः । तद्वत् एव अप्रत्यभिज्ञायमान इत्यर्थः । मध्याह्नस्तु मेघावरणेऽपि कथञ्चित् प्रत्यभिज्ञायते एव इति आशयेन उक्तम् आदिरिति ॥ ४५ ॥

सव्रीड़ेति ।—पुनश्च [ निष्क्रियत्वात् ] अर्थक्रियाशून्यत्वात् [सव्रीड़मन्दैः इव ] सव्रीड़ैः अत एव मन्दैः अपटुभिः इव स्थितैः इति उत्प्रेक्षा । "मूढाल्पापटुनिर्भाग्या मन्दाः स्युः" इत्यमरः । [ अस्त्रैः अत्यर्थं न अवभासमानः ] न प्रकाशमानः पूर्वं तु नैवम् इति भावः । किन्तु [ यशःक्षयक्षीणजलार्णवाभः ] यशःक्षयात् हेतोः क्षीणजलः यः अर्णवः तदाभः तत्सदृशः [त्वम् अन्यम् आकारम् अभिपन्नः ] प्राप्तः [ इव ] स्थितः इव, इति उत्प्रेक्षा । तस्य क्षीणजलार्णवाभः इति उपमासंसृष्टिः ॥ ४६ ॥

दुःशासनेति ।—पुनश्च [दुःशासनाऽऽकर्षरजोविकीर्णैः] दुःशासनस्य कर्त्तुः आकर्षः आकर्षणं सः एव रजः धूलिः, मालिन्य-

* अत्र क्वचित् "आमर्ष" इति पाठोऽपि दृश्यते ।

केशैः कदर्थीकृतवीर्य्यसारः
कच्चित् स एवासि धनञ्जयस्त्वम्? ॥ ४७ ॥
विशेषकम् ॥

स क्षत्रियस्त्राणसहः सतां यः
तत् कार्मुकं कर्मसु यस्य शक्तिः।

---

हेतुत्वात् इति भावः। तेन विकीर्णैः विक्षिप्तैः, अत एव [विनाथैः इव] स्थितवतां युष्माकम् असत्त्वप्रायत्वात् अनाथैः इव स्थितैः इति उत्प्रेक्षा। अन्यथा कथम् इयं दुर्दशा इति भावः। किन्तु [भाग्यनाथैः] दैवमात्रशरणैः। अन्यथा स्वरूपम् अपि लुप्येत इति भावः। [एभिः] परिदृश्यमानैः असंयमितैः इति भावः। [केशैः] शिरोरुहैः [कदर्थीकृतवीर्य्यसारः] कुत्सितः अर्थः वस्तु कदर्थः। "अर्थोऽभिधेय-रै-वस्तु-प्रयोजन-निवृत्तिषु" इत्यमरः। "कोः कत् तत्पुरुषेऽचि" (६।३।१०० पा०) इति कुशब्दस्य कदादेशः। कदर्थीकृतौ गर्ह्यार्थीकृतौ वीर्य्य-सारौ शौर्य्यबले यस्य सः तथोक्तः। इत्थं पूर्वविलक्षणः [त्वं सः एव धनञ्जयः असि कच्चित्?] "कच्चित्कामप्रवेदने" इत्यमरः। स एव चेत् त्वं नैवमस्मान् उपेक्षसे इति भावः ॥ ४७ ॥

अथाप्युपेक्षणे दोषमाह, स इति।—क्षतात् त्रायते इति क्षत्रं क्षत्रियकुलम्। "सुपि" (३।२।७८ पा०) इति योग-विभागात् क-प्रत्ययः। पृषोदरादित्वात् अकारलोपः। अथवा क्षदिति क्विबन्तोपपदात् क-प्रत्ययः। क्षत्रे जातः [क्षत्रियः]। "क्षत्राद्घः" (४।१।१३८ पा०) इति घप्रत्ययः। कर्मणि प्रभ-वति इति कार्म्मुकम्। "कर्म्मण उकञ्" (५।१।१०३ पा०) इति उकञ्प्रत्ययः। एवं स्थिते वाक्यार्थः कथ्यते [यः सतां]

वहन् द्वयीं यद्यफलेऽर्थजाते
करोत्यसंस्काराहतामिवोक्तिम् ॥ ४८ ॥
वीतौजसः सन्निधिमात्रशेषा
भवत्कृतां भूतिमपेक्षमाणाः।
समानदुःखा इव नस्त्वदीयाः
सरूपतां पार्थ! गुणा भजन्ते ॥ ४९ ॥

---

साधूनां, सहते इति सहः, पचाद्यच्। त्राणस्य सहः [त्राणसहः] रक्षणक्षमः [सः] एव [क्षत्रियः] क्षत्रियशब्दवाच्यः। तथा [यस्य] कार्मुकस्य [कर्म्मसु] रणक्रियासु [शक्तिः] अस्तीति शेषः। [तत्] एव [कार्म्मुकं] कार्मुकशब्दवाच्यम्। अत्रैव एतौ शब्दौ मुख्यौ, न अन्यत्र इत्यर्थः। एवं स्थिते [द्वयीं] द्विविधाम् [उक्तिं] द्वौ इमौ क्षत्रियकार्मुकशब्दौ इत्यर्थः। [अफले] पूर्वोक्तावयवार्थशून्ये इत्यर्थः। [अर्थजाते] स्वाभिधेयसामान्यजातिमात्रे इत्यर्थः। "जातं जात्योघजन्मसु" इति विश्वः। [वहन्] वर्त्तयन् [संस्काराहताम्] अव्युत्पत्तिदूषिताम् [इव करोति] इति उत्प्रेक्षा। तस्मात् त्वम् अस्मद्रक्षणेन उक्तदोषात् आत्मानं मोचयस्व इत्यर्थः ॥ ४८ ॥

अथ त्वद्गुणा अपि नोज्जीवयेयुरित्याह, वीतेति।—हे [पार्थ! वीतौजसः] निष्प्रभाः [सन्निधिमात्रशेषाः] सत्तामात्रावशिष्टाः [भवत्कृतां] भवता करिष्यमाणाम् "आशंसायां भूतवच्च" (३।३।१३२पा०) इति भूतवत्प्रत्ययः। [भूतिम्] अभ्युदयम् [अपेक्षमाणाः त्वदीयाः गुणाः समानदुःखाः] समदुःखभाजः [इव नः] अस्माकं [सरूपतां] वीती-

आक्षिप्यमाणं रिपुभिः प्रमादात्
नागैरिवालूनसटं मृगेन्द्रम् ।
त्वां धूरियं योग्यतयाऽधिरूढा
दीप्त्या दिनश्रीरिव तिग्मरश्मिम् ॥ ५० ॥

करोति योऽशेषजनातिरिक्तां
सम्भावनामर्थवतीं क्रियाभिः ।

जस्त्वादिसाधर्म्यं [भजन्ते] इति उपमा । सा च समानदुःखा इव इति उत्प्रेक्षया वीतौजस्त्वादिसम्भावितया अनुप्राणिता इति अनुसन्धेयम् ॥ ४९ ॥

तथापि ममैव कोऽयं भारः इत्यत आह, आक्षिप्येति ।— [ प्रमादात् ] प्रज्ञाहीनत्वात्, न तु दौर्बल्यात् इति भावः । [रिपुभिः आक्षिप्यमाणम्] अधिक्षिप्यमाणम्, अत एव प्रमादात् [ नागैः ] गजैः । "ग्रहेभाहिगजा नागाः" इति वैजयन्ती । [ आलूनसटम् ] आच्छिन्नकेसरम् । "सटा जटाकेसरयोः" इति विश्वः । [ मृगेन्द्रं ] सिंहम् [ इव ] स्थितं [ त्वाम् इयं धूः ] कार्य्यभारः [ तिग्मरश्मिं ] सूर्य्यं [ दीप्त्या दिनश्रीः इव योग्यतया ] निर्वाहकतया । [अधिरूढा] आरूढवती । कर्त्तरि क्तः । त्वदधीना इत्यर्थः ॥ ५० ॥

पूर्वं निर्व्यवसायस्य "स क्षत्रियः" इत्यादिना दोष उक्तः, सम्प्रति व्यवसायिनो गुणमाह, करोतीति ।—[ यः ] पुमान् [ अशेषजनातिरिक्तां ] अशेषजनात् इतरजनात् अतिरिक्ताम् अधिकां, सर्वातिशायिनीम् इत्यर्थः । सर्व्वजनातिरिक्तां वा पाठः । [ सम्भावनां ] योग्यतां [ क्रियाभिः ] चरितैः [ अर्थवतीं ]

संसत्सु जाते पुरुषाधिकारे
न पूरणी तं समुपैति संख्या ॥ ५१ ॥
प्रियेषु यैः पार्थ ! विनोपपत्तेः
विचिन्त्यमानैः क्लममेति चेतः ।
तव प्रयातस्य जयाय तेषां
क्रियादघानां मघवा विघातम् ॥ ५२ ॥

सफलां [ करोति । तं ] पुमांसं [ संसत्सु ] सभासु । "सभासमितिसंसदः" इत्यमरः । [ पुरुषाधिकारे ] योग्यपुरुषगणनाप्रस्तावे [ जाते ] सति । पूर्य्यते अनया इति [ पूरणी संख्या ] द्वित्वादिसंख्या [ न समुपैति ] न गच्छति । अद्वितीयो भवति इत्यर्थः । तस्मात् असाधारणलाभाय त्वया अपि महानुत्साहः आस्थेयः इति भावः ॥ ५१ ॥

अथ द्वाभ्यां सुलभविपक्षस्य प्रोषितस्य अर्जुनस्य कर्त्तव्यम् उपदिशति, प्रियेषु इति ।—हे [ पार्थ ! प्रियेषु ] अस्मासु विषये [ उपपत्तेः ] कारणात् [ विना ] एव [विचिन्त्यमानैः] अकस्मात् एव आशङ्क्यमानैः [ यैः ] अघैः [ चेतः क्लमं ] खेदम् [ एति, जयाय प्रयातस्य तव ] सम्बन्धिनां तेषाम् [ अघानां ] व्यसनानाम् । "दुःखैनोव्यसनेष्वघम्" इत्यमरः । [ मघवा ] इन्द्रः, यः अस्माभिः उपास्यते इति भावः । [ विघातं ] निवारणं [क्रियात्] करोतु । आशिषि लिङ् । तस्मात् अस्मच्चिन्तया न चेतः खेदयितव्यं जयार्थिना त्वया, अन्यथा तदसम्भवात् इति भावः ॥ ५२ ॥

मा गाश्चिरायैकचरः प्रमादं
वसन्नसम्बाधशिवेऽपि देशे।
मात्सर्य्यरागोपहतात्मनां हि
स्खलन्ति साधुष्वपि मानसानि॥ ५३॥
तदाशु कुर्वन् वचनं महर्षेः
मनोरथान् नः सफलीकुरुष्व।

मा गा इति।—असम्बाधः असङ्कटः, विजनः इत्यर्थः। "सङ्कटं ना तु सम्बाधः" इत्यमरः। शिवः निर्बाधः, द्वयोः अन्यतरस्य विशेष्यत्वविवक्षायां विशेषणसमासः। अस्मिन् [ असम्बाधशिवे अपि देशे चिराय ] चिरम् एकश्चासौ चरश्चेति [ एकचरः ] एकाकी [ वसन् प्रमादं ] दौर्बल्यं [ मा गाः ]। "इणो गा लुङि" ( २।४।४५ पा० ) इति गादेशः। ननु निःस्पृहस्य मम अकिञ्चित्करः प्रमादः इति वाच्यम्, इति आशङ्क्याह, मात्सर्य्येति।—[ मात्सर्य्यरागोपहतात्मनां ] मत्सरः एव मात्सर्य्यं द्वेषः, रागः स्नेहः, ताभ्याम् उपहतात्मनां रागद्वेषदूषितस्वभावानां [ मानसानि ] मनांसि [ साधुषु ] सज्जनेषु [ अपि ] विषये [ स्खलन्ति ] विकुर्वते [ हि ]। अत्र प्रमादनिषेधलब्धाप्रमादरूपकारणेन अर्थप्राप्तिरूपकार्य्यस्य व्यतिरेककारणसमर्थनात् वैधर्म्येण कार्य्यकारणसमर्थनरूपः अर्थान्तरन्यासः॥ ५३॥

निगमयति, तदिति।—[ तत् ] तस्मात् कारणात्, [आशु] शीघ्रं [ महर्षेः वचनं कुर्वन् ] तपस्यन् इत्यर्थः। [नः] अस्माकं [मनोरथान् सफलीकुरुष्व] अरिनिर्य्यातनेन अस्मान् प्रतिष्ठापय

प्रत्यागतं त्वाऽस्मि कृतार्थमेव
स्तनोपपीडं परिरब्धुकामा ॥ ५४ ॥
उदीरितां तामिति याज्ञसेन्या
नवीकृतोद्ग्राहितविप्रकाराम् ।
आसाद्य वाचं स भृशं दिदीपे
काष्ठामुदीचीमिव तिग्मरश्मिः ॥ ५५ ॥

---

इत्यर्थः । प्रार्थनायां लोट् । किञ्च [ कृतार्थं ] कृतकृत्यं [ प्रत्यागतम् एव त्वा ] त्वाम् । "त्वामौ द्वितीयायाः" (८।१।२३ पा०) इति त्वादेशः । स्तनयोः उपपीड्य [ स्तनोपपीडम् ] "सप्तम्यां चोपपीडरुधकर्षः" (३।४।४९ पा०) इति णमुल् । परिरब्धुं कामः यस्याः सा [ परिरब्धुकामा अस्मि ] । आलिङ्गितुम् इच्छामि इत्यर्थः । "तुङ्काममनसोरपि" इति मकारलोपः * प्राक् कार्य्यसिद्धेः प्रमदालिङ्गनम् अपि न प्रीतिप्रदमिति भावः ॥ ५४ ॥

उदीरितामिति ।—[ सः ] अर्जुनः [ इति ] इत्थं [ याज्ञसेन्या ] यज्ञसेनस्य अपत्येन स्त्रिया द्रौपद्या [ उदीरिताम् ] उक्ताम् । [ नवीकृतोद्ग्राहितविप्रकारां ] नवीकृतः पुनः उद्घाटनेन तथा प्रत्यायितः अत एव उद्ग्राहितः मनसि निधापितश्च विप्रकारः परिभवः यया सा तां [ वाचम् आसाद्य ] आकर्ण्य इत्यर्थः । [ उदीचीं काष्ठां ] दिशम् । "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः । [ तिग्मरश्मिः इव भृशं दिदीपे ] जज्वाल, चुक्रोध इत्यर्थः ॥ ५५ ॥

* "पृषोदरादीनि यथोपदिष्टम्" (६।३।१०९ पा०) इति सूत्रव्याख्याने कारिका—
"लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपि ।
समो वा हिततत्तयोः मांसस्य पचियुञ्घञोः ॥ १ ॥

अथाभिपश्यन्निव विद्विषः पुरः
पुरोधसाऽऽरोपितहेतिसंहतिः।
बभार रम्योऽपि वपुः स भीषणं
गतः क्रियां मन्त्र इवाभिचारिकीम् ॥५६॥
अविलङ्घ्यविकर्षणं परैः
प्रथितज्यारवकर्म कार्मुकम्।

अथेति।—[अथ विद्विषः] शत्रून् [पुरः अभिपश्यन् इव] स्थितः। तथा [पुरोधसाऽऽरोपितहेतिसंहतिः] पुरोधसा धौम्येन आरोपिता समन्त्रम् आहिता हेतिसंहतिः आयुधकलापः यस्य सः तथोक्तः। "हेतिर्ज्वालाङ्कुरायुधे" इति वैजयन्ती। [सः] अर्जुनः [रम्यः] सौम्यः सन् [अपि आभिचारिकीम्] अभिचारः परहिंसा प्रयोजनं यस्याः सा आभिचारिकी। "प्रयोजनम्" (५।१।१०८ पा०) इति ठञ्। तां [क्रियां गतः] अभिचारकर्मणि नियुक्तः इत्यर्थः। [मन्त्रः इव] (रम्यः प्रकृत्या रमणीयः)। भीषयते इति [भीषणम्]। नन्द्यादित्वात् ल्युप्रत्ययः। [वपुः बभार]। प्रशान्तो मन्त्रः प्रयोगभेदात् इव सोऽपि अवस्थाभेदात् भीषणः बभूव इत्यर्थः॥ ५६ ॥ *

उक्तम् आयुधारोपणं विवृण्वन् प्रस्थानम् आह त्रिभिः, अविलङ्घ्येति।—[परैः] शत्रुभिः [अविलङ्घ्यविकर्षणम्] अविलङ्घ्यम् अनतिक्रमणीयं विकर्षणं यस्य तत्, अमोघाकर्षणम् इत्यर्थः। किं च [प्रथितज्यारवकर्म] प्रथितः ज्यारवः गुणध्वनिः कर्म बाणमोक्षणादिकं च यस्य तत् [कार्मुकं] च उद्वहन् इति अन्वयः। तथा [अरिदृष्टिगोचरं] अरीणां

* वंशस्थविलं वृत्तम्।

अगतावरिदृष्टिगोचरं
शितनिस्त्रिंशयुजौ महेषुधी ॥ ५७ ॥
यशसेव तिरोदधत् मुहुः
महसा गोत्रभिदायुधक्षतीः ।
कवचं च सरत्नमुद्वहन्
ज्वलितज्योतिरिवान्तरं दिवः ॥ ५८ ॥

दृष्टिगोचरं दृष्टिपथम् [अगतौ] आहवेषु अनिवर्त्तित्वात् अस्य इति भावः। निर्गतः त्रिंशतः अङ्गुलिभ्यः निस्त्रिंशः खड्गः। डप्रत्यये संख्यायाः तत्पुरुषस्य उपसंख्यानात् समासान्तः *। तेन शितेन तीक्ष्णेन निस्त्रिंशेन युङ्क्तः इति [शितनिस्त्रिंशयुजौ]। "सत्सूद्विष" (३।२।६१ पा०) इत्यादिना क्विप्। [महेषुधी] महानिषङ्गौ, इषवः धीयन्ते अनयोः इति विग्रहः। "कर्मण्यधिकरणे च" (३।३।८३ पा०) इति किप्रत्ययः। "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः। तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासाऽसिरिष्टयः" इत्यमरः ॥ ५७ ॥ †

यशसेति।—किं च। [गोत्रभिदः] इन्द्रस्य [आयुधक्षतीः] वज्रप्रहाररन्ध्राणि खाण्डवदाहसम्भवाः इति भावः। [महसा] स्वकान्त्या [यशसा इव] मूर्त्तया कीर्त्त्या इव [मुहुः तिरोदधत्] आच्छादयन्। [सरत्नं] रत्नसहितम् अत एव [ज्वलितज्योतिः] दीप्ततारकम्। "ज्योतिस्ताराग्निभाज्वाला-

* "संख्यायास्तत्पुरुषस्य वाच्यः" इति वार्त्तिकम्।

† इतः आरभ्य श्लोकद्वयं यावत् सुन्दरी छन्दः। लक्षणन्तु द्वितीयसर्गादिश्लोके द्रष्टव्यम्।

अलकाधिपभृत्यदर्शितं
शिवमुर्वीधरवर्त्म सम्प्रयान् ।
हृदयानि समाविवेश सः
क्षणमुद्बाष्पदृशां तपोभृताम् ॥ ५९ ॥

॥ विशेषकम् ॥

अनुजगुरथ दिव्यं दुन्दुभिध्वानमाशाः
सुरकुसुमनिपातैर्व्योम्नि लक्ष्मीर्वितेने ।

दृक्पुत्रार्थधरात्मसु" इति वैजयन्ती । [दिवः अन्तरं] नभोमध्यम् [इव] अवस्थितम् "अन्तरं परिधानीये वाह्ये स्वीयेऽन्तरात्मनि । क्लीवे मध्ये प्रकाशे च" इति वैजयन्ती । [कवचं च उद्वहन्] ॥ ५८ ॥

अलकेति ।—[सः] अर्जुनः [अलकाधिपभृत्यदर्शितं अलकाधिपभृत्येन यक्षेण दर्शितमतः [शिवं] निर्बाधम् [उर्वीधरवर्त्म] हिमवन्मार्गं प्रति [सम्प्रयान्] प्रगच्छन् । [क्षणम् उद्बाष्पदृशां] वियोगदुःखात् साश्रुनेत्राणां [तपोभृतां] द्वैतवननिवासिनां तपस्विनां [हृदयानि समाविवेश] खेदयामास इत्यर्थः । संपूर्वस्य विशतेः खेदार्थत्वम् अवसेयम् ॥ ५९ ॥

अनुजगुरिति ।—[अथ आशाः] दिशः, दिवि भवं [दिव्यम्] "दिगादिभ्यो यत्" (४।३।५४ पा०) । [दुन्दुभिध्वानम् अनुजगुः] अनुदध्वनुः । अनुगायतेर्लिट् । [व्योम्नि सुरकुसुमनिपातैः लक्ष्मीः वितेने] पुष्पवृष्टिः च अजनिष्ट इत्यर्थः । किं च [अनिभृतवेलावीचिबाहुः] अनिभृताः चञ्चलाः वेलायां कूले याः वीचयः ताः एव बाहवः यस्य सः तथोक्तः । "वेला

प्रियमिव कथयिष्यन्नालिलिङ्ग स्फुरन्तीं
भुवमनिभृतवेलावीचिबाहुः पयोधिः ॥ ६० ॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये
तृतीयः सर्गः ॥ ३ ॥

कूलविकारयोः" इति शाश्वतः। [पयोधिः स्फुरन्तीम्] उल्लसन्तीं हर्षात् स्पन्दमानां च [भुवं प्रियम्] इष्टं भारावतारणरूपं [कथयिष्यन् इव] कथयितुम् इव इत्यर्थः। "लृट् शेषे च" (३।३।१३ पा०) इति चकारात् क्रियार्थायां क्रियायां लृट्। [आलिलिङ्ग]। सर्वं च इदं शिवं दैवकार्य्यप्रवृत्तत्वात् अस्य इति भावः। अत्र विशेषणमात्रसाम्यात् अप्रस्तुतस्य गम्यत्वात् समासोक्तिः अलङ्कारः। तत्र च अप्रस्तुतयोः भूमिसमुद्रयोः प्रतिपन्नाभ्यां नायकाभ्यां भेदेऽभेदलक्षणातिशयोक्तिवशात् आलिङ्गनोक्तिः इति रहस्यम्। एवम् अतिशयोक्त्यनुप्राणिता समासोक्तिः। प्रियकथनात् स्नेहमुज्जीवयति तदङ्गभावं भजते इति उभयोः अङ्गाङ्गिभावेन सङ्करः, इति विवेचनीयम् ॥ ६० ॥ *

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां तृतीयः सर्गः।

* अत्र मालिनी वृत्तम्।

# चतुर्थः सर्गः ।



ततः स कूजत्कलहंसमेखलां
सपाकशस्याहितपाण्डुतागुणाम् ।
उपाससादोपजनं जनप्रियः
प्रियामिवासादितयौवनां भुवम् ॥ १ ॥
विनम्रशालिप्रसवौघशालिनीः
अपेतपङ्काः ससरोरुहाम्भसः ।

---

तत इति ।—[ ततः ] प्रस्थानानन्तरं [ जनप्रियः सः ] अर्जुनः [ कूजत्कलहंसमेखलां ] कलहंसाः मेखलाः इव इति उपमितसमासः । अन्यत्र कलहंसाः इव मेखलेति विशेषणसमासः । कूजन्ती कलहंसमेखला यस्याः ताम् । [ सपाकशस्याहितपाण्डुतागुणां ] सह पाकेन वर्त्तन्ते इति सपाकानि शस्यानि तैः शस्यैः आहितः सम्पादितः पाण्डुता एव गुणः यस्याः तां [ भुवम् आसादितयौवनां ] प्राप्तयौवनां [ प्रियाम् इव उपजनं ] जनसमीपे, अन्यत्र—सखीसमक्षम् । समीपार्थे अव्ययीभावः । [उपाससाद] उपागतवान् । उपमालङ्कारः ॥१॥*

विनम्रेति । [सः] अर्जुनः [विनम्रशालिप्रसवौघशालिनीः] अवनतकलमफलस्तोमशोभिनीः [अपेतपङ्काः] निष्पङ्काः [ससरोरुहाम्भसः] ससरोरुहाणि अम्भांसि यासु ताः तथोक्ताः । [ उपायनीभूतशरद्गुणश्रियः ] उपायनीभूताः अर्जुनं प्रति उप-

* अस्मिन् सर्गे वंशस्थं वृत्तम् ।

ननन्द पश्यन्नुपसीम स स्थलीः
उपायनीभूतशरद्गुणश्रियः ॥ २ ॥
निरीक्ष्यमाणा इव विस्मयाकुलैः
सरोभिरुन्मीलितपद्मलोचनैः ।
हृतप्रियादृष्टिविलासविभ्रमाः
मनोऽस्य जह्नुः शफरीविवृत्तयः ॥ ३ ॥

---

भूताः शरद्गुणश्रियः पूर्वोक्ताः शरद्धर्मसम्पदः यासु ताः [ उपसीम ] ग्रामसीमासु, विभक्त्यर्थे अव्ययीभावः, समासान्तविधेः अनित्यत्वात् "अनश्च" (५।४।१०८ पा०) इति समासान्तः न भवति । केचित् तु—"अप्यन्येषां कठिनवपुषां दुर्गमे ग्रामसीम्नि" इत्यादौ नपुंसकप्रयोगदर्शनात् "नपुंसकादन्यतरस्याम्" (५।४।१०९ पा०) इति विकल्पात् साधु इति आहुः । [ स्थलीः ] अकृत्रिमाः भुवः । "जानपद" ( ४।१।४२ पा० ) इत्यादिना अकृत्रिमार्थे ङीष् । [ पश्यन् ननन्द ] जहर्ष । अत्र शरद्गुणेषु तादात्म्येन आरोप्यमाणस्य उपायनस्य प्रकृतः नन्दनक्रियोपयोगित्वात् परिणामालङ्कारः ॥ २ ॥

निरीक्ष्यमाणा इति ।—[ विस्मयाकुलैः ] आश्चर्यरसाविष्टैः अत एव [ उन्मीलितपद्मलोचनैः ] उन्मीलितानि पद्मानि एव लोचनानि येषां तैः [ सरोभिः निरीक्ष्यमाणाः इव ] स्थिताः [ हृतप्रियादृष्टिविलासविभ्रमाः ] हृतः प्रियादृष्टिविलासानां विभ्रमः शोभा याभिः ताः तथोक्ताः, इति मनोहरणे हेतूक्तिः । "विभ्रमः संशये भ्रान्तौ शोभायां च" इति वैजयन्ती । [ शफरीविवृत्तयः ] प्रोष्ठीस्फुरितानि [ अस्य ] अर्जुनस्य [ मनः जह्नुः ] ॥ ३ ॥

तुतोष पश्यन् कलमस्य सोऽधिकं
सवारिजे वारिणि रामणीयकम्।
सुदुर्लभे नार्हति कोऽभिनन्दितुं
प्रकर्षलक्ष्मीमनुरूपसङ्गमे ?॥ ४॥
नुनोद तस्य स्थलपद्मिनीगतं
वितर्कमाविष्कृतफेनसन्तति।

तुतोषेति।—[ सः ] अर्जुनः [सवारिजे] साम्बुजे [वारिणि कलमस्य ] शालिविशेषस्य "शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी" इत्यमरः। रमणीयस्य भावः [ रामणीयकम् ]। "योपधाद्गुरूपोत्तमाद् वुञ्" ( ५।१।१३२ पा० ) तत् [ पश्यन् अधिकं तुतोष ], अनुरूपसङ्गमात् इति भावः। तथाहि— [ सुदुर्लभे अनुरूपसङ्गमे ] योग्यसमागमे लब्धे सति इति शेषः, [ प्रकर्षलक्ष्मीं ] योग्यसमागमननिमित्ताम् उत्कर्षसम्पदम् [ अभिनन्दितुं ] स्तोतुं [ कः न अर्हति ? ] सर्वः अपि अभिनन्दति एव इत्यर्थः। सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः॥ ४॥

नुनोदेति।—[ आविष्कृतफेनसन्तति ] आविष्कृता प्रकटीकृता फेनसन्ततिः डिण्डीरसमूहः यस्य तत् तथोक्तम्। डिण्डीरोऽब्धिकफः फेनः" इत्यमरः। [अवाप्तकिञ्जल्कविभेदम्] अवाप्तः किञ्जल्कविभेदः केसरापगमः येन तत् तथोक्तम्। कुतः ?— [ उच्चकैः ] उच्चकं यथा तथा [ विवृत्तपाठीनपराहतं ] विवृत्तेन लुठितेन पाठीनेन मत्स्यविशेषेण पराहतं ताडितम्। "सहस्रदंष्ट्रः पाठीनः" * इत्यमरः। [ पयः ] कर्तृ। [ तस्य ] अर्जुनस्य

* "बोयाल" इति भाषा।

अवाप्तकिञ्जल्कविभेदमुच्चकैः
विवृत्तपाठीनपराहतं पयः ॥ ५ ॥

कृतोर्मिरेखं शिथिलत्वमायता
शनैः शनैः शान्तरयेण वारिणा ।
निरीक्ष्य रेमे स समुद्रयोषितां
तरङ्गितं क्षौमविपाण्डु सैकतम् ॥ ६ ॥

मनोरमं प्रापितमन्तरं भ्रुवोः
अलङ्कृतं केसररेणुनाऽणुना ।

[ स्थलपद्मिनीगतं ] तद्गोचरम् इत्यर्थः । [ वितर्कं ] संशयं [ नुनोद ] चिच्छेद । पाठीनपराहत्या किञ्जल्कापायेन जलदर्शनात् स्थलपद्मिनीशङ्का निवृत्ता इत्यर्थः । अत्र निश्चयोत्तरसन्देहालङ्कारः ॥ ५ ॥

कृतेति ।—[ सः ] अर्जुनः [शिथिलत्वम् आयता] गच्छता, दिने दिने क्षीयमाणेन इत्यर्थः । अत एव [ शनैः शनैः शान्तरयेण ] अन्यथा ऊर्मिरेखानुदयात् इति भावः । [ वारिणा कृतोर्मिरेखं ] कृताः ऊर्मयः तरङ्गाः ( पर्व्वाणि ) एव रेखा राजयः यस्य तत् तथोक्तम् । तरङ्गा अस्य सञ्जाताः [ तरङ्गितं ] भङ्गिमत् । "तदस्य सञ्जातं" ( ५।२।३६ पा० ) इति इतच् । यत् [ क्षौमविपाण्डु ] क्षौमं दुकूलं तद्वत् विपाण्डु शुभ्रम् इति उपमालङ्कारः । [समुद्रयोषितां] नदीनाम् । सिकता अस्य अस्तीति [ सैकतं ] पुलिनम् । "सिकताशर्कराभ्यां च" ( ५।२।१०४ पा०) इति अण्प्रत्ययः । "तोयोत्थितं तत् पुलिनं सैकतं सिकतामयम्" इत्यमरः । [ निरीक्ष्य रेमे ] तुतोष ॥६॥

अलक्तताम्राधरपल्लवश्रिया
समानयन्तीमिव बन्धुजीवकम् ॥ ७ ॥
नवातपालोहितमाहितं मुहुः
महानिवेशौ परितः पयोधरौ ।
चकासयन्तीमरविन्दजं रजः
परिश्रमाम्भःपुलकेन सर्पता ॥ ८ ॥

ततः त्रिभिः शालिगोप्त्रीं वर्णयति, मनोरममिति ।—[अणुना] सूक्ष्मेण [केसररेणुना] केसरेषु किञ्जल्केषु । "किञ्जल्कः केसरोऽस्त्रियाम्" इत्यमरः । यः रेणुः परागः तेन [अलङ्कृतम्] अत एव मनः रमयति इति [ मनोरमम् ] । "कर्मण्यण्" ( ३।२।१ पा० ) इत्यण् । [ भ्रुवोः अन्तरं प्रापितं ] भ्रूमध्ये निवेशितं [ बन्धुजीवकं ] बन्धूकपुष्पम् । "बन्धूको बन्धुजीवकः" इत्यमरः । [ अलक्तताम्राधरपल्लवश्रिया ] अलक्तताम्रस्य लाक्षारागरक्तस्य अधरपल्लवस्य श्रिया शोभया [ समानयन्तीं ] समीकुर्वतीम् [ इव ] साम्यपरीक्षां कुर्वतीम् इव इत्यर्थः । उत्प्रेक्षालङ्कारः ॥ ७ ॥

नवेति ।—महान् निवेशः स्थानं ययोः तौ [ महानिवेशौ ] पीवरौ इत्यर्थः । [ पयोधरौ परितः ] स्तनयोः समन्तात् इत्यर्थः । "अभितः परितः समयानिकषाहाप्रतियोगेऽपि" (वा०) इति द्वितीया । [ मुहुः आहितं ] निक्षिप्तं [ नवातपालोहितं ] बालातपताम्रम् [अरविन्दजं रजः] परागं [ सर्पता ] प्रसरता [ परिश्रमाम्भःपुलकेन ] स्वेदोद्भेदेन पुलकेन [ चकासयन्तीं ] शोभयन्तीम् । चकास्तेः ण्यन्तात् शतरि ङीप् । अलङ्करणं कुर्वतीम् । तत्र अपि विकृतता इति भावः ॥ ८ ॥

कपोलसंश्लेषि विलोचनत्विषा
विभूषयन्तीमवतंसकोत्पलम् ।
सुतेन पाण्डोः कलमस्य गोपिकां
निरीक्ष्य मेने शरदः कृतार्थता ॥ ८ ॥

॥ विशेषकम् ॥

उपारताः पश्चिमरात्रिगोचरात्
अपारयन्तः पतितुं जवेन गाम् ।

कपोलेति ।—पुनः [कपोलसंश्लेषि] यद् [अवतंसकोत्पलं] कर्णोत्पलं तद् [विलोचनत्विषा विभूषयन्तीम्] आभरणस्य अपि आभरणम् इति भावः । [ कलमस्य गोपिकां ] गोपायति इति गोपिकां शालिगोप्त्रीं, ण्वुल् प्रत्ययः । [ निरीक्ष्य पाण्डोः सुतेन ] अर्जुनेन [शरदः] । कृतार्थाया: भावः [ कृतार्थता ] साफल्यम् । शरदः स्वगुणसम्पत्सिद्धिनियोगलाभात् इति भावः । "त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः" (वा०) । [ मेने ] अमानि । मन्यतेः कर्मणि लिट् ॥ ८ ॥

उपारता इति ।—[पश्चिमरात्रिगोचरात् ] पश्चिमा च असौ रात्रिश्च इति विशेषणसमासः, अपररात्रः इत्यर्थः । "पूर्वा दिक् पश्चिमं नभः" इत्यादिवत् एकदेशिशब्दस्य एकदेशशब्दसामानाधिकरण्यात् एकदेशे पर्य्यवसानं, न तु "पश्चिमं रात्रेः" इति एकदेशिसमासः । तद्विधायके "पूर्वापरा" (२।२।१पा०) इति सूत्रे पश्चिमशब्दाग्रहणात् अत एव "अह्नः सर्वैकदेश" (५।४।८७ पा०) इत्यादिना न समासान्तोऽपि, तस्य अपि पूर्वापरादिसूत्रोक्तसमासविषयत्वात् इति । प्रकाशवर्षः तु एकदेशिसमासम् एव

तमुत्सुकाश्चक्रुरवेक्षणोत्सुकं
गवां गणाः प्रस्नुतपीवरौधसः ॥ १० ॥
परीतमुक्षावजये जयश्रिया
नदन्तमुच्चैः क्षतसिन्धुरोधसम् ।
ददर्श पुष्टिं दधतं स शारदीं
सविग्रहं दर्पमिवाधिपं गवाम् ॥ ११ ॥

आश्रित्य समासान्तम् आह, तत् मृग्यम् । गावः चरन्ति अत्र इति गोचरः गवां जग्धिस्थानं वनम् । पश्चिमरात्रौ यः गोचरः तस्मात् [ उपारताः] संनिवृत्ताः [ जवेन गां ] भुवं [ पतितुं ] धावितुम् [ अपारयन्तः ] अशक्नुवन्तः [ प्रस्नुतपीवरौधसः ] वत्सस्मरणात् स्रवत्पीनापीनाः । "ऊधस्तु क्लीवमापीनम्" इत्यमरः । "ऊधसोऽनङ्" ( ५।४।१३१ पा० ) इति स्त्रीग्रहणं कर्त्तव्यम् इति नियमात् न अनङादेशः । [ उत्सुकाः ] वत्सेषु उत्कण्ठिताः [ गवां गणाः तम् ] अर्जुनम् [ अवेक्षणोत्सुकं ] दर्शनलालसं [चक्रुः] । "स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्युभयत्र अपि अमरः । अत्र स्वभावोक्तिः अलङ्कारः । "स्वभावोक्तिरलङ्कारो यथावद्वस्तु-वर्णनम्" इति लक्षणात् ॥ १० ॥

परीतमिति ।—[सः] अर्जुनः [ उक्षावजये ] उक्षान्तरभङ्गे सति [ जयश्रिया परीतं ] वेष्टितम् [ उच्चैः नदन्तं क्षतसिन्धु-रोधसं] रुग्णसरित्तटं, शरदि भवां [शारदीं पुष्टिम्] अवयवोप-चयं [ दधतं गवाम् अधिपं ] महोक्षं [ सविग्रहं ] मूर्त्ति-मन्तम् । "कायो देहः क्लीवपुंसोः शरीरं वर्ष्म विग्रहः" इत्य-मरः । [ दर्पम् इव ] इति उत्प्रेक्षा । [ ददर्श ] ॥ ११ ॥

विमुच्यमानैरपि तस्य मन्थरं
गवां हिमानीविशदैः कदम्बकैः ।
शरन्नदीनां पुलिनैः कुतूहलं
गलद्दुकूलैर्जघनैरिवादधे ॥ १२ ॥
गतान् पशूनां सहजन्मबन्धुतां
गृहाश्रयं प्रेम वनेषु बिभ्रतः ।

---

विमुच्यमानैरिति ।—[ हिमानीविशदैः ] हिमसङ्घात-शुभ्रैः । "हिमानी हिमसंहतिः" इत्यमरः । "इन्द्रवरुण" (४।१।४८ पा० ) इत्यादिना ङीष् । तत्सन्नियोगात् आनुगागमश्च । [ गवां कदम्बकैः ] कर्त्तृभिः । "कदम्बकं समूहे श्रीफले पुष्पविशेषके" इत्यमरः । [ मन्थरं ] मन्दं [ विमुच्यमानैः अपि ] किमुत अविमुच्यमानैः इति भावः । [ शरन्नदीनां] सम्बन्धिभिः । शरद्ग्रहणं प्रावृट्निवृत्त्यर्थं, तत्र पुलिनादर्शनात् इति भावः । [ पुलिनैः ] कर्त्तृभिः [ गलद्दुकूलैः जघनैः इव तस्य ] अर्जुनस्य [ कुतूहलं ] कौतुकम् [ आदधे ] आहितम् ॥ १२ ॥ *

गतानिति ।—[ पाण्डवः ] अर्जुनः [ पशूनां ] गवां [ सहजन्मबन्धुतां ] सह जन्म येषां ते सहजन्मानः सोदराः, ते एव बन्धवः तेषां भावः तत्ता तां [गतान्] पशुषु सोदराभिमानवतः

* अत्र हि घासभक्षणात् प्रतिनिवृत्तानां शुक्लवर्णगोनिकुरम्बाणां बालुकास्तूपात् अतिजवेन समागमनं बालुकातुल्यगौरवर्णानां सुन्दरीणां व्यङ्ग्यार्थबोधितप्रविरललोमान्वितजघनात् वेगेन शुक्लवसनप्रपतनरूपेण वर्ण्यते, तेन उपमालङ्कारः । स च कामुकप्रीतिसंजननतया नद्यां नायिकाव्यवहारसमारोपणमर्यादाहृत्य समासोक्तिं ध्वनयतीति अलङ्कारेण अलङ्कारध्वनिः ।

ददर्श गोपानुपधेनु पाण्डवः
कृतानुकारानिव गोभिरार्जवे ॥ १३ ॥
परिभ्रमन्मूर्द्धजषट्पदाकुलैः
स्मितोदयादर्शितदन्तकेसरैः ।
मुखैश्चलत्कुण्डलरश्मिरञ्जितैः
नवातपामृष्टसरोजचारुभिः ॥ १४ ॥

इत्यर्थः । [ गृहाश्रयं ] गृहविषयं [ प्रेम वनेषु बिभ्रतः ] वनेषु गृहाभिमानिनः इत्यर्थः । [ आर्जवे ] ऋजुत्वे विधेयत्वे, [गोभिः] पशुभिः [कृतानुकारान्] अनुकृतान् [ इव ] स्थितान् इति उत्प्रेक्षा । ततो विधेयान् इत्यर्थः । गाः पान्ति इति गोपाः गोपालकाः । "आतोऽनुपसर्गे कः" ( ३।२।३ पा० ) इति क-प्रत्ययः । तान् [गोपान् उपधेनु] धेनुसमीपे । सामीप्यार्थे अव्ययीभावः । [ददर्श] । अत्र उत्प्रेक्षानुप्राणिता स्वभावोक्तिः अलङ्कारः ॥ १३ ॥

अथ चतुर्भिः वल्लवीः नर्त्तकीसाम्येन वर्णयति, परिभ्रमदिति ।—[ परिभ्रमन्मूर्द्धजषट्पदाकुलैः ] मूर्द्धजाः षट्पदा इव इति उपमितसमासः । सरोजचारुभिः इति उपमानुसारात् । परिभ्रमद्भिः चलद्भिः मूर्द्धजैः षट्पदैः आकुलानि तैः । [ स्मितोदयादर्शितदन्तकेसरैः ] दन्ताः केसराः इव इति पूर्ववत् समासः । स्मितोदयेन आदर्शिताः ईषत्प्रकाशिताः दन्तकेसराः येषां तैः तथोक्तैः । [ चलत्कुण्डलरश्मिरञ्जितैः] चञ्चलकनककर्णवेष्टनप्रभानुलिप्तैः अत एव [ नवातपामृष्टसरोजचारुभिः ] नवातपामृष्टं बालातपस्पृष्टं यत् सरोजं तद्वत् चारुभिः [ मुखैः ] उपलक्षिताः ॥ १४ ॥

निबद्धनिश्वासविकम्पिताधराः
लता इव प्रस्फुरितैकपल्लवाः ।
व्यपोढपार्श्वैरपवर्त्तितत्रिका
विकर्षणैः पाणिविहारहारिभिः ॥ १५ ॥
व्रजाजिरेष्वम्बुदनादशङ्किनीः
शिखण्डिनामुन्मदयत्सु योषितः ।

निबद्धेति ।—[ निबद्धनिश्वासविकम्पिताधराः ] निबद्धेन अनुरुद्धेन निश्वासेन विकम्पिताः अधराः यासां ताः तथोक्ताः, अत एव [ प्रस्फुरितैकपल्लवाः ] प्रचलितैकपल्लवाः इत्यर्थः । "क्वचित् सङ्ख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत्" इति कैयटः । [ लताः इव ] स्थिताः । दैवात् एकपल्लवस्फुरणस्यापि लोके सम्भवात् उपमा एव इयं, न उत्प्रेक्षा । किञ्च [ व्यपोढपार्श्वैः ] व्यपोढानि विपरीतानि पार्श्वानि येषु तैः, [ पाणिविहारहारिभिः ] पाणिविक्षेपमनोहरैः । "अङ्गहारोऽङ्गविक्षेपः" इत्यमरः । [ विकर्षणैः ] मन्थगुणाकर्षणैः [अपवर्त्तितत्रिकाः ] सञ्चलितनितम्बाः । यद्यपि "पृष्ठवंशाधरे त्रिकम्" इत्यमरः । तथापि अत्र नितम्बः लक्ष्यते तन्नैकट्यात् इति भावः ॥ १५ ॥

व्रजेति ।—[ व्रजाजिरेषु ] गोष्ठप्राङ्गणेषु । अधिकरणे सप्तमी । "व्रजो गोष्ठाध्ववृन्देषु" इति विश्वः । [ अम्बुदनादशङ्किनीः] * गर्जितभ्रमवतीः इति भ्रान्तिमदलङ्कारः । [शिखण्डिनां योषितः] मयूरीः । योषिद्ग्रहणं मौग्ध्यातिशयार्थम् । [उन्मदयत्सु] उन्मदाः कुर्वत्सु । "तत्करोति" (गणसूत्र०) इति

* "स्तनितं गर्ज्जितं मेघनिर्घोषे" इत्यमरः ।

मुहुः प्रणुन्नेषु मथां विवर्त्तनै-
र्नदत्सु कुम्भेषु मृदङ्गमन्थरम् ॥ १६ ॥
स मन्थरावल्गितपीवरस्तनीः
परिश्रमक्लान्तविलोचनोत्पलाः ।
निरीक्षितुं नोपरराम वल्लवी-
रभिप्रनृत्ता इव वारयोषितः ॥ १७ ॥

कलापकम् ॥

ण्यन्तात् शतृप्रत्ययः । [ मथां ] मन्थनदण्डानाम् । "वैशाख-मन्थमन्थानमन्थानो मन्थदण्डके" इत्यमरः । [ विवर्त्तनैः ] परिभ्रमणैः [ मुहुः प्रणुन्नेषु ] कम्पितेषु इति स्वभावोक्तिः । [ कुम्भेषु ] कलशेषु [ मृदङ्गमन्थरं ] मृदङ्गवत् मन्थरम् ईषत् [ नदत्सु ] स्वनवत्सु सत्सु इति वाद्यसाम्योक्तिः । भावलक्षणे सप्तमी इयम् ॥ १६ ॥

स इति ।—[ मन्थरावल्गितपीवरस्तनीः ] मन्थरं मन्दम् आवल्गिताः चञ्चलाः पीवराः स्तनाः यासां ताः तथोक्ताः । "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् (४।१।५४ पा०) इति ङीष् । [परिश्रमक्लान्तविलोचनोत्पलाः] परिश्रमेण क्लान्तानि म्लानानि विलोचनोत्पलानि यासां ताः तथोक्ताः [वल्लवीः] गोपीः । "गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः" इत्यमरः । [अभिप्रनृत्ताः] नृत्यन्तीः । "गत्यर्थाकर्म्मक" (३।४।७२ पा०) इत्यादिना कर्त्तरि क्तः । "मतिबुद्धिपूजार्थेभ्यश्च" ( ३।२।१८८ पा० ) इति चकारा-द्वर्त्तमानार्थत्वम् । [वारयोषितः] वेश्याः [इव] । "वारस्त्री गणिका वेश्या" इत्यमरः । [सः] अर्जुनः [ निरीक्षितुम् ] । ईक्षतेस्तुमुन् । [ न उपरराम ] न विरमति स्म । "उपाच्च" (१।३।८३ पा०) ।

पपात पूर्वां जहतो विजिह्मतां
वृषोपभुक्तान्तिकशस्यसम्पदः ।
रथाङ्गसीमन्तितसान्द्रकर्दमान्
प्रसक्तसम्पातपृथक्कृतान् पथः ॥ १८ ॥
जनैरुपग्राममनिन्द्यकर्मभिः
विविक्तभावेङ्गितभूषणैर्वृताः ।

"विभाषाकर्मकात्" ( १।३।८५ पा० ) इति परस्मैपदम् । अत्र चतुःश्लोक्याम् उपमास्वभावोक्त्योः संसृष्टिः ॥ १७ ॥

पपातेति ।—सः अर्जुनः [ पूर्वां ] प्रावृषेण्यां [ विजिह्मतां ] वक्रतां [ जहतः ] त्यजतः । शरदि निष्पङ्कत्वेन समरेखया एव सुगमत्वात् इति भावः । जहातेः शतृप्रत्ययः । [ वृषोपभुक्तान्तिकशस्यसम्पदः ] वृषभचर्वितप्रान्तशस्यसमृद्धीन् । "सुकृते वृषभे वृषः" इत्यमरः । सीमन्ताः इव सीमन्ताः चक्राङ्गपद्धतयः सीमन्तवन्तः कृताः सीमन्तिताः । मत्वन्तात् "तत्करोति" (गणसूत्र०) इति णिचि क्तः । णाविष्ठवद्भावान्मतुपो लुक् । [ रथाङ्गसीमन्तितसान्द्रकर्दमान् ] रथाङ्गैः चक्रैः सीमन्तिताः सान्द्राः कर्दमाः घनीभूताः पङ्काः येषु तान् [ प्रसक्तसम्पातपृथक्कृतान् ] प्रसक्तसम्पातेन सन्ततसञ्चारेण पृथक्कृतान् [ पथः ] मार्गान् [ पपात ] जगाम इति स्वभावोक्तिः ॥ १८ ॥

जनैरिति ।—[ सः ] अर्जुनः [ उपग्रामं ] ग्रामेषु । विभक्त्यर्थे अव्ययीभावः । [ अनिन्द्यकर्मभिः ] अनिषिद्धवृत्तिभिः । वृत्तिश्च एकत्र कृष्यादिः अन्यत्र शिलोञ्छादिः । [ विविक्त-

भृशं ददर्शाश्रममण्डपोपमाः
सपुष्पहासाः स निवेशवीरुधः ॥ १९ ॥
ततः स सम्प्रेक्ष्य शरद्‌गुणश्रियं
शरद्‌गुणालोकनलोलचक्षुषम् ।
उवाच यक्षस्तमनोदितोऽपि गां
न हीङ्गितज्ञोऽवसरेऽवसीदति ॥ २० ॥

---

भावेङ्गितभूषणैः ] विविक्तानि एकाग्राणि भावः अभिप्रायः इङ्गितं चेष्टा भूषणम् अलङ्कारश्च येषां तैः तथोक्तैः [जनैः वृताः] अधिष्ठिताः इत्यर्थः । अत एव [आश्रममण्डपोपमाः] आश्रमेषु मुनिस्थानेषु ये मण्डपाः तदुपमाः । "मण्डपोऽस्त्री जनाश्रयः" इत्यमरः । [ सपुष्पहासाः ] पुष्पविकाशसहिताः । "तेन सह" ( २।२।२८ पा० ) इत्यादिना बहुव्रीहिः । [निवेशवीरुधः] गृहगुल्मिनीः । "वीरुधौ वल्लिगुल्मिन्यौ" इति वैजयन्ती । [ भृशं ] सादरं [ ददर्श ] । उपमालङ्कारः ॥ १९ ॥

तत इति ।—[ ततः सः ] पूर्वोक्तः यक्षः [ शरद्‌गुणश्रियं सम्प्रेक्ष्य] दर्शनीयां वर्णनीयां च विचार्य्य इत्यर्थः । [शरद्‌गुणालोकनलोलचक्षुषं] शरद्‌गुणालोकने लोलचक्षुषं सतृष्णदृष्टिम् । "लोलश्चलसतृष्णयोः" इत्यमरः । [ तम् ] अर्जुनम् [अनोदितः अपि ] अपृष्टः अपि [ गां ] वाचम् [ उवाच ] । [हि]तथाहि [ इङ्गितज्ञः ] भावज्ञः । "इङ्गितं हृद्गतो भावः" इति विश्वः । [ अवसरे ] उक्तियोग्ये काले [ न अवसीदति ] न वाचं यच्छति । "नापृष्टः कस्यचिद् ब्रूयात्" इति निषेधस्तु अनाकाङ्क्षितोक्तिविषयः इति भावः । सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः ॥ २० ॥

इयं शिवाया नियतेरिवायतिः
कृतार्थयन्ती जगतः फलैः क्रियाः।
जयश्रियं पार्थ! पृथूकरोतु ते
शरत् प्रसन्नाम्बुरनम्बुवारिदा॥ २१॥

उपैति शस्यं परिणामरम्यतां
नदीरनौद्धत्यमपङ्कतां मही।
नवैर्गुणैः सम्प्रति संस्तवस्थिरं
तिरोहितं प्रेम घनागमश्रियः॥ २२॥

---

इयमिति।—हे [पार्थ! शिवायाः] कल्याणकारिण्याः [नियतेः]। "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः। शुभावहदैवस्य [आयतिः] फलदानकालः सा [इव जगतः क्रियाः] कृष्यादिकर्माणि [फलैः] लाभैः। "लाभनिष्पत्तियोगेषु बीजभावे धने फलम्" इति वैजयन्ती। [कृतार्थयन्ती] सफलयन्ती [प्रसन्नाम्बुः] निर्मलोदका [अनम्बुवारिदा] निर्जलमेघा। अनेन विशेषणद्वयेन द्यावापृथिव्योः आनुकूल्यं सूचयति। [इयं] शरत् [ते जयश्रियं पृथूकरोतु]। आशीरर्थे लोट्॥ २१॥

उपैतीति।—[शस्यं] व्रीह्यादिकं [परिणामरम्यतां] परिणामेन परिपाकेण रम्यताम् उपैति। [अनौद्धत्यं] गम्यरूपत्वं [नदीः] उपैति। [मही अपङ्कतां] निष्पङ्कत्वम् [उपैति।] तथाहि [सम्प्रति नवैः गुणैः] पूर्वोक्तैः शरद्धर्मैः [संस्तवस्थिरं] संस्तवेन परिचयेन स्थिरं दृढम् अपि [घनागमश्रियः] प्रावृड्लक्ष्म्याः सम्बन्धि, तद्विषयम् इत्यर्थः [प्रेम तिरोहितं]

पतन्ति नास्मिन् विशदाः पतत्रिणो
धृतेन्द्रचापा न पयोदपङ्क्तयः ।
तथापि पुष्णाति नभः श्रियं परां
न रम्यमाहार्य्यमपेक्षते गुणम् ॥ २३ ॥
विपाण्डुभिर्म्लानतया पयोधरैः
च्युताचिराभागुणहेमदामभिः ।

निरर्थकं कृतम् इत्यर्थः । गुणतन्त्राः प्रेमाणः न परिचयतन्त्राः इति भावः । वास्तवालङ्कारः ॥ २२ ॥

पतन्तीति ।—[ अस्मिन् ] नभसि [ विशदाः पतत्रिणः ] बलाकाः [ न पतन्ति ] न प्रसरन्ति । [धृतेन्द्रचापाः पयोदपङ्क्तयः] च [न] पतन्ति । [ तथापि ] श्रीकारणाभावे अपि [ नभः परां श्रियं ] शोभां [ पुष्णाति ] तथा हि [ रम्यं ] स्वभावसुन्दरं वस्तु [ आहार्य्यम् ] आरोप्यमाणं [ गुणं न अपेक्षते ]। तत्र स्वभावस्य एव समर्थत्वात् इति भावः। अत्र अर्थान्तरन्यासः ॥ २३ ॥

विपाण्डुभिरिति ।—[ कदम्बानिलभर्त्तुः ] कदम्बानिलशब्देन वर्षर्तुः उपलक्ष्यते । सः एव भर्त्ता तस्य [ अत्यये ] विरहे [ म्लानतया ] निर्जलतया दुर्बलतया च [ विपाण्डुभिः । च्युताचिराभागुणहेमदामभिः ] च्युतानि रहितानि अचिराभा विद्युत्तस्या गुणा एव हेमदामानि सुवर्णसूत्राभरणानि येभ्यः तैः [ पयोधरैः ] अम्भोदैः । अन्यत्र—स्तनैः, उपलक्षितानाम् । "स्तनाम्भोदौ पयोधरौ" इति वैजयन्ती । [ दिग्वधूनां ] दिशः एव वध्वः तासाम् [ इयं क्षमता न राजते ] इति [ न ], किन्तु

इयं कदम्बानिलभर्त्तुरत्यये
न दिग्वधूनां कृशता न राजते ॥ २४ ॥
विहाय वाञ्छामुदिते मदात्ययात्
अरक्तकण्ठस्य रुते शिखण्डिनः ।
श्रुतिः श्रयत्युन्मदहंसनिस्वनं
गुणाः प्रियत्वेऽधिकृता न संस्तवः ॥ २५ ॥

राजते एव भर्त्तृवियुक्तत्वात् । "आर्त्तार्त्ते मुदिते हृष्टा, प्रोषिते मलिना कृशा" इति स्मरणात् इति भावः । सामान्यतः प्रसक्तम् अरञ्जनं सङ्काश्यस्य एकेन नञानूद्य द्वितीयेन निषेधति । यथाह वामनः—"सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ" इति । अत्र रूपकालङ्कारः स्फुटः एव ॥ २४ ॥

विहायेति ।—[ मदात्ययात् ] मदक्षयात् [ अरक्तकण्ठस्य ] अश्राव्यस्वरस्य । कण्ठशब्देन अत्र तद्गतः स्वरः लक्ष्यते । [शिखण्डिनः ] मयूरस्य सम्बन्धिनि [ उदिते ] उच्चैस्तरे [ रुते ] कूजिते [ वाञ्छां विहाय । श्रुतिः ] श्रोत्रम् । "कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः" इत्यमरः । [ उन्मदहंसनिस्वनं ] मत्तमरालकूजितं [ श्रयति ] भजते । ननु अकाण्डे परिचितपरिहारेण अपरिचिते कथं प्रीत्युदयः ? इत्याशङ्क्य अर्थान्तरं न्यस्यति, गुणा इति ।—प्रीणाति इति प्रियः । "इगुपधज्ञाप्रीकिरः कः" ( ३।१।१३५। पा० ) इति कप्रत्ययः । [ प्रियत्वे ] प्रीतिकरणे [ गुणाः अधिकृताः ] नियुक्ताः । [संस्तवः] परिचयः [ न ] अधिकृतः न समर्थः । प्रेमाधाने गुणवत्त्वं प्रयोजकं न परिचयः इत्यर्थः ॥ २५ ॥

अमी पृथुस्तम्बभृतः पिशङ्गतां
गता विपाकेन फलस्य शालयः।
विकासि वप्राम्भसि गन्धसूचितं
नमन्ति निघ्रातुमिवासितोत्पलम् ॥२६॥
मृणालिनीनामनुरञ्जितं त्विषा
विभिन्नमम्भोजपलाशशोभया।

अमीति।—[ अमी ] पृथून् स्तम्बान् गुच्छान् बिभ्रति इति [ पृथुस्तम्बभृतः ]। "स्तम्बो गुच्छस्तृणादिनः" इत्यमरः। [ फलस्य ] प्रसवस्य [ विपाकेन ] परिणामेन [ पिशङ्गतां गताः शालयः ] व्रीहिविशेषाः। [ वप्राम्भसि ] केदारोदके। "पुंनपुंसकयोर्वप्रः केदारः क्षेत्रम्" इत्यमरः। विकसति इति [ विकासि ] विकसितं [ गन्धसूचितं ] गन्धेन सूचितं ज्ञापितम् [असितोत्पलं निघ्रातुम्] आघ्रातुम् [ इव नमन्ति ]। "निध्यातुमिव" इति पाठे—द्रष्टुम् इत्यर्थः, निर्वर्णयितुं वा। "निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः। अत्र फलभारात् नमनस्य निघ्राणफलकत्वम् उत्प्रेक्ष्यते इति फलोत्प्रेक्षा ॥ २६ ॥

अथ चतुर्भिः कलापकम् आह, मृणालिनीनामिति।—[ मृणालिनीनां ] पद्मलतानां [ त्विषा ] हरिद्वर्णेन [ अनुरञ्जितम् ] तद्वर्णताम् आपादितम् इत्यर्थः। तथा [ अम्भोजपलाशशोभया ] पद्मदलकान्त्या, आरुण्येन इत्यर्थः। [विभिन्नं ] मिश्रितम्। तथा [ स्फुरच्छालिशिखापिशङ्गितं ] स्फुरद्भिः कलमाग्रैः पिङ्गलीकृतम् इत्थं नानावर्णत्वात् [ द्रुतं ] विग-

पयः स्फुरच्छालिशिखापिशङ्गितं
द्रुतं धनुष्खण्डमिवाहिविद्विषः ॥ २७ ॥
विपाण्डु संव्यानमिवानिलोद्धतं
निरुन्धतीः सप्तपलाशजं रजः ।
अनाविलोन्मीलितबाणचक्षुषः
सपुष्पहासा वनराजियोषितः ॥ २८ ॥

---

लितम् [ अहिविद्विषः ] वृत्रशत्रोः इन्द्रस्य । "सर्पे वृत्रासुरेऽप्यहिः" इति वैजयन्ती [ धनुष्खण्डम् इव ] स्थितम् । "नित्यं समासेऽनुत्तरपदस्थस्य" ( ८।३।४५ पा० ) इति विसर्जनीयस्य षत्वम् । [ पयः ] वप्राम्भः अपदिश्य व्याजीकृत्य धावताम् इत्यागामिना सम्बन्धः । अत्र धनुष्खण्डस्य द्रुतस्य लोके अप्रसिद्धत्वात् उत्प्रेक्षा इयं, न उपमा ॥ २७ ॥

विपाण्ड्विति ।—[ विपाण्डु ] शुभ्रम् [ अनिलोद्धतम् ] अनिलोत्क्षिप्तम् । सप्त सप्त पलाशानि पत्राणि पर्वसु येषां ते वृक्षाः सप्तपलाशाः । "क्वचित् संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत्" इति उक्तम् । तेषां पुष्पाणि सप्तपलाशानि । "द्विहीनं प्रसवे सर्वम्" इत्यमरः । "फले लुक्" ( ४।३।१६३ पा० ) इत्यणो लुक् । तेषु जातं [ सप्तपलाशजं रजः ] परागः [ संव्यानम् ] उत्तरीयम् [ इव ] । "संव्यानमुत्तरीयं च" इत्यमरः । [ निरुन्धतीः ] निवारयन्तीः, प्रावृतवतीः इति यावत् । [ अनाविलोन्मीलितबाणचक्षुषः ] अनाविलानि अकलुषाणि उन्मीलितानि च बाणानि नीलसैरेयकाणि चक्षूंषि इव यासां ताः तथोक्ताः । "नीलझिण्टी गलो दासी बाण

अदीपितं वैद्युतजातवेदसा
सिताम्बुदच्छेदतिरोहितातपम्।
ततान्तरं सान्तरवारिशीकरैः
शिवं नभोवर्त्म सरोजवायुभिः ॥ २९ ॥
सितच्छदानामपदिश्य धावतां
रुतैरमीषां ग्रथिताः पतत्रिणाम्।

ओदनपाक्यपि" इति धन्वन्तरिः। पुष्पाणि हासाः इव तैः सह वर्त्तन्ते इति [सपुष्पहासाः]। वनराजयः योषितः इव [वनराजियोषितः] ताः अपदिश्य इति अन्वयः। अत्र संव्यानम् इव इति उपमा एव, अन्यत्र उपमितसमासे लिङ्गम्। यथा काचित् केनचित् कामुकेन आच्छिन्नं स्तनांशुकं निरुन्धे तद्वत् इति भावः ॥ २८ ॥

अदीपितमिति।—[वैद्युतजातवेदसा] वैद्युताग्निना [अदीपितम्] अप्रकाशितं, विद्युत्प्रकाशस्य दृष्टिविघातकत्वात् तद्राहित्यं गुणः इति भावः। [सिताम्बुदच्छेदतिरोहितातपं] सिताम्बुदानां छेदैः खण्डैः तिरोहितातपम्। न दृष्टिबाधः नापि आतपबाधः इति भावः। [सान्तरवारिशीकरैः] विरलाम्बुकणैः [ततान्तरं] व्याप्तमध्यं [सरोजवायुभिः शिवं] रम्यं [नभोवर्त्म] च अपदिश्य इति। स्वभावोक्तिः अलङ्कारः ॥ २९ ॥

सितेति।—[अपदिश्य धावताम्] इति पूर्वश्लोकत्रयोक्तं पयःप्रभृतिकम् उद्दिश्य धावताम् [अमीषां सितच्छदानां] [पतत्रिणां] हंसानाम्। "हंसास्तु श्वेतगरुतः चक्राङ्गा मानसौकसः"

प्रकुर्वते वारिदरोधनिर्गताः
परस्परालापमिवामला दिशः ॥ ३० ॥

॥ कलापकम् ॥

विहारभूमेरभिघोषमुत्सुकाः
शरीरजेभ्यश्च्युतयूथपङ्क्तयः ।
असक्तमूधांसि पयः क्षरन्त्यमूः
उपायनानीव नयन्ति धेनवः ॥ ३१ ॥

इत्यमरः । [ रुतैः ] शब्दैः [ ग्रथिताः ] दृब्धाः । "ग्रथितं गुम्फितं दृब्धम्" इत्यमरः । [ वारिदरोधनिर्गताः ] मेघोपरोधनिर्मुक्ताः अत एव [ अमलाः ] प्रसन्नाः [ दिशः परस्परालापं प्रकुर्वते इव ] दिष्ट्या मेघोपरोधनिर्मुक्ताः चिरात् उच्छ्वसिता इति हंसकूजितव्याजेन परस्परमालपन्तीवेत्युत्प्रेक्षा ॥ ३० ॥

विहारेति ।—[ विहारभूमेः ] अपरराह्णगोचरात् इत्यर्थः । आगच्छन्त्यः इति शेषः । [ अभिघोषम् उत्सुकाः ] व्रजं प्रति उत्कण्ठिताः, वत्सप्रेम्णा इति भावः । "घोष आभीरपल्ली स्यात्" इत्यमरः । [ च्युतयूथपङ्क्तयः ] च्युता त्रुटिता यूथानां कुलानां पङ्क्तिः श्रेणीबन्धः यासां ताः तथोक्ताः । "सजातीयैः कुलं यूथम्" इत्यमरः । [अमूः धेनवः असक्तम्] अप्रतिबन्धं [ पयः ] क्षीरं [ क्षरन्ति ] स्रवन्ति । वत्सस्मरणात् प्रस्रवन्ति इत्यर्थः । क्षरतेः शतृप्रत्ययः । [ ऊधांसि शरीरजेभ्यः ] अपत्येभ्यः [ उपायनानि इव ] अतितोषकारीणि इव इति उत्प्रेक्षा । [ नयन्ति ] प्रापयन्ति । यथा लोके कुतश्चित् प्रवासात् एत्य मातरः किञ्चित् खाद्यम् आनयन्ति तद्वत् इति भावः ॥ ३१ ॥

जगत्प्रसूतिर्जगदेकपावनी
व्रजोपकण्ठं तनयैरुपेयुषी ।
द्युतिं समग्रां समितिर्गवामसौ
उपैति मन्त्रैरिव संहिताहुतिः ॥ ३२ ॥
कृतावधानं जितबर्हिणध्वनौ
सुरक्तगोपीजनगीतनिस्वने ।

जगदिति ।—[ जगत्प्रसूतिः ] जगत्कारणम्, आज्यादिहविर्द्वारेण इति भावः । [जगदेकपावनी] जगताम् एकपावनी मुख्यशोधनी [ व्रजोपकण्ठं ] गोष्ठान्तिकम् । "दूरान्तिकार्थेभ्यो द्वितीया च" (२।३।३५ पा०) इति द्वितीया । "उपकण्ठान्तिकाभ्यर्णाभ्यग्राः" इत्यमरः । [ तनयैः ] वत्सैः [उपेयुषी] सङ्गता । "उपेयिवाननाश्वाननूचानश्च" (३।२।१०८ पा० ) इति क्वसुप्रत्ययान्तः निपातः । "उगितश्च" ( ४।१।६ पा० ) इति ङीप् । [असौ गवां समितिः] संहतिः । [मन्त्रैः] ऋगयजुषादिभिः । "मन्त्रो ऋगादिगुह्योक्तिः" इति वैजयन्ती । [ संहिता ] योजिता [ आहुतिः इव समग्रां द्युतिम् उपैति] । आहुतिः अपि जगत्प्रसूतिः जगदेकपावनी च । "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः" इति स्मरणात् इति भावः ॥ ३२ ॥

कृतेति ।—[ जितबर्हिणध्वनौ ] केकानुकारिणि इत्यर्थः । एतेन षड्जस्वरप्रायं गायति इति गम्यते । यथाह मातङ्गः— "षड्जं मयूरो वदति" इति । [ सुरक्तगोपीजनगीतनिस्वने ] गाः पान्ति इति गोपाः, तेषां भार्य्याः गोप्यः । "आतोऽनुपसर्गे

इदं जिघत्सामपहाय भूयसीं
न शस्यमभ्येति मृगीकदम्बकम् ॥ ३३ ॥
असावनास्थापरयावधीरितः
सरोरुहिण्या शिरसा नमन्नपि ।
उपैति शुष्यन् कलमः सहाम्भसा
मनोभुवा तप्त इवाभिपाण्डुताम् ॥ ३४ ॥

कः" ( ३।२।३ पा० ) इति क-प्रत्ययः । "पुंयोगादाख्यायाम्" ( ४।१।४८ पा० ) इति ङीष् । ताः एव जनः, सुरक्तः मधुरकण्ठः यः गोपीजनः वल्लवीजनः तस्य गीतनिस्वने गाने [कृतावधानम् ] एकाग्रचित्तम् [ इदं ] पुरोवर्त्ति [ मृगीकदम्बकं ] कर्त्तृ [ भूयसीम् ] अतिमहतीं [ जिघत्साम् ] अत्तुम् इच्छाम् । अदः सन्नन्तात् अप्रत्ययः । "लुङ्सनोर्घस्लृ" ( २।४।३७ पा० ) इति घस्लादेशः । [ अपहाय ] हित्वा [ शस्यं न अभ्येति ] न उपैति । गीतासक्त्या क्षुधाम् अपि न गणयति इत्यर्थः ॥ ३३ ॥

असाविति ।—[ शिरसा ] अग्रेण मूर्ध्ना च [ नमन् ] प्रणमन् [ अपि अनास्थापरया ] अनादरपरया [ सरोरुहिण्या अवधीरितः] अवज्ञातः [अम्भसा सह] सहचरभूतेन इति भावः । [ शुष्यन् असौ कलमः ] शालिविशेषः [मनोभुवा तप्तः इव ] कामार्त्तः इव [ अभिपाण्डुताम् उपैति ]। अत्र अनास्थापरया इति प्रकृतसरोरुहिणीविशेषणसामर्थ्यात् अप्रस्तुतनायिकाप्रतीतेः समासोक्तिः । उपतिष्ठमानायाः सरोरुहिण्याः प्रतीयमानया नायिकया शुद्धभेदे अपि अभेदलक्षणातिशयोक्तिमहिम्ना अवधीरणक्रियासम्बन्धात् निर्वहन्ती

अमी समुद्भूतसरोजरेणुना
हृता हृतासारकणेन वायुना।
उपागमे दुश्चरिता इवापदां
गतिं न निश्चेतुमलं शिलीमुखाः ॥ ३५ ॥
मुखैरसौ विद्रुमभङ्गलोहितैः
शिखाः पिशङ्गीः कलमस्य बिभ्रती।
शुकावलिर्व्यक्तशिरीषकोमला
धनुःश्रियं गोत्रभिदोऽनुगच्छति ॥ ३६ ॥

---

मनोभुवा तमः इव इति उत्प्रेक्षानिर्वाहिका इति अतिशयोक्त्यनुप्राणितसमासोक्त्युपमयोः अङ्गाङ्गिभावेन सङ्करः ॥ ३४ ॥

अमी इति।—[ समुद्भूतसरोजरेणुना ] इति सौरभ्योक्तिः। [ हृतासारकणेन ] उपात्ताम्बुकणेन इति शैत्योक्तिः। "धारासम्पात आसारः" इत्यमरः। [ वायुना हृताः ] आकृष्टाः [ अमी शिलीमुखाः ] भृङ्गाः। [ आपदाम् उपागमे ] राजादिभयागमे [ दुश्चरिताः दुष्टकर्माणः चौरादयः [ इव ]। गम्यते इति [ गतिं ] गन्तव्यदेशम्। "देशोपायगमे गतिः" इति वैजयन्ती। [ निश्चेतुं न अलं ] न समर्थाः। एकत्र वायोः सार्वत्रिकत्वेन उपादानात् अनिश्चयात् अन्यत्र भयान्धत्वात् इति भावः ॥ ३५ ॥

मुखैरिति।—[विद्रुमभङ्गलोहितैः मुखैः पिशङ्गीः] पिशङ्गवर्णाः [ कलमस्य शिखाः ] शाल्यग्राणि [ बिभ्रती व्यक्तशिरीषकोमला ] विकसितशिरीषसवर्णा [ असौ शुकावलिः गोत्र-

इति कथयति तत्र नातिदूरात्
अथ ददृशे पिहितोष्णरश्मिबिम्बः।
विगलितजलभारशुक्लभासां
निचय इवाम्बुमुचां नगाधिराजः॥ ३७॥

तमतनुवनराजिश्यामितोपत्यकान्तं
नगमुपरि हिमानीगौरमासाद्य जिष्णुः।

---

भिदः ] इन्द्रस्य [ धनुःश्रियं ] धनुषः श्रियम् [ अनुगच्छति ] अनुकरोति। नानावर्णत्वात् इन्द्रधनुः इव आभाति इति उपमालङ्कारः॥ ३६॥

इतीति।—[ अथ तत्र ] तस्मिन् पूर्वोक्तयक्षे [ इति ] इत्थं [ कथयति ] सति [ न अतिदूरात् ] अनतिदूरात्, ईषद्दूरे इत्यर्थः। नञर्थस्य नशब्दस्य सुप्सुपा इति समासः। [ पिहितोष्णरश्मिबिम्बः ] तिरोहितार्कमण्डलः इति औन्नत्योक्तिः। [ नगाधिराजः ] हिमाद्रिः विगलितः जलभारः येषां ते तथोक्ताः। अत एव शुक्लभासः। द्वयोः अन्यतरस्य विशेष्यत्वविवक्षया विशेषणसमासः। तेषां [ विगलितजलभारशुक्लभासां ] शुभ्राणाम् [ अम्बुमुचां निचय इव ] मेघवृन्दम् इव [ ददृशे ] दृष्टः॥ ३७॥ *

तमिति।—[ जिष्णुः ] अर्जुनः [ अतनुवनराजिश्यामितोपत्यकान्तम् ] अतनुभिः महतीभिः वनराजिभिः श्यामिताः श्यामलाः उपत्यकान्ताः आसन्नभूमिप्रदेशाः यस्य तं तथोक्तम्। "उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरः। "उपा-

* पुष्पिताग्रा वृत्तम्, लक्षणमुक्तम्।

व्यपगतमदरागस्यानुसस्मार लक्ष्मीम्
असितमधरवासो बिभ्रतः सीरपाणेः ॥ ३८ ॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये
शरद्वर्णनो नाम चतुर्थः सर्गः ॥ ४ ॥

---

धिभ्यां त्यकन्नासन्नारूढयोः" ( ५।२।३४ पा० ) इति त्यकन्-प्रत्ययः । [ उपरि हिमानीगौरं ] हिमानीभिः हिमसङ्घातैः गौरं शुभ्रं [ नगं ] हिमाद्रिम् [ आसाद्य, व्यपगतमदरागस्य ] व्यपगतः निवृत्तः मदरागः यस्य तस्य । [ असितं ] नीलम् [ अधरवासः ] उत्तरीयं [बिभ्रतः] धृतवतः । सीरं हलं पाणौ यस्य तस्य [सीरपाणेः] हलायुधस्य । "हलायुधः । नीलाम्बरो रौहिणेयस्तालाङ्को मुषली हली । सङ्कर्षणः सीरपाणिः" इत्यमरः । "सप्तमी विशेषणे" ( २।२।३५ पा० ) इति ज्ञापकात् व्यधिकरणपदः बहुव्रीहिः । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ स्तः" (वा०) इति सप्तम्याः परनिपातः । [ लक्ष्मीं ] शोभाम् [ अनुसस्मार ] स्मृतवान् । अत्र सदृशदर्शनेन सदृशान्तरस्य स्मरणात् स्मरणालङ्कारः । "सदृशं सदृशानुभवाद्यत्र स्मर्यते तत् स्मरणम्" इति विद्याधरः ॥ ३८ ॥ *

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां
चतुर्थः सर्गः ॥ ४ ॥

* मालिनी वृत्तम् ।

## पञ्चमः सर्गः ।

अथ जयाय नु मेरुमहीभृतः
रभसया नु दिगन्तदिदृक्षया ।
अभिययौ स हिमाचलमुच्छ्रितं
समुदितं नु विलङ्घयितुं नभः ॥ १ ॥
तपनमण्डलदीपितमेकतः
सततनैशतमोवृतमन्यतः ।

---

अथ हिमवद्वर्णनम् आरभते । तत्र पञ्चदशभिः कुलकम् आह, अथेति ।—[ अथ ] अनन्तरं [ सः ] अर्जुनः [ मेरुमहीभृतः ] हेमाद्रेः [ जयाय नु ] जयार्थं वा । नुशब्दः अत्र वितर्के । "नु पृच्छायां वितर्के च" इत्यमरः । रभसः वेगः । "रभसो वेगहर्षयोः" इति वैजयन्ती । तद्वत्या रभसया, अतीव उत्कण्ठतया इति यावत् । अर्श-आदित्वात् अच्प्रत्ययः । [ दिगन्तदिदृक्षया ] दिगन्तानां दिदृक्षया [नु] द्रष्टुम् इच्छया वा [ नभः ] अन्तरिक्षं [ विलङ्घयितुं नु ] अतिक्रमितुं वा [समुदितं] समुत्पतितम् इव स्थितम् इत्यर्थः । कुतः ? [उच्छ्रितम्] उन्नतं, हिमस्य अचलं [ हिमाचलम् अभिययौ ] । अत्र अनिर्द्धारितानेक-फलविशिष्टौन्नत्य-गुणनिमित्तोदितादि-क्रियोत्प्रेक्षा, सा च व्यञ्जकाप्रयोगात् प्रतीयमाना इति संक्षेपः । द्रुतविलम्बितं वृत्तम्—"द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ १ ॥

हसितभिन्नतमिस्रचयं पुरः
शिवमिवानुगतं गजचर्मणा ॥ २ ॥
क्षितिनभःसुरलोकनिवासिभिः
कृतनिकेतमदृष्टपरस्परैः।

तपनेति।—पुनः [एकतः] एकस्मिन् भागे। सार्वविभक्तिकः तसिः। [तपनमण्डलदीपितं] तपनमण्डलेन दीपितं प्रकाशितम्। [अन्यतः] अन्यस्मिन् भागे [सततनैशतमोवृतं] सततेन अनिषिद्धेन नैशेन निशिभवेन तमसा वृतम्, एकत्र अह्ना रात्र्या च अन्यत्र सङ्गतम् इत्यर्थः। अत एव [पुरः] अग्रे [हसितभिन्नतमिस्रचयं] हसितेन अट्टहासेन भिन्नतमिस्रचयं निरस्ततमस्तोमं तथा [गजचर्म्मणा अनुगतं] पश्चाद्‌व्याप्तम्। "पश्चात्सादृश्ययोरनु" इत्यमरः। [शिवम् इव] स्थितम्। तपनतेजःप्रसारः अपि अस्य कण इव कुत्रचित् परिसमाप्यते इति महत्त्वातिशयोक्तिः ॥ २ ॥

क्षितीति।—परस्परं अन्योन्ये। "कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः" (वा०)। इति वक्तव्यत्वात् परशब्दस्य द्विर्भावः। "समासवच्च बहुलं" (वा०) यदा न समासवत् प्रथमैकवचनं तदा पूर्वपदस्य इति वक्तव्यत्वात् प्रथमैकवचनम्। * सुट्। कस्कादित्वात् † विसर्जनीयस्य सत्वं बहुवचनं च अन्योन्यशब्दवत्। यथा माघे—"अन्योन्येषां पुष्करैरामृशन्तः" इति। [अदृष्टपरस्परैः] अदृष्टाः परस्परे यैः ते अदृष्टपरस्पराः तैः तथोक्तैः। [क्षितिनभः-

* समासवद्भावे पूर्व्वपदस्य सुपःसुर्वक्तव्यः। (वा०)

† कस्कादिषु च। ८।३।४८ पा०।

प्रथयितुं विभुतामभिनिर्मितं
प्रतिनिधिं जगतामिव शम्भुना ॥ ३ ॥
भुजगराजसितेन नभःश्रिता
कनकराजिविराजितसानुना ।
समुदितं निचयेन तड़िल्वतीं
लघयता शरदम्बुदसंहतिम् ॥ ४ ॥

सुरलोकनिवासिभिः ] क्षितौ नभसि सुरलोके च निवसन्ति इति तैः तथोक्तैः, भूर्भुवःस्वर्लोकवासिभिः इत्यर्थः । [ कृतनिकेतं ] कृतास्पदम् । अत एव [ शम्भुना विभुतां ] स्वसामर्थ्यं [प्रथयितुम् अभिनिर्मितं जगतां प्रतिनिधिं] प्रतिकृतिम् [ इव ] स्थितम् इति उत्प्रेक्षा । "प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्" इत्यमरः । त्रैलोक्यश्लाघ्योपमम् अपरिच्छेद्यं च इति भावः ॥ ३ ॥

भुजगेति ।—पुनश्च [ भुजगराजसितेन ] शेषाहिधवलेन [ नभःश्रिता ] गगनस्पृशा [ कनकराजिविराजितसानुना ] कनकस्य राजिभिः रेखाभिः विराजिताः सानवः यस्य तेन तथोक्तेन, अत एव [ तड़िल्वतीं शरदम्बुदसंहतिं ] शरन्मेघचयं [ लघयता ] लघूकुर्वता, तत्तुल्येन इत्यर्थः । अत एव उपमालङ्कारः । [ निचयेन ] * शिखरसमूहेन [ समुदितं ] समुन्नतम् ॥ ४ ॥

* यद्यपि "कूटोऽस्त्री शिखरं शृङ्गम्" इति अमरोक्तौ निचयशब्दस्य न शिखरवाचिता, तथाप्यत्र "कनकराजिविराजितसानुना" इति विशेषणपदेन सानुमत्त्वकथनात् निचयशब्देन लक्षणया शिखरार्थो द्योत्यते । इति ।

मणिमयूखचयांशुकभासुराः
सुरवधूपरिभुक्तलतागृहाः ।
दधतमुच्चशिलान्तरगोपुराः
पुर इवोदितपुष्पवना भुवः ॥ ५ ॥

अविरतोज्झितवारिविपाण्डुभिः
विरहितैरचिरद्युतितेजसा ।
उदितपक्षमिवारतनिस्वनैः
पृथुनितम्बविलम्बिभिरम्बुदैः ॥ ६ ॥

मणीति ।—पुनः [मणिमयूखचयांशुकभासुराः] मणिमयूखचयाः अंशुकानि पटकाण्डादीनि इव तैः भासुराः [ सुरवधूपरिभुक्तलतागृहाः ] सुरवधूभिः परिभुक्ताः लताः गृहाणि इव यासु ताः तथोक्ताः । [उच्चशिलान्तरगोपुराः] उच्चानि शिलान्तराणि शिलामध्यानि गोपुराणि पुरद्वाराणि इव यासु ताः [उदितपुष्पवनाः] उदितानि ऊर्जितानि पुष्पाणां वनानि यासु ताः, अत एव [ पुरः इव ] नगराणि इव स्थिताः [भुवः दधतम्] ॥ ५ ॥

अविरतेति ।—पुनश्च अविरतम् अविच्छिन्नम् उज्झितं वारि यैः ते अविरतोज्झितवारयः अवृष्टिमन्तः इत्यर्थः । अत एव विपाण्डवश्च तैः [ अविरतोज्झितवारिविपाण्डुभिः ] । अतः हिमवत्पक्षत्वं सम्भवति इति भावः । [अचिरद्युतितेजसा विरहितैः ] विद्युत्तेजोरहितैः । [ आरतनिस्वनैः ] प्रशान्तगर्जितैश्च, अन्यथा पक्षत्वहानिः स्यात् इति भावः । [ पृथुनितम्बविलम्बिभिः ] महाकटकसङ्गिभिः । "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः । [ अम्बुदैः उदितपक्षं ] सञ्जात-

दधतमाकरिभिः करिभिः क्षतैः
समवतारसमैरसमैस्तटैः ।
विविधकामहिताम हिताम्भसः
स्फुटसरोजवना जवना नदीः ॥ ७ ॥

नवविनिद्रजपाकुसुमत्विषां
द्युतिमतां निकरेण महाश्मनाम् ।

पक्षम् [इव] स्थितम् । प्राक् छिन्नपक्षस्य अपि हिमाद्रेः धवलाम्बुदसम्बन्धात् पुनः पक्षोत्थानम् उत्प्रेक्ष्यते ॥ ६ ॥

दधतमिति ।—पुनश्च आकरः खनिः एषाम् अस्ति योनित्वेन इति [ आकरिभिः ] आकरजैः । "खनिः स्त्रियामाकरः स्यात्" इत्यमरः । [ करिभिः ] गजैः कर्त्तृभिः [ क्षतैः ] व्रणितैः [ समवतारसमैः ] समवतारेषु तीर्थेषु समैः अविषमैः [ असमैः ] असदृशैः अतादृशैः अनुपमैः इत्यर्थः । [ तटैः ] उपलक्षिताः तथा [महिताम्भसः] श्लाघ्योदकाः अत एव [विविधकामहिताः] विविधेभ्यः कामेभ्यः अवगाहनाद्युपभोगेभ्यः हिताः अनुकूलाः । "चतुर्थी तदर्थे" ( २।१।३६ पा० ) इत्यादिना समासः । [ स्फुटसरोजवनाः ] स्फुटानि विकसितानि सरोजवनानि यासु ताः [ जवनाः ] वेगवतीः । "जुचङ्क्रम्य" ( ३।२।१५० पा० ) इत्यादिना युच् । [ नदीः दधतम् ] । यमकवृत्त्यनुप्रासभेदत्वात् स्वयमेवालङ्कारः । अर्थालङ्कारः तु अभ्युच्चयः । तस्य अतिदुष्करत्वात् रसपोषः अपि न आद्रियते । तदुक्तम्—"प्रायशो यमके चित्रे रसवृद्धिर्न मृग्यते" ॥ ७ ॥

नवेति ।—पुनश्च [ नवविनिद्रजपाकुसुमत्विषां ] नवानि विनिद्राणि विकसितानि च यानि जपाकुसुमानि ताम्रपुष्पिका-

विहितसान्ध्यमयूखमिव क्वचित्
निचितकाञ्चनभित्तिषु सानुषु ॥ ८ ॥
पृथुकदम्बकदम्बकराजितं
ग्रथितमालतमालवनाकुलम् ।
लघुतुषारतुषारजलश्च्युतं
धृतसदानसदाननदन्तिनम् ॥ ९ ॥

कुसुमानि तेषां त्विषः इव त्विषः येषां ते तेषाम् "ओड्रपुष्पं जपापुष्पं रूपिका ताम्रपुष्पिका" इति वाग्भटः । [ द्युतिमतां महाश्मनां] मणीनां, पद्मरागाणाम् इत्यर्थः । विशेषणसामर्थ्यात् । [ निकरेण ] समूहेन हेतुना [ क्वचित् निचितकाञ्चनभित्तिषु] निचिताः सङ्घटिताः काञ्चनभित्तयः येषु तेषु [ सानुषु । विहित-सान्ध्यमयूखं ] विहिताः सान्ध्याः सन्ध्यायां भवाः मयूखाः यस्मिन् तम् [इव] स्थितम् । काञ्चनभित्तिषु पद्मरागप्रभाप्रसरात् उदितसन्ध्यारागः इव भाति इति उत्प्रेक्षा ॥ ८ ॥

पृथ्विति ।—पुनश्च [ पृथुकदम्बकदम्बकराजितं ] पृथुभिः कदम्बकदम्बकैः नीपकुसुमसमूहैः स्तवकैः राजितम् । "कदम्बमाहुः सिद्धार्थे नीपे च निकुरम्बके" इति उभयत्र अपि विश्वः । [ ग्रथितमाल-तमाल-वनाकुलं ] ग्रथितमालैः बद्धपङ्क्तिभिः तमालवनैः तापिञ्छवनैः आकुलम् आकीर्णम् । "कालस्कन्धः तमालः स्यात्तापिञ्छोऽपि" इत्यमरः । [ लघु-तुषारतुषारजलश्च्युतं ] लघुतुषारम् अल्पसीकरं यत् तुषार-जलं हिमोदकं तत् श्च्योतति वर्षति तं तथोक्तम् । "तुषारौ हिमसीकरौ" इति शाश्वतः । "अन्येभ्योऽपि दृश्यते"

रहितरत्नचयान्न शिलोच्चयान्
अपलताभवना न दरीभुवः ।
विपुलिनाम्बुरुहा न सरिद्वधूः
अकुसुमान् दधतं न महीरुहः ॥ १० ॥
व्यथितसिन्धुमनीरशनैः शनैः
अमरलोकवधूजघनैर्घनैः ।

( ३।२।१७८ पा० ) इति क्विप् । [धृतसदानसदाननदन्तिनं] सदानाः समदाः सदाननाः शोभनाननाश्च ये दन्तिनः ते धृताः येन तं तथोक्तम् ॥ ८ ॥

रहितेति ।—पुनश्च [ रहितरत्नचयान् ] रहितः परित्यक्तः रत्नचयः यैः तान् रत्नराशिरहितान्, [ शिलोच्चयान् ] शिखराणि [ न दधतम्, अपलताभवनाः ] लतागृहरहिताः [ दरीभुवः ] गुहाप्रदेशान् [न] दधतम् । "दरी तु कन्दरो वा स्त्री देवखातबिले गुहा" इत्यमरः । [ विपुलिनाम्बुरुहाः ] विगतानि पुलिनानि अम्बुरुहाणि च यासां ताः । सरितः वध्वः इव ताः [ सरिद्वधूः न ] दधतम् । अत्र सरितां वध्वौपम्यात् पुलिनानामम्बुरुहाणां च वदनजघनौपम्यं गम्यते । [अकुसुमान् महीरुहः ] वृक्षान् [न] दधतं, किन्तु रत्नादिसम्पन्नान् एव शिलोच्चयादीन् दधतम् इत्यर्थः । महाविभाषया न अत्र नञ्-समासः ॥ १० ॥

व्यथितेति ।—पुनश्च [ अनीरशनैः ] अनिर्मेखलैः सरशनैः इत्यर्थः । [ घनैः ] निविड़ैः [ अमरलोकवधूजघनैः, शनैः ] मन्दं मन्दं [ व्यथितसिन्धुं ] क्षोभितनदीकम् ; अयम् अपरः

फणभृतामभितो विततं ततं
दयितरम्यलतावकुलैः कुलैः ॥ ११ ॥
ससुरचापमनेकमणिप्रभैः
अपपयोविशदं हिमपाण्डुभिः ।
अविचलं शिखरैरुपबिभ्रतं
ध्वनितसूचितमम्बुमुचां चयम् ॥ १२ ॥
विकचवारिरुहं दधतं सरः
सकलहंसगणं शुचि मानसम् ।

स्वर्गः इति भावः । [ दयितरम्यलतावकुलैः ] दयिताः प्रियाः रम्याः लताः वीरुधः वकुलाः केसराश्च येषां तैः तथोक्तैः । "विशारदो मद्यगन्धो वकुलः स च केसरः" इति वैद्यके । [फणभृतां ] सर्पाणां [ कुलैः अभितः ततं ] व्याप्तं तथा [ विततं ] विस्तृतम् ॥ ११ ॥

ससुरेति ।—[ अनेकमणिप्रभैः ] अनेका विचित्रा मणिप्रभा येषां तैः तथोक्तैः [ हिमपाण्डुभिः ] हिमेन पाण्डुभिः [ शिखरैः, ससुरचापं] सेन्द्रचापम् । अपपयाः निर्जलः अत एव विशदश्च तम् [ अपपयोविशदम् । अविचलं ] दैवात् निश्चलं. अतः शिखरशङ्का अस्य अभूत् इत्यर्थः । किन्तु [ ध्वनितसूचितं ] ध्वनितेन गर्जितेन सूचितं ज्ञापितम् [ अम्बुमुचां चयम्] अविरतम् [उपबिभ्रतम्] । अत्र किल कल्पितसादृश्यात् शिखरैः मेघसन्देहे मेघनिश्चयात् सन्देहालङ्कारः ॥ १२ ॥

विकचेति ।—पुनश्च [ विकचवारिरुहं ] नित्यविकसितारविन्दम् इत्यर्थः, वृत्तिसामर्थ्यात् । कलहंसगणैः सह वर्त्तते

शिवमगात्मजया च कृतेर्ष्यया
सकलहं सगणं शुचिमानसम् ॥ १३ ॥
ग्रहविमानगणानभितो दिवं
ज्वलयतौषधिजेन कृशानुना ।

इति [ सकलहंसगणम् ]। "कादम्बः कलहंसः स्यात्" इत्यमरः। यद्वा सकलाः सर्वे हंसगणाः यस्मिन् तत् तथोक्तम्। [ शुचि मानसं ] शुचि नित्यनिर्मलं मानसं मानसाख्यं [ सरः ] दधतम्। किञ्च [ कृतेर्ष्यया ] कुतश्चित् निमित्तात् कुपितया इत्यर्थः। [अगात्मजया] पार्वत्या [ सकलहं ] सविवादं, [सगणं] सप्रमथम्। "गणाः प्रमथसङ्घौघाः" इति वैजयन्ती। [ शुचिमानसम् ] अविद्याविनिर्मुक्तचित्तं [ शिवं च दधतम् ]। एतेन सकलशैलवैलक्षण्यमस्य उक्तम् ॥ १३ ॥ *

ग्रहेति।—[ दिवम् अभितः ] दिवः अभिमुखम्। "अभितः परितः" ( वा० ) इत्यादिना द्वितीया। [ ग्रहविमानगणान् ] ग्रहाः चन्द्रादयः, विमानानि देवयानानि च। "व्योमयानं विमानोऽस्त्री" इत्यमरः। तेषां गणान् [ ज्वलयता ] प्रदीपयता। "मितां ह्रस्वः" ( ६।४।९२ पा० ) इति ह्रस्वः। [ औषधिजेन ] तृणविशेषजन्येन [ कृशानुना ] वह्निना [ अनुक्षपं] प्रतिक्षपम्। वीप्सायाम् अव्ययीभावः। [उमापतिसेविनः] प्रमथादीन्। "गतिबुद्धि" ( १।४।५२ पा० ) इत्यादिना द्विकर्मत्वम्। त्रयाणां पुराणां समाहारः त्रिपुरम्। "तद्धितार्थ" ( २।१।५१ पा० ) इत्यादिना समासः। "पात्रादिभ्यः प्रतिषेधो

---

* अत्र भिन्नार्थस्वरव्यञ्जनसङ्घातवर्त्तमात् यमकालङ्कारः। कुतश्चिन्निमित्तात् कुपितया पार्वत्या इति सपत्न्यादिसन्तापः व्यङ्ग्यः इति अलङ्कारेण वस्तुध्वनिः।

मुहुरनुस्मरयन्तमनुत्तपं
त्रिपुरदाहमुमापतिसेविनः ॥ १४ ॥
विततशीकरराशिभिरुच्छ्रितैः
उपलरोधविवर्त्तिभिरम्बुभिः ।
दधतमुन्नतसानुसमुद्धतां
धृतसितव्यजनामिव जाह्नवीम् ॥ १५ ॥

॥ कुलकम् ॥

अनुचरेण धनाधिपतेरथो
नगविलोकनविस्मितमानसः ।

---

वक्तव्यः" ( वा० ) इति स्त्रीलिङ्गप्रतिषेधः । तस्य दाहं [ त्रिपुरदाहं मुहुः अनुस्मरयन्तम् ] । ननु "अधीगर्थ" (२।३।५२ पा०) इत्यादिना दाहम् इत्यत्र षष्ठी किं न स्यात् ? तस्याः शेषार्थे विधानात् शेषत्वस्य अविवक्षितत्वात् । अत्र "कविसम्मतसादृश्यात् स्मृतिः" इति स्मरणालङ्कारः ॥ १४ ॥

विततेति ।—[ विततशीकरराशिभिः ] विस्तृतशीकरपुञ्जैः [उच्छ्रितैः] उत्पतितैः । कुतः ? [उपलरोधविवर्त्तिभिः] उपलरोधेन विवर्त्तिभिः [ अम्बुभिः ] हेतुभिः [ धृतसितव्यजनाम् इव ] गृहीतामलचामराम् इव स्थिताम् इति उत्प्रेक्षा । [ उन्नतसानुसमुद्धतां ] उन्नतसानुषु समुद्धतां वहन्तीं [जाह्नवीं] गङ्गां [ दधतम् ] ॥ १५ ॥

अनुचरेणेति ।—[अथः] अनन्तरम् । "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः । [ धनाधिपतेः अनुचरेण ] यक्षेण [नगविलोकनविस्मितमानसः] नगविलोकनेन विस्मित-

स जगदे वचनं प्रियमादरात्
मुखरतावसरे हि विराजते ॥ १६ ॥
अलमेष विलोकितः प्रजानां
सहसा संहतिमंहसां विहन्तुम् ।
घनवर्त्म सहस्रधेव कुर्वन्
हिमगौरैरचलाधिपः शिरोभिः ॥ १७ ॥
इह दुरधिगमैः किञ्चिदेवागमैः
सततमसुतरं वर्णयन्त्यन्तरम् ।

---

मानसः [ सः ] अर्जुनः । [ आदरात् प्रियं वचनं जगदे ] गदितः । गदतेः ब्रुवत्यर्थस्य दुहादित्वात् प्रधाने कर्मणि लिट् । अपृष्टपरिभाषणदोषं परिहरति, मुखरतेति ।—[ मुखरता ] वाचालत्वम्, अपृष्टपरिभाषित्वम् इति यावत् । [ अवसरे ] श्रोतुः आकाङ्क्षासमये [ विराजते हि ] । आकाङ्क्षितम् अपृष्टः अपि ब्रूयात् इति भावः ॥ १६ ॥

अलमिति ।—[ हिमगौरैः ] हिमेन गौरैः शुभ्रैः [ शिरोभिः ] शिखरैः [ घनवर्त्म ] खं [ सहस्रधा कुर्वन् ] विपाटयन् [ इव ] इति उत्प्रेक्षा । [ एषः अचलाधिपः ] हिमवान् [ विलोकितः ] दृष्टमात्रः एव [ प्रजानाम् अंहसां संहतिं ] पापसङ्घातं [ सहसा विहन्तुम् अलं ] समर्थः । "पर्य्याप्तिवचनेष्वलमर्थेषु" ( ३।४।६६ पा० ) इति तुमुन् । औपच्छन्दसिकं वृत्तम् ।—"पर्य्यन्तेर्यौ तथैव शेषं चौपच्छन्दसिकं सुधीभिरुक्तम्" इति स्मरणात् ॥ १७ ॥

इहेति ।—[ इह ] अस्मिन् पर्वते । सुतरं न भवति इति

अमुमतिविपिनं वेद दिग्व्यापिनं
पुरुषमिव परं पद्मयोनिः परम् ॥ १८ ॥

रुचिरपल्लवपुष्पलतागृहैः
उपलसज्जलजैर्जलराशिभिः।
नयति सन्ततमुत्सुकतामयं
धृतिमतीरुपकान्तमपि स्त्रियः ॥ १९ ॥

[ असुतरं ] दुस्तरम् इत्यर्थः। तरतेः खल्प्रत्ययः। [ अन्तरं ] मध्यभागं, पुरुषे तु अन्तरं तत्त्वं, [ दुरधिगमैः ] दुरारोहैः, अन्यत्र—दुर्ग्रहैः, दुःखेन अधिगन्तुम् अशक्यैः इत्यर्थः [आगमैः] वृत्तैः, अन्यत्र—पुराणादिभिः। "पुराणेऽप्यागमोवृत्ते" इति रुद्रटः। [ किञ्चित् एव सततं वर्णयन्ति ] न तु कदाचित्, प्रत्यक्षेण अपि निःशेषं ज्ञातुम् अशक्यत्वात् इति भावः। किन्तु [ अतिविपिनम् ] अतिगहनं [ दिग्व्यापिनम् ] उभयत्रापि समम्। [ अमुं ] गिरिं [ परं पुरुषं ] परमात्मानम् [ इव, परं ] केवलम्। "परमव्ययमिच्छन्ति केवले" इति विश्वः। [ पद्मयोनिः ] ब्रह्मा एव [ वेद ] न अन्यः इत्यर्थः। "विदो लटो वा" ( ३।४।८३ पा० ) इति णलादेशः। अत्र उपमायमकयोः संसृष्टिः। क्षमावृत्तम्।—"तुरगरसयतिर्नौ भरौ गः क्षमा" इति लक्षणात् ॥ १८ ॥

रुचिरपल्लवेति।—[ अयं ] गिरिः। [ रुचिरपल्लवपुष्पलतागृहैः ] रुचिराणि पल्लवानि पुष्पाणि च येषां ते तथाभूताः लतागृहाः येषु तैः तथोक्तैः [ उपलसज्जलजैः ] शोभितकमलैः [जलराशिभिः] सरोभिः करणैः [ उपकान्तं ] कान्तसमीपे

सुलभैः सदा नयवताऽयवता
निधिगुह्यकाधिपरमैः परमैः ।
अमुना धनैः क्षितिभृताऽतिभृता
समतीत्य भाति जगती जगती ॥ २० ॥

[धृतिमतीः] धैर्य्यवतीः [ अपि ] समीपस्थान् अपि प्रियान् न गणयन्तीः, मानिनीः इत्यर्थः। [ स्त्रियः सन्ततम् उत्सुकतां नयति ], तासां मानग्रन्थिं शिथिलयति इत्यर्थः। अथवा— उपकान्तं धृतिमतीः तुष्टिमतीः अपि सुरततृप्ताः अपि पुनरपि उत्सुकतां नयति इत्यर्थः। उभयत्र अपि उद्दीपकत्वात् अतिशयोक्तिः। वृत्तम् उक्तम् ॥ १९ ॥

सुलभैरिति।—[ नयवता ] नीतिमता [ अयवता ] भाग्यवता च [ सदा सुलभैः ] न अन्यैः इत्यर्थः। "अयः शुभावहो विधिः" इत्यमरः। [ निधिगुह्यकाधिपरमैः ] निधीनां महापद्मादीनाम्। "अस्त्री पद्मो महापद्मः शङ्खो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव" इत्यमरः। गुह्यकानां च अधिपं कुवेरं रमयन्ति इति तथोक्तैः। "कर्म्मण्यण्" (३।२।१ पा०) [परमैः] उत्कृष्टैः [धनैः] करणैः [ अमुना क्षितिभृता] हिमाद्रिणा हेतुना [अतिभृता] पूर्णा सती [जगती] मही [ जगती ] स्वर्गपाताललोकौ [समतीत्य] अतिक्रम्य [ भाति ]। अमानुषैः अपि दुर्लभाः सम्पदः अत्र सम्भवन्ति इति भावः। अत्र धनातिभृता इति पदार्थस्य विशेषणगत्या जगदतिक्रमणहेतुत्वोक्त्या काव्यलिङ्गं, तस्य यमकेन संसृष्टिः। प्रमिताक्षरा वृत्तम्।—"प्रमिताक्षरा सजससैरुदिता" इति लक्षणात् ॥ २० ॥

अखिलमिदममुष्य गौरीगुरोः
त्रिभुवनमपि नैति मन्ये तुलाम् ।
अधिवसति सदा यदेनं जनैः
अविदितविभवो भवानीपतिः ॥ २१ ॥
वीतजन्मजरसं परं शुचि
ब्रह्मणः पदमुपैतुमिच्छताम् ।

अखिलमिति ।—[ अमुष्य गौरीगुरोः ] हिमवतः [ इदम् अखिलम् ]। त्रयाणां भुवनानां समाहारः [ त्रिभुवनम् अपि ]। "तद्धितार्थ" ( २।१।५१ पा० ) इत्यादिना समासः। पात्रादित्वात् स्त्रीत्वप्रतिषेधः। [ तुलां ] साम्यं [ न एति ] इति [ मन्ये ]। [ यत् ] यतः [ जनैः अविदितविभवः ] अज्ञातमहिमा [भवानीपतिः] शिवः [सदा एनं] गिरिम् [अधिवसति ] अस्मिन् वसति इत्यर्थः। "उपान्वध्याङ् वसः" (१।४।४८ पा०) इति कर्मत्वम्। अतः अयं धर्मक्षेत्रम् इति भावः। प्रभा वृत्तम्।—"स्वरशरविरतिर्नौ सरौ प्रभा" इति लक्षणात् ॥ २१ ॥

वीतेति।—वीते निवृत्ते जन्मजरसौ यस्य तत् [ वीतजन्मजरसम् ]। "जराया जरसन्यतरस्याम्" ( ७।२।१०१ पा० ) इति जरसादेशः। अत्र तदन्तविधेः इष्टत्वात् परत्वेन स्यादेशबाधकत्वात् च। तथाहि—"टाङसिङसामिनात्स्याः" * इति स्यादेशबाधनात्। परत्वाज्जरसादेशं बभाषे भाष्यकृत् स्वयम् ॥ सूत्रकारमते यत्तु ज्ञापकात् परबाधनम्। भवेत् तदपि टाङस्योर्न पुनर्ङसि सम्भवि ॥ मतद्वयेऽपि तत्तुल्यं

* ( ७।१।१२ पा० )

आगमादिव तमोपहादितः
सम्भवन्ति मतयो भवच्छिदः॥ २२॥
दिव्यस्त्रीणां सचरणलाक्षारागा
रागायाते निपतितपुष्पापीडाः।

---

ङसि यत्पूर्वबाधनम्। परत्वाज्जरसादेशस्तत् स्यात् स्यादेश-बाधनात्॥ ज्ञापकं यच्च टाङस्योर्यावादेशाविनादिति। ईकारदीर्घयोस्तत्र वैयर्थ्यं तत्तु तौ विना॥ एत्वे सवर्णे दीर्घे च रूपसिद्धिर्भवेद् यतः। व्यर्थसूत्राचरत्यागात् भङ्क्ते-तज्ज्ञापकं फणी॥ स्वातन्त्र्याज्जरसादेशं जगौ पूर्वस्य बाधनात्। समर्थनप्रपञ्चस्तु भाष्यकैयटयोः स्फुटः॥" एवञ्च यदत्र जरस इति केषाञ्चित् पाठान्तरकल्पनं तत् अज्ञान-विजृम्भितम् एव। [ब्रह्मणः] परमात्मनः सम्बन्धि [परम्] उत्कृष्टं [शुचि] निष्कलङ्कम्। पद्यते इति [पदं] स्थानं तादात्म्य-लक्षणम्, मुक्तिम् इत्यर्थः। [उपैतुं] प्राप्तुम् [इच्छतां] मुमुक्षूणाम् [आगमात्] शास्त्रात् [इव]। तमः अपहन्ति इति [तमोऽपहात्] अविद्यानिवर्त्तकात्। "अपे क्लेशतमसोः" (३।२।५० पा०) इति डप्रत्ययः। [इतः] अस्मात् गिरेः। भवं छिन्दन्ति इति [भवच्छिदः] संसारनिवर्त्तकाः। "सत्-सूद्विष" (३।२।६१ पा०) इत्यादिना क्विप्। [मतयः] तत्त्वज्ञानानि [सम्भवन्ति] उत्पद्यन्ते। क्षेत्रविशेषस्य अपि ज्ञानोपपादकत्वात् इत्याशयः। न केवलं इयं भोगभूमिः किन्तु मुक्तिक्षेत्रम् अपि इति तात्पर्य्यार्थः। रथोद्धता वृत्तम्। तल्लक्षणम्—"रान्नराविह रथोद्धता लगौ" इति॥ २२॥

दिव्येति।—[अस्मिन्] गिरौ [सचरणलाक्षारागाः]

पीड़ाभाजः कुसुमचिताः साशंसं
शंसन्त्यस्मिन् सुरतविशेषं शय्याः॥ २३॥

चरणलाक्षारागैः सह वर्त्तन्ते ताः तथोक्ताः, धेनुकपुरुषायितादिबन्धेषु स्त्रियाः पादतलस्याधः स्पर्शात् तद्रागाङ्किता इत्यर्थः। [निपतितपुष्पापीड़ाः] निपतिताः व्यानतकरणे स्त्रीणाम् अधोमुखत्वात् भ्रष्टाः पुष्पापीड़ाः कुसुमशेखराः यासु ताः तथोक्ताः। "शिखास्वापीड़शेखरौ" इत्यमरः। [पीड़ाभाजः] विमर्दभाजः, भङ्गिमत्यः इत्यर्थः। भ्रमरप्रेङ्खोलितादौ सर्वतः कटिपरिभ्रमणसम्भवात् इति भावः। [कुसुमचिताः]। कुसुमैः चिताः कुसुमव्याप्ताः। इभमार्जारादिकरणेषु स्तनभुजाद्यवयवानां शय्यातलस्थायित्वात् मार्दवाय कुसुमास्तृताः इत्यर्थः। [दिव्यस्त्रीणां] सम्बन्धिन्यः। शेरते आसु इति [शय्याः] तल्पानि। "संज्ञायां समजनिषद" (३।३।९८ पा०) इत्यादिना क्यप्। [रागायाते] रागोद्रेके सति यः साशंसः सतृष्णः सुरतविशेषः तं, [साशंसं] जातौ एकवचनं, सुरतविशेषान् इत्यर्थः। [शंसन्ति] सूचयन्ति, विवृण्वन्ति इत्यर्थः। अत्र लाक्षारागादिपदार्थानां सुरतविशेषशंसनं प्रति विशेषणगत्या हेतुत्वोक्त्या काव्यलिङ्गम् अलङ्कारः यमकेन संसृज्यते। जलधरमाला वृत्तम्—"भ्मौ स्मौ चेत् स्याज्जलधरमाला ख्याता" इति लक्षणात्। धेनुकादिबन्धलक्षणं तु रतिरहस्ये।—"न्यस्तहस्तयुगला निजे पदे योषिदेति कटिरूढ़वल्लभा। अग्रतो यदि शनैरधोमुखी धेनुकं वृषवदुन्नते प्रिये॥ स्वेच्छया भ्रमति वल्लभेऽपि या योषिदाचरति वल्लभायितम्। व्यानतं रतमिदं यदि प्रिया स्यादधोमुखचतुष्पदाकृतिः॥ तत्कटिं समधिरुह्य वल्लभः स्याद्वृषादिपशुसंस्थितिस्थितः। चक्रवद्भ्रमति कुञ्चिताङ्घ्रिका

गुणसम्पदा समधिगम्य परं
महिमानमत्र महिते जगताम् ।
नयशालिनि श्रिय इवाधिपतौ
विरमन्ति न ज्वलितुमौषधयः ॥ २४ ॥
कुररीगणः कृतरवस्तरवः
कुसुमानताः सकमलं कमलम् ।

भ्रामरं न जघने समुन्नते ॥ सर्वतः कटिपरिभ्रमो यदि प्रेङ्खपूर्वमिदमुक्तमारतम् । भूगतस्तनभुजास्यमस्तकामुन्नतां स्वयमधोमुखीं स्त्रियम् ॥ क्रामति स्वकरकृष्टमेहने वल्लभे करिरतं तदुच्यते" । "प्रसारिते पाणिपादे शय्यास्पृशि मुखोरसि । उन्नतायाः स्त्रियाः कट्यां मार्जारीक्रमणं विदुः ॥" इति ग्रन्थान्तरे ॥ २३ ॥

गुणेति ।—[ जगतां महिते ] जगद्भिः पूजिते पूज्यमाने । "मतिबुद्धि" ( ३।२।१८८ पा० ) इत्यादिना वर्त्तमाने क्तः । "क्तस्य च वर्त्तमाने" ( २।३।६७ पा० ) इति षष्ठी । [ अत्र ] हिमवति [ औषधयः ] तृणज्योतींषि [ नयशालिनि अधिपतौ ] नीतिसम्पन्ने राज्ञि [ श्रियः ] सम्पदः [ इव गुणसम्पदा ] तेजोगुणसम्पत्त्या, अन्यत्र—सन्ध्यादिगुणसम्पदा [ परं महिमानं ]। अन्यत्र अपि प्रकाशसामर्थ्यम् । [समधिगम्य ज्वलितुं] प्रकाशितुं [ न विरमन्ति ] अविरतं ज्वलन्ति इत्यर्थः । अन्यत्र रात्रादौ एव इति भावः ॥ २४ ॥

कुररीति ।— [ इह ] अद्रौ [ कुररीगणः ] उत्क्रोशसङ्घः । "उत्क्रोशकुररौ समौ" इत्यमरः । [ कृतरवः ] कृतारवः,

इह सिन्धवश्च वरणावरणाः
करिणां मुदे सनलदानलदाः ॥ २५ ॥
सादृश्यं गतमपनिद्रचूतगन्धैः
आमोदं मदजलसेकजं दधानः।

---

[तरवः, कुसुमानताः] कुसुमैः आनताः, [कमलं] जलं [सकमलं] सपङ्कम्। "कमलं जलपङ्कयोः" इति विश्वः। यद्वा कं जलमलमत्यन्तं सपङ्कं वर्त्तते। "कं जले शिरसि च" इत्यमरः। किञ्च वरणाः द्रुमाः आवरणं यासां ताः [वरणावरणाः]। "वरणो वरुणः सेतुस्तिक्तशाकः कुमारकः" इत्यमरः। [सनलदानलदाः] सनलदाः सोशीराः। "मूलेऽस्योशीरमस्त्रियाम्। अभयं नलदं सेव्यम्" इत्यमरः। अनलं सन्तापं द्यन्ति खण्डयन्ति शमयन्ति इति अनलदाः। सनलदाश्च ताः अनलदाः [सिन्धवश्च] नद्यः [करिणां मुदे] भवन्ति इति शेषः। न कुत्र अपि उक्तवैपरीत्यम् इति भावः॥ २५॥ *

सादृश्यमिति।--[एतस्मिन्] पर्वते [अपनिद्रचूतगन्धैः सादृश्यं गतं] फुल्लाम्रपुष्पगन्धसदृशं [मदजलसेकजम् आमोदं] परिमलं [दधानः] बिभ्राणः। अत एव [लीनालिः] संसक्तभृङ्गः [सुरकरिणां, कपोलकाषः] कष्यते अनेन इति काषः। कपोलानां काषः कषणस्थानं द्रुमस्कन्धादि। [अकाले] वसन्तातिरिक्ते काले अपि [कोकिलान् मदयति]। "मितां ह्रस्वः" (६।४।९२ पा०) इति ह्रस्वः। अत्र वसन्तरूपकारणाभावे अपि मदाख्यकार्य्योत्पत्तिकथनात् विभावनालङ्कारः।

* अत्र भिन्नार्थस्वरव्यञ्जनसंघावर्त्तनात् यमकालङ्कारः।

एतस्मिन् मदयति कोकिलानकाले
लीनालि: सुरकरिणां कपोलकाष: ॥२६॥
सनाकवनितं नितम्बरुचिरं
चिरं सुनिनदैर्नदैर्वृतममुम् ।
मता फणावतोऽवतो रसपरा
परास्तवसुधा सुधाधिवसति ॥ २७ ॥

---

तदुक्तम् ।—"कारणेन विना कार्य्यस्योत्पत्ति: स्याद्विभावना" इति। सा च चूतगन्धै: सादृश्यम् इति उपमया आमोदं दधान: इति पदार्थहेतुककाव्यलिङ्गेन च अङ्गाङ्गिभावेन सङ्कीर्य्यते। किञ्च कोकिलानां मदगन्धे चूतगन्धभ्रान्त्या भ्रान्तिमदलङ्कार: व्यज्यते। प्रहर्षिणी वृत्तम्।—"म्नौ ज्रौ गस्त्रिदशयति: प्रहर्षिणीयम्" इति लक्षणात् ॥ २६ ॥

सनाकेति।—पुनश्च [ सनाकवनितं ] साप्सरस्कं [ नितम्बरुचिरं ] नितम्बै: कटकै: रुचिरम्। [ सुनिनदै: ] सुघोषै: [ नदै: ] प्रवाहै: [ वृतम्, अमुम् ] अमुष्मिन् गिरौ इत्यर्थ:। "उपान्वध्याङ्वस:" (१।४।४८ पा०) इति कर्म्मत्वम्। [ अवत: ] अधोलोकरक्षकस्य [ फणावत: ] नागराजस्य [मता] इष्टा। "मतिबुद्धि" (३।२।१८८ पा०) इत्यादिना वर्त्तमाने क्त:। तद्योगात् षष्ठी। [ रसपरा ] रसेन स्वादेन परा उत्कृष्टा। [ परास्तवसुधा ] त्यक्तभूलोका [ सुधा ] अमृतं [ चिरम् अधिवसति ], अत: अन्यत्र भूमण्डले कुत्रापि सुधा नास्ति इत्यर्थ:। मेरुप्रतिभट: अयं गिरि: इति भाव:। अत्र प्रस्तुतविशेषणसामर्थ्यात् अप्रस्तुतमेरुप्रतीते: समासोक्ति: अलङ्कार:, स

श्रीमल्लताभवनमोषधयः प्रदीपाः
शय्या नवानि हरिचन्दनपल्लवानि।
अस्मिन् रतिश्रमनुदश्च सरोजवाताः
स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः॥२८॥
ईशार्थमम्भसि चिराय तपश्चरन्त्याः
यादोविलङ्घनविलोलविलोचनायाः।

---

च यमकेन संसृज्यते। जलोद्धतगतिः वृत्तम्।—"रसैर्जसजसा जलोद्धतगतिः" इति लक्षणात्॥ २७॥

श्रीमदिति।—[अस्मिन्] अद्रौ [श्रीमत्] समृद्धिमत् [लताभवनं] लता एव भवनम् [ओषधयः] तृणज्योतींषि एव [प्रदीपाः, नवानि हरिचन्दनपल्लवानि] सुरतरुकिसलयानि एव [शय्याः]। "हरिचन्दनमाख्यातं गोशीर्षे सुरपादपे" इति विश्वः। [रतिश्रमनुदः] सुरतश्रमहारिणः [सरोजवाताश्च सुरसुन्दरीभ्यः]। क्रियाग्रहणात् चतुर्थी। [दिवः] दिवम्। "अधीगर्थ" (२।३।५२ पा०) इत्यादिना कर्मणि षष्ठी। [स्मर्तुं न दिशन्ति] विस्मारयन्ति इत्यर्थः, स्वर्गात् अपि अतिरिच्यते असौ इति भावः। अत्र पूर्वार्द्धे रूपकत्रयं स्फुटम् एव॥ २८॥

ईशार्थमिति।—ईशाय इदम् इति [ईशार्थं] यथा तथा इति क्रियाविशेषणम्। "अर्थेन नित्यसमासः विशेष्यलिङ्गता चेति वक्तव्यम्" (वा०)। [चिराय] चिरम् [अम्भसि तपः चरन्त्याः] अत एव [यादोविलङ्घनविलोलविलोचनायाः] जलजन्तुविघट्टितचलेक्षणायाः तपसः अपि अधिकहृद्ध्या एव विलोभयन्त्याः

आलम्बताग्रकरमत्र भवो भवान्याः
श्चोतन्निदाघसलिलाङ्गुलिना करेण ॥ २९ ॥
येनापविद्धसलिलः स्फुटनागसद्मा
देवासुरैरमृतमम्बुनिधिर्ममन्थे ।

---

इति भावः । "यादांसि जलजन्तवः" इत्यमरः । [ भवान्याः ] भवपत्न्याः, प्रयोगकालापेक्षः अयं निर्देशः । "इन्द्रवरुणभव" ( ४।१।४९ पा० ) इत्यादिना ङीष्, आनुगागमश्च । करैकदेशस्य अपि करत्वात् अग्रश्च असौ करश्च इति समानाधिकरणे समासः । अत एव वामनः ।—"हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदौ" इति । तम् [ अग्रकरं ] [ भवः ] शिवः [ श्चोतन्निदाघसलिलाङ्गुलिना ] स्रवत्स्वेदाङ्गुलिना इति सात्त्विकोक्तिः । [ करेण, अत्र ] गिरौ [ आलम्बत ] गृहीतवान् । अत्र अद्भुतातीतवृत्तान्तस्य प्रत्यक्षवत् अभिधानात् भाविकालङ्कारः ।—"अतीतानागते यत्र प्रत्यक्षवदलक्षिते । अत्यद्भुतार्थकार्य्यत्वाद्भाविकं तदुदाहृतम् ॥" इति लक्षणात् । वसन्ततिलका वृत्तम् ।—"उक्ता वसन्ततिलका तभजाजगौ गः" इति तल्लक्षणात् ॥ २९ ॥

येनेति ।—देवाश्च असुराश्च तैः [ देवासुरैः ] । "येषां च विरोधः शाश्वतिकः" ( २।४।९ पा० ) इति नैकवद्भावः । एषां यतः कार्य्यतः एव विरोधः न गोव्याघ्रादिवत् शाश्वतिकः इति आहुः । [ येन ] मन्दराद्रिणा मन्थदण्डीकृतेन इति भावः । [ अपविद्धसलिलः ] क्षिप्तजलः अत एव [ स्फुटनागसद्मा ] स्फुटं नागसद्म पातालं यस्मिन् सः [ अम्बुनिधिः अमृतं ममन्थे ] मथितः । मथातेः द्विकर्मकत्वात् दुहादित्वात् अप्रधाने

व्यावर्त्तनैरहिपतेरयमाहिताङ्कः
खं व्यालिखन्निव विभाति स मन्दराद्रिः ॥३०॥
नीतोच्छ्रायं मुहुरशिशिररश्मेरुस्रैः
आनीलाभैर्विरचितपरभागा रत्नैः ।
ज्योत्स्नाशङ्कामिह वितरति हंसश्येनी
मध्येऽप्यह्नः स्फटिकरजतभित्तिच्छाया ॥३१॥

कर्म्मणि लिट् । [ अहिपतेः ] मन्थगुणीकृतस्य वासुकेः इत्यर्थः । "मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम्" इति भारतवचनात् । [ व्यावर्त्तनैः ] वेष्टनैः [ आहिताङ्कः ] कृतचिह्नः [ सः अयं मन्दराद्रिः खम् ] आकाशं [व्यालिखन्] व्यापाटयन् [इव विभाति] । अत्र औचित्यानुपादानेन एव खलेखनेन उत्प्रेक्षणात् अनुपात्तगुणनिमित्ता क्रियास्वरूपा उत्प्रेक्षा ॥ ३० ॥

नीतेति ।—[ इह ] अद्रौ [ अशिशिररश्मेः ] उष्णांशोः [ उस्रैः ] मयूखैः सङ्क्रान्तैः इत्यर्थः । [ नीतोच्छ्रायम् ] उच्छ्रायं नीता विस्तारिता इत्यर्थः । तथा [ आनीलाभैः ] असितप्रभैः [ रत्नैः ] इन्द्रनीलैः [ विरचितपरभागा ] तत्सन्निधानात् लब्धोत्कर्षा इत्यर्थः । [ हंसश्येनी ] हंसः इव श्येनी श्वेतवर्णा "विशदश्येतपाण्डराः" इत्यमरः । "वर्णादनुदात्तात्तोपधात्तो नः" ( ४।१।३९ पा० ) इति श्येतशब्दात् ङीप् । तकारस्य च नकारः । [ स्फटिकरजतभित्तिच्छाया ] स्फटिकानां रजतानां च भित्तयः तासां छाया कान्तिः । [ अह्नः मध्ये ] मध्याह्ने [ अपि ] इत्यर्थः [ मुहुः ज्योत्स्नाशङ्कां ] ज्योत्स्नाभ्रान्तिं [ वितरति ] जनयति इति भ्रान्तिमदलङ्कारः ॥ ३१ ॥ *

* मध्यक्षामा वृत्तम् ।—"मध्यक्षामा युगदशविरमा म्भौ न्यौ गौ" इति लक्षणात् ।

दधत इव विलासशालि नृत्यं
मृदु पतता पवनेन कम्पितानि।
इह ललितविलासिनीजनभ्रू-
गतिकुटिलेषु पयःसु पङ्कजानि॥ ३२॥
अस्मिन्नगृह्यत पिनाकभृता सलीलं
आबद्धवेपथुरधीरविलोचनायाः।
विन्यस्तमङ्गलमहौषधिरीश्वरायाः
स्रस्तोरगप्रतिसरेण करेण पाणिः॥ ३३॥

---

दधत इति।—[ इह ] अद्रौ [ मृदु पतता ] मन्दं वहता [ पवनेन कम्पितानि पङ्कजानि, ललितविलासिनीजनभ्रूगति कुटिलेषु ] ललितविलासिनीजनस्य भ्रूगतिवत् कुटिलेषु ईषत्तरङ्गितेषु इत्यर्थः [ पयःसु विलासशालि नृत्यं दधत इव ] सविलासं नृत्यन्ति इव इति उत्प्रेक्षा। पुष्पिताग्रा वृत्तम्॥ ३२॥

अस्मिन्निति।—[ अस्मिन् ] अद्रौ [ पिनाकभृता ] शिवेन [ अधीरविलोचनायाः ] चकितदृष्टेः, उरगदर्शनात् इति भावः। [ईश्वरायाः] गौर्य्याः। "स्थेशभास" (३।२।१७५ पा०) इत्यादिना वरच्। पुंयोगविवक्षाभावात् न ङीष्। [आबद्धवेपथुः] प्राप्तकम्पः इति सात्त्विकोक्तिः। "ट्वितोऽथुच्" (३।३।८९ पा०) इति अथुच्-प्रत्ययः। [ विन्यस्तमङ्गलमहौषधिः ] विन्यस्ता मङ्गलमहौषधिः यवाङ्कुरादिः यस्मिन् सः [पाणिः। स्रस्तोरगप्रतिसरेण ] स्रस्तः गलितः उरगः एव प्रतिसरः कौतुकसूत्रं यस्य तेन। "आहुः प्रतिसरो हस्तसूत्रे माल्ये च मण्डने" इति विश्वः।

क्रामद्भिर्घनपदवीमनेकसङ्ख्यैः
तेजोभिः शुचिमणिजन्मभिर्विभिन्नः।
उस्राणां व्यभिचरतीव सप्तसप्तेः
पर्य्यस्यन्निह निचयः सहस्रसङ्ख्याम्॥ ३४॥

व्यधत्त यस्मिन् पुरमुच्चगोपुरं
पुरां विजेतुर्धृतये धनाधिपः।

[करेण सलीलम् अग्टह्यत] इति देवस्य पार्वतीपरिणयन-वर्णनम्। ईशार्थम् इत्यत्र तु अनुग्रहमात्रोक्तिः इति अपौन-रुक्त्यम्। भाविकम् एव अलङ्कारः॥ ३३॥

क्रामद्भिरिति।—[घनपदवीम्] आकाशं [क्रामद्भिः] व्यश्नु-वानैः [अनेकसंख्यैः] परःसहस्रैः इत्यर्थः। क्वचित् "अनेक-वर्णैः" इति पाठस्तु प्रामादिकः एव, वैयर्थ्यात् व्याघाताच्च इति। [शुचिमणिजन्मभिः] शुचिमणिभ्यः स्फटिकेभ्यः जन्म येषां तैः। "जन्माद्युत्तरपदो बहुव्रीहिर्व्यधिकरणोऽपीष्यते" इति वामनः। [तेजोभिः विभिन्नः] मिश्रः, अत एव [पर्य्यस्यन्] प्रसर्पन् [इह] अद्रौ [सप्तसप्तेः] सवितुः [उस्राणां] किर-णानां [निचयः] निकरः। [सहस्रसंख्यां] सहस्रम् इति संख्या सहस्रसंख्या तां, स्वनियताम् इति शेषः। व्यभिचरति अतिक्रामति इव इति उत्प्रेक्षा॥ ३४॥

व्यधत्तेति।—[यस्मिन्] कैलासे [धनाधिपः] कुवेरः [पुरां विजेतुः] शिवस्य [धृतये] सन्तोषाय [उच्चगोपुरम्] उन्नतपुरद्वारम्। "पुरद्वारन्तु गोपुरम्" इत्यमरः। [पुरम्] अलकाख्यां पुरीं [व्यधत्त] निर्मितवान्, तस्याखिलत्वात् इति

स एष कैलास उपान्तसर्पिणः
करोत्यकालास्तमयं विवस्वतः ॥ ३५ ॥
नानारत्नज्योतिषां सन्निपातैः
छन्नेष्वन्तःसानु वप्रान्तरेषु ।
बद्धां बद्धां भित्तिशङ्काममुष्मिन्
आवानावान् मातरिश्वा निहन्ति ॥ ३६ ॥

---

भावः । [ सः एषः ] कैलासः [ उपान्तसर्पिणः ] प्रान्तचारिणः [विवस्वतः] सूर्य्यस्य [अकालास्तमयं ] अकाले प्रसिद्धेतरकाले अस्तमयं [करोति] इव इति उत्प्रेक्षा । वस्तुतस्तु तत्कारणाभावात् व्यञ्जकाप्रयोगात् गम्या उत्प्रेक्षा । सा च उपान्तवर्त्तितया असम्बन्धे सम्बन्धलक्षणातिशयोक्त्युत्थापिता इति विवेकः । अस्तम् इति मकारान्तम् अव्ययम् । तस्य पचाद्यजन्तेन अयशब्देन षष्ठीसमासः । वंशस्थं वृत्तम् ॥ ३५ ॥

नानेति—[ अमुष्मिन् ] कैलासे [ अन्तःसानु ] सानुषु इत्यर्थः । विभक्त्यर्थे अव्ययीभावः । [नानारत्नज्योतिषां] अनेकमणिकान्तिनां [सन्निपातैः] व्यतिकरैः [छन्नेषु] छादितेषु । "वा दान्तशान्त" (७।२।२७ पा०) इत्यादिना निपातः [ वप्रान्तरेषु ] कटकान्तरेषु [बद्धां बद्धाम्] अभीक्ष्णबद्धां दृढ़ोत्पादिताम् इत्यर्थः । "नित्यवीप्सयोः" (८।१।४ पा०) इति नित्यार्थे द्विर्भावः । "नित्यमभीक्ष्णम्" इति काशिका । एकपदं च एतत् । [भित्तिशङ्कां] भित्तिः इति सन्देहम् [ आवान् आवान् ] अभीक्ष्णम् आपतन् । आङ्पूर्वात् वाधातोः शतृप्रत्ययः । द्विर्भावादि पूर्ववत् । मातरि अन्तरिक्षे श्वयति गच्छति इति [ मातरिश्वा ] वायुः ।

रम्या नवद्युतिरपैति न शाद्वलेभ्यः
श्यामीभवन्त्यनुदिनं नलिनीवनानि ।
अस्मिन् विचित्रकुसुमस्तवकाचितानां
शाखाभृतां परिणमन्ति न पल्लवानि ॥३७॥
परिसरविषयेषु लीढ़मुक्ता
हरिततृणोद्गमशङ्कया मृगीभिः ।

कनिन्प्रत्ययः । * "तत्पुरुषे कृति बहुलम्" (६।३।१४ पा॰) इति अलुक् । [निहन्ति] निवर्त्तयति, वायुसञ्चारात् भित्त्यभावः अवधार्य्यते इत्यर्थः । अतः निश्चयान्तः सन्देहालङ्कारः । शालिनी वृत्तम् ॥ ३६ ॥

रम्येति ।—[अस्मिन्] अद्रौ । [शाद्वलेभ्यः] शादाः शष्पाणि सन्ति एषु इति शाद्वलाः तेभ्यः । "शाद्वलः शादहरिते" इत्यमरः । "नडशादाड्ड्वलच्" (४।२।८८ पा॰) । [रम्या । नवद्युतिः] नवा द्युतिः [न अपैति] किन्तु नित्या इत्यर्थः । [नलिनीवनानि, अनुदिनं] सर्वदा [श्यामीभवन्ति] न कदाचित्पाण्डुरीभवन्ति इत्यर्थः । [विचित्रकुसुमस्तवकाचितानां] विचित्रकुसुमस्तवकैः आचितानां व्याप्तानां [शाखाभृतां] तरूणां [पल्लवानि न परिणमन्ति] न जीर्णानि भवन्ति इत्यर्थः, सर्वदा नूतनमेव सर्वं वर्त्तते इत्यर्थः । अत्र प्रस्तुतस्य एव तत्तद्वस्तुगतकान्तिस्थैर्य्यरूपकार्य्यस्य वर्णनात् प्रस्तुतम् इव कारणं कश्चित् असाधारणः कैलासस्य महिमा अवगम्यते इति पर्य्यायोक्तिः अलङ्कारः । तदुक्तम्—"कारणं गम्यते यत्र प्रस्तुतं कार्य्यवर्णनात् । प्रस्तुतत्वेन सम्बन्धस्तत्पर्य्यायोक्तमुच्यते" ॥ इति ॥३७॥

* "श्वन् उक्षन् पूषन् प्लीहन् क्लेदन् स्नेहन् मूर्द्धन् मज्जन्नर्य्यमन् विश्वप्सन् परिज्मन् मातरिश्वन् मघवन्" इति (उणा॰ १।१५६ पा॰)

इह नवशुककोमला मणीनां
रविकरसम्बलिताः फलन्ति भासः ॥ ३८ ॥
उत्फुल्लस्थलनलिनीवनादमुष्मात्
उद्धूतः सरसिजसम्भवः परागः ।
वात्याभिर्वियति विवर्त्तितः समन्तात्
आधत्ते कनकमयातपत्रलक्ष्मीम् ॥ ३९ ॥

परिसरेति ।—[ इह ] अद्रौ [ परिसरविषयेषु ] पर्य्यन्तदेशेषु । "विषयो देशे" ( ४।२।५२ पा० ) इति निपातः । [ मृगीभिः हरिततृणोद्गमशङ्कया ] नीलतृणाङ्कुरभ्रान्त्या इति भ्रान्तिमदलङ्कारः । लीढ़ाः पूर्वम् आस्वादिताः पश्चात् मुक्ताः [ लीढ़मुक्ताः ] । दग्धप्ररूढ़ः इत्यादिवत् "पूर्वकाल" ( २।१।४८ पा० ) इत्यादिना समानाधिकरणसमासः । [ नवशुककोमलाः ] शुकसवर्णाः इत्यर्थः [ मणीनां ] मरकतमणीनां [ भासः । रविकरसम्बलिताः ] रविकरैः सम्बलिताः मिश्रिताः सत्यः [ फलन्ति ] सम्मूर्च्छन्ति, वर्द्धन्ते इति यावत् ॥ ३८ ॥

उत्फुल्लेति ।—अस्मिन्नद्रौ [वात्याभिः] वातसमूहैः "पाशादिभ्यो यः" ( ४।२।४९ पा० ) इति यःप्रत्ययः । [ अमुष्मात् ] दृश्यमानात् [ उत्फुल्लस्थलनलिनीवनात् ] जलपतितस्य परागस्य उत्थानासम्भवात् स्थलग्रहणम् । उत्फुल्लसंफुल्लयोः उपसंख्यानात् निष्ठातत्वम् । * [उद्धूतः] उत्थापितः [ वियति समन्तात्, विवर्त्तितः ] परिमण्डलितः । अन्तराले तु दण्डायमानः एवेति भावः । [ सरसिजसम्भवः ] पद्मोद्भवः [ परागः ] । रूढ्यभिप्रायेण अत्र सरसिजशब्दप्रयोगः द्रष्टव्यः ।

* उत्फुल्लसंफुल्लयोरुपसंख्यानम् ( वा० )

इह सनियमयोः सुरापगायाम्
उषसि सयावकसव्यपादरेखा ।
कथयति शिवयोः शरीरयोगं
विषमपदा पदवी विवर्त्तनेषु ॥ ४० ॥
सम्मूर्च्छतां रजतभित्तिमयूखजालै-
रालोलपादपलतान्तरनिर्गतानाम् ।

---

[कनकमयातपत्रलक्ष्मीम्, आधत्ते] अनुकरोति । अत्र परागस्य आतपत्रलक्ष्मीसम्बन्धासम्भवात् तत्सदृशीं लक्ष्मीम् इति प्रतिबिम्बेन आक्षेपात् असम्भविधर्मसम्बन्धा इयं निदर्शना । तदुक्तम्—"असम्भवद्धर्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रियागम्या यत्र सा स्यान्निदर्शना ॥" इति ॥ ३९ ॥

इहेति ।—[ इह ] अद्रौ [ उषसि ] प्रभाते [ सुरापगायां ] लक्षणया तत्कूले [सयावकसव्यपादरेखा] सयावका सालक्तका सव्यपादस्य रेखा वामचरणमुद्रा यस्यां सा । "यावोऽलक्तो द्रुमामयः" इत्यमरः । तथा [ विषमपदा ] विषमाणि महदल्पानि पदानि यस्यां सा [ विवर्त्तनेषु ] प्रदक्षिणक्रियासु [ पदवी ] शिवयोः प्रदक्षिणपद्धतिः इत्यर्थः । [ सनियमयोः ] सन्ध्यायां नियमतोः इत्यर्थः । शिवा च शिवश्च तयोः [शिवयोः] उमाशङ्करयोः । "पुमान् स्त्रिया" ( १।२।६७ पा० ) इति एकशेषः । [ शरीरयोगम् ] अर्द्धाङ्गसङ्घटनारूपं [ कथयति ] । सनियमयोः इति नियमविषये अपि विरहासहौ इह विहरतः शिवौ इति भावः । अत्र पदवीविशेषणपदार्थयोः कथनं प्रति हेतुत्वोक्तेः काव्यलिङ्गम् अलङ्कारः ॥ ४० ॥

घर्मद्युतेरिह मुहुः पटलानि धाम्नाम्
आदर्शमण्डलनिभानि समुल्लसन्ति ॥ ४१ ॥

शुक्लैर्मयूखनिचयैः परिवीतमूर्त्तिः
वप्राभिघातपरिमण्डलितोरुदेहः।
शृङ्गाण्यमुष्य भजते गणभर्त्तुरुक्षा
कुर्वन् वधूजनमनःसु शशाङ्कशङ्काम् ॥ ४२ ॥

---

सम्मूर्च्छितामिति।—[ इह ] अद्रौ [ रजतभित्तिमयूख-जालैः सम्मूर्च्छितां ] बहुलीभवताम् [ आलोलपादपलतान्तर-निर्गतानाम् ] आलोलानां पादपलतानां तरुशाखानाम् अन्तरेषु रन्ध्रेषु निर्गतानां प्रसृतानां [ घर्मद्युतेः ] उष्णांशोः [ धाम्नां ] तेजसां [ आदर्शमण्डलनिभानि ] दर्पणविम्बसदृशानि इति उपमालङ्कारः। [ पटलानि ] मण्डलानि [ मुहुः ] वारंवारं [ समुल्लसन्ति ] पुनः पुनः स्फुरन्ति, न तु सातत्येन, लतानाम् आलोलत्वाभावात्। तच्च नान्यत्र मृत्पाषाणादिप्राये सम्भ-वति इति भावः ॥ ४१ ॥

शुक्लैरिति।—[ शुक्लैः मयूखनिचयैः ] शुभ्रकिरणसमूहैः [ परिवीतमूर्त्तिः ] व्याप्तदेहः। [ वप्राभिघातपरिमण्डलितो-रुदेहः ] वप्राभिघातेन वप्रक्रीड़या परिमण्डलितः वर्त्तुलीकृतः उरुदेहः वृहच्छरीरं यस्य तथोक्तः [ गणभर्त्तुः ] प्रमथनाथस्य [ उक्षा ] वृषभः। "उक्षानड्वान्वलीवर्दः ऋषभो वृषभो वृषः" इत्यमरः। [ वधूजनमनःसु शशाङ्कशङ्कां ] चन्द्रभ्रान्तिं [कुर्वन्] तेषां मौग्ध्यात् इति भावः। [ अमुष्य ] अद्रेः [ शृङ्गाणि भजते ] सेवते। अत्र शङ्काशब्दस्य सन्देहार्थत्वे सन्देहालङ्कारः।

सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि
क्षीणपयस्युपेयुषि भिदां जलधरपटले।
खण्डितविग्रहं बलभिदो धनुरिह विविधाः
पूरयितुं भवन्ति विभवः शिखरमणिरुचः॥४३॥
स्नपितनवलतातरुप्रवालैः
अमृतलवस्रुतिशालिभिर्मयूखैः।

भ्रान्तिपरत्वे भ्रान्तिमदलङ्कारः। यथा इच्छसि तथा अस्तु। स च उत्प्रेक्षाविशेषणोत्थेन काव्यलिङ्गेन अङ्गाङ्गिभावेन सङ्कीर्यते॥ ४२॥

सम्प्रतीति।—[इह] अद्रौ [विविधाः] नानावर्णाः शिखरमणिरुचः, सम्प्रति] शरदि इत्यर्थः। [लघुनि] अगुरुणि। कुतः? [क्षीणपयसि] अत एव [भिदां] भेदम्। "षिद्भिदादिभ्योऽङ्" (३।३।१०४ पा०) इति अङ् प्रत्ययः। [उपेयुषि] गते [जलधरपटले] मेघमण्डले [कथम् अपि शनकैः, लब्धजन्म] उत्पन्नम् इत्यर्थः। अत एव [खण्डितविग्रहं] छिन्नस्वरूपं [बलभिदः] इन्द्रस्य [धनुः पूरयितुं, विभवः] समर्थाः [भवन्ति]। अत्र इन्द्रधनुषः मणिरुचीनाम् असम्बन्धे सम्बन्धकथनात् अतिशयोक्तिः अलङ्कारः। वंशपत्रपतितं वृत्तम्।— "दिङ्मुनिवंशपत्रपतितं भरनभरलगैः" इति लक्षणात्॥ ४३॥

स्नपितेति।—[इह] अद्रौ [शम्भोः इन्दुलेखा। स्नपितनवलतातरुप्रवालैः] स्नपितानि सिक्तानि नवानि लतानां तरूणां च प्रवालानि यैः तैः। [अमृतलवस्रुतिशालिभिः] अमृतलवस्रुत्या अमृतबिन्दुनिःस्यन्देन शालन्ते ये तैः [मयूखैः, सततं]

सततमसितयामिनीषु शम्भोः
अमलयतीह वनान्तमिन्दुलेखा ॥ ४४ ॥

क्षिपति योऽनुवनं विततां बृहद्-
बृहतिकामिव रौचनिकीं रुचम् ।
अयमनेकहिरण्मयकन्दरः
तव पितुर्दयितो जगतोधरः ॥ ४५ ॥

सर्वकालम् [ असितयामिनीषु ] कृष्णपक्षरात्रिषु अपि [ वनान्तम् अमलयति ] धवलयति । अन्यत्र न एतदस्ति इति व्यतिरेकः व्यज्यते ॥ ४४ ॥

क्षिपतीति ।—अथ [ यः ] अद्रिः [ अनुवनं विततां रौचनिकीं रुचं] सौवर्णीं कान्तिम् इत्यर्थः । रोचनया रक्तां रौचनिकीम् । "लाक्षारोचनशकलकर्दमाट्ठक्" * इति ठक् । "टिड्ढाणञ्" ( ४।१।१५ पा० ) इत्यादिना ङीप् । उत्प्रेक्षते ।—बृहती चासौ बृहतिका च तां [ बृहद्बृहतिकां ] महोत्तरासङ्गम् [ इव ] । "द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा" इत्यमरः । [ क्षिपति ] प्रसारयति । [ अनेकहिरण्मयकन्दरः ] अनेकाः हिरण्मय्यः कन्दराः यस्य सः । हिरण्मयशब्दः "दाण्डिनायन" ( ६।४।१७४ पा० ) इत्यादिना निपातनात् साधुः । [ अयं ] पुरोवर्त्ती गिरिः इत्यर्थः । [ तव पितुः ] इन्द्रस्य [ दयितः ] प्रियः । जगत्याः धरः [ जगतोधरः ] । यः ते गन्तव्यः इन्द्रकीलाख्यः इत्यर्थः ॥ ४५ ॥

* लाक्षारोचनाट्ठक् (४।२।२ पा०) । शकलकर्दमाभ्यामुपसंख्यानम् । (वा०)

सक्तिं जवादपनयत्यनिले लतानां
वैरोचनैर्द्विगुणिताः सहसा मयूखैः ।
रोधोभुवां मुहुरमुत्र हिरण्मयीनां
भासस्तडिद्विलसितानि विडम्बयन्ति ॥४६॥

कषणकम्पनिरस्तमहाहिभिः
क्षणविमत्तमतङ्गजवर्जितैः ।
इह मदस्नपितैरनुमीयते
सुरगजस्य गतं हरिचन्दनैः ॥ ४७ ॥

सक्तिमिति ।—[ अमुत्र ] अमुष्मिन् अद्रौ [ अनिले जवात् ] झटिति [ लतानां सक्तिम् ] अन्योऽन्यसङ्गम् [ अपनयति ] सति [ सहसा ] हठात् [ वैरोचनैः ] सावित्रैः [ मयूखैः द्विगुणिताः ] द्विरावृत्ताः कृता इति द्विगुणिताः । "गुणस्त्वावृत्तिशब्दादिष्विन्द्रियामुख्यतन्तुषु" इति वैजयन्ती । [ हिरण्मयीनां ] हिरण्यविकाराणाम् । "दाण्डिनायन" ( ६।४।२७४ पा० ) इत्यादिना निपातनात् साधुः । [ रोधोभुवां ] तटभुवां [ भासः मुहुः तडिद्विलसितानि विडम्बयन्ति ] अनुकुर्वन्ति इत्यर्थः । उपमालङ्कारः ॥ ४६ ॥

कषणेति ।—[ इह ] अद्रौ [ कषणकम्पनिरस्तमहाहिभिः ] कषणेन कण्डूयनेन यः कम्पः तेन निरस्ताः महाहयः महासर्पाः येभ्यः तैः । [ क्षणविमत्तमतङ्गजवर्जितैः ] क्षणं विमत्तमतङ्गजवर्जितैः मत्तमतङ्गजरहितैः । कुतः ? [ मदस्नपितैः ] ऐरावतमदसिक्तैः इत्यर्थः । "मितां ह्रस्वः" ( ६।४।९२ पा० ) इति ह्रस्वः । [ हरिचन्दनैः ] चन्दनद्रुमैः [ सुरगजस्य ] ऐरा-

जलदजालघनैरसिताश्मनाम्
उपहतप्रचयेह मरीचिभिः ।
भवति दीप्तिरदीपितकन्दरा
तिमिरसम्बलितेव विवस्वतः ॥ ४८ ॥

भव्यो भवन्नपि मुनेरिह शासनेन
क्षात्त्रे स्थितः पथि तपस्य हतप्रमादः ।

वतस्य [ गतं ] प्राप्तिः [ अनुमीयते ]। हरिचन्दनविशेषणैः काव्यलिङ्गम् उन्नेयम् ॥ ४७ ॥

जलदेति।—[ इह ] अस्मिन् अद्रौ [ जलदजालघनैः ] मेघवृन्दसान्द्रैः [ असिताश्मनाम् ] इन्द्रनीलानां [ मरीचिभिः ] दीधितिभिः। "भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्" इत्यमरः। [ उपहतप्रचया ] विघट्टितसङ्घाता अत एव [ अदीपितकन्दरा ] अप्रकाशितगह्वरा [ विवस्वतः दीप्तिः, तिमिरसम्बलिता ] तिमिरैः सम्बलिता संहता व्यामिश्रिता [ इव भवति ] इति उत्प्रेक्षा ॥ ४८ ॥

भव्य इति।—[ इह ] अद्रौ [ भव्यः ] शान्तः [ भवन् अपि मुनेः ] व्यासस्य [ शासनेन ] इन्द्राराधनरूपेण [ क्षात्त्रे पथि ] क्षत्रियमार्गे [ स्थितः ] गृहीतशस्त्रः एव इत्यर्थः। [ हतप्रमादः ] अप्रमत्तः सन्, [ तपस्य ] तपश्चर्य्यां कुरु। तपस्य इति "कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः" ( ३।१।१५ पा० ) इति क्यङ्। तदन्तात् धातोः लोट्। न च सर्वभूतहितकारिणः मे प्रमादः किं करिष्यति इति विश्वसितव्यम् इति अर्थान्तरन्यासेन आह, प्रायेणेति।—[ हि ] यस्मात् [ प्रायेण ]

प्रायेण सत्यपि हितार्थकरे विधौ हि
श्रेयांसि लब्धुमसुखानि विनाऽन्तरायैः ॥४९॥

मा भूवन्नपथहरास्तवेन्द्रियाश्वाः
सन्तापे दिशतु शिवः शिवां प्रसक्तिम् ।
रक्षन्तस्तपसि बलञ्च लोकपालाः
कल्याणीमधिकफलां क्रियां क्रियासुः ॥५०॥

बाहुल्येन । "प्रायो वयस्यनशने मृतौ बाहुल्यतुल्ययोः" इति हेमचन्द्रः । [ हितार्थकरे ] हितम् अर्थं करोति इति तस्मिन् [ विधौ ] व्यापारे सति [ अन्तरायैः ] विघ्नैः [विना श्रेयांसि लब्धुम् असुखानि ] अशक्यानि इत्यर्थः । अत एव "शकधृष" (३।४।६५ पा० ) इत्यादिना समानकर्त्तृकेषु तुमुन् । अकारण-वैरिणः सर्वत्र सर्वस्य अपि सन्ति इति भावः ॥ ४९ ॥

मा भूवन्निति ।—[ तव इन्द्रियाश्वाः ] इन्द्रियाणि एव अश्वाः ते । अपथेन हरन्ति इति [अपथहराः मा भूवन्] त्वाम् अपथं मा नैषुः इत्यर्थः । "माङि लुङ्" ( ३।३।१७५ पा०) इति आशीरर्थे लुङ् । [ सन्तापे ] तपःक्लेशे सति [ शिवः शिवां ] साधीयसीं [ प्रसक्तिं ] प्रवृत्तिम् उत्साहं [ दिशतु ] । [ च ] किञ्चेति चार्थः । [ लोकपालाः ] इन्द्रादयः [ तपसि ] विषये [ बलं ] शक्तिं [ रक्षन्तः ] वर्द्धयन्तः सन्तः [ कल्याणीं ] साध्वीं [ क्रियाम् ] अनुष्ठानम् [अधिकफलां क्रियासुः] कुर्वन्तु । करोतेः आशिषि लोट् ॥ ५० ॥

इत्युक्त्वा सपदि हितं प्रियं प्रियार्हे
धाम स्वं गतवति राजराजभृत्ये।
सोत्कण्ठं किमपि पृथासुतः प्रदध्यौ
संधत्ते भृशमरतिं हि सद्वियोगः॥ ५१॥

तमनतिशयनीयं सर्वतः सारयोगात्
अविरहितमनेकेनाङ्कभाजा फलेन।

इतीति।—[प्रियार्हे राजराजभृत्ये इति] पूर्वोक्तम्। [हितं प्रियं] वचनम् इति शेषः। [उक्त्वा सपदि स्वं] स्वकीयं [धाम] स्थानं [गतवति] सति [पृथासुतः] अर्जुनः [सोत्कण्ठं] सौत्सुक्यं [किम् अपि, प्रदध्यौ] चिन्तयामास। [हि] तथाहि। [सद्वियोगः] सुजनवियोगः [भृशम् अरतिं] व्यथां [संधत्ते] करोति इत्यर्थः। अर्थान्तरन्यासः॥ ५१॥

तमिति।—अकृशाः पूर्णाः लक्ष्म्यः शोभाः यस्य सः [अकृशलक्ष्मीः] इति बहुवचनाश्रितः बहुव्रीहिः। एवं च "उरःप्रभृतिभ्यश्च" (५।४।१५० पा०) इति कप्प्रत्ययानवकाशः, तत्र लक्ष्मीशब्दस्य एकवचनान्तस्यैव पाठात्। नापि "नद्यृतश्च" (५।४।१५३ पा०) इत्यस्य अवकाशः। उरःप्रभृतिपाठसामर्थ्यात् एव, शेषिकः तु वैभाषिकः इति अविरोधः। [सः] अर्जुनः [सर्वतः] सर्वत्र [सारयोगात्] उत्कृष्टबलप्रयोगात्। "सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु" इति अमरः। [अनतिशयनीयम्] अनतिक्रमणीयम् [अनेकेन] बहुना [अङ्कभाजा] समीपं गतेन, शीघ्रभाविना इति यावत्। [फलेन] कार्य्यसिद्ध्या [अविरहितम्] अशून्यं, कार्य्यसिद्धेः

अकृशमकृशलक्ष्मीश्चेतसाऽऽशंसितं सः
स्वमिव पुरुषकारं शैलमभ्याससाद ॥ ५२ ॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये
हिमवद्वर्णनं नाम पञ्चमः सर्गः ॥५॥

अवश्यं साधकम् इत्यर्थः। [अकृशम्] अतनु [चेतसा आशंसितं] प्राप्तुम् इष्टं [शैलम्] इन्द्रकीलं [स्वम्] आत्मीयम्। पुरुषस्य कारः कर्म तं [पुरुषकारम्] उक्तविशेषणविशिष्टं पौरुषम् [इव अभ्याससाद] अधिष्ठितवान्। मालिनी वृत्तम् ॥ ५२ ॥ *

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां
पञ्चमः सर्गः।

* अकृशमकृशलक्ष्मीरित्यादौ सकृदावृत्त्या वृत्त्यनुप्रासानुषङ्गिनी उपमालङ्कृतिः उपमानोपमेययोः सादृश्यधर्मसम्बन्धात् इति।

# षष्ठः सर्गः ।

रुचिराकृतिः कनकसानुमथो
परमः पुमानिव पतिं पतताम् ।
धृतसत्पथस्त्रिपथगामभितः
स तमारुरोह पुरुहूतसुतः ॥ १ ॥

रुचिराकृतिरिति ।—[ अथो ] आसादनानन्तरं [ रुचिराकृतिः ] सौम्यविग्रहः । [ धृतसत्पथः ] अवलम्बितसन्मार्गः, आकारानुरूपगुणवान् इत्यर्थः । "यत्राकृतिस्तत्र गुणा वसन्ति" इति सामुद्रिकाः । उपमाने अपि समानम् एतत् । [ सः पुरुहूतसुतः ] अर्जुनः । कनकस्य विकाराः सानवः यस्य तं [ कनकसानुम् ] गरुड़सावर्ण्यार्थं विशेषणम् एतत् । "समुदाये विकारषष्ठ्योश्च" इति बहुव्रीहिः उत्तरपदलोपश्च । [ तम् ] इन्द्रकीलं, [ परमः पुमान् ] विष्णुः [ पततां ] पक्षिणां [ पतिं ] गरुड़म् [ इव । त्रिपथगां ] त्रिभिः पथिभिः गच्छति इति त्रिपथगा भागीरथी । "अन्येष्वपि दृश्यते" ( ३।२।१०१ पा० ) इति डप्रत्ययः । * उपपदसमास उत्तरपदसमासश्च । ताम् [ अभितः ]† अभिमुखम् आरुरोह । "समीपोभयतः शीघ्रसाकल्याभिमुखे-

* "इकोगुणवृद्धी" (१।१।३ पा०) इति सूत्रे जनेर्डः प्रक्रम्य गमेरप्ययं डो वक्तव्य इति भाष्यकारः ।

† "अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि" इति द्वितीया ।

तमनिन्द्यवन्दिन इवेन्द्रसुतं
विहितालिनिक्वणजयध्वनयः ।
पवनेरिताकुलविजिह्मशिखा
जगतीरुहोऽवचकरुः कुसुमैः ॥ २ ॥

ऽभितः" इत्यमरः । प्रमिताक्षरा वृत्तम् ।—"प्रमिताक्षरा सजस-सैरुदिता" इति लक्षणात् ॥ १ ॥ *

अथ अस्य कार्य्यसिद्धिनिमित्तानि सूचयन् मार्गं वर्ण-यति, तमिति ।—[ विहितालिनिक्वणजयध्वनयः ] विहिताः अलिनिक्वणाः जयध्वनयः इव यैः ते तथोक्ताः । [ पवनेरिता-कुलविजिह्मशिखाः ] पवनेन वायुना ईरिता नुन्नाः अत एव आकुलाः लोलाः विजिह्माः वक्राश्च शिखाः शाखाग्राणि येषां ते तथोक्ताः । "शिखा ज्वाला केकिमौल्योः शिखा शाखाग्रमौलिषु" इति वैजयन्ती । [ जगतीरुहः ] भूरुहः क्विप् । [ अनिन्द्य-वन्दिनः] अनिन्द्याः अनवद्याः ये वन्दिनः स्तुतिपाठकाः ते [ इव तम् इन्द्रसुतम् ] अर्जुनं [ कुसुमैः अवचकरुः ] अभिववृषुः इत्यर्थः । "ऋच्छत्यॄताम्" ( ७।४।११ पा० ) इति गुणः । अत्र किरतेः वृष्ट्यर्थत्वात् कुसुमानां करणत्वं, विक्षेपार्थत्वे तु कर्मत्वम् एव । यथा—"कटाक्षान् वामा किरति" इति । दृश्यते च धातू-नाम् अर्थभेदात् कारकव्यत्ययः । यथा सिञ्चतेः क्षरणार्द्री-करणयोः अर्थयोः द्रवद्रव्यस्य कर्मत्वकरणत्वे । यथा—"मेघो-ऽमृतं सिञ्चति गौः पयश्च" "सिञ्चतीवामृतैर्वपुः" "मेघा अमृतैर्व-वृषुः" इति । अत्र वाक्ये समासगतयोः उपमयोः साध्यसाधन-भावात् अङ्गाङ्गिभावेन सङ्करः ॥ २ ॥

* अत्रोपमानोपमेयसाधारणधर्मसम्बन्धाद्युपमा ।

अवधूतपङ्कजपरागकणाः
तनुजाह्नवीसलिलवीचिभिदः ।
परिरेभिरेऽभिमुखमेत्य सुखाः
सुहृदः सखायमिव तं मरुतः ॥ ३ ॥

उदितोपलस्खलनसम्वलिताः
स्फुटहंससारसविरावयुजः ।
मुदमस्य माङ्गलिकतूर्य्यकृतां
ध्वनयः प्रतेनुरनुवप्रमपाम् ॥ ४ ॥

अवधूतेति ।—[ अवधूतपङ्कजपरागकणाः ] अवधूताः प्रसारिताः पङ्कजपरागकणाः यैः ते तथोक्ताः इति सौरभ्योक्तिः । [ तनुजाह्नवीसलिलवीचिभिदः ] तनूः जाह्नव्याः सलिलवीचीः भिन्दन्ति इति तथोक्ताः इति शैत्योक्तिः । सुखयन्ति इति [ सुखाः ] पचाद्यच् । सुखस्पर्शाः इति मान्द्योक्तिः । [मरुतः] वाताः [ तम् ] अर्जुनं [सुहृदः सखायम् इव अभिमुखम्, एत्य] आगत्य [ परिरेभिरे ] आलिङ्गितवन्तः ॥ ३ ॥

उदितेति ।—[ उदितोपलस्खलनसम्वलिताः] उदितोपलेषु उन्नतपाषाणेषु स्खलनेन प्रतिघातेन सम्वलिताः चूर्णिताः । अतः तूर्य्यघोषः इव धुमधुमायमानाः इत्यर्थः । [स्फुटहंससारसविरावयुजः ] स्फुटैः हंसानां सारसानां च विरावैः युज्यन्ते इति तथोक्ताः । क्विप् । [ अनुवप्रम् अपाम्] अन्तः पतन्तीनाम् इति शेषः । [ध्वनयः अस्य] अर्जुनस्य [ माङ्गलिकतूर्य्यकृतां ] मङ्गलं प्रयोजनम् एषां ते माङ्गलिकाः । "प्रयोजनम्" ( ५।१।१०९

अवरुग्णतुङ्गसुरदारुतरौ
निचये पुरः सुरसरित्पयसाम्।
स ददर्श वेतसवनाचरितां
प्रणतिं बलीयसि समृद्धिकरीम्॥ ५॥

प्रबभूव नालमवलोकयितुं
परितः सरोजरजसाऽरुणितम्।
सरिदुत्तरीयमिव संहतिमत्
स तरङ्गरङ्गि कलहंससकुलम्॥ ६॥

पा०) इति ठञ्। तैः तूर्य्यैः कृतां [मुदं] हर्षं [प्रतेनुः]। अत्र अन्यस्य अन्यकार्य्यकरणासम्भवात् तूर्य्यकृतमुत्सदृशीं मुदम् इति प्रतिबिम्बेन आक्षेपात् निदर्शनालङ्कारः॥ ४॥

अवरुग्णेति।—[सः] अर्जुनः [पुरः] अग्रे [अवरुग्णतुङ्गसुरदारुतरौ] भग्नोन्नतदेवदारुद्रुमे [बलीयसि] बलवत्तरे। मत्वन्तात् ईयसुनि "विन्मतोर्लुक्" (५।३।६५ पा०) इति मतुपो लुक्। [सुरसरित्पयसां निचये] पूरे विषये [वेतसवनाचरितां] वेतसवनेन वानीरवनेन आचरिताम्। "अथ वेतसे। रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः" इत्यमरः। [समृद्धिकरीं] श्रेयस्करीं, लोके यथा दृष्टाम् इत्यर्थः। [प्रणतिं ददर्श।] या सर्वलोकदृष्टान्तभूता इति भावः॥ ५॥

प्रबभूवेति।—[सः] अर्जुनः [परितः सरोजरजसा] कमलरेणुना [अरुणितं] पाटलितम्, उत्तरीयं च कुसुमादिना अरुणितं भवति। [संहतिमत्] नीरन्ध्रं [तरङ्गरङ्गि] वारितरङ्ग-

दधति क्षतीः परिणतद्विरदे
मुदितालियोषिति मदस्रुतिभिः ।
अधिकां स रोधसि बबन्ध धृतिं
महते रुजन्नपि गुणाय महान् ॥ ७ ॥
अनुहेमवप्रमरुणैः समतां
गतमूर्मिभिः सहचरं पृथुभिः ।

शोभि [सरिदुत्तरीयं] सरितः उत्तरीयं स्तनांशुकम् [इव] स्थितं, [कलहंसकुलं] कादम्बकुलम् [अवलोकयितुम् अलम्] अत्यर्थं [न प्रबभूव] न शशाक, तत्सौन्दर्य्याद्दिलत्वात् इति भावः ॥ ६ ॥

दधतीति ।—[सः] अर्जुनः [क्षतीः] क्षतानि [दधति] धारयति । कुतः ? [परिणतद्विरदे] परिणताः तिर्य्यग्दन्तप्रहारिणः द्विरदाः यस्मिन् तस्मिन् । "तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतः" इति हलायुधः । [मदस्रुतिभिः मुदितालियोषिति । रोधसि अधिकां, धृतिं] प्रीतिं [बबन्ध] निश्चलीकृतवान् इत्यर्थः । तथाहि ।—[महान्] जनः [रुजन्] पीड़यन् [अपि महते गुणाय] उत्कर्षाय भवति, महत्कृता पीड़ा अपि शुभावहा एव इत्यर्थः । तत् युक्तं गजरुग्णस्य अपि रोधसः प्रीतिकरत्वम् इति भावः ॥ ७ ॥ *

अन्विति ।—[सः] अर्जुनः [अनुहेमवप्रं] कनकसानुसमीपे । समीपार्थे अव्ययीभावः ।† [अरुणैः] । कनककान्त्युपरञ्जनात् इति भावः । [पृथुभिः ऊर्मिभिः समतां] तुल्य-

---

* अत्र सामान्यविशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

† अनुर्यत्समया ( २।१।१५ पा० )

स रथाङ्गनामवनितां करुणैः
अनुबध्नतीमभिननन्द रुतैः ॥ ८ ॥
सितवाजिने निजगदूरुचयः
चलवीचिरागरचनापटवः।
मणिजालमम्भसि निमग्नमपि
स्फुरितं मनोगतमिवाकृतयः ॥ ९ ॥

रूपतां [गतम्] सादृश्यात् दुर्विवेच्यमित्यर्थः। सहभूतं [सहचरं] प्रियं, सहशब्दस्य पचाद्यजन्तेन चरशब्देन समासः। [करुणैः] दीनैः [रुतैः] कूजितैः [अनुबध्नतीम्] अन्विष्यन्तीं [रथाङ्गनामवनितां] चक्रवाकीम् [अभिननन्द], प्रकृष्टप्रेमदर्शनात् कस्य न आनन्दः ? इति भावः। अत्र तावत् ऊर्मीणां स्वधावल्यत्यागेन आरुण्यस्वीकारात् तद्गुणालङ्कारः।—"तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाश्रयात्" इति लक्षणात्। तन्मूला च इयं चक्रवाक्याः स्वकान्ते तरङ्गभ्रान्तिः इति तद्गुणभ्रान्तिमतोः अङ्गाङ्गिभावेन सङ्करः ॥ ८ ॥

सितवाजिन इति।—[चलवीचिरागरचनापटवः] चलवीचीनां रागः रञ्जनं वर्णान्तरापादनं तस्य रचना क्रिया तत्र पटवः समर्थाः [रुचयः] प्रभाः। [अम्भसि निमग्नम् अपि मणिजालं] स्वाश्रयभूतम् इति भावः। [मनोगतं स्फुरितं] रोषादि विकारम् [आकृतयः] भ्रूभङ्गादिवाह्यविकाराः [इव. सितवाजिने] अर्जुनाय [निजगदुः] ज्ञापयामासुः इत्यर्थः। आकृत्या हि मनोगतं विचक्षणाः जानन्ति इति भावः ॥ ९ ॥

उपलाहतोद्धततरङ्गधृत
जविना विधूतविततं मरुता ।
स ददर्श केतकशिखाविशदं
सरितः प्रहासमिव फेनमपाम् ॥ १० ॥

बहु बर्हिचन्द्रकनिभं विदधे
धृतिमस्य दानपयसां पटलम् ।
अवगाढमीक्षितुमिवेभपतिं
विकसद्विलोचनशतं सरितः ॥ ११ ॥

उपलेति ।—[ उपलाहतोद्धततरङ्गधृतं ] उपलैः आहताः अत एव उद्धताश्च ये तरङ्गाः तैः धृतं, निर्गमरोधात् इत्यर्थः । [ जविना ] वेगवता [ मरुता ] वातेन [ विधूतविततं ] विधूतं विततं च [केतकशिखाविशदं] केतकस्य शिखा अग्रं तद्वत् विशदम् [ अपां फेनं ] डिण्डीरम् । "डिण्डीरोऽब्धिकफः फेनः" इत्यमरः । [ सरितः, प्रहासम् ] अट्टहासम् [ इव ] इति उत्प्रेक्षा । [ सः ] अर्जुनः [ ददर्श ] ॥ १० ॥

बह्विति ।—[ बर्हिचन्द्रकनिभं ] मयूरमेचकसदृशम् । "समौ चन्द्रकमेचकौ" इत्यमरः । [ बहु ] अनेकधा [ दानपयसां पटलम् ] । जातौ एकवचनम् । बहवः मदाम्बुबिन्दवः इत्यर्थः । [ अवगाढम् ] अन्तःप्रविष्टम् । गाहेः कर्त्तरि क्तः । [ इभपतिम् ईक्षितुं, विकसत् ] उन्मिषत् [ सरितः विलोचनशतम् इव ] इति उत्प्रेक्षा । [ अस्य ] अर्जुनस्य [ धृतिं ] प्रीतिं [ विदधे ] चकार ॥ ११ ॥

प्रतिबोधजृम्भणविभिन्नमुखी
पुलिने सरोरुहदृशा ददृशे ।
पतदच्छमौक्तिकमणिप्रकरा
गलदश्रुबिन्दुरिव शुक्तिबधूः ॥ १२ ॥
शुचिरप्सु बिद्रुमलताविटपः
तनुसान्द्रफेनलवसम्बलितः ।

प्रतिबोधेति ।—[ प्रतिबोधजृम्भणविभिन्नमुखी ] प्रतिबोधः स्फुटनं निद्रापगमश्च, तत्र यत् जृम्भणम् उच्छूनता जृम्भा च तेन विभिन्नमुखी विश्लिष्टाग्रा विवृतास्या च, अत एव [ पतदच्छमौक्तिकमणिप्रकरा ] पतन् प्रसरन् अच्छः मौक्तिकमणीनां प्रकरः स्तोमः यस्याः सा तथोक्ता । अत एव [ गलदश्रुबिन्दुः इव ] स्थिता इति उत्प्रेक्षा । [ शुक्तिबधूः ] शुक्तिः बधूः इव [ पुलिने ] शयनीये इव इति भावः । [ सरोरुहदृशा ] अर्जुनेन [ ददृशे ] दृष्टा । अत्र प्रतिबोधादिश्लिष्टपदोपात्तानां प्रकृतानां शुक्तिबध्वोश्च उपमारूपकयोः साधकबाधकाभावात् सन्देहालङ्कारः, तत्सापेक्षा च अश्रुगलनोत्प्रेक्षा इति तयोः अङ्गाङ्गिभावः ॥ १२ ॥

शुचिरिति ।—[ अप्सु शुचिः ] स्वच्छः [ तनुसान्द्रफेनलवसम्बलितः ] तनुना सान्द्रेण च फेनस्य लवेन शकलेन सम्बलितः सङ्गतः [ बिद्रुमलताविटपः ] बिद्रुमलतायाः विटपः पल्लवः । "विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोः" इति विश्वः । [ स्मरदायिनः ] कामोद्दीपकस्य [ दशनांशुभृतः ] दन्तकान्तिकलितस्य इत्यर्थः । [ दयिताधरस्य ] । "अधीगर्थ" ( २।३।

स्मरदायिनः स्मरयति स्म भृशं
दयिताधरस्य दशनांशुभृतः ॥ १३ ॥

उपलभ्य चञ्चलतरङ्गधृतं
मदगन्धमुत्थितवतां पयसः ।
प्रतिदन्तिनामिव स सम्बुबुधे
करियादसामभिमुखान् करिणः ॥ १४ ॥

स जगाम विस्मयमुदीक्ष्य पुरः
सहसा समुत्पिपतिषोः फणिनः ।

५२ पा० ) इत्यादिना षष्ठी । भृशं स्मरयति स्म । "लट् स्मे" ( ३।२।११८ पा० ) इति भूतार्थे लट् । "मितां ह्रस्वः" ( ६।४। ८२ पा० ) इति ह्रस्वः । स्मरणालङ्कारः ॥ १३ ॥

उपलभ्येति ।—[ सः ] अर्जुनः [ चञ्चलतरङ्गधृतं ] चञ्चलतरङ्गैः धृतं, तत्संक्रान्तम् इत्यर्थः । [ मदगन्धम् उपलभ्य ] आघ्राय [ पयसः उत्थितवतां ] रोषात् इति शेषः । [ करियादसां ] कर्य्याकाराणां यादसाम् । शाकपार्थिवादिषु द्रष्टव्यः । [ प्रतिदन्तिनाम् इव अभिमुखान् ] अभियातान् इत्यर्थः । [ करिणः ] गजान् [ सम्बुबुधे ] ददर्श इत्यर्थः ॥ १४ ॥

स इति ।—[ सः ] अर्जुनः [पुरः] अग्रे [सहसा समुत्पिपतिषोः] समुत्पतितुमिच्छोः । पतेः सन्नन्तात् उप्रत्ययः । "तनिपतिदरिद्रातिभ्यः सन इड्वा वक्तव्यः" ( वा० ) इति विकल्पात् इडागमः । [ फणिनः ] सर्पस्य [ प्रजविभिः ] अतिवेगवद्भिः [ श्वसितैः ] फूत्कारैः [ दिवि ] आकाशे [ प्रहितं ] प्रेरितं

प्रहितं दिवि प्रजविभिः श्वसितैः
शरदभ्रविभ्रममपां पटलम् ॥ १५ ॥
स ततार सैकतवतीरभितः
शफरीपरिस्फुरितचारुदृशः ।
ललिताः सखीरिव बृहज्जघनाः
सुरनिम्नगामुपयतीः सरितः ॥ १६ ॥
अधिरुह्य पुष्पभरनम्रशिखैः
परितः परिष्कृततलां तरुभिः ।

---

[ शरदभ्रविभ्रमं ] शरदभ्रस्य विभ्रमः इव विभ्रमः सौन्दर्य्यं यस्य तत् [ शुभ्रम् ] अभ्रव्यापकं च इत्यर्थः । [ अपां पटलं पुरः उदीच्य विस्मयं जगाम ]। अत्र उपमानुप्राणिता स्वभावोक्तिः अलङ्कारः ॥ १५ ॥

स इति ।—[ सः ] अर्जुनः [ सैकतवतीः ] पुलिनवतीः [ अभितः, शफरीपरिस्फुरितचारुदृशः ] शफरीणां प्रोष्ठीनां परिस्फुरितानि एव चारवः दृशः यासां ताः । [ सुरनिम्नगां ] गङ्गाम् [ उपयतीः ] भजन्तीः । इणः शतुः उगित्त्वात् ङीप् । अत एव [ बृहज्जघनाः ललिताः सखीः इव ] स्थिताः [ सरितः ततार ] अतिचक्रमे ॥ १६ ॥

अधिरुह्येति ।—[ सः ] अर्जुनः [ अधिरुह्य ] अर्थात् गिरिम् इति शेषः । [पुष्पभरनम्रशिखैः] पुष्पभरेण नम्रशिखैः नताग्रैः [ तरुभिः परितः परिष्कृततलां ] भूषितस्वरूपाम् । "अधःस्वरूपयोरस्त्री तलम्" इत्यमरः । "संपर्य्युपेभ्यः करोतौ भूषणे" ( ६।१।१३७ पा० ) इति सुडागमः । [ शुचिं ] शुद्धाम्

मनसः प्रसत्तिमिव मूर्ध्नि गिरेः
शुचिमाससाद स वनान्तभुवम् ॥ १७ ॥
अनुसानु पुष्पितलतावितति:
फलितोरुभूरुहविविक्तवनः ।
धृतिमाततान तनयस्य हरेः
तपसेऽधिवस्तुमचलामचलः ॥ १८ ॥

अत एव [ मनसः प्रसत्तिम् इव ] मूर्त्तं मनःप्रसादम् इव स्थितां, तद्धेतौ तद्भावोत्प्रेक्षा । [ गिरेः मूर्ध्नि वनान्तभुवम् आससाद ]। अन्तःशब्दः स्वरूपवचनः ।—"अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके" इति वैजयन्ती ॥ १७ ॥

अनुसान्विति ।—[ अनुसानु ] प्रतिसानु । वीप्सार्थे अव्ययीभावः । * [ पुष्पितलतावितति: ] पुष्पिताः सञ्जातपुष्पाः लतावितनयः यस्मिन् सः । [ फलितोरुभूरुहविविक्तवनः ] फलिताः उरवो भूरुहाः येषु तानि विविक्तानि विजनानि पूतानि वा वनानि यस्मिन् सः तथोक्तः । "विविक्तौ पूतविजनौ" इत्यमरः । [ अचलः ] इन्द्रकीलः [ हरेः तनयस्य ] अर्जुनस्य [ तपसे ] तपश्चर्य्यार्थम् [ अधिवस्तुम् ] अधिष्ठातुम् । तन्निक्रियापेक्षया समानकर्त्तृकत्वात् तुमुन् । † [ अचलां, धृतिम् ] उत्साहम् [ आततान ]। अत्र अचलविशेषणपदार्थस्य धृतिकरणहेतुत्वात् काव्यलिङ्गम् अलङ्कारः ॥ १८ ॥

---

* "अव्ययं विभक्ति" ( २।१।६ पा० ) इत्यादिसूत्रे यथाशब्दार्थव्याख्यायां वृत्तिः "योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः" इति वीप्सार्थेऽव्ययीभावः ।

† "समानकर्त्तृकेषु तुमुन् ।" (३।३।१५८ पा०)।

प्रणिधाय तत्र विधिनाथ धियं
दधतः पुरातनमुनेर्मुनिताम् ।
श्रममादधावसुकरं न तपः
किमिवावसादकरमात्मवताम् ॥ १९ ॥
शमयन् धृतेन्द्रियशमैकसुखः
शुचिभिर्गुणैरघमयं स तमः ।

प्रणिधायेति ।—[ अथ तत्र ] अद्रौ [ विधिना ] योगशास्त्रानुसारेण [धियं] चित्तवृत्तिं [ प्रणिधाय ] ध्येयविषये धियं नियम्य । "नेर्गद" ( ८।४।१७ पा० ) इत्यादिना णत्वम् । [ मुनितां दधतः ] तपस्यतः इत्यर्थः । [ पुरातनमुनेः ] अर्जुनस्य इत्यर्थः । [ असुकरं ] दुष्करं [ तपः श्रमं ] खेदं [ न आदधौ ] न चकार । तथाहि [ आत्मवतां ] मनस्विनाम् [ अवसादकरम् ] अशान्तिजनकं [ किम् इव ? ] न किञ्चित् इत्यर्थः । इवशब्दो वाक्यालङ्कारे ॥ १९ ॥ *

शमयन्निति ।—[धृतेन्द्रियशमैकसुखः ] धृतम् इन्द्रियशमः विषयव्यावृत्तिः एव एकं मुख्यं सुखम् आह्लादः येन स तथोक्तः, आत्माराम इत्यर्थः । अन्यत्र—धृतं कृतम् इन्द्रियशमः सन्तापनिवर्त्तनम् एकम् अद्वितीयं सुखम् आह्लादश्च येन सः तथोक्तः । [ शुचिभिः ] निर्मलैः [गुणैः] मैत्र्यादिभिः । अन्यत्र—कान्त्यादिभिः [ अघमयं ] पापरूपं [तमः] अज्ञानम् । अन्यत्र—अन्धकारं च [ शमयन् ] निवर्त्तयन् । [ विमलः ] अमलिनः पाप-

* अत्र सामान्यविशेषसमर्थनरूपोऽर्थान्तरन्यासः

प्रतिवासरं सुकृतिभिर्ववृधे
विमलः कलाभिरिव शीतरुचिः ॥२०॥
अधरीचकार च विवेकगुणात्
अगुणेषु तस्य धियमस्तवतः।
प्रतिघातिनीं विषयसङ्गरतिं
निरुपप्लवः शमसुखानुभवः ॥ २१ ॥

रहितः। अन्वय—शुभ्रः [सः] अर्जुनः [प्रतिवासरं सुकृतिभिः] सुकृतैः, तपोभिः इत्यर्थः। "स्त्रियां क्तिन्" (३।३।९४ पा०)। [कलाभिः शीतरुचिः] चन्द्रः [इव ववृधे] ॥ २० ॥ *

अधरीचकारेति।—[च] किं च इति चार्थः। [विवेकगुणात्] विवेकः तत्त्वावधारणं सः एव गुणः तस्मात्, तेन हेतुना इत्यर्थः। "विभाषा गुणेऽस्त्रियाम्" (२।३।२५ पा०) इति पञ्चमी। [अगुणेषु] कामक्रोधादिदोषेषु विषये। तद्विरोधेन नञ्समासः। † [धियं] चित्तवृत्तिम् [अस्तवतः] ‡ निवारितवतः [तस्य] अर्जुनस्य [निरुपप्लवः] निर्बाधः [शमसुखानुभवः] शान्त्यानन्दानुभवः [प्रतिघातिनीं] सोपप्लवां [विषयसङ्गरतिं] शब्दाद्युपभोगरुचिम् [अधरीचकार] विषयनिःस्पृहं चकार इत्यर्थः। उत्कृष्टसुखलाभस्य प्रकृष्टवैराग्यहेतुत्वात् इति भावः ॥ २१ ॥

---

* अत्र श्लेषाङ्गिणी उपमा।

† "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥"

‡ अस्यतेः क्तवतुः।

मनसा जपैः प्रणतिभिः प्रयतः
समुपेयिवानधिपतिं स दिवः ।
सहजेतरौ जयशमौ दधती
बिभराम्बभूव युगपत् महसी ॥ २२ ॥

शिरसा हरिन्मणिनिभः स वहन्
कृतजन्मनोऽभिषवणेन जटाः ।
उपमां ययावरुणदीधितिभिः
परिमृष्टमूर्द्धनि तमालतरौ ॥ २३ ॥

मनसेति ।—[ प्रयतः ] अहिंसादिनिरतः [ मनसा ] ध्यानेन [ जपैः ] विशिष्टमन्त्राभ्यासैः [प्रणतिभिः] नमस्कारैः । एवं मनोवाक्कायकर्मभिः [ दिवः अधिपतिम् ] इन्द्रं [ समुपेयिवान् ] * उपसेदिवान् [सः] अर्जुनः [सहजेतरौ ] नैसर्गिकागन्तुकौ । जीयते अनेन इति जयः वीररसः । "एरच्" ( ३।३।५६ पा० ) इति अच् । शम्यते अनेन इति शमः [ जयशमौ ] वीरशान्तिरसौ [ दधती ] पुष्णती [ महसी ] तेजसी [ युगपत् बिभराम्बभूव ] बभार । "भीह्रीभृहुवाम्" ( ३।१।३८ पा० ) इति विकल्पात् आम्प्रत्ययः । अत्र युगपत् वीरशान्ताधिकरणत्वाभिधानात् अस्य लोकाद्भुतमहिमत्वं व्यज्यते ॥ २२ ॥

शिरसेति ।—[ हरिन्मणिनिभः ] मरकतमणिश्यामः [ अभिषवणेन ] स्नानेन [ कृतजन्मनः ] जनिताः अतः पिशङ्गीः इति भावः । [ जटाः शिरसा वहन् सः ] अर्जुनः [ अरुण-

* "उपेयिवाननाश्वाननूचानश्च" (३।२।१०९ पा०) इति क्वसुप्रत्ययान्तो निपातः ।

धृतहेतिरप्यधृतजिह्ममतिः
चरितैर्मुनीनधरयन् शुचिभिः।
रजयाञ्चकार * विरजाः स मृगान्
कमिवेशते रमयितुं न गुणाः? ॥ २४ ॥

अनुकूलपातिनमचण्डगतिं
किरता सुगन्धिमभितः पवनम्।

दीधितिभिः] अरुणस्य अनूरोः दीधितिभिः [परिमृष्टमूर्धनि] व्याप्तशिरसि [तमालतरौ उपमां] तमालतरोः सादृश्यं [ययौ] इति आर्थी इयम् उपमा। तरोः औपम्याधिकरणत्वात् तदपेक्षया सप्तमी ॥ २३ ॥

धृतेति।—[धृतहेतिः] धृतायुधः [अपि, अधृतजिह्म-मतिः] अधृता जिह्ममतिः कुटिलमतिः येन [सः शुचिभिः चरितैः मुनीन् अधरयन्] तिरस्कुर्वन्। वेषेण एव भीषणः न तु कर्मणा इति भावः। कुतः? [विरजाः] रजोगुणरहितः [सः] अर्जुनः [मृगान् रजयाञ्चकार] रमयामास। "रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः" (वा०) इति नलोपः। तथाहि [गुणाः] दयादयः [कम् इव रमयितुं न ईशते?] कं वा वशीकर्त्तुं न शक्नुवन्ति? इति भावः। शुद्धिः एव हि परं विश्वासबीजं परस्य न वेषः, नापि संस्तवः इति भावः॥ २४ ॥

अथ अस्य त्रिभिः तपःसिद्धिम् आह, अनुकूलेत्यादिना।—[अनुकूलपातिनं] न तु प्रतिकूलपातिनम् [अचण्डगतिं] मन्दगामिनं [सुगन्धिम्] गन्धस्येत्त्वे † तदेकान्तग्रहणेऽपि

* अत्र आखेटकार्थाभावेऽपि भट्टोजिदीक्षितमतेन नकारलोपश्चिन्त्यः; "मृगरमणमाखेटकम्" इति तदुक्तिः।

† "गन्धस्येदुत्पूतिसुसुरभिभ्यः" (५।४।१३५ पा०)।

अवधीरितार्त्तवगुणां सुखतां
नयता रुचां निचयमंशुमतः ॥ २५ ॥
नवपल्लवाञ्जलिभृतः प्रचये
वृहतस्तरून् गमयतावनतिम् ।
स्तृणता तृणैः प्रतिनिशं मृदुभिः
शयनीयतामुपयतीं वसुधाम् ॥ २६ ॥
पतितैरपेतजलदान्नभसः
पृषतैरपां शमयता च रजः ।

---

कवीनां निरङ्कुशत्वात् समासान्तः। अथवा केचित् आगन्तुकत्वे अपि एकवचनेन समासान्तम् इच्छन्ति। [ पवनम् अभितः किरता ] प्रवर्त्तयता इत्यर्थः। [ अवधीरितार्त्तवगुणाम् ] ऋतुः अस्य प्राप्तः आर्त्तवः। "ऋतोरण्" ( ५।१।१०५ पा० ) इत्यण्प्रत्ययः। सः च असौ गुणः तिग्मत्वरूपः सः अवधीरितः तिरस्कृतः यस्य तम्, [ अंशुमतः रुचां निचयं सुखतां ] सुखस्पर्शतां [ नयता ] प्रापयता। नयतेः द्विकर्मकत्वम् ॥ २५ ॥

नवेति।—[ प्रचये ] पुष्पावचयप्रसङ्गे [ नवपल्लवाञ्जलिभृतः ] नवपल्लवाः एव अञ्जलयः तान् बिभ्रति इति तथोक्तान् [ वृहतः ] उच्चान् [तरून् अवनतिं] नम्रतां [ गमयता ]। "गतिबुद्धि" ( १।४।५२ पा० ) इत्यादिना तरूणां कर्मत्वम्। [ प्रतिनिशं ] निशि निशि [ शयनीयताम् उपयतीं ] शयनस्थानीभूताम् इत्यर्थः। [ वसुधां मृदुभिः तृणैः स्तृणता ] आच्छादयता ॥ २६ ॥

स दयालुनेव परिगाढ़कृशः
परिचर्य्ययानुजगृहे तपसा ॥ २७ ॥

॥ विशेषकम् ॥

महते फलाय तदवेक्ष्य शिवं
विकसन्निमित्तकुसुमं स पुरः।
न जगाम विस्मयवशं वशिनां
न निहन्ति धैर्य्यमनुभावगुणाः ॥ २८ ॥

पतितैरिति।—[अपेतजलदात्] निरभ्रात् [नभसः पतितैः] [अपां पृषतैः] जलबिन्दुभिः [रजश्च शमयता तपसा] कर्त्रा [दयालुना इव] इति उत्प्रेक्षा। दयालुत्वे हेतुं सूचयति।—[परिगाढ़कृशः] अतिक्षीणः [सः] अर्जुनः [परिचर्य्यया] उक्तविधया शुश्रूषया [अनुजगृहे] अनुगृहीतः। अनुग्रहः अत्र सहकारित्वम् एव, सर्वभूतानुकूल्यलिङ्गात् पचेलिमं तपः अस्य इति भावः। अत्र श्लोकत्रयस्य अपि एकवाक्यत्वात् उत्प्रेक्षा एव प्रधानालङ्कारः॥ २७ ॥

महत इति।—[सः] अर्जुनः [महते फलाय] श्रेयसे शस्याय च [विकसत्] पूर्वोक्तं [शिवं] सुखदं, [तत् निमित्तकुसुमं] निमित्तम् एव कुसुमं [पुरः] अग्रे [अवेक्ष्य, विस्मयवशं न जगाम]। तथाहि।—[वशिनाम्, अनुभावगुणाः] अनुभावः एव गुणाः सः च [धैर्य्यं न निहन्ति] विस्मयादिविकारं न जनयति इत्यर्थः। विस्मयजननी वा तपः क्षीयेत। "तपः क्षरति विस्मयात्" इति स्मरणात् इति भावः॥ २८ ॥

तदभूरिवासरकृतं सुकृतैः
उपलभ्य वैभवमनन्यभवम् ।
उपतस्थुरास्थितविषादधियः
शतयज्वनो वनचरा वसतिम् ॥ २९ ॥
विदिताः प्रविश्य विहितानतयः
शिथिलीकृतेऽधिकृतकृत्यविधौ ।

तदिति ।—[ सुकृतैः ] तपोभिः करणैः [अभूरिवासरकृतं ] अभूरिभिः कतिपयैः एव वासरैः कृतं, [तत्] पूर्वोक्तं [वैभवम् ] । अतः अन्यस्य न भवति इति [ अनन्यभवम् ] अन्यस्य असम्भवि इत्यर्थः । पचाद्यजन्तोत्तरपदेन नञ्समासः । [उपलभ्य] निश्चित्य [ आस्थितविषादधियः ] आस्थितविषादाः प्राप्तखेदाः धियः येषां ते [ वनचराः । ] "तत्पुरुषे कृति बहुलम्" (६।३। १४ पा० ) इति बहुलग्रहणात् लुक् । [ शतयज्वनः ] शतेन शतस्य वा मखानां यज्वनः शतक्रतोः । अत्र संख्येयविशेषलाभः यजिसन्निधानात् अवगन्तव्यः । "यज्वा तु विधिनेष्टवान्" इत्यमरः । "सुयजोर्ङ्वनिप्" ( ३।२।१०३ पा० ) । [ वसतिम् उपतस्थुः ] प्रापुः ॥ २९ ॥

विदिता इति ।—वनचराः इति अनुवर्त्तनीयम् । [ विदिताः ] ज्ञाताः, अनुमतप्रवेशाः सन्तः इत्यर्थः । [ प्रविश्य विहितानतयः ] कृतप्रणामाः [ अधिकृतकृत्यविधौ ] अधिकृतकृत्यस्य नियुक्तकर्मणः शैलरक्षणात्मकस्य विधौ अनुष्ठाने [ शिथिलीकृते ] सति, [ अनपेतकालम् ] अनतिक्रान्तकालं यथा तथा [ गोत्रभिदे ] शक्राय [ इति ] वक्ष्यमाणप्रकारेण

अनपेतकालमभिरामकथाः
कथयाम्बभूवुरिति गोत्रभिदे ॥ ३० ॥
शुचिवल्कवीतवपुरन्यतमः
तिमिरच्छिदामिव गिरौ भवतः ।
महते जयाय मघवन्ननघः
पुरुषस्तपस्यति तपन् जगतीम् ॥ ३१ ॥
स बिभर्त्ति भीषणभुजङ्गभुजः
पृथु विद्विषां भयविधायि धनुः ।
अमलेन तस्य धृतसच्चरिताः
चरितेन चातिशयिता मुनयः ॥ ३२ ॥

---

[अभिरामकथाः] श्राव्यवाचः । "चिन्तिपूजिकथिकुम्बिचर्चश्च" (३।३।१०५ पा०) इति अङ्प्रत्ययः । [कथयाम्बभूवुः] ॥ ३० ॥

शुचीति ।—[ शुचिवल्कवीतवपुः ] शुचिना वल्केन वल्कलेन वीतम् आच्छादितं वपुः यस्य सः । [ तिमिरच्छिदां ] सूर्य्यादीनाम् [ अन्यतमः इव ] स्थितः इत्युत्प्रेक्षा । [ अनघः पुरुषः ] हे [ मघवन् ! भवतः गिरौ ] इन्द्रकीले [ जगतीं ] भुवं [ तपन् ] तापयन् [ महते जयाय, तपस्यति ] तपश्चरति । "कर्मणो रोमन्थ" (३।१।१५ पा०) इत्यादिना क्यङि लट् ॥ ३१ ॥

जयाय तपस्यति इत्युक्तं, तत्र हेतुम् आह,—स इति । [ भीषणभुजङ्गभुजः ] भीषयेते इति भीषणौ । नन्द्यादित्वात् ल्युप्रत्ययः । * तौ च तौ भुजङ्गौ च तौ इव भुजौ यस्य [ सः ]

* "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" ( ३।१।१३४ पा० )

मरुतः शिवा नवतृणा जगती
विमलं नभो रजसि वृष्टिरपाम् ।
गुणसम्पदाऽनुगुणतां गमितः
कुरुतेऽस्य भक्तिमिव भूतगणः ॥ ३३ ॥

इतरेतराऽनभिभवेन मृगाः
तमुपासते गुरुमिवान्तसदः ।
विनमन्ति चास्य तरवः प्रचये
परवान् स तेन भवतेव नगः ॥ ३४ ॥

तथोक्तः पुरुषः [ विद्विषां भयविधायि पृथु धनुः बिभर्त्ति ] अतः जयार्थी इत्यर्थः । [ अमलेन, तस्य ] पुरुषस्य [ चरितेन च, धृतसच्चरिताः ] धृतानि सच्चरितानि यैः ते [ मुनयः अतिशयिताः ] अतिक्रान्ताः ॥ ३२ ॥

अथ अस्य तपःसिद्धिं वर्णयति, मरुत इत्यादिना ।—[ मरुतः ] वाताः [ शिवाः ] सुखाः [ जगती ] पृथ्वी [नवतृणा] शयनासनाद्यनुकूला इत्यर्थः । [ नभः विमलं ] नीहारादिरहितं [ रजसि ] सति [अपां वृष्टिः] भवति इति शेषः । किं बहुना ? [ अस्य ] पुरुषस्य [ गुणसम्पदा ] भूतहितादिगुणसम्पत्त्या [ अनुगुणताम् ] अनुकूलतां [ गमितः ] वशीकृतः इत्यर्थः । [ भूतगणः ] पृथिव्यादिपञ्चकं [भक्तिं] सेवां [ कुरुते इव ] इति उत्प्रेक्षा ॥ ३३ ॥

इतरेतरेति ।—[ च ] किं च [मृगाः] पशवः [ तम् ] अन्ते अन्तिके सीदन्ति इति [ अन्तसदः ] अन्तेवासिनः । "सत्सूद्विष" ( ३।२।६१ पा० ) इति क्विप् । [ गुरुम् इव इतरेतराऽनभिभ-

उरु सत्त्वमाह विपरिश्रमता
परमं वपुः प्रथयतीव जयम् ।
शमिनोऽपि तस्य नव सङ्गमने
विभुतानुषङ्गि भयमेति जनः ॥ ३५ ॥
ऋषिवंशजः स यदि दैत्यकुले
यदि वान्वये महति भूमिभृताम् ? ।

---

वेन ] इतरेतरेषाम् अनभिभवेन अद्रोहेण [ उपासते ] सेवन्ते [ प्रचये ] पुष्पावचये [ तरवः अस्य विनमन्ति ] करप्रचेयाः भवन्ति इत्यर्थः । अस्य इति सम्बन्धसामान्ये षष्ठी । किं बहुना ? [ सः नगः ] इन्द्रकीलः [ भवता इव तेन ] पुरुषेण [ परवान् ] पराधीनः । सात्त्विकस्य अपि तव इव तस्य अतिशयः वर्त्तते इत्यर्थः ॥ ३४ ॥

उर्विति ।—किं च [ विपरिश्रमता ] आयासे अपि श्रमराहित्यम् [ उरु ] महत् [ सत्त्वम् ] अन्तःसारम् [ आह ] दुर्बलस्य श्रमजयासम्भवात् इति भावः । [ परमं] उत्तमं [वपुः जयं प्रथयति ] च : आकारेण एव जिष्णुत्वं गम्यते इत्यर्थः । [ शमिनः ] शान्तस्य [ अपि तस्य नवसङ्गमने ] अपूर्वप्राप्तौ [ जनः विभुतानुषङ्गि ] विभुतायाः प्रभावस्य अनुषङ्गि व्यापकं, न तु हिंस्रकत्वानुषङ्गि इति भावः । [ भयम् एति । ] शान्तोद्भवं प्रभावं गमयति इति भावः ॥ ३५ ॥

अथ ईदृशः असौ कः इति चेत् तत् न विद्मः इति आह, ऋषीति ।—[ सः ] पुरुषः [ऋषिवंशजः] वा इति शेषः, काकुः वा । [ यदि ] वा [ दैत्यकुले ] जातः इति शेषः । [ यदि

चरतस्तपस्तव वनेषु सहाः
न वयं निरूपयितुमस्य गतिम् ॥ ३६ ॥
विगणय्य कारणमनेकगुणं
निजयाऽथवा कथितमल्पतया ।
असदप्यदः सहितुमर्हसि नः
क्व वनेचराः ? क्व निपुणा मतयः ? ॥३७॥
अधिगम्य गुह्यकगणादिति तत्
मनसः प्रियं प्रियसुतस्य तपः ।

---

वा महति भूमिभृताम् अन्वये ] जातः, [ तव वनेषु तपः चरतः अस्य गतिं ] स्वरूपं [ निरूपयितुं वयं ]। सहन्ते इति सहाः। पचाद्यच्। [ न सहाः ] स्म इति शेषः॥ ३६ ॥

अपृष्टपरिभाषणापराधं परिहरति, विगणय्येति।—[अनेकगुणं] बहुफलम्, इन्द्रत्वाद्यनेकफलसाधकत्वेन योग्यम् इत्यर्थः। [ कारणं ] तपोरूपं [ विगणय्य ] विचार्य्य [ अथवा निजया ] नैसर्गिक्या [अल्पतया] वालिश्येन अज्ञानत्वेन वा [कथितं, नः ] अस्माकम् [अदः] इदं वचनम् इत्यर्थः। [असत्] असाधु [ अपि सहितुं ] सोढ़ुम्। "तीषसह" (७।२।४८ पा०) इत्यादिना विकल्पात् इड़ागमः। [ अर्हसि ] योग्यः असि। तर्हि सदेव किं न उक्तं तत्र आहः।—[ वनेचराः क्व ? निपुणाः मतयः ] विवेकबुद्धयः [ क्व ? ] न उभयं सङ्गच्छते इत्यर्थः। अज्ञानं न अपराध्यति इति भावः। अर्थान्तरन्यासः अलङ्कारः॥ ३७ ॥

अधिगम्येति।—[ मघवा ] इन्द्रः [ इति] पूर्वोक्तं [ गुह्यकगणात् तत् मनसः प्रियं प्रियसुतस्य ] अर्जुनस्य [ तपः अधि-

निजुगोप हर्षमुदितं मघवा
नयवर्त्मगाः प्रभवतां हि धियः॥ ३८॥
प्रणिधाय चित्तमथ भक्ततया
विदितेऽप्यपूर्व इव तत्र हरिः।
उपलब्धुमस्य नियमस्थिरतां
सुरसुन्दरीरिति वचोऽभिदधे॥ ३९॥

गम्य] ज्ञात्वा। गुप्यपेक्षया समानकर्त्तृकत्वात् क्त्वा * ल्यप् † निर्देशः। [उदितं] तत् तपसः देवकार्य्यार्थत्वात् उत्पन्नं [हर्षं निजुगोप] गोपयामास। तथाहि।—[प्रभवतां] प्रभूणां [धियः नयवर्त्मगाः] नीतिमार्गानुसारिण्यः [हि।] अन्यथा मन्त्रभेदे कार्य्यहानिः स्यात् इति भावः॥ ३८॥ ‡

प्रणिधायेति।—अथ [हरिः] इन्द्रः [चित्तं प्रणिधाय] विषयान्तरपरिहारेण आत्मनि अवस्थाप्य [तत्र] तस्मिन् अर्जुने [भक्ततया विदिते] सति [अपि।] उपलक्षणे तृतीया §। [अपूर्वः इव] अविदितः इव इत्यर्थः। "पूर्वादिभ्यो नवभ्यो वा" (७।१।१६ पा०) इति विकल्पात् न स्मिन्नादेशः। [अस्य] अर्जुनस्य [नियमस्थिरतां] नियमे स्थिरतां दार्ढ्यम् [उपलब्धुम्] परीक्षितुम् इत्यर्थः। लोकप्रतीत्यर्थम् इति भावः। [सुरसुन्दरीः इति] वक्ष्यमाणप्रकारं [वचः अभिदधे]॥ ३९॥

* "समानकर्तृकयोः पूर्वकाले।" (३।४।२१ पा०)।

† "समासेऽनञ्पूर्वे क्त्वो ल्यप्"। (७।१।३७ पा०)।

‡ सामान्यविशेषसमर्थनरूपोऽर्थान्तरन्यासः।

§ "इत्थम्भूतलक्षणे"। (२।३।२१ पा०)।

सुकुमारमेकमणु मर्म्मभिदाम्
अतिदूरगं युतममोघतया ।
अविपच्चमस्त्रमपरं कतमद्
विजयाय यूयमिव चित्तभुवः ? ॥ ४० ॥
भववीतये हतबृहत्तमसाम्
अवबोधवारि रजसः शमनम् ।

---

सुकुमारमिति ।—[ मर्म्मभिदां ] मर्म्मच्छेदिनाम् अस्त्रान्तराणां मध्ये इत्यर्थः । "यतश्च निर्द्धारणम्" ( २।३।४१ पा० ) इति षष्ठी । [ अपरम् ] अन्यत् [ कतमत् । ] "वा बहूनां जातिपरिप्रश्ने डतमच्" ( ५।३।८३ पा० ) । [ यूयम् इव सुकुमारं] कोमलं, न तु कठिनम्. अन्यत् तु कठिनं भवति । तथा [ एकं ] न बहु, तत् तु अनेकं भवति । तथा [ अणु ] सूक्ष्मं न स्थूलम्, अलक्ष्यलक्ष्यप्रवेशित्वात् इति भावः । तत् तु लक्ष्यलक्ष्यप्रवेशि । तथा [ अतिदूरगं ] दूरलक्ष्यभेदि, तत् तु समीपलक्ष्यभेदि । तथा [ अमोघतया ] अमोघत्वगुणेन [ युतं ] युक्तं, न कदाचित् व्यभिचरति इति भावः । अन्यत् तु कदाचित् अपि लक्ष्यात् अपराध्यति । तथा [ अविपक्षम् ] असत्प्रतिकारम् । अन्यत् तु विद्यमानप्रतीकारम् । [ चित्तभुवः ] कामस्य । कर्त्तरि षष्ठी । [विजयाय] एतद्विशेषणविशिष्टं [ अस्त्रं ] अस्ति इति शेषः, न किञ्चित् अस्ति इत्यर्थः । अत्र उपमालङ्कारः । साभिप्रायविशेषणत्वात् परिकरालङ्कारश्च । तयोः उभयोः अङ्गाङ्गिभावेन सङ्करः ॥ ४० ॥

असामर्थ्यशङ्कां परिहरति, भवेति ।—[ भववीतये ] संसारनिवृत्तये [ हतबृहत्तमसां ] निरस्तमहामोहानां योगिनां

परिपीयमाणमिव वोऽसकलैः
अवसादमेति नयनाञ्जलिभिः ॥ ४१ ॥
बहुधा गतां जगति भूतसृजा
कमनीयतां समभिहृत्य पुरा ।
उपपादिता विदधता भवतीः
सुरसद्मयानसुमुखी जनता ॥ ४२ ॥

सम्बन्धि [ रजसः ] रजोगुणः रजोधूलिः इति श्लिष्टरूपकं, तस्य [ शमनं ] निवर्त्तकम् [ अवबोधवारि ] अवबोधः तत्त्वज्ञानम् एव वारि तत् [ वः ] युष्माकम् [ असकलैः ] असमग्रैः [ नयनाञ्जलिभिः ] नयनानि एव अञ्जलयः तैः [ परिपीयमाणम् इव ] इति उत्प्रेक्षा । [ अवसादं ] तपःक्षयम् [ एति । ] मुक्तान् अपि बध्नन्तीनां वः कथम् असामर्थ्यम् इति भावः । अत्र उत्प्रेक्षारूपकयोः सङ्करः ॥ ४१ ॥

बहुधेति ।—किं च [ पुरा जगति बहुधा गतां ] नानामुखेन विप्रकीर्णां [ कमनीयतां ] चन्द्राद्युपमानद्रव्यगतलावण्यं [ समभिहृत्य ] संगृह्य [भवतीः विदधता] सृजता [भूतसृजा ] ब्रह्मणा [ जनता ] जनसमूहः। "ग्रामजन" ( ४।२।४३ पा० ) इत्यादिना तल् । [ सुरसद्मयानसुमुखी ] स्वर्लोकयात्राप्रवणा [ उपपादिता ] कृता । स्वर्गस्य अपि यत्प्रसादात् सर्वलोकश्लाघ्यत्वं, तासां वः कथम् असामर्थ्यम् इति भावः । अत्र अप्सरसां प्रकीर्णलावण्यसङ्ग्रहासम्बन्धे अपि तत्सम्बन्धाभिधानात् अतिशयोक्तिः ॥ ४२ ॥

तदुपेत्य विघ्नयत तस्य तपः
कृतिभिः कलासु सहिताः सचिवैः।
हृतवीतरागमनसां ननु वः
सुखसङ्गिनं प्रति सुखावजितिः॥ ४३॥
अविमृष्यमेतदभिलष्यति सः
द्विषतां वधेन विषयाभिरतिम्।

अथ कार्य्यांशम् आह, तदिति।—[तत्] तस्मात् समर्थत्वात् [कलासु] गीतवाद्यादिषु [कृतिभिः] कुशलैः [सचिवैः] गन्धर्वैः [सहिताः उपेत्य] गत्वा [तस्य] पुरुषस्य [तपः विघ्नयत] विघ्नवत् कुरुत विहत इत्यर्थः। विघ्नवच्छब्दात् मत्वन्तात् "तत्करोति"(ग०) इति णिचि लोट्। णौ इष्ठवद्भावात्* मतुपो लुक्। न च अत्र असामर्थ्यशङ्का कार्य्या इति अर्थान्तरन्यासेन आह, हृतेति।—[ननु] सम्बोधने। हे अप्सरसः! [हृतवीतरागमनसां] हृतानि वशीकृतानि वीतरागाणां निःस्पृहाणां मुमुक्षूणां मनांसि चित्तानि याभिः तासां [वः] युष्माकम् अप्सरसां [सुखसङ्गिनं] पुरुषं [प्रति] सुखाभिलाषिणं प्रति [अवजितिः] विजयः [सुखा] सुखसाध्या, न तु दुष्करा खलु। एतेन अयं सुखार्थी न मुमुक्षुः इति उक्तम्॥ ४३॥

अथ सुखसङ्गित्वलिङ्गम् आह, अविमृष्येति।—हे अप्सरसः [सः] पुरुषः [द्विषतां] शत्रूणां [वधेन] शत्रुहननद्वारा

* प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च। प्रातिपदिकाद्धात्वर्थे णिच् स्यादिष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञाः तद्वत् णौ अपि स्युः।

भववीतये न हि तथा स विधिः
क्व शरासनं ? क्व च विमुक्तिपथः ? ॥४४॥
पृथुधाम्नि तत्र परिबोधि च मा
भवतीभिरन्यमुनिवद् विकृतिः ।
स्वयशांसि विक्रमवतामवतां
न वधूष्वघानि विमृषन्ति धियः ॥ ४५ ॥

---

[ विषयाभिरतिं ] विषयसुखम् [अभिलष्यति] वाञ्छति । "वा भ्राश" ( ३।१।७० पा० ) इत्यादिना श्यन्प्रत्ययः । [ एतद् ] विषयासक्तत्वम् [ अविमृष्यम् ] असन्देग्धव्यम् । "ऋदुपधाच्चाक्लृपिचृतेः" ( ३।१।११० पा० ) इति क्यप् । भवतीभिर्न सन्देग्धव्यम् इत्यर्थः । [ हि ] यस्मात् [सः विधिः] "स बिभर्त्ति भीषणभुजङ्गभुजः" इत्यादिश्लोकोक्तः अनुष्ठानप्रकारः [भववीतये] संसारमुक्तये [ न ] भवति । कुतः ? इति आह ।—[ शरासनं ] धनुः [ क्व ? विमुक्तिपथः ] विमुक्तेः पन्थाश्च [ क्व ? ] इयं परस्परं विरुद्धम् इत्यर्थः । न खलु हिंसासाध्या मुक्तिः इति भावः । अर्थान्तरन्यासः अलङ्कारः ॥ ४४ ॥

न च शापभयम् अपि सम्भाव्यम् अस्मात् इति आह, पृथ्विति ।—[ पृथुधाम्नि ] महातेजसि [तत्र च] तस्मिन् पुरुषविषये [ अन्यमुनिवत् ] अन्यस्मिन् मुनौ इव । "तत्र तस्येव" (५।१।११६ पा०) इति वतिप्रत्ययः । [विकृतिः] कोपविकारश्च [ भवतीभिः मा परिबोधि ] मा विज्ञायि, मा शङ्कि इति यावत् । बुध्यतेः कर्मणि लुङ् । * माङ्योगात् आशीरर्थे अडा-

---

* "माङि लुङ्" ( ३।३।१७५ पा० ) ।

आशंसितापचितिचारु पुरः सुराणाम्
आदेशमित्यभिमुखं समवाप्य भर्त्तुः ।
लेभे परां द्युतिममर्त्यवधूसमूहः
सम्भावना ह्यधिकृतस्य तनोति तेजः ॥४६॥
प्रणतिमथ विधाय प्रस्थिताः सद्मनस्ताः
स्तनभरनमिताङ्गीरङ्गनाः प्रीतिभाजः ।

गमाभावस्य । * तथाहि ।—[ स्वयशांसि अवतां ] रक्षतां, यशोधनानाम् इत्यर्थः । [ विक्रमवतां धियः ] चित्तानि [ वधूषु ] स्त्रीविषयेषु [अघानि] व्यसनानि । "दुःखैनोव्यसने-ष्वघम्" इति वैजयन्ती । [ न विमृषन्ति ] । अर्थान्तरन्यासः । स्त्रीहिंसायाः शूराणां यशोहानिकरत्वात् न सर्वथा वो हिनस्ति सः इत्यर्थः ॥ ४५ ॥

आशंसितेति ।—[ अमर्त्यवधूसमूहः ] अप्सरसां गणः [ सुराणां पुरः ] अग्रे [ आशंसितापचितिचारु ] आशंसितापचितिभिः अपेक्षितसम्भावनाभिः चारु यथा तथा । "स्याद-र्च्चयोरपचितिः" इत्यमरः । [ अभिमुखं ] समक्षं [ भर्त्तुः ] स्वामिनः [ इति ] पूर्वोक्तम् [ आदेशं ] नियोगं [ समवाप्य परां द्युतिं लेभे । हि ] तथाहि [अधिकृतस्य] क्वचित् अधिकारे नियुक्तस्य [ सम्भावना ] स्वामिकृता पूजा [ तेजः ] कान्तिं [ तनोति ] ॥ ४६ ॥

प्रणतिमिति ।—[ अथ प्रणतिं विधाय सद्मनः ] इन्द्रभव-

* "नमाङ्ग्योगे" ( ६।४।७४ पा० ) ।

अचलनलिनलक्ष्मीहारि नालम्बभूव
स्तिमितममरभर्त्तुर्द्रष्टुमक्ष्णां सहस्रम् ॥४७॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये
युवतिप्रस्थानं नाम षष्ठः सर्गः ॥ ६ ॥

नात् [ प्रस्थिताः ] प्रचलिताः [ स्तनभरनमिताङ्गीः ] स्तनभरैः नमितानि अङ्गानि यासां ताः। "अङ्गगात्रकण्ठेभ्यो वक्तव्यम्" (वा० ) इति ङीष्। [ प्रीतिभाजः ] स्वामिसम्भावनया सन्तुष्टाः ताः [ अङ्गनाः, अचलनलिनलक्ष्मीहारि] अचल-नलिनानां स्थिरकमलानां लक्ष्मीः हरति इति तत् तथोक्तम्. तद्वत् मनोहरम् इत्यर्थः। कुतः? [ स्तिमितं ] विस्मय-निश्चलम् [ अमरभर्त्तुः अक्ष्णां सहस्रं ] कर्त्तृ [ द्रष्टुम् अलं ] समर्थं [ न बभूव । ] तासां सौन्दर्य्यसागरस्य उद्वेलत्वात् इति भावः। अत्र उपमालङ्कारः ॥ ४७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीय-काव्यव्याख्यायां घण्टापथसमाख्यायां षष्ठः सर्गः ॥ ६ ॥

---

# सप्तमः सर्गः ।



श्रीमद्भिः सरथगजैः सुराङ्गनानां
गुप्तानामथ सचिवैस्त्रिलोकभर्त्तुः ।
सम्मूर्च्छन्नलघुविमानरन्ध्रभिन्नः
प्रस्थानं समभिदधे मृदङ्गनादः ॥ १ ॥
सोत्कण्ठैरमरगणैरनुप्रकीर्णात्
निर्याय ज्वलितरुचः पुरात् मघोनः ।

श्रीमद्भिरिति ।—[ अथ ] प्रस्थानानन्तरं [श्रीमद्भिः] शोभावद्भिः [ सरथगजैः] सह रथगजेन सरथगजाः तैः । "तेन सहेति तुल्ययोगे" ( २।२।२८ पा० ) इति बहुव्रीहिः । त्रयाणां लोकानां भर्त्तुः [त्रिलोकभर्त्तुः ] इन्द्रस्य । "तद्धितार्थ" (२।१ ५७ पा० ) इत्यादिना उत्तरपदसमासः । [ सचिवैः ] गन्धर्वैः [ गुप्तानां ] सुराङ्गनानां [ प्रस्थानं ] गमनम् [ अलघुविमानरन्ध्रभिन्नः ] अलघुषु महत्सु विमानरन्ध्रेषु विमानानां कुक्षिकुहरेषु भिन्नः प्रतिध्वानैः अनेकीभूतः अत एव [ सम्मूर्च्छन् ] व्याप्नुवन् [ मृदङ्गनादः समभिदधे ] आचख्यौ, पौरेभ्यः इति शेषः । अस्मिन् सर्गे प्रहर्षिणीवृत्तम् ।—"म्नौ ज्रौ गः त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात् ॥ १ ॥

सोत्कण्ठैरिति ।—[ सोत्कण्ठैः ] अवेक्षणोत्सुकैः इत्यर्थः । [ अमरगणैः अनुप्रकीर्णात् ] आकीर्णात् [ ज्वलितरुचः ] दीप्तप्रभात् [ मघोनः ] इन्द्रस्य [ पुरात् ] अमरावत्याः [ निर्याय ]

रामाणामुपरि विवस्वतः स्थितानां
नासेदे चरितगुणत्वमातपत्रैः ॥ २ ॥
धूतानामभिमुखपातिभिः समीरैः
आयासादविशदलोचनोत्पलानाम् ।
आनिन्ये मदजनितां श्रियं वधूनाम्
उष्णांशुद्युतिजनितः कपोलरागः ॥ ३ ॥
तिष्ठद्भिः कथमपि देवतानुभावात्
आकृष्टैः प्रजविभिरायतं तुरङ्गैः ।

निर्गत्य । यातेः क्त्वो ल्यप् । [विवस्वतः उपरि स्थितानां रामाणाम् ] आतपात् त्रायन्ते इति [ आतपत्रैः ] । "सुपि" (३।२।४ पा० ) इति योगविभागात् कप्रत्ययः । [चरितगुणत्वं] सार्थकत्वं [ न आसेदे] न प्रापे, तासां सूर्य्योपरिस्थितत्वात् आतपासम्भवात् इति भावः ॥ २ ॥

धूतानामिति ।—[ अभिमुखपातिभिः समीरैः ] प्रतिकूलवायुभिः [ धूतानाम् ] इति दुर्निमित्तसूचनम् । [ आयासात् ] गतिप्रयासात् [ अविशदलोचनोत्पलानां वधूनाम् उष्णांशुद्युतिजनितः ] आतपकृतः [ कपोलरागः ] कपोलानां रागः पाटलत्वम् । [मदजनितां] मदेन जनितां [श्रियं] तत्सदृशीं श्रियम् इत्यर्थः । अत एव निदर्शनालङ्कारः । [ आनिन्ये ] आनीतवान्, वधूः इति शेषः । आङ्पूर्वात् नयतेः कर्त्तरि लिट् । अकारानुबन्धत्वात् आत्मनेपदम् ॥ ३ ॥

तिष्ठद्भिरिति ।—[ कथम् अपि ] वाढ़म् । "कथमादौ तथाप्यन्ते यत्ने गौरववाढ़योः" इति वैजयन्ती । [ देवतानु-

नेमीनामसति विवर्त्तने रथौघै-
रासेदे वियति विमानवत् प्रवृत्तिः ॥ ४ ॥
कान्तानां कृतपुलकः स्तनाङ्गरागे
वक्त्रेषु च्युततिलकेषु मौक्तिकाभः।
सम्पेदे श्रमसलिलोद्गमो विभूषां
रम्याणां विकृतिरपि श्रियं तनोति ॥ ५ ॥
राजद्भिः पथि मरुतामभिन्नरूपै-
रुल्कार्चिःस्फुटगतिभिर्ध्वजांशुकानाम्।

भावात् ] देवतानाम् अनुभावात् [ तिष्ठद्भिः] अपतद्भिः इत्यर्थः। रथविशेषणम् एतत्। [ प्रजविभिः] वेगवद्भिः [तुरङ्गैः, आयतं] दूरम् [ आकृष्टैः रथौघैः, वियति ] आकाशे [ नेमीनां ] चक्रधाराणाम्। "चक्रधारा प्रधिर्नेमिः" इति यादवः। [ विवर्त्तने] भ्रमणे [ असति, विमानवत् ] विमानानाम् इव इति उपमा। "तत्र तस्येव" (५।१।११६ पा०) इति वतिप्रत्ययः। [ प्रवृत्तिः ] गतिः [ आसेदे ] प्राप्ता। सदेः कर्मणि लिट् ॥ ४ ॥

कान्तानामिति।—[ कान्तानां, स्तनाङ्गरागे ] स्तनानाम् अङ्गरागे [ कृतपुलकः ] जनितोद्भेदः, कृतरोमाञ्चः इत्यर्थः। [ च्युततिलकेषु ] च्युताः प्रमृष्टाः तिलकाः येषां तेषु [ वक्त्रेषु मौक्तिकाभः, श्रमसलिलोद्गमः ] स्वेदोद्भेदः [ विभूषां ] भूषणं [ सम्पेदे ] सम्पन्नः। कर्त्तरि लिट्। तथाहि।—[रम्याणां ] स्वभावसुन्दराणां [ विकृतिः अपि श्रियं तनोति ]। अतः स्वेदस्य अपि विभूषणत्वम् उपपद्यते इति भावः ॥ ५ ॥

राजद्भिरिति।—[ मरुतां, पथि ] आकाशे [ राजद्भिः ]

तेजोभिः कनकनिकाषराजिगौरैः
आयामः क्रियत इव स्म सातिरेकः ॥ ६ ॥
रामाणामवजितमाल्यसौकुमार्य्ये
सम्प्राप्ते वपुषि सहत्वमातपस्य ।
गन्धर्वैरधिगतविस्मयैः प्रतीये
कल्याणी विधिषु विचित्रता विधातुः ॥७॥

---

दीप्यमानैः [ अभिन्नरूपैः ] अविच्छिन्नाकारैः, अत एव [उल्कार्चिःस्फुटगतिभिः ] उल्कानाम् अर्चींषि इव स्फुटगतीनि दीप्तमार्गाणि येषां तैः [ कनकनिकाषराजिगौरैः ], कनकस्य निकाषः कषणं तस्य राजिः रेखा तद्वत् गौरैः अरुणैः । "गौरः पीतेऽरुणे श्वेते" इति विश्वः । [ध्वजांशुकानां तेजोभिः] पताका-कान्तिभिः [ आयामः ] तेषाम् एव दैर्घ्यं [ सातिरेकः ] सातिशयः [ क्रियते स्म इव ] कृतः इव। दीर्घाः ध्वजपटाः स्वतेजःप्रसारेण दीर्घतमाः इव लक्ष्यन्ते इति उत्प्रेक्षा, सा च उल्काद्युपमानुप्राणिता ॥ ६ ॥

रामाणामिति ।—[ अवजितमाल्यसौकुमार्य्ये ] माला एव माल्यं, तस्य सौकुमार्य्यम् अवजितं येन तस्मिन्, कुसुमात् अपि सुकुमारे मनोहरे इत्यर्थः । [ रामाणां वपुषि आतपस्य ] कृद् योगे कर्मणि षष्ठी * । सहते इति सहः क्षमः । पचाद्यच् । तस्य भावः [ सहत्वम् ] तत् [ सम्प्राप्ते ] सति [ अधिगत-विस्मयैः ] सम्प्राप्ताश्चर्य्यैः [ गन्धर्वैः विधातुः विधिषु ] सृष्टिषु [ कल्याणी ] साध्वी, श्रेयसी उपकारकत्वात् इति भावः ।

* कर्त्तृकर्म्मणोः कृति ( २।३।६५ पा० ) ।

सिन्दूरैः कृतरुचयः सहेमकक्ष्याः
स्रोतोभिस्त्रिदशगजा मदं क्षरन्तः ।
सादृश्यं ययुररुणांशुरागभिन्नैः
वर्षद्भिः स्फुरितशतह्रदैः पयोदैः ॥ ८ ॥
अत्यर्थं दुरुपसदादुपेत्य दूरं
पर्य्यन्तादहिममयूखमण्डलस्य ।

[ विचित्रता ] नानाविधत्वं [ प्रतीये ] अवगता ज्ञाता । प्रतिपूर्वात् इणः कर्मणि लिट् ॥ ७ ॥

सिन्दूरैरिति ।—[सिन्दूरैः] * नागसम्भवैः रागद्रव्यविशेषैः ; "सिन्दूरं नागसम्भवम्" इत्यमरः । [ कृतरुचयः ] अलङ्कृताः इत्यर्थः । सह हेम्नः कक्ष्याभिः मध्यबन्धनैः [ सहेमकक्ष्याः ] "तेन सहेति तुल्ययोगे" ( २।२।२८ पा० ) इति बहुव्रीहिः ; "कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने" इत्यमरः । [ स्रोतोभिः ] सप्तभिः मदनाडीभिः । "कराात्कटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदच्युतिः" इति पालकाप्ये । करात् नासारन्ध्राभ्याम् इत्यर्थः । [ मदं क्षरन्तः ] वर्षन्तः [ त्रिदशगजाः अरुणांशुरागभिन्नैः ] अरुणस्य अर्कस्य अंशूनां रागेण आरुण्येन भिन्नैः संसृष्टैः [ वर्षद्भिः स्फुरितशतह्रदैः ] स्फुरिततडिद्भिः [पयोदैः सादृश्यं ययुः] इति उपमालङ्कारः ॥ ८ ॥

अत्यर्थमिति ।—[ बलानि ] सैन्यानि [अत्यर्थं दुरुपसदात्] दुःसहात् [ अहिममयूखमण्डलस्य ] सूर्य्यबिम्बस्य [पर्य्यन्तात् ] समीपात् [ दूरम् उपेत्य ] आगत्य [ आशानाम् उपरचितां ]

सीनातिकरन् ( ७० पा० १।६७ ) स्कन्दैः समममारणाच्च ( ७० पा० १।६८

आशानामुपरचितामिवैकवेणीं
रम्योर्मिं त्रिदशनदीं ययुर्बलानि ॥ ९ ॥
आमत्तभ्रमरकुलाकुलानि धुन्वन्
उद्भूतग्रथितरजांसि पङ्कजानि ।
कान्तानां गगननदीतरङ्गशीतः
सन्तापं विरमयति स्म मातरिश्वा ॥ १० ॥
सम्भिन्नैरिभतुरगावगाहनेन
प्राप्योर्वीरनु पदवीं विमानपङ्क्तीः ।

गुम्फिताम् [ एकवेणीम् इव ] स्थिताम् इत्युत्प्रेक्षा । [ रम्योर्मिं त्रिदशनदीं ] रम्याः ऊर्मयः तरङ्गाः यस्याः तां त्रिदशनदीं मन्दाकिनीं [ ययुः ] प्रापुः ॥ ९ ॥

आमत्तेति ।—[ आमत्तभ्रमरकुलाकुलानि ] आमत्तैः भ्रमरकुलैः आकुलानि [ उद्भूतग्रथितरजांसि ] उद्भूतानि उत्थापितानि ग्रथितानि अन्योन्यसम्बद्धानि च रजांसि येषु तानि [ पङ्कजानि धुन्वन् ] कम्पयन्, सुरभिः इत्यर्थः । [ गगननदीतरङ्गशीतः ] गगननदीतरङ्गैः शीतः [ मातरिश्वा ] वायुः, [ कान्तानां सन्तापं विरमयति स्म] शमयामास । मातरि अन्तरिक्षे श्वयति इति निरुक्तिः * ॥ १० ॥

सम्भिन्नैरिति ।—[ इभतुरगावगाहनेन ] हस्त्यश्वावलोड़नेन [ सम्भिन्नैः ] संक्षुभितैः [ सुरापगायाः पयोभिः ] कर्त्तृभिः [पदवीम् अनु ] पदव्याम् इत्यर्थः । "लक्षणेत्थम्भूत" ( १।४।९०

* हलदन्तात् सप्तम्याः संज्ञायाम् (६।३।९ पा०) अलुक्समासः ।

तत्पूर्वं प्रतिविदधे सुरापगायाः
वप्रान्तस्खलितविवर्त्तनं पयोभिः ॥ ११ ॥

क्रान्तानां ग्रहचरितात् पथो रथानां
अक्षाग्रक्षतसुरवेश्मवेदिकानाम् ।
निःसङ्गं प्रधिभिरुपाददे विवृत्तिः
सम्पीड़क्षुभितजलेषु तोयदेषु ॥ १२ ॥

---

पा० । इत्यादिना कर्मप्रवचनीयत्वात् द्वितीया । [ उर्वीः ] विपुलाः [ विमानपङ्क्तीः प्राप्य ] । तत् एव पूर्वं [ तत्पूर्वम् ] इदं प्रथमं यथा तथा आकाशगङ्गायाः तटाभावात् इति भावः । वप्रान्तेषु रोधोभूमिषु स्खलितानि तैः विवर्त्तनं प्रत्यावृत्तिः [ वप्रान्तस्खलितविवर्त्तनं ] तटान्तस्खलनप्रतिवर्त्तनम् ।—"वप्रः पितरि केदारे वप्रः प्राकाररोधसोः" इति वैजयन्ती । [ प्रतिविदधे ] चक्रे इति अतिशयोक्तिः ॥ ११ ॥

क्रान्तानामिति ।—[ ग्रहचरितात् ] ग्रहैः सूर्य्यादिभिः चरितात् आश्रितात् । कर्म्मणि क्तः । [ पथः ] मार्गात् । [ क्रान्तानां ] निष्क्रान्तानां [ अक्षाग्रक्षतसुरवेश्मवेदिकानाम् ] [illegible]क्षाः चक्राधाराः दारुविशेषाः तेषाम् अग्रैः क्षताः दारिताः सुर[illegible]श्मवेदिकाः यैः तेषां [ रथानां प्रधिभिः ] नेमिभिः चक्रान्तैः । [illegible]क्रं रथाङ्गं तस्यान्तो नेमिः स्त्री स्यात् प्रधिः पुमान्" इत्य[illegible] [सम्पीड़क्षुभितजलेषु ] सम्पीड़ेन नोदनेन क्षुभितानि [illegible] येषां तेषु [तोयदेषु, निःसङ्गम् ] अप्रतिघातं यथा तथा [illegible]ः ] परिभ्रमणम् [ उपाददे ] स्वीकृता । इति अति[illegible]भावोक्त्या संसृज्यते ॥ १२ ॥

तप्तानामुपदधिरे विषाणभिन्नाः
प्रह्लादं सुरकरिणां घनाः चरन्तः ।
युक्तानां खलु महतां परोपकारे
कल्याणी भवति रुजत्स्वपि प्रवृत्तिः ॥ १३ ॥

संवाता मुहुरनिलेन नीयमाने
दिव्यस्त्रीजघनवरांशुके विवृत्तिम् ।
पर्य्यस्यत्पृथुमणिमेखलांशुजालं
संजज्ञे युतकमिवान्तरीयमूर्व्वोः ॥ १४ ॥

---

तप्तानामिति ।—[विषाणभिन्नाः] गजदन्तक्षताः । "विषाणं दन्तशृङ्गयोः" इति हलायुधः । अत एव [ चरन्तः ] स्रवन्तः [ घनाः तप्तानां सुरकरिणां प्रह्लादम् उपदधिरे ] चक्रिरे । तथाहि ।—[ परोपकारे युक्तानाम् ] आसक्तानां [महतां] सतां [रुजत्सु अपि] पीड़यत्सु अपि विषये [ कल्याणी ] हितकारिणी [ खलु प्रवृत्तिः ] व्यापारः [ भवति ] इति अर्थान्तरन्यासः अलङ्कारः । ततः युक्तं मेघानां गजदन्तक्षतानाम् अपि तदाह्लादकत्वम् इति भावः ॥ १३ ॥

संवातेति ।—[ संवाता ] संवहता । वातेर्गत्यर्थत्वात् शतृप्रत्ययः । [अनिलेन] कामिना वा इति भावः । [दिव्यस्त्रीजघनवरांशुके ] दिव्यस्त्रीणां जघनेषु वरं श्रेष्ठं यत् अंशुकं तस्मिन् [विवृत्तिम् ] अपसारं [ मुहुः नीयमाने ] सति [पर्य्यस्यत्पृथुमणिमेखलांशुजालं ] पर्य्यस्यत् प्रसरत् पृथु विशालं मणिमेखलांशुजालम् [ ऊर्व्वोः युतकं ] चलनाख्यम् [इव] "युतकं संश्रये युग्मे यौतके चलनेऽपि च" इति विश्वः । अन्तरे भवम्

प्रत्यार्द्रीकृततिलकास्तुषारपातैः
प्रह्लादं शमितपरिश्रमा दिशन्तः ।
कान्तानां बहुमतिमाययुः पयोदाः
नाल्पीयान् बहु सुकृतं हिनस्ति दोषः ॥ १५ ॥
यातस्य ग्रथिततरङ्गसैकताभे
विच्छेदं विपयसि वारिवाहजाले ।

[ अन्तरीयम् ] अधोऽंशुकम् । "गहादिभ्यश्च" (४।२।१३८ पा०) इति छप्रत्ययः । "अन्तरीयोपसंव्यानपरिधानान्यधोऽंशुके" इत्यमरः । [ संजज्ञे ] संजातम् । जनिधातोः कर्त्तरि लिट् । उत्प्रेक्षालङ्कारः ॥ १४ ॥

प्रतीति ।—[ तुषारपातैः ] शीकरवर्षैः । "तुषारौ हिमशीकरौ" इति विश्वः । [ प्रत्यार्द्रीकृततिलकाः ] मार्जितविशेषकाः अपि [ शमितपरिश्रमाः, प्रह्लादम् ] आनन्दं [ दिशन्तः पयोदाः कान्तानाम् ] । कर्त्तरि षष्ठी * । [बहुमतिं] सम्मानम् [ आययुः ] । तथाहि—[ अल्पीयान् ] अल्पः [ दोषः, बहु ] प्रभूतं [ सुकृतम् ] उपकारं [न हिनस्ति] न हन्ति । अर्थान्तरन्यासः अलङ्कारः ॥ १५ ॥

यातस्येति ।—[ ग्रथिततरङ्गसैकताभे ] ग्रथिततरङ्गं बद्धोर्मि यत् सैकतं तस्य आभा इव आभा यस्य तस्मिन् । विगतानि पयांसि यस्मात् तस्मिन् [ विपयसि] निर्जले । "शेषाद्विभाषा" ( ५।४।१५४ पा० ) इत्यादिना पाक्षिकत्वात् न समासान्तः । उरःप्रभृतिपाठस्तु पयःशब्दस्य एकवचनान्तस्य एव इति न

---

* कर्त्तृकर्म्मणोः कृति ( २।३।६५ पा० ) ।

आतेनुस्त्रिदशवधूजनाङ्गभाजां
सन्धानं सुरधनुषः प्रभा मणीनाम् ॥ १६ ॥

संसिद्धाविति करणीयसन्निबद्धैः
आलापैः पिपतिषतां विलङ्घ्य वीथीम्
आसेदे दशशतलोचनध्वजिन्या
जीमूतैरपिहितसानुरिन्द्रकीलः ॥ १७ ॥

कश्चित् विरोधः। [ वारिवाहजाले ] मेघवृन्दे [ विच्छेदं ] त्रुटिं [ यातस्य, सुरधनुषः ] इन्द्रचापस्य [त्रिदशवधूजनाङ्गभाजां मणीनां ] तदङ्गसङ्गिविभूषामणीनाम् इत्यर्थः। [ प्रभाः ] कान्तयः [ सन्धानम् आतेनुः ] चक्रुः। अत्र आभरणप्रभाणाम् इन्द्रधनुःसन्धानासम्बन्धे अपि सम्बन्धाभिधानात् अतिशयोक्तिः अलङ्कारः ॥ १६ ॥

संसिद्धाविति।—[ संसिद्धौ ] कार्य्यसिद्धिविषये [ इति करणीयसन्निबद्धैः ] इति इत्थंभाविना प्रकारेण कर्त्तव्यम् इति करणीयं तेन सन्निबद्धैः संयोजितैः इत्यर्थः। [आलापैः ] आभाषणैः उपलक्षितया। "स्यादाभाषणमालापः" इत्यमरः। [ दशशतलोचनध्वजिन्या ] दशशतानि संख्या येषु तानि लोचनानि यस्य सः, सहस्रलोचनः इत्यर्थः, तस्य ध्वजिन्या सेनया [ पिपतिषतां ] पक्षिणां [वीथीं ] मार्गम्। "पितत्सन्तो नभसङ्गमाः" इत्यमरः। "तनिपति" ( वा० ) * इत्यादिना विकल्पात् इडागमः। [ विलङ्घ्य, जीमूतैः ] जीवनस्य उदकस्य

* तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः

आकीर्णा मुखनलिनैर्विलासिनीनाम्

उद्भूतस्फुटविशदातपत्रफेना ।

सा तूर्य्यध्वनितगभीरमापतन्ती

भूभर्त्तुः शिरसि नभोनदीव रेजे ॥ १८ ॥

सेतुत्वं दधति पयोमुचां विताने

संरम्भादभिपततो रथान् जवेन ।

---

मूतः पटबन्धः येषां ते तैः । पृषोदरादित्वात् * साधुः । [ अपिहितभानुः ] आच्छादिततटः, उन्नतः इत्यर्थः । [ इन्द्रकीलः आसेदे ] प्राप्तः । सीदतेः कर्मणि लिट् ॥ १७ ॥

आकीर्णेति ।—[ विलासिनीनां मुखनलिनैः ] उपमितसमासः । [ आकीर्णा ] व्याप्ता [ उद्भूतस्फुटविशदातपत्रफेना ] उद्भूतानि ऊर्द्ध्वम् उत्क्षिप्तानि स्फुटानि असङ्कुचितानि विशदातपत्राणि श्वेतच्छत्राणि फेनाः इव यस्याः तथोक्ता [ तूर्य्यध्वनितगभीरं ] तूर्य्यध्वनितैः वाद्यघोषैः गभीरं यथा तथा [ भूभर्त्तुः ] इन्द्रकीलस्य [ शिरसि आपतन्ती सा] सेना [ नभोनदी इव रेजे] ॥ १८ ॥ †

सेतुत्वमिति ।—[ पयोमुचां विताने सेतुत्वं दधति ] सति [ संरम्भात् ] आटोपात् [ जवेन अभिपततः ] मेघवृन्दम् अधरीकृत्य धावतः इत्यर्थः । तथाभूतान् [रथान् नियमितरश्मिभुग्नघोणाः] नियमितैः आकृष्टैः रश्मिभिः प्रग्रहैः भुग्नाः आकुञ्चिताः घोणाः प्रोथाः येषां ते । "कुञ्चितं नतम् । आविद्धं कुटिलं भुग्नं

* पृषोदरादीनि यथोपदिष्टम् ( ६।३।१०९ पा० ) ।

† रूपकान्विता उपमाऽलङ्कृतिः ।

आनिन्युर्नियमितरश्मिभुग्नघोणाः
कृच्छ्रेण क्षितिमवनामिनस्तुरङ्गाः ॥ १९ ॥
माहेन्द्रं नगमभितः करेणुवर्य्याः
पर्य्यन्तस्थितजलदा दिवः पतन्तः ।
सादृश्यं निलयननिष्प्रकम्पपक्षैः
आजग्मुर्जलनिधिशायिभिर्नगेन्द्रैः ॥ २० ॥
उत्सङ्गे समविषमे समं महाद्रेः
क्रान्तानां वियदभिपातलाघवेन ।

वेल्लितं वक्रम्" इत्यमरः। "किरणप्रग्रहौ रश्मी" इत्यमरः। "घोणा तु प्रोथमस्त्रियाम्" इत्यमरः। अवनमन्ति इति [ अवनामिनः ] अवनतपूर्वकायाः [ तुरङ्गाः कृच्छ्रेण ] महता प्रयत्नेन [क्षितिम् आनिन्युः ] इति स्वभावोक्तिः ॥ १९ ॥

माहेन्द्रमिति।—[ माहेन्द्रं नगम् अभितः ] इन्द्रकीलाभिमुखम्। "अभितः परितः" (वा०) इत्यादिना द्वितीया। [दिवः] अन्तरिक्षात् [ पतन्तः ] अवतरन्तः [ पर्य्यन्तस्थितजलदाः ] पर्य्यन्तस्थिताः पार्श्वस्थाः जलदाः येषां ते [ करेणुवर्य्याः ] करेणुषु वर्य्याः, श्रेष्ठाः इत्यर्थः। "न निर्द्धारणे" ( २।२।१० पा० ) इति षष्ठीसमासनिषेधात् "सप्तमी" * इति योगविभागात् सप्तमीसमासः। [ निलयननिष्प्रकम्पपक्षैः ] निलयने स्थाने निष्प्रकम्पपक्षैः निश्चलपक्षैः [ जलनिधिशायिभिः नगेन्द्रैः ] मैनाकादिभिः [ सादृश्यम् आजग्मुः ] इत्युपमा ॥ २० ॥

उत्सङ्ग इति।—[ महाद्रेः उत्सङ्गे ] मूर्ध्नि विषये [ सम-

* सप्तमी शौण्डैः (२।१।४० पा०)।

आ मूलादुपनदि सैकतेषु लेभे
सामग्र्यं खुरपदवी तुरङ्गमाणाम् ॥ २१ ॥
सध्वानं निपतितनिर्झरासु मन्द्रैः
सम्मूर्च्छन् प्रतिनिनदैरधित्यकासु ।
उद्ग्रीवैर्घनरवशङ्कया मयूरैः
सोत्कण्ठं ध्वनिरुपशुश्रुवे रथानाम् ॥ २२ ॥

विषमे ] यत् समविषमं, समं च विषमं च निम्नोन्नतं तस्मिन् । द्वन्द्वैकवद्भावः । * [ वियदभिपातलाघवेन ] गगनसञ्चार-पाटवेन [ समम् ] एकरूपम् आरोहावरोहरहितम् इत्यर्थः [ क्रान्तानां ] गच्छतां [ तुरङ्गमाणां खुरपदवी ] खुरपङ्क्तिः [ उपनदि ] नदीसमीपे । "अव्ययीभावश्च" ( २।४।१८ पा० ) इति नपुंसकत्वात् ह्रस्वत्वम् । [ सैकतेषु आ मूलात् ] मूलम् आरभ्य, आदितः आरभ्य इति यावत् । समग्रस्य भावः [ सामग्र्यं ] साकल्यम् । भावे ष्यञ्, [ लेभे ] । सैकतात् अन्यत्र निम्नेषु गगनचारिण समप्रदेशवत् विषमेषु समखुरस्पर्शा-भावात् विच्छिन्ना खुरसरणिः सैकतेषु तु सर्वत्र समत्वात् अविच्छिन्ना इत्यर्थः ॥ २१ ॥ †

सध्वानमिति ।—[ सध्वानं ] सशब्दं [ निपतितनिर्झरासु ] निपतिताः निर्झराः प्रवाहाः यासु तासु । "प्रवाहो निर्झरो झरः" इत्यमरः । [ अधित्यकासु ] नगोर्द्ध्वभूमिषु । "भूमि-रूर्द्ध्वमधित्यका" इत्यमरः । "उपाधिभ्याम्" ( ५।२।३४ पा० )

* विप्रतिषिद्धञ्चानधिकरणवाचि ( २।४।१३ पा० ) ।

† तुरगसञ्चारखुरपङ्क्तिसैकताद्धानां यथावद्वर्णनाश्रया स्वभावोक्तिः ।

सम्भिन्नामविरलपातिभिर्मयूखै-
र्नीलानां भृशमुपमेखलं मणीनाम्।
विच्छिन्नामिव वनिता नभोऽन्तराले
वप्राम्भःस्रुतिमवलोकयाम्बभूवुः॥ २३॥
आसन्नद्विपपदवीमदानिलाय
क्रुध्यन्तो धियमवमत्य धूर्गतानाम्।

इत्यादिना त्यकन्प्रत्ययः। मन्द्रैः गम्भीरैः। "कलो मन्द्रस्तु गम्भीरे" इत्यमरः। [प्रतिनिनदैः] प्रतिध्वानैः [सम्मूर्च्छन्] वर्द्धमानः [रथानां ध्वनिः घनरवशङ्कया] मेघगर्जितभ्रमेण इति भ्रान्तिमदलङ्कारः। [उदग्रीवैः मयूरैः सोत्कण्ठम् उपशुश्रुवे] उपश्रुतः। शृणोतेः कर्मणि लिट्॥ २२॥

सम्भिन्नामिति।—[अविरलपातिभिः] निरन्तरप्रसारिभिः [उपमेखलं] मेखलातटेषु इत्यर्थः। "अथ मेखला। श्रोणिस्थाने-ऽद्रिकटके कटिबन्धेऽसिबन्धने" इति यादवः। [नीलानां मणीनां मयूखैः भृशं सम्भिन्नाम्] एकीभूताम् अत एव [नभः अन्तराले विच्छिन्नाम् इव] स्थिताम् इति उत्प्रेक्षा। [वप्राम्भःस्रुतिं] वप्रोदकधारां [वनिताः अवलोकयाम्बभूवुः]। वप्राम्भःस्रुतेः स्वधवलिमत्यागेन इन्द्रनीलानां नीलिमस्वीकाररूपतद्गुणो-त्थापिता विच्छेदोत्प्रेक्षा इति तयोः अङ्गाङ्गिभावेन सङ्करः। तेन च नैल्याविच्छेदभ्रमरूपः भ्रान्तिमान् व्यज्यते॥ २३॥

आसन्नेति।—धुरं गताः तेषां [धूर्गतानां] नियन्तॄणां [धियम् अवमत्य] अगणयित्वा अवज्ञाय इति यावत्, [आसन्न-द्विपपदवीमदानिलाय] आसन्नायां द्विपपदव्यां वनगजमार्गे यः मदानिलः तस्मै [क्रुध्यन्तः] तं प्रति कुप्यन्तः। "क्रुधद्रुह"

सव्याजं निजकरिणीभिरात्तचित्ताः
प्रस्थानं सुरकरिणः कथञ्चिदीषुः ॥ २४ ॥

नीरन्ध्रं पथिषु रजो रथाङ्गनुन्नं
पर्य्यस्यत् नवसलिलारुणं वहन्ती ।
आतेने वनगहनानि वाहिनी सा
घर्मान्तक्षुभितजलेव जह्नुकन्या ॥ २५ ॥

सम्भोगक्षमगहनामथोपगङ्गं
बिभ्राणां ज्वलितमणीनि सैकतानि ।

( १।४।३७ पा० ) इत्यादिना सम्प्रदानत्वात् चतुर्थी । [सव्याजं] सकपटं [ निजकरिणीभिः, आत्तचित्ताः] आकृष्टचित्ताः [ सुरकरिणः ] देवनागाः [ प्रस्थानं] गमनं [कथञ्चित् ] कष्टेन [ईषुः] अभिलेषुः * ॥ २४ ॥

नीरन्ध्रमिति ।—[ नीरन्ध्रं ] सान्द्रं [ पथिषु, रथाङ्गनुन्नं ] रथाङ्गैः चक्रैः नुन्नं प्रेरितम् । "नुत्तनुन्नास्तनिष्ठ्यूतविद्धक्षिप्तेरिताः समाः" इत्यमरः । [ पर्य्यस्यत् ] प्रसरत् [ नवसलिलारुणं] नवसलिलम् इव अरुणं [रजः वहन्ती सा वाहिनी ] सेना [घर्मान्तक्षुभितजला ] घर्मान्ते प्रावृषि क्षुभितजला कलुषोदका इत्यर्थः [जह्नुकन्या] गङ्गा [इव ] । वनानि फलकुसुमप्रधानानि, गहनानि जीर्णारण्यानि च तानि [ वनगहनानि, आतेने ] व्यानशे । अत्र समासगतवाक्यगतोपमयोः सजातीययोः अङ्गाङ्गिभावेन सङ्करः ॥ २५ ॥

सम्भोगेति ।—[ अथ वृत्रारेः ] शक्रस्य [सहायाः] सचिवाः

* स्वभावोक्तिः अलङ्कारः ।

अध्यूषुश्च्युतकुसुमाचितां सहाया
द्वारैरविरलशाद्वलां धरित्रीम् ॥ २६ ॥
भूभर्त्तुः समधिकमाददे तदोर्व्याः
श्रीमत्तां हरिसखवाहिनीनिवेशः ।
संसक्तौ किमसुलभं महोदयानाम् ?
उच्छ्रायं नयति यदृच्छयापि योगः ॥ २७ ॥

---

गन्धर्वाः [ उपगङ्गं ] गङ्गासमीपे । अव्ययीभावस्य नपुंसकत्वात् ह्रस्वत्वम् । [ सम्भोगक्षमगहनाम्] उपभोगयोग्यवनां [ज्वलितमणीनि ] ज्वलिताः मणयः येषु तानि [ सैकतानि बिभ्राणाम् । ] भृञः कर्त्तरि लटः शानच् । [ च्युतकुसुमाचितां ] च्युतैः स्वयंपतितैः कुसुमैः आचितां व्याप्ताम् [अविरलशाद्वलां] अविरलाः सान्द्राः शाद्वलाः शादप्रायदेशाः यस्यां सा तां [धरित्रीम् अध्यूषुः ] * अधितष्ठुः । वसतेर्यजादित्वात् सम्प्रसारणम् । अत्र धरित्रीविशेषणार्थानाम् अधिवासहेतुत्वात् अनेकपदार्थहेतुकं काव्यलिङ्गम् अलङ्कारः ॥ २६ ॥

भूभर्त्तुरिति ।—[ तदा हरिसखवाहिनीनिवेशः ] गन्धर्वसेनाशिविरम् । "निवेशः शिविरोद्वाहविन्यासेषु प्रकीर्त्तितः" इति शाश्वतः । [ भूभर्त्तुः ] पर्वतस्य [ उर्व्याः समधिकं ] पूर्वस्मात् अभ्यधिकं यथा तथा [ श्रीमत्तां ] श्रियम् इत्यर्थः, [ आददे ] जनयामास । तथाहि,—[ महोदयानां] महात्मनां [संसक्तौ]। सम्यक्सम्बन्धे । "संभक्तौ" इति पाठे तु सम्यक्सेवायां [ किम् असुलभं ? ] न किञ्चित् दुर्लभम् इत्यर्थः । यतः,—

* उपान्वध्याङ्वसः ( १।४।४८ पा० )। इति वसतेराधारस्य कर्म्मत्वम् ।

सामोदाः कुसुमतरुश्रियो विविक्ताः
सम्पत्तिः किशलयशालिनी लतानाम् ।
साफल्यं ययुरमराङ्गनोपभुक्ताः
सा लक्ष्मीरुपकुरुते यया परेषाम् ॥ २८

क्लान्तोऽपि त्रिदशवधूजनः पुरस्तात्
लीनाहिश्वसितविलोलपल्लवानाम् ।

[ यदृच्छया ] दैवात् [ योगः अपि उच्छ्रायम् ] उत्कर्षं [ नयति ] । अत्र प्रकृतयदृच्छया योगस्य उत्कर्षाभिधानात् अप्रकृतसद्वियोगस्य उत्कर्षाधायकत्वे कैमुतिकन्यायेन अर्थापत्तिः इति प्राकरणिकात् अप्राकरणिकरूपार्थापत्तिः अलङ्कारः । तदुक्तम् ।— "एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यथा पतेत् । कैमुत्येन यतः सा स्यादर्थापत्तिरलङ्क्रिया ॥" इति ॥ २७ ॥

सामोदा इति ।—[ सामोदाः ] ससौरभाः [ कुसुमतरुश्रियः ] कुसुमप्रधानाः तरवः । शाकपार्थिवादिषु द्रष्टव्यः । तेषां श्रियः समृद्धयः [ विविक्ताः ] विजनप्रदेशाः । "विविक्तविजनच्छन्ननिःशलाकास्तथा रहः" इत्यमरः । [ किशलयशालिनी लतानां ] नवपल्लवयुता वल्लीनां [ सम्पत्तिः ] एताः [ अमराङ्गनोपभुक्ताः ] सत्यः [ साफल्यं ययुः । ] तथाहि,—[ यया ] लक्ष्म्या करणेन [ परेषाम् उपकुरुते ] लक्ष्मीवान् इति शेषः । [ सा लक्ष्मीः ] न अन्या इति भावः । परेषाम् इत्यत्र "अनुकरोति भगवतो नारायणस्य" इत्यादिवत् क्रियायोगे हि सम्बन्धसामान्ये षष्ठी ॥ २८ ॥

क्लान्त इति ।—[ क्लान्तः अपि त्रिदशवधूजनः पुरस्तात् ] अग्रे [ लीनाहिश्वसितविलोलपल्लवानां ] लीनानां संश्रिता-

सैव्यानां हतविनयैरिवावृतानां
सम्पर्कं परिहरति स्म चन्दनानाम् ॥ २९ ॥
उत्सृष्टध्वजकुथकङ्कटा धरित्रीम्
आनीता विदितनयैः श्रमं विनेतुम् ।
आक्षिप्तद्रुमगहना युगान्तवातैः
पर्य्यस्ता गिरय इव द्विपा विरेजुः ॥ ३० ॥
प्रस्थानश्रमजनितां विहाय निद्राम्
आमुक्ते गजपतिना सदानपङ्के ।

नाम् अहीनां श्वसितैः निश्वासैः विलोलाः पल्लवाः येषां तेषां [ चन्दनानां सम्पर्कं हतविनयैः ] दुर्जनैः खलैः [ आवृतानां ] संवृतानां [ सैव्यानां ] प्रभूणां [ सम्पर्कम् इव परिहरति स्म ] । दुष्टवत् दुष्टसंसृष्टाः गुणाढ्याः अपि त्याज्याः इति भावः ॥२९॥

उत्सृष्टेति ।—[ उत्सृष्टध्वजकुथकङ्कटाः ] उत्सृष्टाः आक्षिप्ताः ध्वजाः कुथाः आस्तरणानि कङ्कटाः तनुत्राणानि च येभ्यः ते । "प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः" इत्यमरः । [ विदितनयैः ] शिक्षाभिज्ञैः यन्तृभिः [ श्रमं विनेतुं ] क्लमम् अपनेतुं [ धरित्रीम् आनीताः ] निवेश्यमानाः इत्यर्थः । [ द्विपाः युगान्तवातैः, आक्षिप्तद्रुमगहनाः ] आक्षिप्तानि उद्धृतानि द्रुमाणां गहनानि वनानि येभ्यः ते [ पर्य्यस्ताः ] विपर्य्यासिताः [ गिरयः इव विरेजुः ] शुशुभिरे ॥ ३० ॥

प्रस्थानेति ।—[ गजपतिना, प्रस्थानश्रमजनितां ] प्रस्थानश्रमेण गमनक्लेशेन जनितां [ निद्रां विहाय आमुक्ते ] अत एव [ सदानपङ्के ] गजमदयुक्ते [ शय्यान्ते ] शयनीयप्रदेशे [ घर्षं

शय्यान्ते कुलमलिनां क्षणं विलीनं
संरम्भच्युतमिव शृङ्खलं चकाशे ॥ ३१ ॥

आयस्तः सुरसरिदोघरुद्धवर्त्मा
सम्प्राप्तुं वनगजदानगन्धि रोधः ।
मूर्द्धानं निहितशिताङ्कुशं विधुन्वन्
यन्तारं न विगणयाञ्चकार नागः ॥ ३२ ॥

आरोढुः समवनतस्य पीतशेषे
साशङ्कं पयसि समीरिते करेण ।

विलीनं ] लग्नम् [ अलिनां* कुलं, संरम्भच्युतं ] संरम्भेण उत्थानसम्भ्रमेण च्युतं भ्रष्टं [ शृङ्खलं ] निगडम् [ इव ] इत्युत्प्रेक्षा । "अथ शृङ्खले । अन्दुको निगडोऽस्त्री स्यात्" इत्यमरः । [ चकाशे ] शुशुभे ॥ ३१ ॥

आयस्त इति ।—[ वनगजदानगन्धि ] वनगजदानस्य गन्धः अस्य अस्ति इति तथोक्तं [ रोधः ] परकूलम् इत्यर्थः [ सम्प्राप्तुं ] गन्तुम् [ आयस्तः ] उत्सुकः: प्रयत्नं कुर्वाणः इत्यर्थः । "यसु प्रयत्ने" इति धातोः कर्त्तरि क्तः । किन्तु [ सुरसरिदोघरुद्धवर्त्मा ] सुरसरिदोघेन गङ्गाप्रवाहेण रुद्धं वर्त्म यस्य सः । [ नागः ] गजः [ निहितशिताङ्कुशं ] निहितः दत्तः शितः तीक्ष्णः अङ्कुशः यस्मिन् । "अङ्कुशोऽस्त्री सृणिः स्त्रियाम्" इत्यमरः । तं [ मूर्द्धानं विधुन्वन् ] रोषात् इति भावः । [ यन्तारं न विगणयाञ्चकार ] न विगणयामास ॥ ३२ ॥

आरोढुरिति ।—[ समवनतस्य ] जलपानार्थम् आनतपूर्वकायस्य [ करेणोः ] गजस्य । "करेणुरिभ्यां स्त्री नेभे" इत्य-

* वल्ली वल्लिरिव इतिवत् अलिरली चेति भ्रमरपर्य्याये कोषः ।

सम्मार्जन् अरुणमदस्रुती कपोलौ
सस्यन्दे मद इव शीकरः करेणोः ॥ ३३ ॥
आघ्राय क्षणमतितृष्यतापि रोषात्
उत्तीरं निहितविवृत्तलोचनेन।
सम्पृक्तं वनकरिणां मदाम्बुसेकैः
नाचेमे हिममपि वारि वारणेन ॥ ३४ ॥
प्रश्च्योतन्मदसुरभीणि निम्नगायाः
क्रीडन्तो गजपतयः पयांसि कृत्वा।

मदः। [करेणु पीतशेषे] पीतस्य शेषे [पयसि आरोढ़ः] हस्तिपकात् [साशङ्कं] सभयं [समीरिते] क्षिप्ते सति इत्यर्थः। [शीकरः] अम्बुकणः, [अरुणमदस्रुतौ] अरुणे मदस्रुतौ मदधारे ययोः तौ [कपोलौ सम्मार्जन्] प्रमृजन्। "मृजेरजादौ संक्रमे विभाषावृद्धिर्वक्तव्या" (वा०) इति वृद्धिः। [मदः इव सस्यन्दे] सुस्राव। स्रवन्मदसम्पृक्तस्य मदसादृश्यात् मदोपमा ॥ ३३ ॥

आघ्रायेति।—[अतितृष्यता अपि] अतिपिपासता अपि [क्षणम् आघ्राय रोषात् उत्तीरं] परतीरे। विभक्त्यर्थे अव्ययीभावः। [निहितविवृत्तलोचनेन] निहिते विवृत्ते घूर्णिते लोचने यस्य तेन, प्रतिगजदिदृक्षया इति भावः। [वारणेन हिमं] शीतलम् [अपि वनकरिणां मदाम्बुसेकैः] दानधाराभिः [सम्पृक्तं वारि न आचेमे] न पीतम्। "चमु अदने" इति धातोः कर्मणि लिट् ॥ ३४ ॥ *

* अत्र वाक्यार्थहेतुकं काव्यलिङ्गम्।

किञ्जल्कव्यवहितताम्रदानलेखैः
उत्तेरुः सरसिजगन्धिभिः कपोलैः ॥ ३५ ॥

आकीर्णं बलरजसा घनारुणेन
प्रक्षोभैः सपदि तरङ्गितं तटेषु ।
मातङ्गोन्मथितसरोजरेणुपिङ्गं
माञ्जिष्ठं वसनमिवाम्बु निर्बभासे ॥ ३६ ॥

प्रश्च्योतदिति ।—[क्रीड़न्तः] विहरन्तः [गजपतयः निम्नगायाः] गङ्गायाः [पयांसि, प्रश्च्योतन्मदसुरभीणि] प्रश्च्योतद्भिः क्षरद्भिः मदैः सुरभीणि [कृत्वा, किञ्जल्कव्यवहितताम्रदानलेखैः] किञ्जल्कैः केसरैः व्यवहिताः तिरोहिताः ताम्राः ताम्रवर्णाः दानलेखाः मदराजयः येषु तैः, अत एव [सरसिजगन्धिभिः कपोलैः] * उपलक्षिताः सन्तः [उत्तेरुः] निर्जग्मुः। अत्र मदसरसिजगन्धयोः समयोः विनिमयोक्त्या समपरिवृत्तिः अलङ्कारः। तेन च गजानां निम्नगायाश्च परिमलव्यत्ययान्तरसंरम्भः व्यज्यते ॥ ३५ ॥

आकीर्णमिति ।—[घनारुणेन] सान्द्रलोहितेन। विशेषणसमासः। [बलरजसा] सेनापरागेण [आकीर्णं सपदि, प्रक्षोभैः] आलोड़नैः [तटेषु] तीरेषु [तरङ्गितं] सञ्जाततरङ्गम्। तारकादित्वात् इतच्। † यद्वा—तरङ्गवत् कृतं मत्वन्तात् "तत्करोति" (गण०) इति णिचि कर्मणि क्तः। णाविष्ठवद्भावात् मतुपो लुक्। ‡ तथा [मातङ्गोन्मथितसरोजरेणु-

* "इत्थम्भूतलक्षणे" (२।३।२१ पा०) इति तृतीया।

† "तदस्य सञ्जातं तारकादिभ्य इतच्" (५।२।३६ पा०)।

‡ "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" इति लक्षणम्।

श्रीमद्भिर्नियमितकन्धरापरान्तैः
संसक्तैरगुरुवनेषु साङ्गहारम्।
सम्प्रापे निस्तमदाम्बुभिर्गजेन्द्रैः
प्रस्यन्दिप्रचलितगण्डशैलशोभा ॥ ३७ ॥

निःशेषं प्रशमितरेणु वारणानां
स्रोतोभिर्मदजलमुज्झतामजस्रम्।

---

पिङ्गं ] मातङ्गैः उन्मथितानां लुलितानां सरोजानां रेणुभिः पिङ्गं पिशङ्गम् [ अम्बु ]। मञ्जिष्ठया महारजनेन रक्तं [ माञ्जिष्ठं वसनम् इव निर्बभासे]। "तेन रक्तम्" (४।२।१ पा०) इति अण्। "माञ्जिष्ठम्" इत्यत्र "कौशेयम्" इति वा पाठः। तत्र "कोशाड्ढञ्" (४।३।४२ पा०) इति ढञ्। "कौशेयं कृमिकोशोत्थम्" इत्यमरः ॥ ३६ ॥ *

श्रीमद्भिरिति।—[ श्रीमद्भिः ] शोभावद्भिः [ नियमितकन्धरापरान्तैः ] नियमिताः कन्धराः अपरान्ताः चरमपादाग्राणि च येषां तैः। "अपरः पश्चिमः पादः" इति वैजयन्ती। [ अगुरुवनेषु, साङ्गहारं ] साङ्गविक्षेपं यथा तथा [ संसक्तैः [ निस्तमदाम्बुभिः ] निस्तानि प्रस्तानि मदाम्बूनि येषां तैः [ गजेन्द्रैः, प्रस्यन्दिप्रचलितगण्डशैलशोभा ] प्रस्यन्दिनः जलस्राविणः प्रचलिताः ये गण्डशैलाः च्युतोपलाः तेषां शोभा [ सम्प्रापे ] प्राप्ता। कर्मणि लिट्। "गण्डशैलास्तु, च्युताः स्थूलोपला गिरेः" इत्यमरः। अत्र अन्यशोभाप्राप्त्यसम्भवात् तत्सदृशी शोभा इति प्रतिबिम्बत्वाक्षेपात् निदर्शनालङ्कारः ॥ ३७ ॥

---

* सादृश्यलक्षणा उपमानोपमेययोः संस्पर्शप्रसङ्गादुपमा।

आमोदं व्यवहितभूरिपुष्पगन्धः
भिन्नैलासुरभिमुवाह गन्धवाहः ॥ ३८ ॥

साद्दृश्यं दधति गभीरमेघघोषैः
उन्निद्रक्षुभितमृगाधिपश्रुतानि ।
आतेनुश्चकितचकोरनीलकण्ठान्
कच्छान्तानमरमहेभवृंहितानि ॥ ३९ ॥

निःशेषमिति ।—गन्धं वहति इति [ गन्धवाहः ] वायुः । "कर्मण्यण्" (३।२।१ पा०) [ निःशेषं ] यथा तथा [ प्रशमितरेणु ] प्रशमितः रेणुः येन तत् [ मदजलं स्रोतोभिः ] मदनाडीभिः [अजस्रम् उज्झतां] वर्षतां [वारणानां] सम्बन्धिनं [व्यवहितभूरिपुष्पगन्धः] व्यवहितः तिरस्कृतः भूरिः बहुलः पुष्पगन्धः येन सः । [भिन्नैलासुरभिं] भिन्नाः फुल्लाः एलाः लताविशेषाः । "पृथ्वीका चन्द्रबालैला" इत्यमरः । तत्पुष्पाणि च एलाः । "पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले" इत्यमरः । भिन्नैलावत् सुरभिं सुगन्धिं घ्राणेन्द्रियतर्पणम् इत्युपमा । [आमोदं] परिमलम् [ उवाह ] वहति स्म ॥ ३८ ॥

साद्दृश्यमिति ।—[गभीरमेघघोषैः] गभीरैः मेघघोषैः सान्द्रगर्जितैः [साद्दृश्यं दधति] इत्युपमा । दधातेः शतृप्रत्ययः । "वा नपुंसकस्य" (७।१।७९ पा०) इति विकल्पान्नुमभावः । [उन्निद्रक्षुभितमृगाधिपश्रुतानि ] उन्निद्राः वृंहितश्रवणात् एव प्रबुद्धाः क्षुभिताः संरब्धाश्च ये मृगाधिपाः तैः श्रुतानि आकर्णितानि, न तु प्रतिबुद्धानि इति भावः । [अमरमहेभवृंहितानि] महान्तश्च ते इभाः गजाश्च इति महेभाः अमराणां महेभाः तेषां वृंहितानि गर्जितानि [ कच्छान्तान् ] अनूपप्रदेशान् । "जल-

शाखावसक्तकमनीयपरिच्छदानाम्
अध्वश्रमातुरवधूजनसेवितानाम् ।
जज्ञे निवेशनविभागपरिष्कृतानां
लक्ष्मीः पुरोपवनजा वनपादपानाम् ॥ ४० ॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये
सप्तमः सर्गः ॥ ७ ॥

प्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः" इत्यमरः । [चकितचकोरनीलकण्ठान्] चकिताः गर्जितशङ्कया सम्भ्रान्ताः चकोराः पक्षिविशेषाः नीलकण्ठाः मयूराश्च येषु तान् तथाभूतान् [आतेनुः] । भ्रान्तिमदलङ्कारः ॥ ३९ ॥

शाखेति ।—[शाखावसक्तकमनीयपरिच्छदानां] परिच्छाद्यते अनेन इति परिच्छदः, परिकरः वसनाभरणादिः । "पुंसि संज्ञायां घः प्रायेण" (३।३।११८ पा०) इति घप्रत्ययः । "छादेर्घेऽद्व्युपसर्गस्य" (६।४।९६ पा०) इति ह्रस्वत्वम् । शाखासु अवसक्ताः कमनीयाः परिच्छदाः येषां तेषाम् [अध्वश्रमातुरवधूजनसेवितानाम्] अध्वनि श्रमः तेन आतुरैः पीडितैः वधूजनैः सेवितानां [निवेशनविभागपरिष्कृतानां] निवेशनविभागैः आवसतिकावच्छेदैः परिष्कृतानाम् अलङ्कृतानाम् । "संपर्युपेभ्यः" (६।१।१३७ पा०) इत्यादिना सुट् । [वनपादपानाम्] अरण्यवृक्षाणाम्, पुरे यत् उपवनं कृत्रिमवनं तत्र जाता [पुरोपवनजा लक्ष्मीः] शोभा [जज्ञे] जाता । अत्र अन्योन्यलक्ष्मीसम्बन्धासम्भवात् तत्सदृशी इति सादृश्याक्षेपात् असम्भवे तद्वस्तुसम्बन्धा इयं निदर्शना । वसन्ततिलका वृत्तम् ।—"उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥ ४० ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां सप्तमः सर्गः ॥

# अष्टमः सर्गः।



अथ स्वमायाकृतमन्दिरोज्ज्वलं
ज्वलन्मणि व्योमसदां सनातनम्।
सुराङ्गना गोपतिचापगोपुरं
पुरं वनानां विजिहीर्षया जहुः॥ १॥
यथायथं ताः सहिता नभश्चरैः
प्रभाभिरुद्भासितशैलवीरुधः।

---

अथेति।—[अथ] निवेशनानन्तरं [सुराङ्गनाः] अप्सरसः [स्वमायाकृतमन्दिरोज्ज्वलं] स्वमायया स्वेच्छाविशेषेण कृतैः निर्मितैः मन्दिरैः उज्ज्वलं दीप्तं [ज्वलन्मणि] ज्वलन्तः मणयः यस्मिन् तत् [व्योमसदां] गन्धर्वाणां [सनातनं] सदातनम्। "सायं चिरम्" (४।३।२३ पा०) इत्यादिना भवार्थे ट्युप्रत्ययः। [गोपतिचापगोपुरं] गौः वज्रं तत्पतिः इन्द्रः तच्चापवर्णानि गोपुराणि यस्य तत् तथोक्तम् इत्युपमा। [पुरं] नगरं [वनानां विजिहीर्षया] वनानि विहर्तुम् इच्छया। कर्मणि षष्ठी। [जहुः] तत्यजुः। जहातेर्लिट्। अत्र "ज्वलं ज्वलत्" इति "पुरं पुरम्" इति च असकृद्व्यञ्जनद्वयावृत्त्या छेकानुप्रासः। अन्यत्र तद्वैपरीत्यात् वृत्त्यनुप्रासः इति तयोः उपमायाश्च संसृष्टिः। अस्मिन् सर्गे वंशस्थं वृत्तम्।—"जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात्॥ १॥

वनं विशन्त्यो वनजायतेक्षणाः
क्षणद्युतीनां दधुरेकरूपताम् ॥ २ ॥
निवृत्तवृत्तोरुपयोधरक्लमः
प्रवृत्तनिर्ह्रादिविभूषणारवः ।
नितम्बिनीनां भृशमादधे धृतिं
नभःप्रयाणादवनौ परिक्रमः ॥ ३ ॥

यथायथमिति ।—[ यथायथं ] यथास्वं, स्वकीयम् अनतिक्रम्य इत्यर्थः । "यथास्वं तु यथायथम्" इत्यमरः । नपुंसकनिपातनं तु ह्रस्वार्थम् । [ नभश्चरैः ] गन्धर्वैः मेघैश्च [सहिताः प्रभाभिः ] खद्योतिभिः [ उद्भासितशैलवीरुधः ] उद्भासिताः शैलवीरुधः याभिः ताः पूर्वोक्ताः [वनजायतेक्षणाः ] पद्मलोचनाः स्त्रियः [वनं विशन्त्यः], क्षणं द्युतिः यासां तासां [क्षणद्युतीनां ] विद्युताम् [ एकरूपतां ] समानरूपतां [ दधुः ]। मुहुः द्रुमान्तराले तासां स्फुरणस्य क्षणिकत्वात् इति भावः । श्लेषानुप्राणिता इयम् उपमा । श्लेषत्वम् इति केचित् । उभयथा अपि अनुप्रासेन संसर्गः ॥ २ ॥

निवृत्तेति ।—[ निवृत्तवृत्तोरुपयोधरक्लमः ] निवृत्तः गतः वृत्तस्य वर्त्तुलस्य उरुपयोधरस्य क्लमः यस्मिन् सः पादप्रक्षेपेषु विश्रान्तिसम्भवात् इति भावः । किञ्च [ प्रवृत्तनिर्ह्रादिविभूषणारवः ] प्रवृत्तः जातः निर्ह्रादिविभूषणानां नूपुरादीनाम् आरवः यस्मिन् सः । [ अवनौ ] पृथिव्यां [ परिक्रमः ] सञ्चारः [ नितम्बिनीनां नभःप्रयाणात्, भृशम् ] अधिकम् । "पञ्चमी विभक्ते" ( २।३।४० पा० ) इति पञ्चमी । [ धृतिं ] सन्तोषम्

घनानि कामं कुसुमानि बिभ्रतः
करप्रचेयान्यपहाय शाखिनः ।
पुरोऽभिसस्रे सुरसुन्दरीजनैः
यथोत्तरेच्छा हि गुणेषु कामिनः ॥ ४ ॥
तनूरलक्तारुणपाणिपल्लवाः
स्फुरन्नखांशूत्करमञ्जरीभृतः ।
विलासिनीबाहुलता वनालयः
विलेपनामोदहृताः सिषेविरे ॥ ५ ॥

---

आदधे ।] अत्र विशिष्टपरिक्रमस्य धृत्यादानहेतुत्वात् काव्यलिङ्गम् अलङ्कारः ॥ ३ ॥

घनानीति ।—[ घनानि ] सान्द्राणि, न तु विरलानि, [ करप्रचेयानि ] हस्तग्राह्याणि अनुच्चानि । "कृत्यैरधिकार्थवचने" ( २।१।३३ पा० ) इति तृतीयासमासः । [ कामं कुसुमानि बिभ्रतः ] नवकुसुमितान् । [ शाखिनः ] तरून् [ अपहाय सुरसुन्दरीजनैः, पुरः ] अग्रे [ अभिसस्रे ] अभिगतम् । भावे लिट् । तथाहि ।—[ कामिनः गुणेषु ] अतिशयेषु विषये उत्तरम् उत्तरम् ( वीप्सार्थे अव्ययीभावः ) यथोत्तरम् इच्छा येषां ते [ यथोत्तरेच्छाः ] उत्तरोत्तराभिलाषुकाः [हि] । अत्र परिकरोत्थापितः अर्थान्तरन्यासोऽलङ्कारः ॥ ४ ॥

तनूरिति ।—[ विलेपनामोदहृताः ] विलेपनामोदैः हृताः आकृष्टाः [ वनालयः ] वनभृङ्गाः [ तनूः ] कृशाः [ अलक्तारुणपाणिपल्लवाः ] अलक्तैः अरुणाः पाणयः एव पल्लवाः यासां ताः [स्फुरन्नखांशूत्करमञ्जरीभृतः] स्फुरन्तः नखांशूनाम् उत्कराः

निपीयमानस्तवका शिलीमुखैः
अशोकयष्टिश्चलबालपल्लवा ।
विडम्बयन्ती ददृशे वधूजनैः
अमन्ददष्टौष्ठकरावधूननम् ॥ ६ ॥
करौ धुनाना नवपल्लवाकृती
वृथा कृथा मानिनि ! मा परिश्रमम् ।

पुञ्जाः एव मञ्जर्य्यः ताः बिभ्रति इति तथोक्ताः । क्विप् । [ विलासिनीबाहुलताः ] विलासिनीनां बाहवः एव लताः ताः [ सिषेविरे । ] अत्र समस्तवस्तुविषयरूपकालङ्कारः, बाह्ववयवानां लतावयवानां पल्लवादीनाम् अपि निरूपणात् इति ॥ ५ ॥

निपीयमानेति ।—[ शिलीमुखैः ] अलिभिः । "अलिबाणौ शिलीमुखौ" इत्यमरः । [ निपीयमानस्तवका ] निपीयमानः स्तवकः गुच्छः यस्याः सा [ चलबालपल्लवा] चलाः बालपल्लवाः यस्याः सा. अत एव [ अमन्ददष्टौष्ठकरावधूननं ] अमन्दं दृढ़ं दष्टः ओष्ठः यस्मिन् तत् करावधूननं करकम्पनं तत् [ विडम्बयन्ती ]। स्तवकपानेन ओष्ठदंशनं पल्लवचलनेन करावधूननं च अनुकुर्वती इत्यर्थः । धूञः ण्यन्तात् ल्युट् । णिचि "धूञ्प्रीञोर्नुग् वक्तव्यः" (वा०) । [अशोकयष्टिः ] अशोकशाखा इत्यर्थः, [ वधूजनैः, ददृशे ] दृष्टा । अत्र विडम्बयन्ती इति प्रस्तुताशोकशाखाविशेषणभूतोपमामहिम्ना अप्रस्तुतनायिकाप्रतीतेः समासोक्तिः उत्तिष्ठमानतया एव उपमया अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ६ ॥

अथ कश्चित् मधुकराक्रान्तां काञ्चित् आह, कराविति ।—

उपेयुषी कल्पलताभिशङ्कया
कथं न्वितस्त्रस्यति षट्पदावलिः ? ॥ ७ ॥
जहीहि कोपं दयितोऽनुगम्यतां
पुराऽनुशेते तव चञ्चलं मनः ।
इति प्रियं काञ्चिदुपैतुमिच्छतीं
पुरोऽनुनिन्ये निपुणः सखीजनः ॥ ८ ॥

---

मानपरिहारेण मधुपाश्रयणे तु न कश्चित् बाधः, इति आशयेन सम्बोधयति—हे [ मानिनि ! ] इति [ नवपल्लवाकृती ] नवपल्लवस्य आकृतिः इव आकृतिः ययोः इत्युपमा । तौ [ करौ धुनाना ] । धूञः क्र्यादिकात् कर्त्तरि लटः शानच् । [वृथा] व्यर्थं [परिश्रमं मा कृथाः] मा कुरुष्व । करोतेः आशीरर्थे माङि लुङ् । वृथात्वे हेतुम् आह ।—[ कल्पलताभिशङ्कया ] कल्पवल्लीभ्रमेण इति भ्रान्तिमदलङ्कारः । [ उपेयुषी ] उपगता [ षट्पदावलिः कथं नु इतः, त्रस्यति ?] बिभेति ? न त्रस्यति एव इत्यर्थः । "वा भ्राश" ( ३।१।७० पा० ) इत्यादिना विकल्पेन श्यन्प्रत्ययः । अत्र कान्तापरिश्रमवैयर्थ्यरूपकार्य्यस्य षट्पदावलेः कल्पवल्लीभ्रमनिबन्धनवित्रासरूपकारणसमर्थनात् कारणेन कार्य्यसमर्थनरूपः अर्थान्तरन्यासः भ्रान्तिमता अङ्गाङ्गिभावेन सङ्कीर्णः सन् उपमया संसृज्यते ॥ ७ ॥

अथ काचित् सखी काञ्चित् प्रणयकुपिताम् आह, जहीहीति ।—[ प्रियम् उपैतुं ] स्वयम् एव अनुसर्त्तुम् [ इच्छतीम् ] । "आच्छीनद्योर्नुम्" ( ७।१।८० पा० ) इति विकल्पात् नुमभावः । [ काञ्चित् ] नायिकां [ निपुणः ] चित्तज्ञः [सखीजनः कोपं, जहीहि] त्यज । "आ च हौ" (६।४।११७ पा०)

समुन्नतैः काशदुकूलशालिभिः
परिक्कणत्सारसपङ्क्तिमेखलैः ।
प्रतीरदेशैः स्वकलत्रचारुभिः
विभूषिताः कुञ्जसमुद्रयोषितः ॥ ९ ॥
विदूरपातेन भिदामुपेयुषः
च्युताः प्रवाहादभितः प्रसारिणः ।

---

इति विकल्पात् इकारादेशः। [ दयितः, अनुगम्यताम् ] अनुस्रियताम्। उभयथा अपि प्रार्थनायां लोट्। अन्यथा [ चञ्चलम् ] अस्थिरं [ तव मनः, पुरा अनुशेते ] अग्रे अनुशयिष्यते, अनुतप्स्यते इत्यर्थः। "यावत् पुरानिपातयोर्लट्" ( ३।३।४ पा० ) इति लट्। [ इति ] अनेन प्रकारेण [ पुरः ] पूर्वम् एव [ अनुनिन्ये ] प्रसादयामास ॥ ८ ॥

अथ चतुर्भिः श्लोकैः कलापम् आह—समुन्नतैरिति। [ समुन्नतैः, काशदुकूलशालिभिः ] काशानि अश्वबालकुसुमानि तानि दुकूलानि इव, तैः शालन्ते इति तथोक्तैः [ परिक्कणत्सारसपङ्क्तिमेखलैः ] सारसपङ्क्तयः मेखलाः इव ताः परिक्कणन्त्यः येषु तैः तैः [स्वकलत्रचारुभिः ] स्वेषां कलत्राणि श्रोण्यः तद्वत् चारवः तैः। "कलत्रं श्रोणिभार्य्ययोः" इत्यमरः। [ प्रतीरदेशैः विभूषिताः ] तटप्रदेशैः भूषिताः [ कुञ्जसमुद्रयोषितः ] वननद्यः इत्यर्थः। अत्र तीरादीनां कलत्राद्यौपम्योपमेयत्वात् योषिच्छब्दसामर्थ्यात् च नदीनां योषिदौपम्यं गम्यते ॥ ९ ॥

विदूरेति।—[ विदूरपातेन, भिदां ] भेदम्। "षिद्भिदा-

प्रियाङ्कशीताः शुचिमौक्तिकत्विषः
वनप्रहासा इव वारिविन्दवः ॥ १० ॥
सखीजनं प्रेमगुरूकृतादरं
निरीक्षमाणा इव नम्रमूर्त्तयः ।
स्थिरद्विरेफाञ्जनशारितोदरैः
विसारिभिः पुष्पविलोचनैर्लताः ॥ ११ ॥

दिभ्योऽङ्" ( ३।३।१०४ पा० ) । [ उपेयुषः ] उपगतात् [ प्रवाहात् च्युताः ] अत एव [ अभितः प्रसारिणः ] प्रसर्पन्तः इति [ प्रियाङ्कशीताः ] प्रियायाः अङ्कः उत्सङ्गः इव शीताः शीतलाः [ शुचिमौक्तिकत्विषः ] शुचीनां मौक्तिकानां त्विषः इव त्विषः येषां ते । किञ्च [ वनप्रहासाः ] वनस्य प्रहासाः [ इव ] स्थिताः इत्युत्प्रेक्षा । [वारिविन्दवः] च । अत्रोपमयोः उभयोः उत्प्रेक्षायाश्च संसृष्टिः ॥ १० ॥

सखीति ।—[ स्थिरद्विरेफाञ्जनशारितोदरैः] द्वौ रेफौ वर्णविशेषौ येषां ते द्विरेफाः, भ्रमरशब्देन तदर्थः लक्ष्यते । "द्व्यक्षरं मासमिति विदधाति" इति भाष्यकारः । स्थिराः निश्चलाः द्विरेफाः एव अञ्जनानि तैः शारितानि शबलीकृतानि उदराणि येषां तैः । शारः शबलवातयोः" इति विश्वः । [ विसारिभिः] विस्तृतैः [पुष्पविलोचनैः ] पुष्पाणि एव विलोचनानि तैः [ प्रेमगुरूकृतादरं ] प्रेम्णा गुरूकृतः आदरो यस्मिन् कर्मणि तत् तथा [ सखीजनं, निरीक्षमाणाः ] पश्यन्त्यः [ इव ] स्थिताः । कुतः ? [ नम्रमूर्त्तयः ] अवनताङ्गाः [ लताः ] च । अत्र रूपकोत्प्रेक्षयोः सङ्करः ॥ ११ ॥

उपेयुषीणां बृहतीरधित्यका
मनांसि जह्रुः सुरराजयोषिताम् ।
कपोलकाषैः करिणां मदारुणै-
रुपाहितश्यामरुचश्च चन्दनाः ॥ १२ ॥

॥ कलापकम् ॥

स्वगोचरे सत्यपि चित्तहारिणा
विलोभ्यमानाः प्रसवेन शाखिनाम् ।
नभश्चराणामुपकर्त्तुमिच्छतां
प्रियाणि चक्रुः प्रणयेन योषितः ॥ १३ ॥

उपेयुषीणामिति ।—[ मदारुणैः ] मदेन अरुणैः अव्यक्तरागैः । "अव्यक्तरागस्त्वरुणः" इत्यमरः । [ करिणां, कपोलकाषैः ] कपोलानां काषैः कषणैः [ उपाहितश्यामरुचः ] जनितकृष्णवर्णाः इति तद्गुणालङ्कारः । [ चन्दनाः ] मलयजाः । "गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्" इत्यमरः । [ बृहतीः, अधित्यकाः ] ऊर्द्धभूमीः [ उपेयुषीणां सुरराजयोषितां मनांसि जह्रुः ] । अत्र चतुःश्लोक्या नद्यादीनां विशिष्टानाम् एव अप्सरोमनोहरणहेतुत्वोक्त्या काव्यलिङ्गम् उन्नेयम् ॥ १२ ॥

स्वगोचर इति ।—[ चित्तहारिणा ] मनोहरेण [ शाखिनां प्रसवेन ] पुष्पजातेन [ विलोभ्यमानाः ] आकृष्यमाणाः [ योषितः, स्वगोचरे ] स्वविषये, स्वकरप्रचये [ सति अपि ] इत्यर्थः । प्रसवे इति शेषः । [ उपकर्त्तुं ] परिचरितुम् [ इच्छतां, नभश्चराणां ] गन्धर्वाणां [ प्रणयेन ] सहायहेतुना [ प्रियाणि

प्रयच्छतोच्चैः कुसुमानि मानिनी
विपक्षगोत्रं दयितेन लम्भिता ।
न किञ्चिदूचे चरणेन केवलं
लिलेख वाष्पाकुललोचना भुवम् ॥ १४ ॥

प्रियेऽपरा यच्छति वाचमुन्मुखी
निबद्धदृष्टिः शिथिलाकुलोच्चया ।

चक्रुः ]। स्वकरग्राह्यम् अपि प्रसवं स्वकान्तप्रियार्थं तद्दीयमानम् एव अग्रहीषुः इत्यर्थः * ॥ १३ ॥

प्रयच्छतेति ।—[कुसुमानि, प्रयच्छता ] ददता [ दयितेन, उच्चैः ] उच्चैस्तरां [ विपक्षगोत्रं ] सपत्नीनामधेयं [ लम्भिता ] प्रापिता, तन्नाम्ना आहूता इत्यर्थः । "नाम गोत्रं कुलं गोत्रम्" इति शाश्वतः । [ मानिनी ] अत एव [न किञ्चित् ऊचे ]। कर्त्तरि लिट् । किन्तु [ केवलं वाष्पाकुललोचना ] सती [ चरणेन भुवं लिलेख ]। गोत्रस्खलनजनितेर्ष्यानिमित्तनिर्वेदात् इति भावः । मानिनी अत एव न किञ्चित् ऊचे इति उक्तम् । तदुक्तम् दशरूपके—"तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् । तत्र चिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वासदीनताः" ॥ इति ॥ १४ ॥

प्रिय इति ।—[वाचं यच्छति ] ददति, समालपति इत्यर्थः । दाणः शतृप्रत्ययः । "पाघ्रा" (७।३।७८ पा०) इत्यादिना यच्छादेशः । [प्रिये निबद्धदृष्टिः] अत एव [उन्मुखी, शिथिलाकुलोच्चया]

* प्राणवल्लभपक्षपातप्रणयहेतोः करप्राप्तप्रसवमपि प्रियप्रदत्तमेवानुगृहीतवत्यः इति वाक्यार्थहेतुकं काव्यलिङ्गम् ।

समादधे नांशुकमाहितं वृथा
विवेद पुष्पेषु न पाणिपल्लवम् ॥ १५ ॥
सलीलमासक्तलतान्तभूषणं
समासजन्त्या कुसुमावतंसकम् ।
स्तनोपपीड़ं नुनुदे नितम्बिना
घनेन कश्चिज्जघनेन कान्तया ॥ १६ ॥

शिथिलः श्लथः आकुलः चलितश्च तादृशः उच्चयः नीविबन्धः यस्याः सा । "नारीकव्यांशुकग्रन्थौ नीविः स्यादुच्चयोऽप्यथ" इति मार्त्तण्डः । [ अपरा ] अन्या स्त्री [अंशुकं, न समादधे ] न बबन्ध, रागपारवश्यात् इति भावः । [ पुष्पेषु, वृथा ] व्यर्थं [ आहितम् ] आरोपितम्, अस्थाने प्रसारितम् इत्यर्थः, [ पाणिपल्लवं ] च [ न विवेद ], प्रियासक्तचित्तत्वात् इति भावः । एषा च प्रगल्भा नायिका । "पाणिपल्लवम्" इत्यत्र अन्यतरसाधकबाधकप्रमाणाभावात् उपमारूपकयोः सन्देहसङ्करः ॥ १५ ॥

सलीलमिति ।—[ आसक्तलतान्तभूषणम् ] आसक्ताः लतान्ताः पल्लवाः भूषणं यस्य तत्, पल्लवैः सह ग्रथितम् इत्यर्थः । [ कुसुमावतंसकं ] पुष्पशेखरं, कान्तदत्तम् इति भावः । [सलीलं] सविलासं [समासजन्त्या] शिरसि प्रतिदधत्या । "दंशसञ्जस्वञ्जां शपि" ( ६।४।२५ पा० ) इति नलोपः । [कान्तया कश्चित्], स्तनाभ्याम् उपपीड्य इति [स्तनोपपीड़म्] । "सप्तम्यां च" ( ३।४।४९ पा० ) इत्यादिना णमुल्प्रत्ययः । [ नितम्बिना ] प्रशंसायाम् इनिः । [ घनेन ] निविड़ेन [ जघनेन ] । "पश्चान्नितम्बः स्त्रीकव्याः क्लीवे तु जघनं पुरः"

कलत्रभारेण विलोलनीविना
गलद्दुकूलस्तनशालिनोरसा ।
वलिव्यपायस्फुटरोमराजिना
निरायतत्वादुदरेण ताम्यता ॥ १७ ॥
विलम्बमानाकुलकेशपाशया
कयाचिदाविष्कृतबाहुमूलया ।

---

इत्यमरः । [ नुनुदे ] नुन्नः ; अंशुकातिरेकात् इति भावः । एषा च प्रगल्भा एव ॥ १६ ॥

अथ युग्मेन आह, कलत्रेति ।—[ विलोलनीविना ] गात्रोन्नमनात् विश्लिष्टवस्त्रग्रन्थिना [ कलत्रभारेण ] श्रोणिभारेण । "कलत्रं श्रोणिभार्य्ययोः" इत्यमरः । तथा [ गलद्दुकूलस्तनशालिना ] गलत् स्रंसमानं दुकूलं याभ्यां ताभ्यां स्तनाभ्यां शालते इति तथोक्तेन [ उरसा ], तथा [ वलिव्यपायस्फुटरोमराजिना ] वलिव्यपायेन भङ्गिनिवृत्त्या स्फुटा रोमराजिः यस्मिन् तेन [ निरायतत्वात् ] अप्रसारितत्वात् [ ताम्यता ] तनूभवता [ उदरेण ] च उपलक्षितया । स्वभावोक्तिः अलङ्कारः ॥ १७ ॥

विलम्बमानेति ।—[विलम्बमानाकुलकेशपाशया] विलम्बमानः विस्रंसमानः आकुलः विलुलितश्च केशपाशः यस्याः तया [ आविष्कृतबाहुमूलया ] दर्शितकक्षप्रदेशया [ कयाचित् ] कान्तया [ तरुप्रसूनानि अपदिश्य ] प्रसूनग्रहणं व्याजीकृत्य इत्यर्थः । "व्याजोऽपदेशो लक्ष्यञ्च" इत्यमरः । [ सादरं ] साभिलाषं [मनोऽधिनाथस्य] प्रियस्य मनः [ समाददे ] आचकृषे । कर्मणि लिट् । सर्वाङ्गसौष्ठवदर्शनात् सद्यालग्नं प्रिय-

तरुप्रसूनान्यपदिश्य सादरं
मनोऽधिनाथस्य मनः समाददे ॥ १८ ॥
॥ युग्मम् ॥

व्यपोहितुं लोचनतो मुखानिलै-
रपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः
प्रियं जघानोन्नतपीवरस्तनी ॥ १९ ॥

द्रुमान्यमूनीत्यपवर्जिते शनैः
यथाभिरामं कुसुमाग्रपल्लवे ।

मनः तत्र इति भावः । अत्र प्रियमनोहरणहेतुभिः कान्ताविशेषणपदार्थैः काव्यलिङ्गम् उत्तिष्ठमानं स्वभावोक्त्या सह अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ १८ ॥

व्यपोहितुमिति ।—उन्नतौ च पीवरौ च स्तनौ यस्याः सा [ उन्नतपीवरस्तनी ] "स्वाङ्गाच्च" ( ४।१।५४ पा० ) इत्यादिना ङीष् । [ काचित्. लोचनतः ] स्वनेत्रात् [ पुष्पजं रजः ] परागं [ मुखानिलैः ] फूत्कारमारुतैः [ व्यपोहितुम् ] अपनेतुम् [ अपारयन्तं किल ] अशक्नुवन्तं ; किल इति अलीके । वस्तुतः तदास्यस्पर्शलोभात् अपारयन्तम् इत्यर्थः । [ प्रियम् उन्मनाः ] उत्सुका सती अत एव [ पयोधरेण उरसि जघान ] । तत्कपटपरिज्ञानजन्यात् औत्सुक्यात् इति भावः । हननस्थानत्वात् उरसि इति सप्तमी । इयञ्च प्रगल्भा एव ॥ १९ ॥

द्रुमानीति ।—[ यथाभिरामम् ] वीप्सायाम् अव्ययीभावः । [ कुसुमाग्रपल्लवे ] कुसुमानि अग्रपल्लवानि च कुसुमाग्रपल्लवं

विहाय निःसारतयेव भूरुहान्
पदं वनश्रीर्वनितासु सन्दधे ॥ २० ॥
प्रवालभङ्गारुणपाणिपल्लवः
परागपाण्डूकृतपीवरस्तनः।
महीरुहः पुष्पसुगन्धिराददे
वपुर्गुणोच्छ्रायमिवाङ्गनाजनः ॥ २१ ॥

[illegible]न्। "जातिः अप्राणिनाम्" (२।४।६ पा०) इत्येकवद्भावात् नपुंसकत्वम्। [इमानि अमूनि इति] इत्थं, निर्देशपूर्वकम् इत्यर्थः। इदमदसो सन्निकृष्टविप्रकृष्टार्थे। [शनैः, अपवर्जिते] अपचिते सति [वनश्रीः निःसारतया एव] इति हेतूत्प्रेक्षा। [भूरुहान्] तरून् [विहाय वनितासु पदं सन्दधे]। अत्र वनितागतायाः पुष्पप्रसाधनसम्भवायाः लक्ष्म्याः विषयभूतायाः निगरणेन विषयेण वनश्रियः वनितागतत्वोक्त्या सम्बन्धे सम्बन्धरूपा भेदे अभेदरूपा वा अतिशयोक्तिः अलङ्कारः।—"विषयस्यानुपादानात् विषय्युपनिबध्यते। यत्र सातिशयोक्तिः स्यात् कविप्रौढोक्तिजीविता॥" इति लक्षणात् उत्प्रेक्षाङ्गत्वमस्याः ॥ २० ॥

प्रवालेति।—[प्रवालभङ्गारुणपाणिपल्लवः] प्रवालभङ्गेन पल्लववलयेन अरुणः पाणिपल्लवः यस्य, तद्रसरञ्जनात् इत्यर्थः। [परागपाण्डूकृतपीवरस्तनः] परागेण पुष्परजसा पाण्डूकृतौ पीवरौ स्तनौ यस्य सः [पुष्पसुगन्धिः] पुष्पैः सुगन्धिः सुरभिः [अङ्गनाजनः, महीरुहः] वृक्षजातात् [वपुर्गुणोच्छ्रायं] वपुर्गुणस्य स्वदेहगुणस्य उच्छ्रायः पाणिपल्लवारुण्यादेः यः

वरोरुभिर्वारणहस्तपीवरैः
चिराय खिन्नान् नवपल्लवश्रियः ।
समेऽपि यातुं चरणाननीश्वरान्
मदादिव प्रस्खलतः पदे पदे ॥ २२ ॥

विसारिकाञ्चीमणिरश्मिलब्धया
मनोहरोच्छ्रायनितम्बशोभया ।

---

उत्कर्षः तम् [ आददे ] लब्धवान् [ इव ] इति उत्प्रेक्षा । वस्तुतस्तु स्वाभाविक एव प्रवालभङ्गादिभिः अभिव्यज्यते इति भावः । उत्कृष्टः श्राय उच्छ्राय इति घञन्तेन प्रादिसमासः, न तु उपसृष्टात् घञ्प्रत्ययः "श्रिणीभुवोऽनुपसर्गे" ( ३।३।२४ पा० ) इति प्रतिषेधात् ॥ २१ ॥

पञ्चभिः कुलकम् आह, वरोरुभिरित्यादिभिः ।—

अनुसानुवर्त्मनः सानुषु यत् वर्त्म ततः सकाशात् गुरुखेदमन्थरं गुरुणा खेदेन मन्थरम् अलसं विनिर्यतीनां निर्गच्छन्तीनां सुराङ्गनानां सम्बन्धिभिः * [ वारणहस्तपीवरैः ] करिकरस्थूलैः [ वरोरुभिः ] वराश्च ते ऊरवश्च इति तैः [ चिराय खिन्नान् ] । किं च [ नवपल्लवश्रियः ] नवपल्लवानां श्रीः इव श्रीः येषां तान्, तद्वत् मृदून् इत्यर्थः । अत एव [ समे ] समस्थले [ अपि ] । किं पुनः विषमे ? इति भावः । [ यातुं ] गन्तुम् [ अनीश्वरान् ] अशक्तान् अत एव [ मदात् इव, पदे पदे ] ( वीप्सायां द्विर्भावः ) [ प्रस्खलतः चरणान् ] । मदात् इव इति उपमा ॥ २२ ॥

विसारीति ।—[ विसारिकाञ्चीमणिरश्मिलब्धया ] विसारिभिः काञ्चीमणिरश्मिभिः लब्धया, तज्जनितया इत्यर्थः ।

---

* कुलकान्त्यपद्यस्य पूर्व्वार्द्धान्वयव्याख्यासन्दर्भः प्रथमतः अत्र सन्निवेशितः । इति ।

स्थितानि जित्वा नवसैकतद्युतिं
श्रमातिरिक्तैर्जघनानि गौरवैः ॥ २३ ॥
समुच्छ्वसत्पङ्कजकोशकोमलैः
उपाहितश्रीण्युपनीवि नाभिभिः ।
दधन्ति मध्येषु बलीविभङ्गिषु
स्तनातिभारादुदराणि नम्रताम् ॥ २४ ॥
समानकान्तीनि तुषारभूषणैः
सरोरुहैरस्फुटपत्रपङ्क्तिभिः ।

[ मनोहरोच्छ्रायनितम्बशोभया ] मनोहरः उच्छ्रायः उत्सेधः येषां तेषां नितम्बानां शोभया कारणेन [ नवसैकतद्युतिं ] नवसैकतानां द्युतिं शोभां [ जित्वा स्थितानि ] तत्तुल्यानि इत्यर्थः । अत एव उपमालङ्कारः । [ श्रमातिरिक्तैः ] श्रमेण अतिरिक्तैः अतिशयितैः [ गौरवैः ] गुरुत्वैः उपलक्षितानि नितरां भारायमाणानि [ जघनानि ] च । उच्छ्रायः व्याख्यातः ॥ २३ ॥

समुच्छ्वसदिति ।—[ समुच्छ्वसत्पङ्कजकोशकोमलैः ] उल्लसत्कमलमुकुलैः इव मुग्धैः इति उपमा । [ नाभिभिः ] प्रतारिकाख्यैः । "अथ नाभिस्तु अम्बङ्के यस्य संज्ञा प्रतारिका" इति केशवः । पुंलिङ्गतायां तु कविः एव प्रमाणम् । [ उपनीवि ] नीवीसमीपे [ उपाहितश्रीणि ] जनितशोभानि तथा [ बलीविभङ्गिषु ] ऊर्मिमत्सु [ मध्येषु ] जघनस्थलेषु [ स्तनातिभारात् नम्रतां दधन्ति ] बिभ्राणानि । "वा नपुंसकस्य" (७।१।७९ पा०) इति विकल्पाच्छतुर्नुमागमः । [उदराणि ] च ॥ २४ ॥

चितानि घर्माम्बुकणैः समन्ततः
मुखान्यनुत्फुल्लविलोचनानि च ॥ २५ ॥
विनिर्य्यतीनां गुरुखेदमन्थरं
सुराङ्गनानामनुसानु वर्त्मनः ।
सविस्मयं रूपयतो नभश्चरान्
विवेश तत्पूर्वमिवेक्षणादरः ॥ २६ ॥

॥ कुलकम् ॥

अथ स्फुरन्मीनविधूतपङ्कजा
विपङ्कतीरस्खलितोर्मिसंहतिः ।

समानेति ।—किं च [ घर्माम्बुकणैः ] स्वेदोदकविन्दुभिः [ समन्ततः, चितानि] व्याप्तानि [अनुत्फुल्लविलोचनानि] अविकसदक्षीणि अत एव [ तुषारभूषणैः ] शीकरालङ्कारैः, शीकरपरिवृतैः इत्यर्थः । "तुषारौ हिमशीकरौ" इति शाश्वतः । [अस्फुटपत्रपङ्क्तिभिः ] अविकचदलावलिभिः । "व्याकोशविकचस्फुटाः" इत्यमरः । [ सरोरुहैः समानकान्तीनि ] इति उपमा । [ मुखानि च ] ॥ २५ ॥

विनिर्य्यतीनामिति ।—[ सविस्मयं रूपयतः ] पूर्वोक्तचरणादीनि वर्णयतः [ नभश्चरान् ] गन्धर्वान् [ तत् पूर्वम् इव ] तत् एव प्रथमं यथा तथा इति उत्प्रेक्षा । [ ईक्षणादरः ] आलोकनकौतुकं [ विवेश ] । पूर्वार्द्धं व्याख्यातम् । अत्र कुलके स्वभावोक्तिः उत्प्रेक्षाङ्गम् ॥ २६ ॥

सम्प्रति सलिलक्रीड़ावर्णनम् आरभते, अथेति ।—[ अथ ] पुष्पावचयानन्तरं [ स्फुरन्मीनविधूतपङ्कजा ] स्फुरद्भिः चलद्भिः

पयोऽवगाढुं कलहंसनादिनी
समाजुहावेव वधूः सुरापगा ॥ २७ ॥
प्रशान्तघर्माभिभवः शनैर्विवान्
विलासिनीभ्यः परिमृष्टपङ्कजः ।
ददौ भुजालम्बमिवात्तशीकरः
तरङ्गमालान्तरगोचरोऽनिलः ॥ २८ ॥

---

ऽर्मिभिः विधूतपङ्कजा, इति मदङ्गमुखवीक्षणोक्तिः। [ विपङ्क-तीरस्खलितोर्मिसंहतिः ] विपङ्कं पङ्करहितं, विहारयोग्यम् इति यावत्। तत्र तीरे स्खलिता विचलिता ऊर्मिसंहतिः यस्याः सा इति हस्तसंज्ञोक्तिः। [ कलहंसनादिनी ] कादम्बशब्दवती इति वाग्व्यापारोक्तिः। अत एव [ सुरापगा ] गङ्गा [ वधूः ] अप्सरसः [ पयः, अवगाढुम् ] अवगाहितुम्। गाहेः ऊदित्वात् इड्विकल्पः। * [ समाजुहाव इव ] आकारयामास इव इति उत्प्रेक्षा। "हूतिराकारणाह्वानम्" इत्यमरः। ह्वयतेः लिट्। "अभ्यस्तस्य च" ( ६।१।३३ पा० )। इति सम्प्रसारणम् ॥ २७ ॥

प्रशान्तेति।—[ प्रशान्तघर्माभिभवः ] प्रशान्तोष्णबाधः। "वा दान्तशान्त" ( ७।२।२७ पा० ) इत्यादिना निपातनात् साधुः। [ शनैः विवान् ] मन्दं वहन्। वातेः शतृप्रत्ययः। [परिमृष्टपङ्कजः] पद्मगन्धी इत्यर्थः। [ आत्तशीकरः ] कुतः ? [ तरङ्गमालान्तरगोचरः ] तरङ्गमालानाम् अन्तरे मध्ये गोचरः

* "स्वरति सूति सूयति धूञूदितो वा" (७।२।४४ पा० )

गतैः सहावैः कलहंसविक्रमं
कलत्रभारैः पुलिनं नितम्बिभिः।
मुखैः सरोजानि च दीर्घलोचनैः
सुरस्त्रियः साम्यगुणात् निरासिरे ॥ २९ ॥
विभिन्नपर्य्यन्तगमीनपङ्क्तयः
पुरो विगाढ़ाः सखिभिर्मरुत्वतः।

स्थानं यस्य सः [ अनिलः विलासिनीभ्यः भुजालम्बं ददौ इव ] इति उत्प्रेक्षा। विशिष्टवायुसम्पर्कात् तथा उच्छ्वसुः इत्यर्थः ॥ २८

गतैरिति।—[ सुरस्त्रियः ] अप्सरसः [ सहावैः ] सविलासैः [ गतैः ] गतिभिः। "नपुंसके भावे क्तः" ( ३।३।११४ पा० )। [कलहंसविक्रमं]। कलहंसानां विक्रमं गतिं, विलासविधुरम् इति शेषः। तथा [ नितम्बिभिः ] प्रशस्तनितम्बैः [ कलत्रभारैः ] जघनभारैः [ पुलिनं ] नितम्बभारशून्यम् इत्यर्थः। तथा [दीर्घलोचनैः मुखैः सरोजानि च] अलोचनानि इति शेषः। [ साम्यगुणात् ] समानगुणत्वात् [ निरासिरे ] निरस्तवत्यः। गुणवदगुणयोः कुतः साम्यम्? इति भावः। अस्यतेः कर्त्तरि लिट्। "उपसर्गादस्यत्यूह्योर्वा" ( वा० ) इति विकल्पात् आत्मनेपदम् ॥ २९ ॥ *

विभिन्नेति।—[ विभिन्नपर्य्यन्तगमीनपङ्क्तयः ] विभिन्नाः विच्युतसङ्घाताः पर्य्यन्तगाः प्रान्तगताः मीनानां पङ्क्तयः यासां ताः। कुतः? [ मरुत्वतः सखिभिः ] इन्द्रस्य सचिवैः गन्धर्वैः [पुरः] पूर्वं [ विगाढ़ाः ] प्रविष्टाः, तासां विश्वासार्थं गर्त्त-

* साम्यगुणात् निरस्तवत्यः ताः नदीः इत्युपमायाः यथासंख्यमङ्गम्।

कथञ्चिदापः सुरसुन्दरीजनैः
सभीतिभिस्तत्प्रथमं प्रपेदिरे ॥ ३० ॥

विगाढमात्रे रमणीभिरम्भसि
प्रयत्नसंवाहितपीवरोरुभिः ।
विभिद्यमाना विससार सारसान्
उदस्य तीरेषु तरङ्गसंहतिः ॥ ३१ ॥

ग्राहादिपरोक्षार्थं च इति भावः । [ सभीतिभिः ] अप्रविष्ट-विषयत्वात् सभयैः । "विषादिभिः" इति पाठेऽपि अयम् एव अर्थः लक्ष्यः । [ सुरसुन्दरीजनैः तत् ] एव अवगाहनं [ प्रथमं ] यथा तथा अत एव [ कथञ्चित् ] भयात् कृच्छ्रेण [ आपः, प्रपेदिरे ] जगाहिरे ॥ ३० ॥ *

विगाढेति ।—[ प्रयत्नसंवाहितपीवरोरुभिः ] प्रयत्नेन संवाहिताः सञ्चारिताः पीवराः स्थूलाः ऊरवः याभिः ताभिः [ रमणीभिः अम्भसि, विगाढमात्रे ] प्रविष्टे एव सति । सुप्सुपा इति समासः । † "मात्रं कार्त्स्न्येऽवधारणे" इत्यमरः । [ विभिद्यमाना ] स्वयं विशीर्य्यमाणा । कर्मकर्त्तरि शानच् । [तरङ्ग-संहतिः तीरेषु, सारसान् ] पक्षिविशेषान् । "सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः" इति यादवः । यद्वा—सारसान् हंसान् । "चक्राङ्गः सारसो हंसः" इति शब्दार्णवे । [ उदस्य ] उत्सार्य्य [ विससार ] वितस्तार ॥ ३१ ॥ ‡

* अविज्ञातवारिस्रोतप्रवाहे सभयं निविशमानानां रमणीनां चारुभीरुत्वभाव-प्रकाशनात् स्वभावोक्तिः ।

† "सह सुपा" ( २।१।४ पा० ) ।

‡ अत्र पीनोन्नतजघनावगाहनैः तरङ्गविसारवर्णनात् पदार्थहेतुकं काव्यलिङ्गम् ।

शिलाघनैर्नाकसदामुरःस्थलैः
बृहन्निवेशैश्च बधूपयोधरैः ।
तटाभिनीतेन विभिन्नवीचिना
रुषेव भेजे कलुषत्वमम्भसा ॥ ३२ ॥

विधूतकेशाः परिलोलितस्रजः
सुराङ्गनानां प्रविलुप्तचन्दनाः ।
अतिप्रसङ्गाद् विहितागसो मुहुः
प्रकम्पमीयुः सभया इवोर्मयः ॥ ३३ ॥

शिलेति ।—[ शिलाघनैः ] शिलावद्घनैः कठिनैः [नाकसदां] गन्धर्वाणाम् [ उरःस्थलैः, बृहन्निवेशैः] महासंस्थानैः, अतिस्थूलैः इत्यर्थः । [ बधूपयोधरैश्च, तटाभिनीतेन ] तटम् अभितः नीतेन प्रापितेन, अत एव [ विभिन्नवीचिना ] भग्नोर्मिणा [ अम्भसा ] कर्त्रा । [ रुषा इव ] इति हेतूत्प्रेक्षा । [ कलुषत्वम् ] आविलत्वम् अन्तःक्षोभश्च ध्वन्यते । [ भेजे ] कर्मणि लिट् । यथा कश्चित् मृदुस्वभावः केनचित् कठिनादिना साङ्गभङ्गं ताड़यित्वा निष्कासितः क्षुभ्यति, तद्वत् इति भावः । कलुषत्वम् इत्यत्र वाच्यप्रतीयमानयोः अभेदाध्यवसायः । अन्यथा शुद्धवाच्यस्य आविलत्वस्य रोषहेतुकत्वात् उत्प्रेक्षानुविघातनात् इति ॥ ३२ ॥

विधूतेति ।—[ विधूतकेशाः ] विधूताः विक्षिप्ताः केशाः यैः ते [ परिलोलितस्रजः ] परिलोलिताः विलोलिताः स्रजः यैः ते [ प्रविलुप्तचन्दनाः ] प्रमृष्टाङ्गरागाः [ अतिप्रसङ्गात् ] अविच्छेदसङ्गात् [ सुराङ्गनानां, विहितागसः ] कृतमण्डन-

विपक्षचित्तोन्मथना नखव्रणाः
तिरोहिता विभ्रममण्डनेन ये ।
हृतस्य शेषानिव कुङ्कुमस्य तान्
विकत्थनीयान् दधुरन्यथा स्त्रियः ॥ ३४ ॥
सरोजपत्रे नु विलीनषट्पदे
विलोलदृष्टेः स्विदमू विलोचने ।

खण्डनरूपापराधाः अत एव [ ऊर्मयः ] तरङ्गाः [ सभयाः इव ] स्त्रीभ्यः भीताः इव [ मुहुः प्रकम्पम् ईयुः ]। स्वाभाविकस्य कम्पस्य भयहेतुकत्वम् उत्प्रेक्ष्यते । यद्वा—सुराङ्गनानां विधूतकेशा इत्यादियोजना। सापेक्षत्वे अपि गमकत्वात् समासः। स्त्रीसङ्ग्रहणसाहसम् अपराधः, भयं तु राजादिभ्यः इति ॥ ३३ ॥

विपक्षेति ।—[ विपक्षचित्तोन्मथनाः ] विपक्षस्य सपत्नीजनस्य चित्तानाम् उन्मथनाः, व्यथकाः इत्यर्थः। बहुलग्रहणात् कर्त्तरि ल्युट्। * [ ये नखव्रणाः ] नखक्षतानि। "व्रणोऽस्त्रियाम्" इत्यमरः। [ विभ्रममण्डनेन ] विभ्रमस्य सौन्दर्य्यस्य मण्डनम्। तादर्थ्ये अपि अश्वघासादिवत् † षष्ठीसमासः, न तु चतुर्थीसमासः ‡ यूपदार्वादिवत् प्रकृतिविकाराभावात् इति। तेन कुङ्कुमलेपादिना [ तिरोहिताः ] छन्नाः [ हृतस्य ] क्षालितस्य [ कुङ्कुमस्य ] व्यञ्जकत्वेन [ शेषान् इव ]

* "कृत्यल्युटो बहुलम्।" ( ३।३।११३ पा० )।

† "अश्वघासादयस्तु षष्ठीसमासाः।" कौ० वृत्ति०।

‡ "चतुर्थीतदर्थार्थ बलिहितसुखरक्षितैः।" (२।१।३६ पा०)।

शिरोरुहाः स्वित् नतपक्ष्मसन्ततेः
द्विरेफवृन्दं नु निशब्दनिश्चलम् ॥ ३५ ॥
अगूढहासस्फुटदन्तकेसरं
मुखं स्विदेतद् विकसन्नु पङ्कजम् ।
इति प्रलीनां नलिनीवने सखीं
विदाम्बभूवुः सुचिरेण योषितः ॥ ३६ ॥

॥ युग्मम् ॥

अवशिष्टलेशान् इव स्थितान् इति उत्प्रेक्षा । [विकत्थनीयान्] भर्त्तृवाल्लभ्यस्य व्यञ्जकत्वेन श्लाघनीयान् [तान्] नखव्रणान् [स्त्रियः अन्यथा दधुः] प्रकाशं दधुः इत्यर्थः ॥ ३४ ॥

अथ युग्मेन आह, सरोजेत्यादिना ।—[अमू] पुरोवर्त्तिनी [विलीनषट्पदे] संसक्तभृङ्गे सकनीनिकत्वम् अक्ष्णोः अर्थसिद्धम् इति उपमानं विशिष्यते । [सरोजपत्रे नु] । यद्वा— [विलोलदृष्टेः] चञ्चलाक्ष्याः [विलोचने स्वित्] नुस्विच्छब्दौ वितर्के । किं च [नतपक्ष्मसन्ततेः] चञ्चलाक्ष्याः [शिरोरुहाः स्वित्, निशब्दनिश्चलम्] निशब्दं नीरवं च तत् निश्चलं च तत् [द्विरेफवृन्दं नु] ॥ ३५ ॥

अगूढेति ।—किं च [अगूढहासस्फुटदन्तकेसरं] अगूढहासः व्यक्तस्मितं तेन स्फुटाः दन्ताः केसराः इव दन्तकेसराः यस्य [एतत् मुखं स्वित् ?] यद्वा ? [विकसत्पङ्कजं नु ? इति] इत्थं संशयेन इति शेषः । [नलिनीवने, प्रलीनां] निगूढां [सखीं योषितः, सुचिरेण] अतिविलम्बात् [विदाम्बभूवुः] विविदुः, निश्चिक्युः इत्यर्थः । "उषविदजागृभ्योऽन्यतरस्याम्"

प्रियेण संग्रथ्य विपक्षसन्निधौ
उपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद् विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥ ३७ ॥
असंशयं न्यस्तमुपान्तरक्ततां
यदेव रोद्धुं रमणीभिरञ्जनम् ।

(३।१।३८ पा०) इति विकल्पात् आम्प्रत्ययः । अत्र युग्मे निश्चयान्तसन्देहालङ्कारः ॥ ३६ ॥

प्रियेणेति ।—[ काचित् प्रियेण, सङ्ग्रथ्य ] स्वयम् एव रचयित्वा [ विपक्षसन्निधौ ] सपत्नीजनसमक्षं [ पीवरस्तने वक्षसि उपाहितां, स्रजं ] मालां [ जलाविलां ] मृदिताम् अपि इत्यर्थः । तां [ न विजहौ ] न तत्याज । न च निर्गुणायां तत्र का प्रीतिः ? इति वाच्यम् इति अर्थान्तरन्यासेन आह ।—[ गुणाः प्रेम्णि वसन्ति, वस्तुनि न ] वसन्ति [ हि ] । यत् प्रेमास्पदं तत् एव गुणवत् अन्यत् तु गुणवत् अपि निर्गुणम् एव । प्रेम तु न वस्तुपरीक्षाम् अपेक्षते इति भावः ॥ ३७ ॥

असंशयमिति ।—स्त्रीणां नेत्रशोभार्थम् अञ्जनधारणम् अम्बुविहारोपगमात् रक्तवर्णत्वं च अक्ष्णां ततः शुक्लत्वतिरोधानं च निश्चितम् इति उत्प्रेक्ष्यते । [ रमणीभिः यत् अञ्जनं न्यस्तं ] तत् इति शेषः, यत्तदोः नित्यसम्बन्धात् । तत् अञ्जनम्, [ उपान्तरक्ततां ] उपान्तयोः रक्ततां [ रोद्धुं ] प्रतिबद्धुम् [ एव ] न्यस्तं, न तु शोभार्थम् इत्यर्थः । अन्यथा रागाभिव्याप्त्या शुक्लत्वतिरोधानं स्यात् इत्यर्थः । [ असंशयम् [

हृतेऽपि तस्मिन् सलिलेन शुक्लतां
निरास रागो नयनेषु न श्रियम्॥ ३८॥
द्युतिं वहन्तो वनितावतंसका:
हृता: प्रलोभादिव वेगिभिर्जलैः।
उपप्लुतास्तत्क्षणशोचनीयतां
च्युताधिकाराः सचिवा इवाययुः॥ ३९॥

इति उत्प्रेक्षाव्यञ्जकं, संशयस्य अपि अभावः, न अत्र संशयः अस्ति इत्यर्थः। अर्थाभावे अव्ययीभावः। कुतः एतत् इति चेत्? यतः [ तस्मिन् ] अञ्जने [ सलिलेन हृते ] क्षालिते सति [ अपि रागः ] पूर्वोक्तः एव उपान्तरक्तता किन्तु प्रतिबन्धाभावात् अभितः व्याप्य इति आशयः। [ नयनेषु शुक्लतां, निरास ] निरस्तवान्। अस्यतेः लिट्। [श्रियं] शोभां तु [न] निरास; अतः शुक्लत्वविरोधिरागनिरोधार्थम् एव इदम् अञ्जनं स्यात्, न तु शोभार्थं, तस्याः तदभावेऽपि सद्भावात् इत्यर्थः। अञ्जनापगमेऽपि तन्नयनानां रागः एव अलङ्कारः अभूत् इति भावः। अत्र अञ्जनन्यासम् अनूद्य तस्य शोभार्थत्वनिषेधेन रागरोधार्थत्वोत्प्रेक्षणम् उदितम्, उत्तरार्द्धे तस्य एव समर्थनात्। एवम् उपान्तरक्ततां रोद्धुं यत् अञ्जनं न्यस्तम् इति एकान्वये विध्यनुवादविरोधः स्यात्॥ ३८॥

द्युतिमिति।—[ द्युतिं ] शोभां तेजश्च [वहन्तः, वेगिभिः ] जविभिः [ जलैः ] जडैः अज्ञैश्च। डलयोः अभेदात्। "जलं गोकलले नीरे ह्रीवेरे च जडेऽन्यवत्" इति विश्वः। [ प्रलोभात् ] मोहात् [ हृताः इव ] गृहीताः इव। [ उपप्लुताः ] मृदिताः। यद्वा कर्त्तरि क्तः। प्लवमानाः इत्यर्थः। अन्यत्र—

विपत्रलेखा निरलक्तकाधराः
निरञ्जनाक्षीरपि बिभ्रतीः श्रियम् ।
निरीक्ष्य रामा बुबुधे नभश्चरैः
अलङ्कृतं तद्वपुषैव मण्डनम् ॥ ४० ॥

तथा न पूर्वं कृतभूषणादरः
प्रियानुरागेण विलासिनीजनः ।

धनग्रहणबन्धनादिना पीड़िताः [ वनितावतंसकाः, च्युताधिकाराः ] भ्रष्टाधिकाराः [ सचिवाः इव, तत्क्षणशोचनीयतां ] तत्क्षणं शोचनीयताम् [ आययुः ] प्रापुः ॥ ३९ ॥ *

विपत्रेति ।—विगताः पत्रलेखाः तिलकविशेषाः यासां ताः [ विपत्रलेखाः, निरलक्तकाधराः ] निरलक्तकाः क्षालितरागाः अधराः यासां ताः । निरञ्जनानि अक्षीणि यासां ताः [ निरञ्जनाक्षीः अपि ] । "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" ( ५।४।११३ पा० ) । "षिद्गौरादिभ्यश्च" ( ४।१।४१ पा० ) इति ङीष् । तथापि [ श्रियं बिभ्रतीः ] शोभाकारणाभावेऽपि शोभमानाः इति विभावनालङ्कारः । [ रामाः निरीक्ष्य, नभश्चरैः ] गन्धर्वैः [ तद्वपुषैव ] तासां वपुषा एव [ मण्डनम् अलङ्कृतं ] न तु मण्डनेन तद्वपुः इति अक्षरार्थः । इति [ बुबुधे ] ज्ञातम् । कर्मणि लिट् । स्वभावरमणीयानां किम् अलङ्करणैः ? इति भावः ॥ ४० ॥ †

तथेति ।—[ विलासिनीजनः, पूर्वं ] जलविहारात् प्राक् [ प्रियानुरागेण, कृतभूषणादरः ] कृतः भूषणेषु आदरः आसक्तिः

* अत्र श्लेषानुप्राणितोपमा ।

† अत्र निश्चयालङ्कृतिः ।

यथा जलार्द्रो नखमण्डनश्रिया
ददाह दृष्टीश्च विपक्षयोषिताम् ॥ ४१ ॥

शुभाननाः साम्बुरुहेषु भीरवः
विलोलहाराश्चलफेनपङ्क्तिषु।
नितान्तगौर्य्यो हृतकुङ्कुमेष्वलं
न लेभिरे ताः परभागमूर्मिषु ॥ ४२ ॥

---

येन सः, अनुरक्तप्रियत्वात् सम्यक् प्रसाधितः सन् अपि इत्यर्थः. प्रियस्य अनुरागिण [ च, विपक्षयोषितां ] सपत्नीनां [ दृष्टीः ] चक्षूंषि [ तथा न ददाह ] न दुःखीचकार, [ यथा जलार्द्रः ] सन् [ नखमण्डनश्रिया ] नखशब्देन नखक्षतानि लक्ष्यन्ते : तानि एव मण्डनं तस्य श्रिया, तत्कृतशोभया इत्यर्थः. विपक्षयोषितां सपत्नीनां दृष्टीः चक्षूंषि [ यथा ] ददाह तापयामास। मण्डनान्तरात् अपि नखमण्डनानुरागात् अपि च तदनुभावः एव सपत्नीनां दुःखहेतुः इति भावः। जलार्द्रः ददाह इति विरुद्धकार्य्योत्पत्तिरूपः विषमालङ्कारः। "विरुद्धकार्य्यस्योत्पत्तिः यत्रानर्थस्य वा भवेत्। विरूपघटना वा स्याद् विषमालङ्कृतिस्त्रिधा" ॥ इति लक्षणात् ॥ ४१ ॥

शुभेति।—[ शुभाननाः विलोलहारा नितान्तगौर्य्यः ] अरुणाङ्ग्यः। "गौरोऽरुणे सिते पीते" इति वैजयन्ती। [भीरवः ताः ] स्त्रियः [ साम्बुरुहेषु, चलफेनपङ्क्तिषु ] चलाः फेनपङ्क्तयः येषु तेषु [ हृतकुङ्कुमेषु ] हृतानि कुङ्कुमानि यैः तेषु, कुङ्कुमसङ्गारुणेषु इत्यर्थः। [ ऊर्मिषु ] विषयेषु [ अलम् ] अत्यर्थं [ परभागं ] गुणोत्कर्षं [ न लेभिरे ]। "परभागो गुणा-

ह्रदाम्भसि व्यस्तवधूकराहते
रवं मृदङ्गध्वनिधीरमुज्झति ।
मुहुः स्तनैस्तालसमं समाददे
मनोरमं नृत्यमिव प्रवेपितम् ॥ ४३ ॥
श्रिया हसद्भिः कमलानि सस्मितैः
अलङ्कृताम्बुः प्रतिमागतैर्मुखैः ।

त्कर्षः" इति यादवः । तासाम् ऊर्मीणां च अरुणत्वादिगुणसाम्यात् न कश्चित् विशेषः लक्ष्यते इत्यर्थः । अत एव सामान्यालङ्कारः ।—"सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता" इति लक्षणात् । शुभाननत्व-साम्बुरुहत्वादुभयविशेषणानां क्रमेण उभयस्मिन् समन्वयात् यथासंख्यालङ्कारस्य ।—"यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयात्" इति काव्यप्रकाशे लक्षणात् । अनयोः अङ्गाङ्गिभावेन सङ्करः ॥ ४२ ॥

ह्रदेति ।—[ व्यस्तवधूकराहते ] व्यस्ताभ्यां विपर्य्यासिताभ्यां वधूकराभ्याम् आहते, एकेन करेण उत्थाप्य अन्येन ताड़िते इत्यर्थः । [ ह्रदाम्भसि, मृदङ्गध्वनिधीरं ] मृदङ्गध्वनिवत् धीरं गम्भीरं [रवम् उज्झति] सति, तथा ध्वनति सति इत्यर्थः । [ मुहुः स्तनैः, तालसमं ] तालः गीतवाद्यनृत्यानां कालपरिच्छेदः । "तालः कालक्रियामानम्" इत्यमरः । तस्य समम् अनुरूपं [ मनोरमं नृत्यम् इव, प्रवेपितं ] प्रकम्पितम् । भावे क्तः । [ समाददे ] स्वीकृतम् । उपमालङ्कारः ॥ ४३ ॥

श्रियेति ।—[ श्रिया ] शोभया [ कमलानि हसद्भिः ] कमलसदृशैः इत्यर्थः । "हसतीर्ष्यत्यसूयति" इति दण्डिना

कृतानुकूल्या सुरराजयोषितां
प्रसादसाफल्यमवाप जाह्नवी ॥ ४४ ॥
परिस्फुरन्मीनविघट्टितोरवः
सुराङ्गनास्त्रासविलोलदृष्टयः ।

सदृशपर्य्यायपराः उक्ताः । [ सङ्क्रान्तैः, प्रतिमागतैः ] प्रतिबिम्बगतैः इत्यर्थः । "प्रतिमानं प्रतिबिम्बं प्रतिमा" इत्यमरः । [ मुखैः, अलङ्कृताम्बुः ] अलङ्कृतानि अम्बूनि यस्याः सा । किं च [ सुरराजयोषितां, कृतानुकूल्या ] कृतम् आनुकूल्यं विहाराद्युपकारः यया सा, इत्थं योषिद्भिः उपकृता स्वयं च तासाम् उपचिकीर्षुः [ जाह्नवी ] गङ्गा [ प्रसादसाफल्यं ] प्रसादस्य स्वच्छत्वस्य साफल्यम् । अर्थगौरववत् षष्ठीसमासनिर्वाहः ।* [अवाप] अप्रसन्नाम्भसि विहारबिम्बग्रहणयोः असम्भवात् इत्यर्थः । स्वच्छा एव हि परैः उपक्रियन्ते स्वयं च उपकुर्वते तेषाम् इति भावः । "कृतानुकारा" इति पाठे—अनुकारः अनुकूलकरणम् उपकारः इत्येवं व्याख्येयम् । अत्र जाह्नवीविशेषणपदार्थस्य साफल्यं प्रति हेतुत्वात् काव्यलिङ्गम् अलङ्कारः ॥ ४४ ॥ †

परीति ।—[ परिस्फुरन्मीनविघट्टितोरवः ] परितः स्फुरद्भिः विवर्त्तमानैः मीनैः विघट्टिताः ऊरवः यासां ताः, अत एव [त्रास-

* "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन" ( २।२।११ पा० ) षष्ठीसमासनिषेधकसूत्रवृत्तौ परिष्कर्त्ता आह—"अनित्योऽयं गुणेन निषेधः, 'तदशिष्यं संज्ञाप्रमाणत्वात्' ( १।२।५३ पा० ) इति निर्देशात् तेनार्थगौरवं बुद्धिमान्द्यम् इत्यादि सिद्धम्" इति । एवं विचार्य्य व्याख्याता समुक्तम्—"अर्थगौरववत् षष्ठीसमासनिर्वाहः" इति सौकम् ।

† अत्र दिव्याङ्गनादेवनद्योः परस्परोपकारविनिमयप्रसङ्गात्परिवृत्तिरङ्गम् इति केचित् ।

उपाययुः कम्पितपाणिपल्लवाः

सखीजनस्यापि विलोकनीयताम् ॥ ४५ ॥

भयादिवाश्लिष्य झषाहतेऽम्भसि

प्रियं मुदानन्दयति स्म मानिनी ।

अकृत्रिमप्रेमरसाहितैर्मनः

हरन्ति रामाः कृतकैरपीहितैः ॥ ४६ ॥

तिरोहितान्तानि नितान्तमाकुलैः

अपां विगाहादलकैः प्रसारिभिः ।

---

विलोलदृष्टयः ] भयविकस्वरनेत्राः [ कम्पितपाणिपल्लवाः ] च [ सुराङ्गनाः सखीजनस्य अपि विलोकनीयताम् उपाययुः ] । किमुत प्रियजनस्य इति भावः । स्वभावोक्तिः अलङ्कारः ॥ ४५ ॥

भयादिति ।—[ मानिनी ] दुर्लभस्वयंग्रहणा इति भावः । [ अम्भसि ] जले [ झषाहते ] झषेण मत्स्येन आहते सति । "पृथुलोमा झषो मत्स्यः" इत्यमरः । [ भयात् इव ]; वस्तुतस्तु न तथा इति भावः । किन्तु [ मुदा ] औत्सुक्येन एव [आश्लिष्य प्रियम् आनन्दयति स्म ]। तथाहि ।- [ रामाः ] स्त्रियः [ अकृत्रिमप्रेमरसाहितैः] अकृत्रिमः अनारोपितः यः प्रेमा एव रसः तेन आहितैः जनितैः [कृतकैः] कृत्रिमैः [ अपि ] इत्यर्थः [ ईहितैः ] चेष्टितैः [ मनः हरन्ति ]; आरोपितम् अपि भयं प्रेमसूलत्वात् मनोहरं बभूव इत्यर्थः। अत्र अल्पानुभवेन भयेन सहजरागनिगूहनात् मीलनालङ्कारः।-- "मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम्" इति लक्षणान्तरसम्भवात् अर्थान्तरन्यासेन संसृज्यते ॥ ४६ ॥

ययुर्बधूनां वदनानि तुल्यतां
द्विरेफवृन्दान्तरितैः सरोरुहैः ॥ ४७ ॥

करौ धुनाना नवपल्लवाकृती
पयस्यगाधे किल जातसम्भ्रमा ।
सखीषु निर्वाच्यमधार्ष्ट्यदूषितं
प्रियाङ्गसंश्लेषमवाप मानिनी ॥ ४८ ॥

तिरोहितेति ।—[ अपां विगाहात् नितान्तम् आकुलैः ] विकीर्णैः [ प्रसारिभिः ] आयतैः [ अलकैः ] केशैः [ तिरोहितान्तानि ] छन्नप्रान्तानि [ बधूनां वदनानि, द्विरेफवृन्दान्तरितैः ] द्विरेफवृन्दैः अन्तरितानि छन्नानि सरोरुहाणि तैः [ सरोरुहैः तुल्यतां ययुः ]। इति उपमालङ्कारः ॥ ४७ ॥

कराविति ।—[ मानिनी पयसि अगाधे ] सति [ किल ] इति अलीके, मज्जनभयात् इव इत्यर्थः । [ जातसम्भ्रमा ] उत्पन्नभया अत एव [ नवपल्लवाकृती करौ धुनाना ] कम्पयन्ती । धुनातेः क्रैयादिकात् कर्त्तरि लटः शानच् । [सखीषु] विषये [निर्वाच्यम्] अवाच्यम्, अनिन्द्यम् इत्यर्थः । [ अधार्ष्ट्यदूषितं ] धार्ष्ट्यदूषितस्य न भवति इति अधार्ष्ट्यदूषितः, तम्, वस्तुतः रागमूलम् अपि भयमूलत्वारोपात् इति भावः । [प्रियाङ्गसंश्लेषम् अवाप]। अत्रापि तुल्याङ्गेन भयेन आगन्तुकेन सहजानुरागनिगूहनात् मीलनालङ्कारः । तदुक्तं काव्यप्रकाशे—"समानलक्षणं वस्तु वस्तुना यन्निगूह्यते । निजेनागन्तुना वापि तन्मीलनमुदाहृतम् ॥" इति ॥ ४८ ॥

प्रियैः सलीलं करवारिवारितः
प्रवृद्धनिश्वासविकम्पितस्तनः ।
सविभ्रमाधूतकराग्रपल्लवः
यथार्थतामाप विलासिनीजनः ॥ ४९ ॥

उदस्य धैर्यं दयितेन सादरं
प्रसादितायाः करवारिवारितम् ।

प्रियैरिति ।—[ प्रियैः ] कामिभिः [ सलीलं, करवारिवारितः ] करवारिभिः अञ्जलिजलैः वारितः अवरुद्धः, सिक्तः इत्यर्थः । [ प्रवृद्धनिश्वासविकम्पितस्तनः ] प्रवृद्धैः सम्ततैः निश्वासैः विकम्पितौ कम्पितौ स्तनौ यस्य सः । [सविभ्रमाधूतकराग्रपल्लवः ] सविभ्रमं सविलासम् आधूतानि कराग्रपल्लवानि कराग्रपल्लवानि येन सः । [ विलासिनीजनः ] विलसनशीला विलासिनी । "वौ कषलसकत्थस्रम्भः" ( ३।२।२४७ ) इति घिनुण्प्रत्ययः । सा एव जनः । जातौ एकवचनम् । [ यथार्थताम् आप ] उक्तरीत्या अनेकविलासवत्तया यथार्थकत्वम् अवाप इत्यर्थः । "क्वचित् गम्यमानार्थस्य प्रयोगः" ( वा० ) इति नाम्नः न प्रयोगः । यथा माघे—"...याथार्थ्यमलम्भि दिग्गजैः" इति । क्वचित् प्रयुज्यते च । यथा रघुवंशे—"परन्तपो नाम यथार्थनामा" इति । ...—"स जयत्यरिसार्थसार्थकीकृतनामा किल भीम... ..." इति । स्वभावोक्तिः अलङ्कारः ॥ ४९ ॥

उदस्येति ।—[ दयितेन, धैर्यं ] काठिन्यम् [ उदस्य ] अप... ...नीय इत्यर्थः । [ सादरं ] यथा तथा [प्रसादितायाः]

मुखं निमीलन्नयनं नतभ्रुवः
श्रियं सपत्नीवदनादिवाददे ॥ ५० ॥

विहस्य पाणौ विधृते धृताम्भसि
प्रियेण वध्वा मदनार्द्रचेतसः ।
सखीव काञ्ची पयसा घनीकृता
बभार वीतोच्चयबन्धमंशुकम् ॥ ५१ ॥

निरञ्जने साचिविलोकितं दृशौ
अयावकं वेपथुरोष्ठपल्लवम् ।

सौमनस्यं गमितायाः [ नतभ्रुवः ] स्त्रियः सम्बन्धि [ करवारिवारितं ] करवारिभिः वारितम् अवरुद्धम्, अत एव [ निमीलन्नयनं ] निमीलती नयने यस्य तत् [ मुखं सपत्नीवदनात् इव श्रियम् आददे ] जग्राह। तदानीं तद्वदनस्य निःश्रीकत्वात् तदीयश्रीग्रहणम् उत्प्रेक्ष्यते ॥ ५० ॥

विहस्येति।—[ धृताम्भसि ] प्रियसेचनार्थं गृहीतजले [ पाणौ ] अञ्जलौ इत्यर्थः। [ प्रियेण विहस्य, विधृते ] अवलम्बिते सति अत एव [ मदनार्द्रचेतसः ] मदनपरवशायाः इत्यर्थः। [ वध्वाः ] सम्बन्धि [ वीतोच्चयबन्धं ] मुक्तनीविग्रन्थि, स्रंसमानम् इत्यर्थः। [ अंशुकं पयसा घनीकृता काञ्ची सखी इव, बभार ] जग्राह। स्त्रीणां किल स्त्रीषु एव आयत्तं लज्जारक्षणम् इति भावः ॥ ५१ ॥ *

* उत्प्रेक्षा। प्रियकरग्रहेण स्मरातुरायाः इति पदार्थहेतुकं काव्यलिङ्गम्, एतयोरङ्गाङ्गित्वम्।

नतभ्रुवो मण्डयति स्म विग्रहे
बलिक्रिया चातिलकं तदास्पदम् ॥ ५२ ॥
निमीलदाकेकरलोलचक्षुषां
प्रियोपकण्ठं कृतगात्रवेपथुः ।
निमज्जतीनां श्वसितोद्धतस्तनः
श्रमो नु तासां मदनो नु पप्रथे ॥ ५३ ॥

निरञ्जने इति ।—[ नतभ्रुवः ] अङ्गनायाः [ विग्रहे ] वपुषि [ निरञ्जने ] निर्धौतकज्जले [ दृशौ ] विलोचने कर्म [ साचिविलोकितं ] तिर्य्यक् ईक्षणं कर्त्तृ [ मण्डयति स्म ] । "तिर्य्यगर्थे साचि तिरः" इत्यमरः । [ अयावकं ] क्षालित-लाक्षारागम् [ ओष्ठपल्लवं, वेपथुः ] कम्पः मण्डयति स्म । "ट्वितोऽथुच् (३।३।८९ पा०) इति अथुच्प्रत्ययः । [अतिलकं] तिलकरहितं [ तदास्पदं ] तिलकस्थानं ललाटम् । "आस्पदं प्रतिष्ठायाम्" ( ६।१।१४६ पा० ) इति निपातः । [बलिक्रिया ] रेखाबन्धः [ च ] मण्डयति स्म । तदा निरलङ्कारस्य अङ्गनाशरीरस्य तच्छरीरविकारैः एव अलङ्कारः समजनि इत्यर्थः ॥ ५२ ॥ *

निमीलदिति ।—[ प्रियोपकण्ठं ] प्रियसमीपे, अत्यन्त-संयोगे द्वितीया । † [ निमज्जतीनां ] विगाहमानानाम् अत एव [ निमीलदाकेकरलोलचक्षुषां ] निमीलन्ति निमिषन्ति

* विभावना-विशेषोक्तिमूलकः सन्देहसङ्करालङ्कारः । भूषणानामपि भूषकत्वं व्यङ्ग्यम् ।

† "उपोधिके च" (१।४।८७ पा० ) इति ।

प्रियेण सिक्ता चरमं विपक्षत:
चुकोप काचिन्न तुतोष सान्त्वनै: ।
जनस्य रूढप्रणयस्य चेतस:
किमप्यमर्षोऽनुनये भृशायते ॥ ५४ ॥

---

आकेकराणि आकेकरवन्ति लोलानि चक्षूंषि यासां [तासाम्] । आकेकरलक्षणं तु नृत्यविलासे ।—"दृष्टिराकेकरा किञ्चित्-स्फुटापाङ्गे प्रसारिता । मीलितार्द्धपुटा लोके ताराव्यावर्त्तनोत्तरा ॥" इति । तासां स्त्रीणां [कृतगात्रवेपथु:] कृत: गात्राणां वेपथु: कम्प: येन स: [श्वसितोद्धतस्तन:] श्वसितै: निश्वासै: उद्धतौ उत्पतितौ स्तनौ येन स: [श्रम:] खेद: [नु मदन: नु पप्रथे] प्रादुर्बभूव । निमज्जनप्रियसन्निधानरूपोभयकारण-सम्भवात् नेत्रनिमीलनगात्रकम्पनिश्वासधारणाच्च सन्देह: । स: एव अलङ्कार: ॥ ५३ ॥

प्रियेणेति ।—[काचित् प्रियेण, विपक्षत:] सपत्नीत: [चरमं] पश्चात् [सिक्ता] सती [चुकोप] । "पृष्ठन्तु चरमं तनो:" इत्यमर: । [सान्त्वनै:] अनुनयै: [न तुतोष] । तथाहि ।—[रूढ-प्रणयस्य] गाढ़प्रेमण: [जनस्य] सम्बन्धी [चेतस:] मनस: [अमर्ष:] प्रकोप: [किम् अपि] कुत: अपि हेतो: [अनुनये] सति [भृशायते] गाढ़: भवति । "भृशादिभ्यो भुव्यच्वेर्लोपश्च हल:" (३।१।१२ पा०) इति क्यङ् । अन्यत्र शान्तिहेतु: अनुनय: अत्र प्रकोपाय एव भवति, तत्र कारणं तु न ज्ञायते इत्यर्थ: ॥ ५४ ॥ *

---

* अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास: अलङ्

इत्थं विहृत्य वनिताभिरुदस्यमानं
पीनस्तनोरुजघनस्थलशालिनीभिः ।
उत्सर्पितोर्मिचयलङ्घिततीरदेशम्
औत्सुक्यनुन्नमिव वारि पुरः प्रतस्थे ॥५५॥

तीरान्तराणि मिथुनानि रथाङ्गनाम्नां
नीत्वा विलोलितसरोजवनश्रियस्ताः ।

इत्थमिति ।—[ पीनस्तनोरुजघनस्थलशालिनीभिः ] पीनैः स्तनैः ऊरुभिः जघनस्थलैश्च शालन्ते इति तथोक्ताभिः इति सलिलनोदनसामर्थ्योक्तिः । स्थलस्य साक्षात् अप्राण्यङ्गत्वात् न द्वन्द्वैकवद्भावः । * [ वनिताभिः इत्थं विहृत्य, उदस्यमानं ] नुद्यमानम् [ उत्सर्पितोर्मिचयलङ्घिततीरदेशम् ] उत्सर्पितैः उपरिभावं प्रापितैः ऊर्मिचयैः लङ्घितः तीरदेशः येन तत् [ वारि, [ औत्सुक्यनुन्नं ] औत्सुक्यं विहारासहिष्णुत्वं तेन नुन्नं प्रेरितम् [ इव ] इति उत्प्रेक्षा । "नुदविद" (८।२।५६ पा० ) इत्यादिना निष्ठानत्वम् । [ पुरः ] अग्रे [ प्रतस्थे ], स्वजनवत् इति भावः ॥ ५५ ॥

तीरान्तराणीति ।—[ रथाङ्गनाम्नां मिथुनानि ] चक्रवाकद्वन्द्वानि, अन्यानि तीराणि [ तीरान्तराणि, नीत्वा ] नियोज्य इत्यर्थः । अविहितलक्षणः तत्पुरुषः मयूरव्यंसकादिषु द्रष्टव्यः । [ विलोलितसरोजवनश्रियः ] विलोलिताः विलुलिताः सरोजवनश्रियः याभिः ताः [ सुरसरिज्जलधौतहाराः ] सुरसरिज्जलैः धौतहाराः क्षालितमुक्तावलयः [ ताः ] स्त्रियः [ तारावितान-

* "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" ( २।४।२ पा० ) इति ।

संरेजिरे सुरसरिज्जलधौतहाराः
ताराविताननतरला इव यामवत्यः ॥ ५६ ॥
सङ्क्रान्तचन्दनरसाहितवर्णभेदं
विच्छिन्नभूषणमणिप्रकरांशुचित्रम् ।
बद्धोर्मि नाकवनितापरिभुक्तमुक्तं
सिन्धोर्बभार सलिलं शयनीयलक्ष्मीम् ॥५७॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये सुराङ्गनाविहारः नामाष्टमः सर्गः ॥ ८ ॥

---

तरलाः ] ताराविताने: उडुगणैः तरलाः भासुराः । "तरलो भासुरे हारे चञ्चलेऽपि" इति वैजयन्ती । [ यामवत्यः ] रात्रयः [ इव, संरेजिरे ] शुशुभिरे ॥ ५६ ॥

सङ्क्रान्तेति ।—[ सङ्क्रान्तचन्दनरसाहितवर्णभेदं ] सङ्क्रान्तैः चन्दनरसैः मलयजद्रवैः आहितः वर्णभेदः रूपान्तरं यस्य तत्, [ विच्छिन्नभूषणमणिप्रकरांशुचित्रं ] विच्छिन्नानि त्रुटितानि यानि भूषणानि तेषां ये मणिप्रकराः मणिगणाः तेषाम् अंशुभिः चित्रं नानावर्णं [बद्धोर्मि] तरलं तरङ्गितं [नाकवनितापरिभुक्तमुक्तं ] नाकवनिताभिः परिभुक्तमुक्तं पूर्वं परिभुक्तं पश्चात् मुक्तम् । "पूर्वकाल" (२।१।४९. पा०) इत्यादिना तत्पुरुषः । [ सिन्धोः ] गङ्गायाः * [ सलिलं, शयनीयलक्ष्मीं] शेरते अत्र इति शयनीयं तल्पम् । बहुलग्रहणात् साधुः । तस्य लक्ष्मीं [ बभार ] । अत एव निदर्शनालङ्कारः । लक्षणं तु उक्तम् ॥ ५७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायाम् अष्टमः सर्गः ॥ ८ ॥

---

* सरिद्वाचकः सिन्धुशब्दः अत्र प्रसङ्गानुसारात् गङ्गावाचकः । "सिन्धुर्वमथुदेशाब्धिनदे ना सरिति स्त्रियाम्" इति मेदिनी ।

# नवमः सर्गः ।

वीच्य रन्तुमनसः सुरनारीः
आत्तचित्रपरिधानविभूषाः ।
तत्प्रियार्थमिव यातुमथास्तं
भानुमानुपपयोधि ललम्बे ॥ १ ॥
मध्यमोपलनिभे लसदंशौ
एकतश्च्युतिमुपेयुषि भानौ ।

वीच्येति।—[ अथ ] जलक्रीड़ानन्तरं [ भानुमान् ] अंशुमान् सूर्यः [ आत्तचित्रपरिधानविभूषाः ] स्वीकृतविविधवस्त्राभरणाः, सुरतसन्नाहवतीः इत्यर्थः। अत एव [ रन्तुमनसः ] "समानकर्त्तृकेषु तुमुन्" (३।३।१५८ पा०)। "लुम्पेदवश्यमः कृत्ये तु' काममनसोरपि" (कारि०) इति मकारलोपः। [ सुरनारीः वीच्य ] तासां प्रियार्थं [ तत्प्रियार्थम् इव ] अवसरदानरूपं प्रियं कर्त्तुम् इव इत्यर्थः। फलोत्प्रेक्षा इयम्। [ अस्तम् ] अदर्शनम्। मकारान्तम् अव्ययम् एतत्। [ यातु' ] प्राप्तुम् [ उपपयोधि ] पयोधिसमीपे [ ललम्बे ] सस्रंसे। अस्मिन् सर्गे स्वागता वृत्तम्।—"स्वागतेति रनभाद् गुरुयुग्मम्" इति लक्षणात् ॥ १ ॥ *

* केचिदेवं व्याचख्युः,—तत्प्रियार्थं तदेव प्रियं सुन्दरीसङ्गरूपं तदर्थं यातु' प्राप्तुम् अस्तं निरस्तं निराशमिति भावः यथा तथा विरहासहिष्णुः तदननुरागात् उपपयोधि समुद्रे पपात पतङ्गः। अत्र अधीराधीराविप्रलब्धा नायिका विप्रलब्धश्च नायकः इति समाधिः।

द्यौरुवाह परिवृत्तिविलोलां
हारयष्टिमिव वासरलक्ष्मीम् ॥ २ ॥
अंशुपाणिभिरतीव पिपासुः
पद्मजं मधु भृशं रसयित्वा ।
क्षीवतामिव गतः क्षितिमेष्यन्
लोहितं वपुरुवाह पतङ्गः ॥ ३ ॥

मध्येति ।—[ मध्यमोपलनिभे ] नायकमणिसदृशे । "निभ-सङ्काशनीकाशप्रतिरूपोपमादयः" इत्यमरः । "शर्करायां स्त्रियां प्रोक्तः पुंस्यश्मन्युपलो मणौ" इति वैजयन्ती । [ लसदंशौ ] प्रसरद्रश्मौ [ भानौ, एकतः ] एकस्मिन् भागे [ च्युतिं ] स्रस्तताम् [ उपेयुषि ] प्राप्ते सति [ द्यौः, परिवृत्ति-विलोलां ] परिवृत्त्या मध्याङ्गातिक्रमेण विलोलां गत्वरीम्, अन्यत्र—गात्रस्य तिर्य्यक् आवृत्त्या मुहुः चलन्तीं, [वासरलक्ष्मीं, हारयष्टिं ] मुक्तावलीम् [ इव, उवाह ] वहति स्म ॥ २ ॥

अंशुपाणिभिरिति ।—[ पतङ्गः ] सूर्य्यः । "पतङ्गः पक्षि-सूर्य्ययोः" इत्यमरः । [ अतीव ] निर्भरम् । "अत्यतीव च निर्भरे" इत्यमरः । पातुम् इच्छुः [ पिपासुः ] तृषितः सन् । पिबतेः सन्नन्तात् उप्रत्ययः । [ अंशुपाणिभिः ] अंशवः एव पाणयः तैः, पद्मेषु जातं [ पद्मजं मधु ] मध्वेव । मध्विति श्लिष्टं रूपकम् । मकरन्दमद्यम् इत्यर्थः । "मधु मद्ये पुष्परसे" इत्यमरः । [ भृशम् ] अत्यन्तं [ रसयित्वा ] आस्वाद्य [ क्षीवतां ] मत्तत्वं [ गत इव ] इति उत्प्रेक्षा । "मत्ते शौण्डोत्कटक्षीवाः" इत्यमरः । [ क्षितिम् एष्यन् ] गमिष्यन्

गम्यतामुपगते नयनानां
लोहितायति सहस्रमरीचौ।
आससाद विरहय्य धरित्रीं
चक्रवाकहृदयान्यभितापः ॥ ४ ॥
मुक्तमूललघुरुज्झितपूर्वः
पश्चिमे नभसि सम्भृतसान्द्रः।

[ लोहितं ] रक्तं । वपुः उवाह ]। यथा मत्तः क्षीवतया क्षितौ लुठति रज्यते च तद्वत् इति भावः। सूर्य्यस्य क्षितिविलयनम् अस्तमयः इति आगमः। अत्र रूपकोत्प्रेक्षयोः सापेक्षत्वात् अङ्गाङ्गिभावेन सङ्करः ॥ ३ ॥

गम्यतामिति।—[ सहस्रमरीचौ ] सूर्य्ये। अलोहितः लोहितः भवति इति [ लोहितायति ]। "लोहितादिडाजभ्यः क्यष्" (३।१।१३ पा०) इति क्यष्। "वा क्यषः" (१।३।९० पा०) इति परस्मैपदे शतृप्रत्ययः। अत एव [ नयनानां गम्यताम् उपगते ] दर्शनीयतां प्राप्ते सति [ अभितापः, धरित्रीं विरहय्य ] विहाय। "ल्यपि लघुपूर्वात्" (६।४।५६ पा०) इति अयादेशः। [ चक्रवाकहृदयानि आससाद ] प्राप। अत्र धरित्र्याः यादृशः तीव्रार्ककरकृतसन्तापः तादृक् चक्रवाकहृदयेषु विरहसन्तापः सञ्जातः इति परमार्थः। परन्तु तदुपक्रमानन्तरम् एतस्य आविर्भावात् सः एव अत्र सङ्क्रान्तः इति अभेदाध्यवसायेन उपदेशः। अत एव भेदे अभेदरूपातिशयोक्तिः अलङ्कारः ॥ ४ ॥

मुक्तेति।—[ रवौ, सामि मज्जति ] अर्द्धास्तमिते सति। "सामि त्वर्द्धे जुगुप्सायाम्" इत्यमरः। मुक्तं त्यक्तप्रायं मूलम् आश्रयभूतः रविः। अन्यत्र—स्वामी। येन सः, अत एव लघुः

सामि मज्जति रवौ न विरेजे
खिन्नजिह्म इव रश्मिसमूहः ॥ ५ ॥
कान्तदूत्य इव कुङ्कुमताम्राः
सायमण्डनमभि त्वरयन्त्यः।
सादरं ददृशिरे वनिताभिः
सौधजालपतिता रविभासः ॥ ६ ॥

अल्पकस्य [मुक्तमूललघुः, उज्झितपूर्वः] त्यक्तपूर्वदिक्कः। अन्यत्र—त्यक्तपूर्वजनः। [पश्चिमे नभसि] पश्चिमनभोभागे। अन्यत्र—क्वचित् नीचस्थले। [सम्भृतसान्द्रः] सम्भृतः संहतः सन्, अत एव सान्द्रस्य [रश्मिसमूहः] आश्रितजनस्य इति ध्वन्यते। [खिन्नजिह्मः] खिन्नश्चासौ जिह्मश्चेति। यद्वा—खिन्नेन दुःखेन जिह्मः दीनः [इव न विरेजे]। अत्र मुक्तमूलत्वादिप्रस्तुतविशेषणसाम्यात् अप्रस्तुताश्रितजनप्रतीतेः समासोक्तिः। तत्र वाच्यस्य रश्मिसमूहस्य अचेतनस्य अपि प्रतीयमानेन चेतनेन अभेदाभिधानात् दुःखितत्वाद्युत्प्रेक्षा इति तयोः अङ्गाङ्गिभावेन सङ्करः ॥ ५ ॥

कान्तेति।—[कुङ्कुमताम्राः] कुङ्कुमवत् कुङ्कुमेन वा ताम्राः [सायमण्डनं] सायस्य सायंकालस्य। "सायं साये प्रगे प्रातः" इत्यमरः। यत् मण्डनं तत् [अभि] तत् उद्दिश्य [त्वरयन्त्यः] त्वरां कारयन्त्यः [सौधजालपतिताः] सौधानां जालैः गवाक्षैः पतिताः प्रविष्टाः। "जालं गवाक्ष आनाये" इति वैजयन्ती। [रविभासः] सूर्य्यरश्मयः [कान्तदूत्यः] कान्तानां प्रेयसां दूत्यः [इव, वनिताभिः सादरं] यथा तथा [ददृशिरे] दृष्टाः।

अग्रसानुषु नितान्तपिशङ्गैः
भूरुहान् मृदुकरैरवलम्ब्य।
अस्तशैलगहनं नु विवस्वान्
आविवेश जलधिं नु महीं नु॥ ७॥

आकुलश्चलपतत्रिकुलानाम्
आरवैरनुदितौषसरागः।

सायन्तनार्कभासां प्रियसमागमसूचकत्वात् एव दूतीषु इव तासु स्त्रीणाम् आदरः अभवत् इत्यर्थः॥ ६॥ *

अग्रेति।—[ विवस्वान् ] सूर्य्यः [ अग्रसानुषु ] अग्रे अस्तशैलशिखरे ये सानवः तेषु ये भूरुहाः तान् [ भूरुहान्, नितान्तपिशङ्गैः ] अत्यन्तारुणैः मृदुभिः करैः इव करैः [ मृदुकरैः ] अंशुहस्तैः इति श्लिष्टरूपकम्। "बलिहस्तांशवः कराः" इत्यमरः। यद्वा—करैः मृदु श्लथम् [ अवलम्ब्य, अस्तशैलगहनं ] अस्तः इति शैलः अस्तशैलः। "अस्तस्तु चरमक्ष्माभृत्" इत्यमरः। तस्य गहनं काननं [ नु, जलधिं नु, महीं नु, आविवेश ]। तपनस्य पतनसन्देहः एव दृष्टः। पतनं तु क्व च अस्य तत् न ज्ञायते, शीघ्रगमनात् इत्यर्थः। अत्र तपने पतनस्य आरोप्यमाणस्य गहनाद्यनेकविषयत्वेन सन्देहात् सन्देहालङ्कारः। उत्प्रेक्षा इति केचित्॥ ७॥

आकुल इति।—[ चलपतत्रिकुलानां ] चलानां कुलायेभ्यः कुलायान् प्रति चलतां पतत्रिकुलानां पक्षिसमूहानाम्

---

* अत्र उपमानोपमेयसाधारणधर्म्मसम्बन्धादुपमा। सा च, प्रस्तुतस्य सूर्य्यास्तरूपस्य वर्णनावसरे अप्रस्तुतस्य रविकिरणेषु दूतीधर्म्मव्यवहारस्य समारोपणात् समासोक्तिं ध्वनयति इति।

आययावहरिदश्वविपाण्डुः
तुल्यतां दिनमुखेन दिनान्तः ॥ ८ ॥
आस्थितः स्थगितवारिदपङ्क्त्या
सन्ध्यया गगनपश्चिमभागः ।
सोर्मिविद्रुमवितानविभासा
रञ्जितस्य जलधेः श्रियमूहे ॥ ९ ॥

[ आरवैः ] शब्दैः [ आकुलः ] व्याप्तः । अनुदितशब्देन अभाव-मात्रम्, उषःशब्देन सन्ध्यामात्रं च विवक्ष्यते । उषसि भवः औषसः । "सन्धि वेला" ( ४।३।१६ पा० ) इत्यादिना योग-विभागात् अण्प्रत्ययः । अन्यथा "कालात् ठञ्" ( ४।३।११ पा० ) इति ठञ् स्यात् । तथा च [ अनुदितौषसरागः ] अविद्यमानसन्ध्यारागः इत्यर्थः । * एकत्र अपगमात् अन्यत्र अनुदयात् च इति भावः । [ अहरिदश्वः ] अविद्य-मानसूर्य्यः । एकत्र अनुदयात् अन्यत्र अस्तमयात् च इति भावः । अत एव [ विपाण्डुः ] तिमिरानुदयात् इति शेषः । [ दिनान्तः ] सायंकालः [दिनमुखेन ] प्रातःकालेन [ तुल्यताम् आययौ ] तद्वत् बभूव इत्यर्थः । अत एव उपमालङ्कारः ॥ ८ ॥

आस्थित इति ।—[ स्थगितवारिदपङ्क्त्या ] पिञ्जितमेघ-वृन्दया [ सन्ध्यया आस्थितः ] आक्रान्तः व्याप्तः [ गगनपश्चिम-भागः, सोर्मिविद्रुमवितानविभासा ] सोर्मिः ऊर्मिसङ्क्रान्ता इत्यर्थः, तया विद्रुमवितानविभासा प्रवालप्रकरकान्त्या [ रञ्जि-

* अत एव "कालाट्ठञ् ।" (४।३।११ पा०) इति सूत्रोदाहरणप्रसङ्गे कथं तर्हि "अनुदितौषसरागः" इति भारविः ? तत्रोत्तरम्—अपभ्रंशा एवैते इति प्रामाणिकाः इति दीक्षिताः ।

प्राञ्जलावपि जने नतमूर्द्ध्नि
प्रेम तत्प्रवणचेतसि हित्वा ।
सन्ध्ययानुविदधे विरमन्त्या
चापलेन सुजनेतरमैत्री ॥ १० ॥
औषसातपभयादपलीनं
वासरच्छविविरामपटीयः ।

तस्य] स्वसावर्ण्यम् आपादितस्य [जलधेः श्रियम् ऊहे] सन्ध्यायाः रक्तवर्णत्वात् इति भावः। वहतेः कर्त्तरि लिट्। तत्सदृशीं श्रियम् उवाह इत्यर्थः। अत एव निदर्शनालङ्कारः ॥ ९ ॥

प्राञ्जलाविति।—प्रबद्धः अञ्जलिः येन तस्मिन् [प्राञ्जलौ] बद्धाञ्जलौ। "तौ युतावञ्जलिः पुमान्" इत्यमरः। "प्रादिभ्यः धातुजस्य वाच्यः वा चोत्तरपदलोपः" (वा०) बहुव्रीहिः। [नतमूर्द्ध्नि] नमस्कुर्वाणे [तत्प्रवणचेतसि] तत्प्रवणं तत्र सन्ध्यायाम् एव आःहितं चेतः यस्य तस्मिन् एवंविधे [अपि जने] विषये [प्रेम, हित्वा] विहाय [विरमन्त्या] निवर्त्तमानया। "व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम्। [सन्ध्यया, चापलेन] अस्थैर्य्येण। युवादित्वात् अण्प्रत्ययः। [सुजनेतरमैत्री, सुजनात् इतरः दुर्जनः, तस्य मैत्री सख्यम् [अनुविदधे] अनुचक्रे। कर्मणि लिट्। यथा दुर्जनमैत्री स्निह्यन्तम् अपि जहाति, तद्वत् सन्ध्या अपि सेवकं जनम् अहासीत् इत्यर्थः। मित्रस्य कर्म मैत्री। अणन्तात् ङीप्। अत्र सन्ध्यादुर्जनमैत्र्योः चापलं समानधर्मः अनुविधानम्। अत एव अर्थरूपेण इयम् उपमा ॥ १० ॥

औषसेति।—[औषसातपभयात् इव] औषसात् प्राभाति-

सन्निपत्य शनकैरिव निम्नात्
अन्धकारमुदवाप समानि ॥ ११ ॥
एकतामिव गतस्य विवेकः
कस्यचिन्न महतोऽप्युपलेभे ।
भास्वता निदधिरे भुवनानाम्
आत्मनीव पतितेन विशेषाः ॥ १२ ॥

कात् आतपात् भयं तस्मात् इव इति उत्प्रेक्षा । [ अपलीनं ] क्वचित् गूढ़ं [ वासरच्छविविरामपटीयः ] वासरच्छवेः आतपस्य विरामात् हेतोः पटीयः प्रभविष्णुतरम् । अन्धं करोति इति [अन्धकारं ] ध्वान्तम् । "अन्धकारोऽस्त्रियां ध्वान्तम्" इत्यमरः । अथ सन्ध्यापगमनान्तरं [ शनकैः ] मन्दं मन्दं [ निम्नात् सन्निपत्य ] आगत्य [ समानि ] समस्थलानि [ उदवाप ] व्यानशे । अत्र प्रस्तुतान्धकारविशेषणसाम्यात् अप्रस्तुतार्थप्रतीतेः समासोक्तिः अलङ्कारः । उत्प्रेक्षा तु अङ्गतः स्यात् ॥ ११ ॥

एकतामिति ।—[ एकताम् ] अभेदं [ गतस्य इव ] तमोव्याप्त्या तथा प्रतीतेः इयम् उत्प्रेक्षा । [ महतः ] शैलादेः [ अपि कस्यचित् ] कस्य अपि पदार्थस्य [ विवेकः ] भेदः [ न उपलेभे ] न गृहीतः । अत एव उत्प्रेक्ष्यते—[ पतितेन ] अस्तमितेन [भास्वता] सूर्य्येण । "भास्वद्विवस्वत्सप्ताश्व-हरिदश्वोष्णरश्मयः" इत्यमरः । [भुवनानां] भुवनस्थपदार्थानाम् इत्यर्थः । [विशेषाः] भूधरादिभेदाः [ आत्मनि ] स्वस्मिन् एव [ निदधिरे इव ] निहिताः इव । कथम् अन्यथा न उपलभ्येरन् इत्यर्थः । अत्र उत्प्रेक्षयोः सजातीययोः सापेक्षत्वात् अङ्गाङ्गिभावेन सङ्करः ॥ १२ ॥

इच्छतां सह वधूभिरभेदं
यामिनीविरहिणां विहगानाम् ।
आपुरेव मिथुनानि वियोगं
लङ्घ्यते न खलु कालनियोगः ॥ १३ ॥
यच्छति प्रतिमुखं दयितायै
वाचमन्तिकगतेऽपि शकुन्तौ ।

इच्छतामिति ।—[ वधूभिः ] स्वकामिनीभिः [ सह अभेदम् ] अवियोगम् [इच्छतां ] तथा सङ्कल्पवताम् अपि इत्यर्थः । [ यामिनीविरहिणां ] यामिनीषु विरहिणां नियतवियोगानाम् इत्यर्थः । रहतेः आवश्यके अर्थे णिनिः * यद्वा निन्दायाम् इनिः । तेषां [विहगानां] चक्रवाकाणाम् इत्यर्थः, [मिथुनानि वियोगम् आपुः एव] । न तु न आपुः, इति अयोगव्यवच्छेदः । तथाहि—[कालनियोगः] दैवाज्ञा [न लङ्घ्यते खलु] दुर्वारः इत्यर्थः ॥ १३ ॥ †

यच्छतीति ।—[ शकुन्तौ ] चक्रवाकपक्षिणि, सामान्यस्य प्राकरणिकविशेषपर्य्यवसानात् । "शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः" इत्यमरः । [ अन्तिकगते ] समीपस्थे [ अपि दयितायै ] चक्रवाक्यै [ प्रतिमुखम् ] अभिमुखं यथा तथा [ वाचं यच्छति ] वाचम् एव ददाने सति, न तु सङ्गच्छमाने सति इत्यर्थः । "पाघ्राध्मा" ( ७।३।७८ पा० ) इत्यादिना दाणः यच्छादेशः । [ अम्बुरुहिण्या ] नलिन्या [ उज्झितहर्षे ]

* वृद्ध्यभावो निपात्यते ।

† अत्र सामान्येन विशेषसमर्थनादर्थान्तरन्यासः

नीयते स्म नतिमुज्झितहर्षं
पङ्कजं मुखमिवाम्बुरुहिण्या ॥ १४ ॥
रञ्जिता नु विविधास्तरुशैलाः
नामितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री
संहृता नु ककुभस्तिमिरेण ॥ १५ ॥

चक्रवाकदुर्दशादर्शनात् इव त्यक्तविकासं [ पङ्कजं मुखम् इव, नतिं] नम्रत्वं [नीयते स्म] नीतम् । "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" ( कारि० ):इति नयतेः द्विकर्मकत्वात् प्रधाने कर्मणि लिट् । प्रायेण दुःखदर्शनात् स्त्रियः खिद्यन्ते, विशेषेण विरहदर्शनात् इति भावः । अत्र पङ्कजावनतेः चक्रवाकविक्रोशानन्तर्य्यात् तद्धेतुकत्वम् उत्प्रेक्ष्यते । तच्च मुखोपमेयं अम्बुरुहिण्या कामिनीसाम्यं गमयन्त्या निरुह्यते इति उपमोत्प्रेक्षयोः अङ्गाङ्गिभावेन सङ्करः । व्यञ्जकाद्यप्रयोगात् प्रतीयमाना उत्प्रेक्षा ॥ १४ ॥

रञ्जिता इति ।—[ तिमिरेण ] अन्धकारेण [ विविधाः, तरुशैलाः ] तरवः शैलाश्च [रञ्जिताः ] स्वसावर्ण्यम् आपादिताः [ नु ? ] अन्यथा कथमेषां नीलाढ्यत्वम् ? इति भावः । तथा [गगनं नामितं नु ?] आ भूतलात् इति शेषः । "मितां ह्रस्वः" ( ६।४।९२ पा० ) इत्यत्र वाशब्दानुवृत्त्या व्यवस्थितविभाषाश्रयणात् न ह्रस्वः * । यद्वा—गगनं [ स्थगितम्] आच्छादितं [ नु ? ] उभयत्र अपि तमसावृतत्वात् न दृश्यते इति भावः ।

* "वा चित्तविरागे" (६।४।९१ पा०) इति सूत्राद् वाशब्दानुवृत्तिः

रात्रिरागमलिनानि विकाशं
पङ्कजानि रहयन्ति विहाय ।
स्पष्टतारकमियाय नभः श्रीः
वस्तुमिच्छति निरापदि सर्वः ॥ १६ ॥
व्यानशे शशधरेण विमुक्तः
केतकीकुसुमकेसरपाण्डुः ।

---

तथा [ धरित्री. विषमेषु ] निम्नोन्नतेषु [ पूरिता ] समीकृता [ नु ? ] अन्यथा तद्विवेकः कथं न स्यात् ? इति भावः । [ ककुभः ] दिशश्च [ संहृताः नु ? ] लुप्ताः किम् ? "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः । कथम् अन्यथा न दृश्यन्ते इति भावः । अत्र तिमिरे तरुशैलाद्यनेकविषयरञ्जकत्वादिकम् आरोप्य सन्दिग्धः इति सन्देहालङ्कारः । * "अन्ये तु नुशब्दस्य सम्भावनाद्योतकत्वात् उत्प्रेक्षाप्रकारमिममाचक्षते" इति अलङ्कारसर्वस्वकारः ॥ १५ ॥

रात्रीति ।— [ श्रीः ] शोभा कर्त्री [ रात्रिरागमलिनानि ] रात्रेः सन्ध्याया रागेण स्वच्छायोपरञ्जनेन मलिनानि अत एव [ विकाशं, रहयन्ति ] त्यजन्ति । रहयतेः त्यागार्थात् शतृप्रत्ययः । [ पङ्कजानि, विहाय ] त्यक्त्वा [ स्पष्टतारकं, नभः ] स्वम् [ इयाय ] प्राप । तथाहि ।—[ सर्वः ] जनः [ निरापदि ] निर्बाधस्थले [ वस्तुं ] स्थातुम् । "एकाच उपदेशेऽनुदात्तात्" ( ७।२।१० पा० ) इति इट् प्रतिषेधः । "घसिश्च सान्तेषु वसिः प्रसारिणी" इति वचनात् । [ इच्छति ] ॥ १६ ॥

---

* सन्देहभेदः संशय इति केचित् । तथाहि प्रकाशकारः ।—"ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः" इति । अत्र न भेदोक्तिः इति संक्षेपः ।

चूर्णमुष्टिरिव लम्भितकान्तिः
वासवस्य दिशमंशुसमूहः ॥ १७ ॥
उज्झती शुचमिवाशु तमिस्राम्
अन्तिकं व्रजति तारकराजे ।
दिक् प्रसादगुणमण्डनमूहे
रश्मिहासविशदं मुखमैन्द्री ॥ १८ ॥

---

अस्तादिसन्ध्यान्तं वर्णयित्वा चन्द्रोदयवर्णनम् आरभते, व्यानशे इति।—[ शशधरेण ] चन्द्रेण [ विमुक्तः ] त्यक्तः [ केतकीकुसुमकेसरपाण्डुः ] केतकीकुसुमकेसरः इव पाण्डुः, [ लम्भितकान्तिः ] लम्भिता प्रापिता कान्तिः यस्य सः [ अंशुसमूहः ] रश्मिसमूहः [ चूर्णमुष्टिः इव ] चूर्णस्य कर्पूरक्षोदस्य मुष्टिः इव। मुष्टिशब्दस्य द्विलिङ्गत्वे अपि अत्र पुंलिङ्गता एव ग्राह्या, उपमेयानुसारात्। [ वासवस्य ] इन्द्रस्य [ दिशं ] प्राचीं [ व्यानशे ] व्याप। अनेन दिशानिशाकरयोः नायिकानायकौपम्यं गम्यते ॥ १७ ॥

उज्झतीति।—इन्द्रस्य इयम् [ ऐन्द्री, दिक् ] प्राची [ तारकराजे ] नक्षत्रनाथे। "कनीनिकायां नक्षत्रे तारकं तारकापि च" इति विश्वः। [ अन्तिकं ] समीपं [ व्रजति ] सति [ आशु तमिस्राम् ] अन्धतमसम्। "तमिस्रा स्त्री ध्वान्तनिशि निश्यन्धतमसे न ना" इति वैजयन्ती। [ शुचम् इव ] विरहदुःखम् इव इत्यर्थः। [ उज्झती ] विजहती, [ प्रसादगुणमण्डनं] प्रसादः नैर्मल्यम् एव गुणः, सः एव मण्डनं यस्य तत्। [ रश्मिहासविशदं ] रश्मयः हासः इव, तेन विशदं मुखम् इव [ मुखम् ] अग्रभागम्। श्लिष्टा उपमा इयम्।

नीलनीरजनिभे हिमगौरं
शैलरुद्धवपुषः सितरश्मेः ।
खे रराज निपतत्करजालं
वारिधेः पयसि गाङ्गमिवाम्भः ॥ १९ ॥

द्यां निरुन्धदतिनीलघनाभं
ध्वान्तमुद्यतकरेण पुरस्तात् ।
क्षिप्यमाणमसितेतरभासा
शम्भुनेव करिचर्म चकासे ॥ २० ॥

[ ऊढे ] वहति स्म । अत्र दिक्चन्द्रयोः नायिकानायकौपम्यं गम्यते ॥ १८ ॥

नीलेति ।—[ शैलरुद्धवपुषः ] उदयगिरितिरोहितमण्डलस्य [ सितरश्मेः ] इन्दोः सम्बन्धि [ नीलनीरजनिभे ] श्यामकमलतुल्ये [ खे ] आकाशे [ निपतत् ] प्रसरत् । [ हिमगौरं ] हिमवत् गौरं शुभ्रं [ करजालम् ] अंशुसमूहः [ वारिधेः पयसि ] निपतत् [ गाङ्गम् अम्भः इव रराज ] । उपमानेऽपि विशेषणानि योज्यानि ॥ १९ ॥

द्यामिति ।—[ द्यां निरुन्धत् ] आकाशम् आवृण्वत् [ अतिनीलघनाभं ] मेचकम् । [ उद्यतकरेण ] उद्यताः कराः अंशवः हस्ताश्च यस्य तेन । [ असितेतरभासा ] असिताभ्यः इतराः शुभ्राः भासः यस्य तेन चन्द्रेण [ पुरस्तात् ] प्राच्याम् अग्रे च [ क्षिप्यमाणं ] नुद्यमानं [ ध्वान्तं शम्भुना ] क्षिप्यमाणं

अन्तिकान्तिकगतेन्दुविसृष्टे
जिह्मतां जहति दीधितिजाले ।
निःसृतस्तिमिरभारनिरोधात्
उच्छ्वसन्निव रराज दिगन्तः ॥ २१ ॥
लेखया विमलविद्रुमभासा
सन्ततं तिमिरमिन्दुरुदासे ।

[ करिचर्म इव चकासे ]। उपमाऽपि अपि विशेषणानि योज्यानि ॥ २० ॥ *

अन्तिकेति ।—[ अन्तिकान्तिकगतेन्दुविसृष्टे ] अन्तिकान्तिके अतिसमीपे। "प्रकारे गुणवचनस्य" ( ८।१।१२ पा० )। इति द्विर्भावः। कर्मधारयवद्भावात् सुपः लुक्। † अन्तिकान्तिकगतेन इन्दुना विसृष्टे मुक्ते [ दीधितिजाले ] किरणसमूहे [ जिह्मतां ] सङ्कोचं [ जहति ] त्यजति सति [ तिमिरभारनिरोधात् ] तिमिरभारैः तमःस्तोमैः निरोधात् उपरोधात् [ निःसृतः ] निर्गतः [ दिगन्तः उच्छ्वसन् ] प्राणन् [ इव रराज ] इति उत्प्रेक्षालङ्कारः ॥ २१ ॥

लेखयेति ।—[ इन्दुः विमलविद्रुमभासा ] स्वच्छप्रवालसवर्णया [ लेखया ] कलया [ सन्ततं ] सान्द्रं [ तिमिरम् आदिवराहः, कनकटङ्कपिशङ्ग्या ] कनकस्य टङ्कः शिलाभेदकं

---

* श्लिष्टार्थविशेषणयोगैः उपमानोपमेयसाधारणधर्मसम्बन्धविधानेन श्लेषमूला उपमा इति ।

† "कर्मधारयवदुत्तरेषु" ( ८।१।११ पा० )। इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत् कार्य्यम्। प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि। अत्र सुब्लोप एवाभीष्ट इति ।

दंष्ट्रया कनकटङ्कपिशङ्ग्या
मण्डलं भुव इवादिवराहः ॥ २२ ॥
दीपयन्नथ नभः किरणौघैः
कुङ्कुमारुणपयोधरगौरः ।
हेमकुम्भ इव पूर्वपयोधेः
उन्ममज्ज शनकैस्तुहिनांशुः ॥ २३ ॥
उद्गतेन्दुमविभिन्नतमिस्रां
पश्यति स्म रजनीमवितृप्तः ।

शस्त्रम् । “टङ्कः पाषाणदारणः” इत्यमरः । तद्वत् पिशङ्ग्या लोहितवर्णया । “पिशङ्गादुपसंख्यानम्” ( वा० ) इति ङीप् । [ दंष्ट्रया भुवः मण्डलम् इव, उदासे ] उच्चिक्षेप । अस्यतेः कर्त्तरि लिट् । सोपसर्गात् अस्यतेः आत्मनेपदं विकल्पात् ॥ २२ ॥ *

दीपयन्निति ।—[ अथ ] उदयानन्तरं [ किरणौघैः नभः, दीपयन् ] प्रकाशयन् [ कुङ्कुमारुणपयोधरगौरः ] कुङ्कुमेन अरुणः यः पयोधरः कुचः तद्वत् गौरः अरुणः, उदयरागात् इति भावः । [ तुहिनांशुः ] इन्दुः [ शनकैः, पूर्वपयोधेः ] पूर्वसागरात् [ हेमकुम्भ इव ] हेम्नः कुम्भः इव [ उन्ममज्ज ] उज्जगाम इति उत्प्रेक्षा ॥ २३ ॥

उद्गतेन्दुमिति ।—[ लोकः ] जनः । “लोकस्तु भुवने जने” इत्यमरः । [ उद्गतेन्दुम् ] उदितचन्द्राम् [ अविभिन्नतमिस्राम् ]

* “उपसर्गादस्यत्यूह्योर्वेति वाच्यम्” (वा०) ।

व्यंशुकस्फुटमुखीमतिजिह्मां
व्रीडया नववधूमिव लोकः ॥ २४ ॥
न प्रसादमुचितं गमिता द्यौः
नोद्धृतं तिमिरमद्रिवनेभ्यः ।
दिङ्मुखेषु न च धाम विकीर्णं
भूषितैव रजनी हिमभासा ॥ २५ ॥
मानिनीजनविलोचनपातान्
उष्णवाष्पकलुषान् प्रतिगृह्णन् ।

---

अनिःशेषितध्वान्तां [रजनीं, व्यंशुकस्फुटमुखीं] व्यंशुकम् अपनीतावगुण्ठनम् अत एव स्फुटं दृश्यमानं मुखं यस्याः सा तां तथापि [ व्रीड़या, अतिजिह्मां ] वक्रां [ नववधूं ] नवोढ़ाम् "वधूर्नवोढ़ायोषायां स्नुषाभार्य्याङ्गनासु च" इति धरणिः । स्त्रियम् [ इव अविद्गः ] सन् [ पश्यति स्म ] ॥ २४ ॥

नेति ।—[ हिमभासा ] चन्द्रेण [ द्यौः ] आकाशम् [ उचितं ] योग्यं [ प्रसादं न गमिता, अद्रिवनेभ्यः] अद्रयः वनानि च तेभ्यः [ तिमिरं, न उद्धृतं ] न उत्सारितं [ दिङ्मुखेषु ] दिशां मुखेषु [ धाम ] तेजः [च, न विकीर्णं] न पर्य्यस्तं, तथापि [ रजनी भूषिता एव ] किमुत उक्तगुणसम्पत्तौ इति भावः । अत्र प्रसाधनकारणाभावेऽपि तत्कार्य्यभूषणोक्त्या विभावनालङ्कारः ॥ २५ ॥

मानिनीति ।—[ उदितः शीतमयूखः, उष्णवाष्पकलुषान्] उष्णेन विरहतप्तेन वाष्पेण कलुषान् आविलान् [ मानिनीजनविलोचनपातान् ] मानिनीजनस्य कलहान्तरितनायिकाजनस्य विलोचनपातान् मानभङ्गजनितरोषेण भीषणान् इति भावः ।

मन्दमन्दमुदितः प्रययौ खं
भीतभीत इव शीतमयूखः ॥ २६ ॥
श्लिष्यतः प्रियवधूरुपकण्ठं
तारकास्ततकरस्य हिमांशोः ।
उद्वमन्नभिरराज समन्तात्
अङ्गराग इव लोहितरागः ॥ २७ ॥

"कोपात् कान्तं पराणुद्य पश्चात्तापसमन्विता। कलहान्तरिता प्रोक्ता नायिका नयशालिभिः॥" इति दशरूपके। [प्रतिगृह्णन्] स्वीकुर्वन्, अपराधस्य अपरिहार्य्यत्वात् इति भावः। अत एव [भीतभीतः] भीतप्रकारः [इव] इति उत्प्रेक्षा। [मन्दमन्दं] मन्दप्रकारम्, उभयत्र अपि "प्रकारे गुणवचनस्य" (८।१।१२ पा०) इति द्विर्भावे कर्मधारयवद्भावात् सुब्लोपः। [खम्] आकाशं [प्रययौ] ॥ २६ ॥ *

श्लिष्यत इति।—तताः प्रसारिताः कराः एव कराः अंशुहस्ताः येन तस्य [ततकरस्य तारकाः] एव [प्रियवधूः उपकण्ठम्] अन्तिके कण्ठे वा। अत्यन्तसंयोगे द्वितीया विभक्त्यर्थे अव्ययीभावः। † [श्लिष्यतः] प्रत्यासीदतः आलिङ्गतश्च [हिमांशोः] सम्बन्धी [समन्तात्, उद्वमन्] उत्सृजन्। अर्थान्तरत्वात् अकर्मकत्वम्। "धातोरर्थान्तरे वृत्तेः" (कारि०) इति वचनात्। [लोहितरागः] अरुणप्रभः [अङ्गरागः इव अभिरराज]। आलिङ्गनात् रागः गलति इति प्रसिद्धिः। अत्र रूपकोपमयोः अङ्गाङ्गिभावेन सङ्करः॥ २७ ॥

* अपरिहार्य्याऽपराधत्वात् मानिनीभीषणविलोचनपातान् स्वीकुर्व्वन् अत एव भयाकुलः इति काव्यलिङ्गमङ्गम् उत्प्रेक्षायाः।

† "अव्ययं विभक्ति" (२।१।६ पा०)।

प्रेरितः शशधरेण करौघः
संहतान्यपि नुनोद तमांसि ।
क्षीरसिन्धुरिव मन्दरभिन्नः
काननान्यविरलोच्चतरूणि ॥ २८ ॥

शारतां गमितया शशिपादैः
छायया विटपिनां प्रतिपेदे ।
न्यस्तशुक्लबलिचित्रतलाभिः
तुल्यता वसतिवेश्ममहीभिः ॥ २९ ॥

प्रेरित इति ।—[ शशधरेण ] चन्द्रेण [ प्रेरितः ] विसृष्टः [ करौघः, संहतानि ] सान्द्राणि [ अपि तमांसि, मन्दरभिन्नः ] मन्दरेण मन्दराचलेन भिन्नः नुन्नः [ क्षीरसिन्धुः, अविरलोच्च-तरूणि ] अविरलाः सान्द्राः उच्चाः उन्नताश्च तरवः येषु तानि [ काननानि इव, नुनोद ] दूरीचकार ॥ २८ ॥

शारतामिति ।—[ शशिपादैः ] चन्द्ररश्मिभिः । "पादा रश्म्यङ्घ्रितुर्य्यांशाः" इत्यमरः । [शारतां] शबलतां [ गमितया ] "शारः शबलपीतयोः" इति विश्वः । [ विटपिनां ] तरूणां [ छायया, न्यस्तशुक्लबलिचित्रतलाभिः ] न्यस्तैः निक्षिप्तैः शुक्लबलिभिः श्वेतपुष्पाद्युपहारैः चित्राणि तलानि उपरिभागाः यासां ताभिः । "करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्" इत्यमरः । [ वसतिवेश्ममहीभिः ] निवासगृह-भूमिभिः [ तुल्यता ] साम्यं [ प्रतिपेदे ] प्राप्ता । कर्मणि लिट् । आर्थी इयम् उपमा ॥ २९ ॥

आतपे धृतिमता सह बध्वा
यामिनीविरहिणा विहगेन।
सेहिरे न किरणा हिमरश्मेः
दुःखिते मनसि सर्वमसह्यम्॥ ३०॥
गन्धमुद्धतरजः कणवाही
विक्षिपन् विकसतां कुमुदानाम्।

---

आतप इति।—[ आतपे ] दुःखकरे अपि इति भावः। [ बध्वा ] चक्रवाक्या [ सह ] अत एव [ धृतिमता ] सन्तोषवता [ यामिनीविरहिणा ] यामिनीषु विरहिणा नियतविरहेण अत एव [ विहगेन ] चक्रवाकेण [ हिमरश्मेः ] चन्द्रस्य [ किरणा न सेहिरे ]। तथाहि।—[ दुःखिते ] सञ्जातदुःखे [ मनसि सर्वं ] मनोहरम् अपि इति भावः। [ असह्यं ] सोढ़म् अशक्यम्। "शकिसहोश्च" ( ३।१।८८ पा० ) इति यत्प्रत्ययः। पूर्वं तु "आतपाः" इति पेठुः। तत्र बध्वा सह आतपाः अपि सेहिरे; तद्विरहिणा तु शशिकिरणाः अपि न सेहिरे इति योज्यम्। फलं तु समानम्॥ ३०॥ *

गन्धमिति।—[ अपां कणवाही ]। योग्यान्वये व्यवधानम् अपि सोढ़व्यम्। [ विकसतां कुमुदानां गन्धं ] सौरभम् [ उद्धतरजः ] उद्धतं रजः परागः यस्मिन् कर्मणि तत् यथा तथा। "शेषाद्विभाषा" ( ५।४।१५४ पा० ) इति विकल्पात् न कप्। [ विक्षिपन् ] विकिरन् इत्थं शिशिरः सुरभिः [ यामिनीमरुत् ] रात्रिवायुः [ परिलीनविहङ्गाः ] परितः

---

* अत्र सामान्येन विशेषसमर्थनम् इति अर्थान्तरन्यासः।

आदुधाव परिलीनविहङ्गाः
यामिनीमरुदपां वनराजीः ॥ ३१ ॥
संविधातुमभिषेकमुदासे
मन्मथस्य लसदंशुजलौघः ।
यामिनीवनितया ततचिह्नः
सोत्पलो रजतकुम्भ इवेन्दुः ॥ ३२ ॥
ओजसापि खलु नूनमनूनं
नासहायमुपयाति जयश्रीः ।

लीनाः शयिताः विहङ्गाः यासु ताः [ वनराजीः, आदुधाव ] ईषत् कम्पयामास, विहङ्गशयनाविरोधेन वनराजिः किञ्चित् कम्पिता इत्यर्थः । "आङीषदर्थेऽभिव्याप्तौ" इत्यमरः । यथा कश्चित् कामिनीं गन्धोदकादिना सिञ्चन् आकर्षति तद्वत् इति भावः ॥ ३१ ॥

संविधातुमिति ।—[ यामिनीवनितया ] यामिनी वनिता इव तया रात्रिरूपया कान्तया [मन्मथस्य अभिषेकं] त्रिभुवनजैत्रयात्राभिषेकं [ संविधातुं ] सम्यक् कर्त्तुम् [ लसदंशुजलौघः ] अंशवः जलानि इव तेषाम् ओघः पूरः लसन् यस्मिन् सः, [ ततचिह्नः] स्फुटलाञ्छनः [इन्दुः सोत्पलः रजतकुम्भः इव, उदासे ] उत्क्षिप्तः । अस्यतेः कर्मणि लिट् । अत्र संविधातुम् इति तुमुना प्रतीयमानोत्प्रेक्षया अनुप्राणितः अयम् उपमोत्प्रेक्षयोः सङ्करः ॥ ३२ ॥

ओजसेति ।—[ ओजसा, अनूनम् अपि ] सम्पूर्णम् अपि [असहायं] सहायरहितं, पुरुषम् इति शेषः । [ जयश्रीः न उप-

यद्विभुः शशिमयूखसखः सन्
आददे विजयि चापमनङ्गः ॥ ३३ ॥

सद्मनां विरचनाऽऽहितशोभैः
आगतप्रियकथैरपि दूत्यम् ।
सन्निकृष्टरतिभिः सुरदारैः
भूषितैरपि विभूषणमीषे ॥ ३४ ॥

याति खलु नूनम् ]। कुतः ? [यद्] यस्मात् [ विभुः ] समर्थः अपि [अनङ्गः, शशिमयूखसखः सन्] शशिमयूखानां सखा सहचरः तथोक्तः ससहायः सन् इत्यर्थः। [ विजयि ] विजयशीलम्। "जिदृक्षि" ( ३।२।१५७ पा० ) इत्यादिना इनिप्रत्ययः। [ चापम् आददे ]। विशेषेण सामान्यसमर्थनरूपः अर्थान्तरन्या... ३३ ॥

इत्थम् उद्दीपनसामग्रीम् उपवर्ण्य सम्प्रति तत्कार्य्यभूतं रतिवर्णनम् आरभते, सद्मनामित्यादि।—[ सन्निकृष्टरतिभिः ] आसन्नसुरतोत्सवैः अत एव [ सुरदारैः ] सुरवधूभिः [ आहितशोभैः ] प्राक् एव विहितकेलिगृहमण्डनैः अपि पुनः [ सद्मनां ] केलिगृहाणां [ विरचना ] मण्डनम् [ ईषे ] अभिलेषे। इषेः कर्मणि लिट्। [आगतप्रियकथैः अपि] प्राप्तप्रियजनवृत्तान्तैः अपि। दूतस्य कर्म [ दूत्यं ] दूतीव्यापारः ईषे। "दूतवणि...ं च" ( वा० ) इति दूतस्य भावकर्मणोः वा यप्रत्ययः। तथा [भूषितैः अपि विभूषणं ] प्रसाधनम् ईषे, औत्सुक्यातिरेकात् इति भावः॥ ३४ ॥

न स्रजो रुरुचिरे रमणीभ्यः
चन्दनानि विरहे मदिरा वा ।
साधनेषु हि रतेरुपधत्ते
रम्यतां प्रियसमागम एव ॥ ३५ ॥

प्रस्थिताभिरधिनाथनिवासं
ध्वंसितप्रियसखीवचनाभिः ।
मानिनीभिरपहस्तितधैर्य्यैः
सादयन्नपि मदोऽवललम्बे ॥ ३६ ॥

नेति ।—[ विरहे ] वियोगावस्थायां [ स्रजः ] माल्यानि [ चन्दनानि ] गन्धाः [ मदिराः वा ] मद्यानि वा [रमणीभ्यः] "रुच्यर्थानां प्रीयमाणः" ( १।४।३३ पा० ) इति सम्प्रदानत्वात् चतुर्थी । [ न रुरुचिरे ] न रोचन्ते स्म । [ हि ] यस्मात् [ प्रियसमागमः एव, रतेः साधनेषु ] स्रगादिषु [ रम्यतां ] मनोहरत्वं, रुचिकरत्वम् इति यावत्. [ उपधत्ते ] आधत्ते, तदभावात् अरुचिः युक्ता एव इत्यर्थः । अत एव वैधर्म्यात् कारणेन कार्य्यसमर्थनरूपः अर्थान्तरन्यासः । रम्यन्ते एषु इति रम्याणि । "पोरदुपधात्" ( ३।१।९८ पा० ) इति यत्-प्रत्ययः । "कृत्यल्युटो बहुलम्" (३ ३।११३ पा०) इति बहुल-ग्रहणात् अधिकरणार्थः ॥ ३५ ॥

प्रस्थिताभिरिति ।—[ अधिनाथनिवासं ] प्रियगृहं प्रति [प्रस्थिताभिः] प्रचलिताभिः [ध्वंसितप्रियसखीवचनाभिः] ध्वंसितानि खण्डितानि प्रियसखीवचनानि स्वयं प्रस्थानं लाघवाय इति एवंरूपाणि याभिः ताभिः [ मानिनीभिः ] कोपनाभिः ।

कान्तवेश्म बहु सन्दिशतीभिः
यातमेव रतये रमणीभिः ।
मन्मथेन परिलुप्तमतीनां
प्रायशः स्खलितमप्युपकारि ॥ ३७ ॥

आशु कान्तमभिसारितवत्याः
योषितः पुलकरुद्धकपोलम् ।
निर्जिगाय मुखमिन्दुमखण्डं
खण्डपत्रतिलकाकृति कान्त्या ॥ ३८ ॥

"स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये" इति लक्षणात् । [ अपहस्तितधैर्य्यः ] अपहस्तितं निरस्तं धैर्य्यं येन सः, तथा [ सादयन् अपि ] मानं शरीरं च कर्षयन् अपि, सदोषः अपि इत्यर्थः [ मदः, अवललम्बे ] स्वीकृतः, अज्ञानव्याजेन लाघवापह्नवसौकर्य्यात् इति भावः ॥ ३६ ॥

कान्तेति ।—[रतये] सुरताय [बहु सन्दिशतीभिः] अनेकं वाचिकं कथयन्तीभिः, सन्देशव्यसनात् गन्तव्यम् अपि अजानतीभिः इत्यर्थः । [ रमणीभिः कान्तवेश्म, यातं ] प्राप्तम् [ एव ] ; न तु मध्येमार्गात् निवृत्तम् इत्यर्थः । तथाहि ।—[मन्मथेन,परिलुप्तमतीनां] भ्रष्टमतीनां [स्खलितं] विरुद्धाचरणम् [अपि प्रायशः उपकारि] भवति ॥ ३७ ॥ *

आश्विति ।—[ आशु कान्तम्, अभिसारितवत्याः ] अभिगतवत्याः । स्वार्थे णिच् । [ योषितः ] सम्बन्धि [ पुलकरुद्धकपोलं ] पुलकैः रुद्धौ आवृतौ कपोलौ यस्य तत् [ खण्डपत्र-

* अत्रापि सामान्येन विशेषसमर्थनादर्थान्तरन्यासः ।

उच्यतां स वचनीयमशेषं
नेश्वरे परुषता सखि ! साध्वी ।
आनयैनमनुनीय कथं वा
विप्रियाणि जनयन्ननुनेयः ? ॥ ३९ ॥
किं गतेन न हि युक्तमुपैतुं
कः प्रिये सुभगमानिनि मानः ।

---

तिलकाकृति ] खण्डा प्रमृष्टा पत्राणां पत्रलेखानां तिलकस्य च आकृतिः सन्निवेशः यस्य तत् तथोक्तं [ मुखं कान्त्या, अखण्डं ] पूर्णम् [ इन्दुं, निर्जिगाय ] जयति स्म । इति आर्थी इयम् उपमा । "जयति द्वेष्टि" इति दण्डिना सादृश्यार्थेषु गणनात् ॥ ३८ ॥

अथ युग्मेन सखीनायिकासंवादम् आह, उच्यतामिति ।—तत्र नायिका आह ।—[ सः ] धूर्त्तः [ अशेषम् ] अखिलं [ वचनीयं ] वक्तव्यम् [ उच्यतां ], निःशङ्कम् उपालभ्यताम् इत्यर्थः । ब्रूञो दुहादित्वात् अप्रधाने कर्मणि लोट् । अथ सखी आह ।—हे [ सखि ! ईश्वरे ] भर्त्तरि नायके विषये [ परुषता ] पारुष्यं [ न साध्वी ] न हिता । अथ नायिका आह ।—हे सखि ! तर्हि [ एनम्, अनुनीय ] सान्त्वयित्वा [ आनय ] । पुनः सखी आह ।—[ विप्रियाणि जनयन् ] अप्रियाणि कुर्वन् सः [ कथं वा अनुनेयः ? ] अनुनयार्हः ? ॥ ३९ ॥

किमिति ।—पुनः नायिका आह ।—तर्हि [ गतेन ] तं प्रति गमनेन [ किं ? ] कः अर्थ इत्यर्थः । अतः [ उपैतुं ] गन्तुं [ न युक्तं हि ] । पुनः सखी आह ।—हे सखि ! [सुभग-

योषितामिति कथासु समेतैः
कामिभिर्बहुरसा धृतिरूहे ॥ ४० ॥

॥ युग्मम् ॥

योषितः पुलकरोधि दधत्याः
घर्मवारि नवसङ्गमजन्म ।
कान्तवक्षसि बभूव पतन्त्याः
मण्डनं लुलितमण्डनतैव ॥ ४१ ॥

मानिनि ] सौन्दर्य्यमानिनि । सुभगम् आत्मानं मन्यते इति । "आत्ममाने खश्च" ( ३।२।८३ पा० ) इति चकारात् णिनि-प्रत्ययः । तस्मिन् [ प्रिये ] विषये [ कः मानः ? ] मानः न कर्त्तव्य इत्यर्थः । यद्वा न हि इत्यादि सखीवाक्यम् । तत्र न हि इत्येकं वाक्यम् । तद्युक्तं सखि इत्यर्थः । हे सखि ! किन्तु उपैतु युक्तं ; कुतः ? सुभगमानिनि प्रिये कः मानः ? तादृग्-जनस्य दुर्लभत्वात् इति भावः । [इति] एवंरूपासु [ योषितां, कथासु ] विषये [ समेतैः ] समीपम् आगत्य आकर्णयद्भिः इत्यर्थः । [कामिभिः, बहुरसा] अनेकस्वादा [ धृतिः ] सन्तोषः [ ऊहे ] ऊढ़ा । अत्र रौच्यौत्सुक्यनिर्वेदाद्यनेकभावशावल्य-परिपूर्णकान्ताकथाकर्णनात् उत्तरोत्तरम् अपूर्वहृदयानन्दनिष्य-न्दम् आनन्दसन्दोहम् अविन्दन् इत्यर्थः । प्रायेण अत्र प्रौढ़ाः कलहान्तरिताश्च नायिकाः ॥ ४० ॥

योषितः इति ।—[ पुलकरोधि ] रोमाञ्चव्यापि [ नव-सङ्गमजन्म ] नवसङ्गमेन जन्म यस्य तत् [ घर्मवारि ] स्वेदोदकं [ दधत्याः ] इति सात्त्विकोक्तिः । [ कान्तवक्षसि पतन्त्याः ] इति औत्सुक्योक्तिः । [ योषितः ] या [ लुलितमण्डनता ]

शीधुपानविधुरासु निगृह्णन्
मानमाशु शिथिलीकृतलज्जः ।
सङ्गतासु दयितैरुपलेभे
कामिनीषु मदनो नु मदो नु ॥ ४२ ॥
ह्रारि चक्षुरधिपाणि कपोलौ
जीवितं त्वयि कुतः कलहोऽस्याः ।

उत्कृष्टप्रसाधनत्वम् । भावे तल् । सा [ एव मण्डनं बभूव ] । तादृशफलत्वात् तस्य इति भावः ॥ ४१ ॥

शीध्विति ।—[ शीधुपानविधुरासु ] शेरते अनेन इति शीधु पक्वेक्षुरसविकारः मद्यविशेषः, तस्य पानेन विधुरासु विमूढासु तथा [ दयितैः, सङ्गतासु ] स्वयं प्राप्तासु च [ कामिनीषु ] अतिमानवतीषु [ आशु, मानं ] कोपं [ निगृह्णन् ] निवर्त्तयन् [ शिथिलीकृतलज्जः ] शिथिलीकृता लज्जा येन सः [ मदनः नु ? मदः नु ? उपलेभे] लक्ष्यते स्म इत्यर्थः । प्रियसमागमशीधुपानरूपोभयकारणाभङ्गात् उभयथा माननिग्रहाद्यनुभावसाधारण्यात् च सन्देहः, सः एव अलङ्कारः ॥ ४२ ॥ *

ह्रारीति ।—[ ह्रारि ] त्वदागमनमार्गे एव [ चक्षुः ] इति औत्सुक्योक्तिः । [ अधिपाणि ] पाणौ करे [ कपोलौ ], इति चिन्तोक्तिः । किं बहुना ? [ जीवितं त्वयि ] त्वदधीनं, त्वां विना न जीवति इत्यर्थः, इति गाढानुरागोक्तिः । अतः [ अस्याः, कलहः ] विग्रहः [ कुतः ? इति ] एवं [ कामिनां

* अत्र भेदानुक्त्या संशयः, तथा च प्रकाशकारः ।—"ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः" इति । अलङ्कारसर्व्वस्वकारमतेन तु अयमुत्प्रेक्षाप्रकारः इति ।

कामिनामिति वचः पुनरुक्तं
प्रीतये नवनवत्वमियाय ॥ ४३ ॥

साचि लोचनयुगं नमयन्ती
रुन्धती दयितवक्षसि पातम् ।
सुभ्रुवो जनयति स्म विभूषां
सङ्गतावुपरराम च लज्जा ॥ ४४ ॥

सव्यलीकमवधीरितखिन्नं
प्रस्थितं सपदि कोपपदेन ।

प्रीतये पुनः उक्तं ] पुनः पुनः उच्यमानं [ वचः ] दूतीवाक्यं [ नवनवत्वं ] नवप्रकारत्वम् अपूर्ववद्भावम् [इयाय] । प्रकारार्थे द्विर्भावः । कर्मधारयवद्भावात् सुपः लुक् । * कान्तानुराग प्रकटनात् कामिनः प्रहृष्यन्ति इति भावः । कलहान्तरिता इयम् ॥ ४३ ॥

साचीति ।—[ लोचनयुगं, साचि ] तिर्य्यक् [ नमयन्ती ] प्रिये तिर्य्यक् पातयन्ती, न तु समरेखया इत्यर्थः । [ दयित-वक्षसि पातं रुन्धती] दृष्टम् अपि प्रतिबध्नती [ लज्जा, सुभ्रुवः ] नायिकायाः [ विभूषां ] शोभां [ जनयति स्म, सङ्गतौ ] सुरत-प्रसङ्गे सति [ उपरराम च ] । एवं यतः तदा चाभूषणम् एव इति भावः । "विभाषाकर्मकात्" ( १।३।८५ पा० ) इति परस्मैपदम् । ४४ ॥ †

सव्यलीकमिति ।—[ सव्यलीकं ] सापराधम् अत एव

* "प्रकारे गुणवचनस्य" ( ८।१।१२ पा० ) इति ।

† नायिका चात्र मुग्धा ।

योषितः सुहृदिव स्म रुणद्धि
प्राणनाथमभिवाष्पनिपातः ॥ ४५ ॥
शङ्कितायं कृतवाष्पनिपाताम्
ईर्ष्यया विमुखितां दयिताय।
मानिनीमभिमुखाहितचित्तां
शंसति स्म घनरोमविभेदः ॥ ४६ ॥

[ अवधीरितखिन्नं ] अवधीरितः अवज्ञातः सन् खिन्नः तम्। "पूर्वकाल" ( २।१।३८ पा० ) इत्यादिना तत्पुरुषः। [ सपदि, कोपपदेन ] कोपस्य पदेन व्याजेन [ प्रस्थितं ] निर्गच्छन्तं [ प्राणनाथं ] प्रियं [ योषितः ] सम्बन्धी [ अभिवाष्पनिपातः ] आभिमुख्येन अश्रुमोक्षः [ सुहृत् इव, रुणद्धि स्म ] रुरोध। वाष्पपातस्य मन्युमोक्षलिङ्गतया प्रस्थानप्रतिबन्धकत्वात् सुहृदौपम्यम्। इयम् अधीरा खण्डिता।—"ज्ञातेऽन्यासङ्गिनि पत्यौ खण्डितेर्ष्याकषायिता। अधीरास्तु विमुञ्चन्ती विज्ञेया चात्र नायिका॥" इति दशरूपके ॥ ४५ ॥

शङ्कितायेति।—[शङ्किताय दयिताय]* अविश्वस्ताय नायकाय [ ईर्ष्यया, विमुखितां ] विमुखीकृताम्, अत एव [ कृतवाष्पनिपातां मानिनीं, घनरोमविभेदः ] सान्द्रपुलकोदयः [अभिमुखाहितचित्तां ] अभिमुखम् आहितं चित्तं यया तां, निष्कोपाम् इत्यर्थः। [शंसति स्म] व्यनक्ति स्म इत्यर्थः। अन्यथा सात्त्विकानुदयात् इति भावः। अत्र अपि पूर्वोक्ता एव नायिका ॥ ४६ ॥

* "क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" (वा०) इति चतुर्थी।

लोलदृष्टि वदनं दयितायाः
चुम्बति प्रियतमे रभसेन ।
व्रीडया सह विनीवि नितम्बात्
अंशुकं शिथिलतामुपपेदे ॥ ४७ ॥
क्षीतया गलितनीवि निरस्यन्
अन्तरीयमवलम्बितकाञ्चि ।

अथ सम्भोगशृङ्गारम् आह। स आन्तरः वाह्यश्च, तत्र वाह्यरतम् आह, लोलेति।—[ प्रियतमे लोलदृष्टि ] चञ्चलेक्षणं [ दयितायाः वदनं, रभसेन ] बलात्कारेण [ चुम्बति ] सति [ विनीवि ] निर्गतबन्धनम् [ अंशुकं नितम्बाद् व्रीडया सह शिथिलताम् उपपेदे] उभयम् अपि शिथिलम् आसीत् इत्यर्थः। अत्र व्रीडांशुकरूपसम्बन्धिभेदभिन्नवृत्तिस्रंसनरूपशैथिल्यस्य अभेदाध्यवसायनिबन्धनातिशयोक्तिमूलः सहोक्तिविशेषः अलङ्कारः। अत एव व्रीडांशुकौपम्यञ्च कल्प्यम्। अत्र वात्स्यायनः,—"वाह्यमाभ्यन्तरं चेति द्विविधं रतमुच्यते। तत्राद्यं चुम्बनाश्लेषनखदन्तक्षतादिकम्। द्वितीयं सुरतं साक्षान्नानाकारेण [illegible]म्" ॥ ४७ ॥

[illegible]तयेति।—[ गलितनीवि ] गलितबन्धनं तथापि [ अव[illegible]काञ्चि ] अवलम्बिता काञ्ची येन तत्, काञ्चीलग्नम् [illegible]। तत् [ अन्तरीयम् ] अधोऽंशुकम्। "अन्तरीयोप[illegible]परिधानान्यधोऽंशुके" इत्यमरः। [ निरस्यन् ] आक्षि[illegible] [हृदयेशः] प्रियः [ क्षीतया ] वस्त्रापगमात् लज्जितया। [illegible]तोः कर्त्तरि क्तः। [ दयितया, मण्डलीकृतपृथुस्तनभारं ]

मण्डलीकृतपृथुस्तनभारं
सस्वजे दयितया हृदयेशः ॥ ४८ ॥

आहृता नखपदैः परिरम्भाः
चुम्बितानि घनदन्तनिपातैः।
सौकुमार्य्यगुणसम्भृतकीर्त्तिः
वाम एव सुरतेष्वपि कामः ॥ ४९ ॥

मण्डलीकृतः वर्त्तुलीकृतः पृथुः स्तनभारः यस्मिन् कर्मणि तत् यथा तथा, गाढ़म् इत्यर्थः। [ सस्वजे ] आश्लिष्टः। प्रियदृष्टेः प्रतिबन्धार्थम् इत्यर्थः ॥ ४८ ॥

आहृता इति।—[ परिरम्भाः ] आलिङ्गनानि [ नखपदैः ] हेतुभिः [ आहृताः ] अभिमताः। "हेतौ" (२।३।२३ पा० ) इति तृतीया। तथा [चुम्बितानि] चुम्बनानि [घनदन्तनिपातैः] गाढ़दन्तक्षतैः हेतुभिः आहृतानि इति लिङ्गविपरिणामः। सुरतसुखोद्दीपकत्वात् नखदन्तक्षतपूर्वकेषु आलिङ्गनचुम्बनेषु आदरः संवृत्तः इत्यर्थः। ननु सुकुमारे कामतन्त्रे कथं पीड़ाकरेषु आदरः इति न वाच्यम्? इति आह, सौकुमार्य्येति।— [ सौकुमार्य्यगुणसम्भृतकीर्त्तिः ] सौकुमार्य्यम् एव गुणः, तेन सम्भृतकीर्त्तिः लब्धयशाः [ कामः, सुरतेषु ] सम्भोगेषु [ अपि ], न केवलं विप्रलम्भेषु इति भावः। [ वामः ] क्रूरः [ एव ] सुकुमारः कामः इति वादमात्रम्। वस्तुतस्तु पीड़यन् एव सुखम् आवहति इति भावः। सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः ॥ ४९ ॥

पाणिपल्लवविधूननमन्तः
सीत्कृतानि नयनार्द्धनिमेषाः।
योषितां रहसि गद्गदवाचाम्
अस्त्रतामुपययुर्मदनस्य ॥ ५० ॥
पातुमाहितरतीन्यभिलेषुः
तर्षयन्त्यपुनरुक्तरसानि।

अथ आभ्यन्तरं रतम् आह, पाणीति।—[ रहसि ] एकान्ते इति विस्रम्भातिशयोक्तिः। [ गद्गदवाचां ] स्खलद्गिरां [योषितां] सम्बन्धीनि [ पाणिपल्लवविधूननं ] पाणिपल्लवयोः विधूननं कम्पनम्, [ अन्तः सीत्कृतानि ] सीत्काराः। एतेन कुट्टमिताख्यः भावः उक्तः।—"अधरपीड़नादौ सुखेऽपि दुःखवदुपचारः कुट्टमितम्" इति लक्षणात्। [ नयनार्द्धनिमेषाः ] नयनानाम् अर्द्धनिमेषाः अर्द्धनिमीलितानि। रहसि एकान्ते गद्गदवाचां योषिताम् इति विशेषणसामर्थ्यात् गद्गदवाक्यं च इति एतानि [ मदनस्य अस्त्रताम् उपययुः ] अस्त्रवत् पुंसाम् उद्दीपनानि आसन् इत्यर्थः। अत्र सीत्कारार्द्धनिमेषादिना सुखपारवश्यं व्यज्यते। तदुक्तं रतिरहस्ये।—"स्रस्तता वपुषि मीलनं दृशोर्मूर्च्छना च रतिलाभलक्षणम्। श्लेषयेत् स्वजघनं मुहुर्मुहुः सीत्करोति गतलज्जिताकुला" ॥ इति ॥ ५० ॥

अथ मधुपानवर्णनम् आरभते, पातुमित्यादिना।—[युवानः, आहितरतीनि ] वर्द्धितरागाणि. अत एव [ अपुनरुक्तरसानि ] पुनःपुनः पानेन अपि अपूर्वस्वादानि, अत एव [ तर्षयन्ति ] तृष्णोत्पादकानि, अतृप्तिकराणि इत्यर्थः। [ सस्मितानि वधूनां

सस्मितानि वदनानि वधूनां
सोत्पलानि च मधूनि युवानः ॥ ५१ ॥
कान्तसङ्गमपराजितमन्यौ
वारुणीरसनशान्तविवादे ।
मानिनीजन उपाहितसन्धौ
सन्दधे धनुषि नेषुमनङ्गः ॥ ५२ ॥
कुप्यताशु भवतानतचित्ताः
कोपितांश्च वरिवस्यत यूनः ।

वदनानि सोत्पलानि मधूनि च पातुम् अभिलेषुः ] इच्छन्ति स्म । अत्र प्रस्तुतानाम् एव वदनानां मधूनां च पानक्रियौपम्यस्य गम्यत्वात् केवलं प्राकरणिकविषयतया तुल्ययोगितालङ्कारः ।— "प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥" इति लक्षणात् ॥ ५१ ॥

कान्तेति ।—[ कान्तसङ्गमपराजितमन्यौ ] कान्तसङ्गमेन पराजितमन्यौ त्यक्तरोषे, तदवधिकत्वात् तस्य इति भावः । किञ्च [ वारुणीरसनशान्तविवादे ] वारुणीरसनेन मध्वास्वादेन शान्तः विवादः वाक्कलहादिः यस्य तस्मिन् ; अतः [ उपाहितसन्धौ ] प्रियैः सह कृतसन्धाने [ मानिनीजने ] विषये [ अनङ्गः धनुषि इषुं न सन्दधे ] सन्धानं न अकरोत् । सिद्धसाध्ये साधनवैयर्थ्यात् इति भावः ॥ ५२ ॥ *

* कान्तसङ्गमपराभूतक्रोधे सुरापानशान्तकलहे अत एव त्यक्तमाने मानिनीजने बाणनिक्षेपप्रयासं न चकारानङ्ग इति पदार्थहेतुकं काव्यलिङ्गम् इति केचित् ।

इत्यनेक उपदेश इव स्म
स्वाद्यते युवतिभिर्मधुवारः ॥ ५३ ॥

भर्तृभिः प्रणयसम्भ्रमदत्तां
वारुणीमतिरसां रसयित्वा।
ह्रीविमोहविरहादुपलेभे
पाटवं नु हृदयं नु वधूभिः ॥ ५४ ॥

कुप्यतेति।—[यूनः] प्रियान् [कुप्यत] यूनां कोपं जनयत। मात्र "क्रुधद्रुह" (१।४।३७ पा०) इत्यादिना यूनां सम्प्रदानत्वे च तुर्थी। तस्य "यं प्रति कोपः" इति नियमात्। अत्र कोपस्तावत् कृत्रिमः इति। [आशु, आनतचित्ताः] अनुकूलचित्ताः [भवत]। [च] किञ्च [कोपितान्, वरिवस्यत] परिचरत। "नमो वरिवश्चित्रङः क्यच्" (३।१।१९ पा०) इति क्यच्। वरिवसः परिचर्य्यायाम् इत्यर्थे तस्य नियमश्च। [इति] एवम् [अनेकः] अनेकप्रकारः यः [उपदेशः] प्रवर्त्तकवाक्यं सः [इव मधुवारः] मधुपानावृत्तिः। "मधुवारा मधुक्रमाः" इत्यमरः। [युवतिभिः स्वाद्यते स्म]। मधुवारस्य कोपादिकार्य्यप्रवर्त्तकत्वसाम्यात् उपदेशः इव इति उत्प्रेक्षा। अनियताः खलु मत्तचेष्टाः इति भावः ॥ ५३ ॥

भर्तृभिरिति।—[भर्तृभिः, प्रणयसम्भ्रमदत्तां] प्रणयसम्भ्रमाभ्यां प्रेमादराभ्यां दत्ताम्। "सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति विश्वः। अत एव [अतिरसाम्] अधिकस्वादां [वारुणीं] वरुणात्मजाम्। "सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा" इत्यमरः। [रसयित्वा] आस्वाद्य [वधूभिः ह्रीविमोहविरहात्] मदेन लज्जाजाड्यापगमात् हेतोः

स्वादितः स्वयमथैधितमानं
लम्भितः प्रियतमैः सह पीतः ।
आसवः प्रतिपदं प्रमदानां
नैकरूपरसतामिव भेजे ॥ ५५ ॥
भ्रूविलासमुभगाननुकर्तुं
विभ्रमानिव वधूनयनानाम् ।

[पाटवं नु ?] पटुत्वं नु ? [हृदयं नु ?] ज्ञानविशेषं नु ? [उपलेभे]। अत एव हृदयस्य तत्कार्य्यज्ञानसामर्थ्यात् हृदयम् एव प्राग्मत् पश्चात् लब्धम् इति सन्देहः। अन्यथा कथं प्रियं प्रति वक्रोक्त्याद्यर्थेषु प्रवृत्तिः ? इति भावः। सन्देहालङ्कारः ॥५४॥

स्वादित इति।—[स्वयं स्वादितः] आदौ स्वयम् एव आदाय पीतः, [अथ] अनन्तरं प्रियतमैः [एधितमानं] वर्द्धितबहुसम्मानं यथा तथा [ लम्भितः ] ग्राहितः, स्वहस्तेन पायितः इत्यर्थः। ततः [ प्रियतमैः सह पीतः ] युगपदेकपात्रेण पीतः इत्यर्थः। [ आसवः प्रमदानां, प्रतिपदं ]*प्रतिवारं [ न एकरूपरसताम् ] अनेकविधस्वादुत्वम्। नञर्थस्य नशब्दस्य सुप्सुपा इति समासः। नञ्समासे नलोपः स्यात्। * [ भेजे इव ] प्राप इव। प्रायेण उपचारविशेषात् भोज्येषु रसविशेषः स्यात् इति भावः। आस्वादनादिपदार्थानाम् अनेकरसताप्राप्तिहेतुत्वात् काव्यलिङ्गं तावत् एकं, स्वादनादीनाम् अनेकधर्माणाम् एकस्मिन् एव सर्वक्रमेण सम्बन्धात् पर्य्यायभेदश्च, तयोश्च संसृष्टयोः अनेकरसत्वोत्प्रेक्षावीजत्वात् तया सह अङ्गाङ्गिभावेन सङ्करः ॥५५॥

* पाणिनिमतेन "अब्राह्मणः" इत्यादौ नञो नकारभागलोपात् अकारस्तिष्ठति। स्वरवर्णे परे तु आदौ "न" भागलोपः पश्चात् अकारात् परं न्-आगमः स्यात्।

आददे मृदुविलोलपलाशैः
उत्पलैश्चषकवीचिषु कम्पः ॥ ५६ ॥
ओष्ठपल्लवविदंशरुचीनां
हृद्यतामुपययौ रमणानाम् ।
फुल्ललोचनविलोलसरोजैः
अङ्गनास्यचषकैर्मधुवारः ॥ ५७ ॥

भ्रूविलासेति ।—[ भ्रूविलाससुभगान् ] भ्रूविलासैः सुभगान् सुन्दरान् [ वधूनयनानां विभ्रमान् अनुकर्त्तुं ] तैः आत्मानं समीकर्त्तुम् [ इव ] इति फलोत्प्रेक्षा । [ मृदुविलोलपलाशैः ] ईषच्चञ्चलदलैः [ उत्पलैः, चषकवीचिषु ] चषकेषु याः वीचयः मधूर्मयः तासु यः [ कम्पः ] सः [ आददे ] स्वीकृतः ; न तु स्वकम्पः तस्य विलोलविशेषणेन एव उक्तत्वात् तत्स्वीकारस्य तदयोगः एव । पूर्वं नेत्रमात्रसाम्यभाजाम् उत्पलानां कम्पमानवीचियोगात् सभ्रूविलासनेत्रसाम्यं जातम् इत्यर्थः ॥ ५६ ॥

ओष्ठेति ।—[ओष्ठपल्लवविदंशरुचीनाम्] ओष्ठः एव पल्लवः तस्य विदंशे दंशने रुचिः अभिलाषः येषां तेषां, मुखसुरापानमिषेण अधरं पिपासताम् इत्यर्थः । [ रमणानां, फुल्ललोचनविलोलसरोजैः ] फुल्लानि लोचनानि एव विलोलसरोजानि येषु तैः । [अङ्गनास्यचषकैः] अङ्गनास्यानि एव चषकाणि पानपात्राणि । "चषकोऽस्त्री पानपात्रम्" इत्यमरः । तैः [ मधुवारः ] मधुपानावृत्तिः [ हृद्यतां ] हृदयप्रियताम् [ उपययौ ] । "हृदयस्य प्रियः" (४।४।८५ पा०) इति यत्प्रत्ययः । "हृदयस्य

प्राप्यते गुणवतापि गुणानां
व्यक्तमाश्रयवशेन विशेषः ।
तत्तथा हि दयिताननदत्तं
व्यानशे मधु रसातिशयेन ॥ ५८ ॥

वीक्ष्य रत्नचषकेष्वतिरिक्तां
कान्तदन्तपदमण्डनलक्ष्मीम् ।
जज्ञिरे बहुमताः प्रमदानाम्
ओष्ठयावकनुदो मधुवाराः ॥ ५९ ॥

ह्लस्वयदण्लासेषु" ( ६।३।५०५ पा० ) इति ह्रस्वभावः । रमणविशेषणार्थहेतुककाव्यलिङ्गसङ्कीर्णरूपकालङ्कारः ॥ ५७ ॥

प्राप्यत इति ।—[ गुणवता अपि आश्रयवशेन गुणानां, विशेषः] प्रकर्षः [प्राप्यते व्यक्तं तत् तथा ] यदुक्तं तत् तथा एव इत्यर्थः । [ हि ] यस्मात् [ दयिताननदत्तं ] दयितायाः आननेन करणेन दत्तं [ मधु, रसातिशयेन ] स्वादुप्रकर्षेण कर्त्रा [ व्यानशे ] व्याप्तम् । विशेषेण सामान्यसमर्थनरूपः अर्थान्तरन्यासः ॥ ५८ ॥

वीक्ष्येति ।—[ रत्नचषकेषु ] स्फटिकादिमणिपात्रेषु [अतिरिक्तां ] यावकापगमात् पूर्वाभ्यधिकां [ कान्तदन्तपदमण्डनलक्ष्मीं] कान्तस्य यत् दन्तपदमण्डनं तस्य लक्ष्मीं शोभां, प्रतिबिम्बिताम् इति शेषः । [ वीक्ष्य, ओष्ठयावकनुदः ] अधरलाक्षारागहारिणः [मधुवाराः] मधुपानाभ्यासाः [प्रमदानां, बहुमताः] अभिमताः । वर्त्तमाने क्तः । तद्योगात् षष्ठी । [जज्ञिरे] जाताः, तेषां प्रियानुरागचिह्नप्रकाशकत्वात् इति भावः ॥ ५९ ॥ *

* रत्नमयचषकप्रतिबिम्बितदन्तपदावलोकनादेव भूयः मधुपानाभ्यासादरः वाक्यार्थहेतुकं काव्यलिङ्गम् तद्‌गुणालङ्कारवत् इति मन्याः ।

लोचनाधरकृताहृतरागा
वासिताननविशेषितगन्धा।
वारुणी परगुणात्मगुणानां
व्यत्ययं विनिमयं नु वितेने ॥ ६० ॥

---

मधुपानात् विलोचनेषु रागोत्पत्तिः, अधरेभ्यश्च लाक्षाराग-निवृत्तिः, मध्वाननयोश्च अन्योन्यगन्धसंक्रान्तिः इति स्थिते सति उत्प्रेक्ष्यते, लोचनेति।—[लोचनाधरकृताहृतरागा] लोचने च अधरश्च लोचनाधरम्। "समुद्राभ्राद्घः" (४।४।११८ पा०) इति व्यभिचारज्ञापकात् न अत्र अधरशब्दस्य पूर्वनिपातः। कृतश्च असौ आहृतश्च इति विशेषणसमासः। लोचनाधरस्य कृताहृतः रागः यया सा तथोक्ता, लोचनयोः कृतरागा अधरात् आ समन्तात् हृतरागा च इत्यर्थः। षष्ठ्याश्च अर्थसम्बन्धात् सामान्यस्य योग्यविशेषणपर्य्यवसाननियमेन अधिकरणापादा-नार्थयोः आक्षेपात्। तथा च अधरलोचनगुणयोः राग-तद्विरहयोः स्थानपरिवृत्तिं कृतवती इत्यर्थः। तथा [वासि-ताननविशेषितगन्धा] वासितेन स्वगन्धसंक्रान्तिसुरभितेन आननेन विशेषितः अतिशायितः गन्धः यस्याः सा। यद्वा—वासिताननाच असौ अर्थात् आननेनैव विशेषितगन्धा च इति कृतबहुव्रीहिविशेषणसमासः। उभयथा अपि आननसंक्रान्त-स्वगन्धा स्वसंक्रान्ताननगन्धा च इत्यर्थः। एवंभूता [वारुणी] मदिरा [परगुणात्मगुणानां] परयोः लोचनाधरयोः गुणौ च परस्य आननस्य गुणः आत्मनः वारुण्याः गुणाश्च परगुणात्म-गुणाः तेषां परगुणात्मगुणानां [व्यत्ययं नु? विनिमयं नु? वितेने] विस्तारयामास। चित्तेन प्रामादिकी

तुल्यरूपमसितोत्पलमक्ष्णोः
कर्णगं निरुपकारि विदित्वा ।
योषितः सुहृदिव प्रविभेजे
लम्भितेक्षणरुचिर्मदरागः ॥ ६१ ॥

---

वस्तुपरिवृत्तिः व्यत्ययः । बुद्धिपूर्वा तु वस्तुपरिवृत्तिः विनिमयः । अत्र तन्त्रोच्चरितस्य परगुणशब्दस्य आवृत्त्या परगुणौ च परगुणात्मगुणौ च इति विग्रहः कथञ्चित् अगत्या सोढव्यः, उपमानपूर्वपदबहुव्रीहिवत् । तथा च अयम् अर्थः,—परगुणयोः अधरलोचनगुणयोः रागतद्विरहयोः व्यत्ययं नु ? विनिमयं नु ? वितेने । तथा परगुणात्मगुणयोः आननगन्धात्मगन्धयोश्च व्यत्ययं नु ? विनिमयं नु ? वितेने । अन्यथा कथम् अन्यस्मिन् अन्यधर्मोपलम्भः सम्भवति इति भावः । अत्र लोचनाधररागयोः तदभावयोः वा भेदे अपि अभेदाध्यवसायात् एकत्ववाचःयुक्तिः । तस्मात् तन्मूलातिशयोक्त्यनुप्राणिता च इयं व्यत्ययविनिमययोः अन्यतरकरणोत्प्रेक्षा इति संक्षेपः । सा च प्रतीयमाना, व्यञ्जकाप्रयोगात् । नुशब्दस्तु संशये ॥ ६० ॥ *

तुल्येति ।—[अक्ष्णोः तुल्यरूपम्] अक्षितुल्याकृति [योषितः कर्णगं] कर्णावतंसीकृतम् [असितोत्पलं, निरुपकारि] अनुपकारकं [विदित्वा] ज्ञात्वा, तत्कार्य्यशोभायाः कर्णान्तविश्रान्तेन

* अत्रैव "व्यत्ययं विनिमयञ्च वितेने" इतिपाठाधारकारणवृत्तिः उभयवती परिवृत्तिः अलङ्कारः प्रतिपादितः भोजराजेन । तत्रायं परिष्कारः;—"अत्र वारुण्या यदधराद्रागोऽपहृत्य चक्षुषोः निक्षिप्तः, तेन इयं व्यत्ययवती ; यच्च मुखामोदवासितया स्वामोदेन मुखामोदो विशेषितस्तेन विनिमयवती ; तदियमुभयथापि मुख्यवृत्त्यैव उक्ता इति मुख्येयम् उभयवती परिवृत्तिः" इति कण्ठाभरणम् ।

क्षीणयावकरसोऽप्यतिपानैः
कान्तदन्तपदलम्भितशोभः ।
आययावतितरामिव वध्वाः
सान्द्रतामधरपल्लवरागः ॥ ६२ ॥
रागकान्तनयनेषु नितान्तं
विद्रुमारुणकपोलतलेषु ।

अक्ष्णा एव कृतत्वात् इति भावः । [ मदरागः, सुहृत् इव ] उत्पलस्य बन्धुः इव, अनिष्टवारकत्वात् इति भावः । [लम्भितलक्षणरुचिः ] आश्रितनयनकान्तिः सन् [ प्रविभेजे ] वर्णान्तरापादनेन प्रविभक्तवान् । अवैलक्षण्यकरात् अक्ष्णः व्यावर्त्तयामास, ततः विच्छित्तिकरत्वात् इति भावः ॥ ६१ ॥ *

क्षीणेति ।—[अतिपानैः, क्षीणयावकरसः] क्षीणलाक्षारागः [ अपि, कान्तदन्तपदलम्भितशोभः ] कान्तस्य दयितस्य दन्तपदेन दन्तक्षतेन लम्भिता सम्भृता शोभा यस्य सः [ वध्वाः अधरपल्लवरागः, अतितराम् ] अतिमात्रम् । अतिशब्दात् तरप्प्रत्यये "किमेत्तिङव्यय" ( ५।४।११ पा० ) इत्यादिना आम्प्रत्ययः । "तद्धितश्चासर्वविभक्तिः" ( १।१।३८ पा० ) इति अव्ययसंज्ञा । [ सान्द्रतां ] घनत्वम् । [ आययौ इव ], प्रियोपभोगचिह्नमण्डितानां कामिन्यवयवानां किम् अन्यैः मण्डनैः ? इति भावः । तत्र क्षीणस्य अपि सान्द्रता इति विरोधात् कान्तदन्तेत्यादिविशेषणगत्या सान्द्रत्वे हेतूक्त्या काव्यलिङ्गं तत्सङ्कीर्णा उत्प्रेक्षा ॥ ६२ ॥

रागेति ।—[वनितानां, सर्वगा अपि ] सर्वाङ्गगता अपि ।

* अत्र उत्प्रेक्षाङ्गवान् तद्गुणालङ्कारः ।

सर्वगाऽपि ददृशे वनितानां
दर्पणेष्विव मुखेषु मदश्रीः ॥ ६३ ॥
बद्धकोपविकृतीरपि रामाः
चारुताभिमततामुपनिन्ये ।
वश्यतां मधुमदो दयितानाम्
आत्मवर्गहितमिच्छति सर्वः ॥ ६४ ॥

"अन्तात्यन्त" (३।२।४८ पा०) इत्यादिना डः। [मदश्रीः, रागकान्तनयनेषु] रागेण कान्तानि नयनानि येषु तेषु [विद्रुमारुणकपोलतलेषु] विद्रुमवत् अरुणानि कपोलतलानि येषु तेषु [मुखेषु, दर्पणेषु इव, नितान्तं ददृशे] तेषां नयनादिनैर्मल्येन रागाभिव्यक्तिसम्भवात् इति भावः। अत्र मदश्रीः सर्वगता अपि मुखेषु एव ददृशे इति विरोधः; तस्य मुखविशेषणैः समाधानात् काव्यलिङ्गानुप्राणितः विरोधवदाभासः अलङ्कारः। स च उपमया संसृज्यते ॥ ६३ ॥

बद्धेति।—[बद्धकोपविकृतीः] बद्धा कोपेन विकृतिः याभिः ताः तथाभूताः [अपि, रामाः] कर्म्म [चारुता] तासां सौन्दर्य्यं कर्त्री [अभिमततां] प्रियवाल्लभ्यम् [उपनिन्ये]। सौन्दर्य्यं हि विकृतिम् अपि रोचयते इति भावः। [मधुमदः, दयितानां वश्यतां] विधेयत्वम् उपनिन्ये तथाहि।—[सर्वः आत्मवर्गहितम् इच्छति]। अतः चारुता स्त्रीत्वात् स्त्रीणाम् उपचकार; मधुमदस्तु पुंस्त्वात् पुंसाम् इति युक्तम् इत्यर्थः। अत्र विकृताः अपि अभिमताः कुपिताः अपि वश्याः इति विरोधस्य चारुतामदाभ्यां समाधानात् उभयथा अपि विरोधाभासः भवन् अर्थान्तरन्यासेन संसृज्यते ॥ ६४ ॥

वाससां शिथिलतामुपनाभि
ह्रीनिरासमपदे कुपितानि ।
योषितां विदधती गुणपक्षे
निर्ममार्ज मदिरा वचनीयम् ॥ ६५ ॥

भर्तृषूपसखि निक्षिपतीनाम्
आत्मनो मधुमदोद्यमितानाम् ।
व्रीडया विफलया वनितानां
न स्थितं न विगतं हृदयेषु ॥ ६६ ॥

वाससामिति ।—[ उपनाभि ] नाभिसमीपे [ वाससां शिथिलतां, ह्रीनिरासं ] लज्जात्यागम् [ अपदे कुपितानि ] अस्थानकोपान् च [ गुणपक्षे ] गुणकोटौ [ विदधती ] निवेशयन्ती ; दोषान् अपि एतान् गुणान् कुर्वती इत्यर्थः । [ मदिरा ] अपि [ योषितां वचनीयम् ] । "न नाभिं दर्शयेत्" इति शास्त्रनिषिद्धाचरणनिन्दां [ निर्ममार्ज ] । तथा दोषाणाम् अपि वस्त्रशैथिल्यादीनां तदानीं गुणत्वात् न कश्चित् वचनीयावकाशः इत्यर्थः ॥ ६५ ॥ *

भर्तृष्विति ।—[उपसखि] सखीसमीपे । समीपार्थे अव्ययीभावः । [ आत्मनः ] स्वदेहान् । "आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि" इति वैजयन्ती । [भर्तृषु, निक्षिपतीनां ] निपातयन्तीनां, भर्तॄणाम् उपरि पतन्तीनाम् इत्यर्थः । "आच्छीनद्योर्नुम्" ( ७।१।८० पा० ) इति विकल्पात् नुमभावः । कुतः ?

* अत्र दोषाणां गुणत्वेन परिणमनात् परिणामालङ्कारः

रुन्धती नयनवाक्यविकाशं
सादितोभयकरा परिरम्भे ।
व्रीडितस्य ललितं युवतीनां
क्षीवता बहुगुणैरनुजह्रे ॥ ६७ ॥
योषिदुद्धतमनोभवरागा
मानवत्यपि ययौ दयिताङ्कम् ।

---

[ मधुमदोद्यमितानां ] मधुमदेन उद्यमितानां प्रेरितानां, न तु स्वेच्छया इति भावः । [ वनितानाम् ] अनुरक्तस्त्रीणाम् । "वनिता जनितात्यर्थानुरागायां च योषिति" इति विश्वः । [ हृदयेषु विफलया ], अनुचिताचरणात् इति भावः । [व्रीड़या न स्थितं न विगतम् ] ; वैफल्यात् तस्याः मदोपाधिकत्वात् च इति भावः । अत एव न उभयनिषेधविरोधः ॥ ६६ ॥

रुन्धतीति ।—[ नयनवाक्यविकाशं ] नयनानां वाक्यानां च विकाशं प्रागल्भ्यं [रुन्धती] प्रतिबध्नती । तथा [ परिरम्भे ] आलिङ्गने [ सादितोभयकरा ] सादितौ स्तम्भितौ उभौ करौ यया सा [ युवतीनां ] सम्बन्धिनी [ क्षीवता ] मत्तता । कर्त्तरि क्तः । "अनुपसर्गात् फुल्लक्षीवकृशोल्लाघाः" (८।२।५५ पा०) इति निपातनात् साधुः । क्षीवा मत्ता तस्याः भावः क्षीवता । "त्वतलोः गुणवचनस्य पुंवद्भावः वक्तव्यः" (वा०) । [ बहुगुणैः ] दृष्टिभङ्गाचादिभिः [व्रीड़ितस्य] व्रीड़ायाः । भावे क्तः । [ललितं] विलासम् [ अनुजह्रे ] अनुचक्रे । कर्त्तरि लिट् । व्रीड़ाकार्य्यकरत्वात् व्रीड़ानुकरणम् इति उपमालङ्कारः ॥ ६७ ॥

योषिदिति ।—[उद्धतमनोभवरागा ] उद्धतः उत्कटः मनो-

कारयत्यनिभृता गुणदोषे
वारुणी खलु रहस्यविभेदम् ॥ ६८ ॥

आहिते नु मधुना मधुरत्वे
चेष्टितस्य गमिते नु विकाशम् ।
आबभौ नव इवोद्धतरागः
कामिनीष्ववसरः कुसुमेषोः ॥ ६९ ॥

---

भवेन यः रागः प्रीतिः सः यस्याः सा [योषित्, मानवती अपि, दयिताङ्कं] दयितस्य अङ्कं [ययौ], यतः मानात् रागः बलीयान् इति भावः। लाघवदोषं परिहरति, कारयतीति।— [अनिभृता] चपला, न कार्य्यकारिणी इत्यर्थः। [वारुणी] मदिरा [गुणदोषे] गुणेषु दोषेषु च विषये। सर्वः अपि द्वन्द्वः विभाषया एकवत् भवति। [रहस्यविभेदं] रहस्यभङ्गं [कारयति खलु]; बलात् निगूहितौ अपि गुणदोषौ प्रकाशयति इत्यर्थः। यतः निगूढरागप्रकटनं प्रकटमानत्यागश्च प्रमत्तायाः न लाघवम् आवहति, अबुद्धिपूर्वकत्वात् इति भावः॥ ६८॥ *

आहित इति।—[मधुना] मद्येन [चेष्टितस्य] रतिव्यापारस्य [मधुरत्वे] माधुर्य्ये [आहिते नु ?] सम्पादिते नु, प्रागसति एव मनोहरत्वे सम्प्रति उत्पादिते वा। [विकाशं गमिते नु ?] प्राक् सति एव माधुर्य्ये प्रकर्षं प्रापिते वा [उद्धतरागः] उद्रिक्तरागः, अत एव [कुसुमेषोः कामिनीषु, अवसरः] प्रवेशः [नव इव आबभौ]। नित्यसन्निहितः अपि मदनः कामिनीषु मदकृत-तात्कालिकचेष्टामाधुर्य्यात् रागोद्रेके सति अपूर्ववत् उद्दीप्तः अभूत् इत्यर्थः। संशयानुप्राणिता इयम् उत्प्रेक्षा ॥ ६९ ॥

---

* अत्र सामान्येन मदिरया रहस्यविभेदस्य विशेषस्य समर्थनात् अर्थान्तरन्यासः।

मा गमन्मदविमूढ़धियो नः
प्रोज्झ्य रन्तुमिति शङ्कितनाथाः।
योषितो न मदिरां भृशमीषुः
प्रेम पश्यति भयान्यपदेऽपि ॥ ७० ॥

चित्तनिर्वृतिविधायि विविक्तं
मन्मथो मधुमदः शशिभासः।

मा गमन्निति।—[शङ्कितनाथाः] अविश्वस्तपुरुषाः [योषितः मदविमूढ़धियः] मदेन विमूढ़धियः स्तब्धबुद्धयः [नः] अस्मान् [प्रोज्झ्य] विसृज्य। प्रपूर्वात् उज्झतेः "समासे अनञ्पूर्वे क्त्वो ल्यप्" (७।१।३७ पा०)। [रन्तुं मा गमन्] न गच्छन्तु इति मनीषया, इति शेषः। गमेः "माङि लुङ्" (३।३।१७५ पा०)। "न माङ्योगे" (६।४।७४ पा०) इति अड़ागमप्रतिषेधः। [मदिरां, भृशम्] अतिमात्रं [न ईषुः] न इच्छन्ति स्म ; किन्तु भर्त्तृवियोगभयात् ईषत् एव पपुः इत्यर्थः। तथाहि—[प्रेम] स्नेहः [अपदे] अस्थाने [अपि भयानि] अनिष्टानि [पश्यति] उत्प्रेक्षते, शङ्कते इति यावत्। शङ्काहेतौ प्रेम्णि कर्त्तृत्वोपचारः ॥ ७० ॥ *

चित्तेति।—[चित्तनिर्वृतिविधायि] चित्तस्य निर्वृतिविधायि सुखकरं [विविक्तं] रहः। "विविक्तं रहसि स्मृतम्" इति विश्वः। [मन्मथः, मधुमदः] मद्यमदः [शशिभासः] चन्द्रिकाः [दयितैः] सह [सङ्गमश्च]। "वृद्धो यूना" (१।२।६५ पा०) इति निर्देशात् सहशब्दाप्रयोगे अपि सहार्थे तृतीया।

* अत्रापि अर्थान्तरन्यासः।

सङ्गमश्च दयितैः स्म नयन्ति
प्रेम काममपि भुवं प्रमदानाम् ॥ ७१ ॥
धार्ष्ट्यलङ्घितयथोचितभूमौ
निर्दयं विलुलितालकमाल्ये।
मानिनीरतिविधौ कुसुमेषुः
मत्तमत्त इव विभ्रममाप ॥ ७२ ॥

---

एतानि [प्रमदानां] स्त्रीणां [प्रेम] वियोगासहत्वावस्थासम्भोगं [काम् अपि भुवं] काञ्चित् दशां [नयन्ति स्म]। रत्यवस्थाम् अपि अतिक्रम्य शृङ्गारावस्थां क्रीड़ामयीं निन्युः इत्यर्थः।—"प्रेमाभिलाषो रागश्च स्नेहः प्रेमरतिस्तथा। शृङ्गारश्चेति सम्भोगः सप्तावस्थः प्रकीर्त्तितः॥" इति उक्तं रसरत्नाकरे। "प्रेमा दृष्ट्वा रम्येषु तच्चिन्ताप्यभिलाषकः। रागस्तत्सङ्गबुद्धिः स्यात् स्नेहस्तत्प्रवणक्रिया॥ तद्वियोगासहं प्रेम रतिस्तत्सहवर्त्तनम्। शृङ्गारस्तत्समं क्रीड़ा सम्भोगः सप्तधा क्रमः॥" इति ॥ ७१ ॥

क्रीड़ावस्थाम् आह, धार्ष्ट्येति।—[धार्ष्ट्यलङ्घितयथोचितभूमौ] धार्ष्ट्येन प्रागल्भ्येन लङ्घिता अतिक्रान्ता यथोचिता योग्या भूमिः मर्य्यादा यस्मिन् तथोक्ते। चुम्बनताड़नमणितसीत्कारपुरुषायितादौ स्वयम् उच्छृङ्खलवृत्तिः इति भावः। [निर्दयं] यथा तथा [विलुलितालकमाल्ये] विलुलितानि आकर्षणाकुलितानि अलकमाल्यानि च यस्मिन् तस्मिन् [मानिनीरतिविधौ] स्त्रीसुरते [कुसुमेषुः] कामः [मत्तमत्तः] मत्तप्रकारः [इव विभ्रमं] विजृम्भणम् [आप] प्राप। मत्तः किं न करोति? इति भावः। कारयितरि कर्त्तृत्वोपचारात् उत्प्रेक्षा ॥ ७२ ॥

शीधुपानविधुरेषु वधूनां
निघ्नतामुपगतेषु वपुःषु ।
ईहितं रतिरसाहितभावं
वीतलक्ष्यमपि कामिषु रेजे ॥ ७३ ॥

अन्योन्यरक्तमनसामथ बिभ्रतीनां
चेतोभुवो हरिसखाप्सरसां निदेशम् ।
वैबोधिकध्वनिविभावितपश्चिमार्द्धा
सा संहृतेव परिवृत्तिमियाय रात्रिः ॥ ७४ ॥

शीध्विति ।—[शीधुपानविधुरेषु] शीधुपानेन मद्यपानेन विधुरेषु विह्वलेषु । "मैरेयमासवः शीधुः" इत्यमरः । अत एव [वपुःषु] अङ्गेषु [निघ्नतां] प्रियपराधीनताम् [उपगतेषु] मत्सु । "अधीनो निघ्न आयत्तः" इत्यमरः । [वधूनां] सम्बन्धि [रतिरसाहितभावं] रतिरसे सुरतरसास्वादे आहितभावं दत्तचित्तं [कामिषु] विषये [ईहितं] चुम्बनताड़नादिचेष्टितं [वीतलक्ष्यं] निर्विषयम्, अस्थानकृतम् [अपि] इत्यर्थः । [रेजे] रागिणां स्खलितम् अपि शोभते इति भावः । विरोधालङ्कारः ॥ ७३ ॥

अन्योन्येति ।—[अथ हरिसखाप्सरसां] हरिसखाः इन्द्रसचिवाः गन्धर्वाः तेषाम् अप्सरसां च [अन्योन्यरक्तमनसां] परस्परानुरक्तचित्तानां [चेतोभुवः] कामस्य [निदेशम्] आज्ञां [बिभ्रतीनां] स्मरविधेयानां, तासु रममाणासु एव इत्यर्थः । "षष्ठी चानादरे" (२।३।३८ पा०) इति षष्ठी । [वैबोधिकध्वनिविभावितपश्चिमार्द्धा] विबोधः प्रबोधनं शीलम्

निद्राविनोदितनितान्तरतिक्लमानाम्
आयामिमङ्गलनिनादविबोधितानाम् ।
रामासु भाविविरहाकुलितासु यूनां
तत्पूर्वतामिव समादधिरे रतानि ॥ ७५ ॥
कान्ताजनं सुरतखेदनिमीलिताक्षं
संवाहितुं समुपयानिव मन्दमन्दम् ।

एषां ते वैबोधिकाः वैतालिकाः । "शीलम्" (४।४।६१ पा०) इति ठक् । तेषां ध्वनिभिः मङ्गलरवैः विभावितः अभ्यूहितः ज्ञातः पश्चिमार्द्धः चरमभागः यस्याः सा तथोक्ता [ सा रात्रिः संहृता ] संक्षिप्ता [ इव ] इति उत्प्रेक्षा । सुखिनां भूयान् अपि कालः लघीयान् इव भवति इति भावः । [ परिवृत्तिं ] विवृत्तिम् [ इयाय ] प्रभातकल्पा अभूत् इत्यर्थः ॥ ७४ ॥ *

निद्रेति ।—[निद्राविनोदितनितान्तरतिक्लमानां] निद्रया विनोदितः अपनीतः नितान्तम् अत्यर्थं यः रत्याः क्लमः सः येषां तेषाम् [ आयामिमङ्गलनिनादविबोधितानाम्] आयामिभिः आयामवद्भिः दीर्घैः मङ्गलनिनादैः वैबोधिकध्वनिभिः विबोधितानां, [ यूनां रामासु ]। "सुन्दरी रमणी रामा" इत्यमरः । [ भाविविरहाकुलितासु ] भाविविरहेण आकुलितासु सतीषु [रतानि, तत्पूर्वतां] तानि एव पूर्वाणि प्रथमानि तत्पूर्वाणि, तेषां भावः तत्पूर्वता, ताम् । भावे तल्प्रत्ययः । † [समादधिरे] प्रापुः [इव] इति उत्प्रेक्षा । आद्यसुरतवत् आदरात् प्रवर्त्तन्ते इत्यर्थः । यदुत्तरकालं दुर्लभं तत् अतितृष्णया अनुभूयते इत्यर्थः ॥ ७५ ॥

* इतः प्रारभ्य चतुःश्लोक्यां वसन्ततिलकं वृत्तम् ।

† "तस्य भावस्त्वतलौ" ( ५।१।११९ पा० ) ।

हर्म्येषु माल्यमदिरापरिभोगगन्धान्
आविश्चकार रजनीपरिवृत्तिवायुः ॥ ७६ ॥
आमोदवासितचलाधरपल्लवेषु
निद्राकषायितविपाटललोचनेषु ।
व्यामृष्टपत्रतिलकेषु विलासिनीनां
शोभां बबन्ध वदनेषु मदावशेषः ॥ ७७ ॥

---

कान्तेति।—[ सुरतखेदनिमीलिताक्षं ] सुरतखेदेन निमीलितानि अक्षीणि येन तं [ कान्ताजनं ] स्त्रीसमूहं [ संवाहितुं ] सेवितुम् [इव]। खेदापनोदार्थम् अङ्गमर्दनं कर्तुम् इव इत्यर्थः। "संवाहनं वाहनेऽपि नरादेरङ्गमर्दने" इति विश्वः। "वाहृ प्रयत्ने" इति धातोः अण्यन्तात् तुमुन्। अन्यथा णिजग्रहणे संवाहयितुम् इति स्यात्। [मन्दमन्दं] मन्दप्रकारम् "प्रकारे गुणवचनस्य" ( ८।१।१२ पा० ) इति द्विर्भावे कर्मधारयवद्भावात् सुपः लुक्। [ समुपयान् ] संवान् [ रजनीपरिवृत्तिवायुः ] निशावसानमरुत्, [ हर्म्येषु, माल्यमदिरापरिभोगगन्धान् ] माल्यानि च मदिरा च परिभोगः विमर्दश्च तेषां गन्धान् [आविश्चकार], वहिः प्रसर्पयामास इत्यर्थः। अत्र संवाहितुम् इव इति उत्प्रेक्षा। मान्द्यगुणमूलत्वात् गुणनिमित्तक्रियाफला उत्प्रेक्षा ॥ ७६ ॥

आमोदेति।—[ आमोदवासितचलाधरपल्लवेषु ] आमोदेन मद्यगन्धेन वासिताः सुरभिताः चलाः दष्टमुक्तत्वात् स्फुरन्तश्च अधरपल्लवाः येषु तेषु [निद्राकषायितविपाटललोचनेषु ] निद्रया कषायितानि अपटूकृतानि विपाटलानि लोचनानि येषु तेषु। "कषायस्तुवरे न स्त्री निर्य्यासे रञ्जकादिके। सुरभावपटौ रक्ते सुन्दरे लवणेऽपि च ॥" इति केशवः। [ व्यामृष्टपत्रतिलकेषु ] व्यामृष्टानि प्रमृष्टानि पत्राणि तिलकाश्च येषां तेषु [ विला-

गतवति नखलेखालच्यतामङ्गरागे
समददयितपीताताम्रबिम्बाधराणाम् ।
विरहविधुरमिष्टा सत्सखीवाङ्गनानां
हृदयमवललम्बे रात्रिसम्भोगलक्ष्मीः ॥-७८ ॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्ज्जुनीये सुरसुन्दरी-
सम्भोगवर्णनं नाम नवमः सर्गः ॥ ९ ॥

सिनीनां वदनेषु मदावशेषः शोभां बबन्ध ]। मण्डनान्तरापाये मदशेषः एव मण्डनं बभूव इत्यर्थः। स्त्रीणां मदः एव विभूषणम् इति भावः॥ ७७ ॥

गतवतीति ।—[अङ्गरागे] अङ्गविलेपने [नखलेखालच्यतां] नखलेखासु नखपदेषु लच्यतां दृश्यतां [गतवति] सति, विमर्दात् तन्मात्रावशेषे सति इत्यर्थः। [समददयितपीताताम्रबिम्बाधराणां] किञ्च बिम्बतुल्याः अधराः बिम्बाधराः। "शाकपार्थिवादित्वात् मध्यपदलोपी समानाधिकरणसमासः"* इति वामनः। समदैः दयितैः पीताः पीड़िताः अत एव अतिपीड़नात् आताम्राः आ समन्तात् रक्ताः बिम्बाधरा यासां तासाम् [अङ्गनानां] सम्बन्धि [विरहविधुरं] विरहेण आह्निकेन वियोगेन विधुरं विह्वलं [हृदयं, रात्रिसम्भोगलक्ष्मीः] नखपदादिशोभा इत्यर्थः। [इष्टा] आप्ता [सत्सखी इव] निपुणसहचरी इव [अवललम्बे] धारयामास। प्रियसम्भोगचिह्नशोभा स्पष्टा बभूव इत्यर्थः। प्रियोपभोगचिह्नशोभावलोकनलालसाः कथं विरहम् असहन्त इत्यर्थः। श्रौती पूर्णा उपमा अलङ्कारः। मालिनी वृत्तम्। लक्षणं तु उक्तम्॥ ७८ ॥

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथसूरिविरचितायां किरातार्ज्जुनीय-काव्यव्याख्यायां घण्टापथसमाख्यायां नवमः सर्गः।

* "क्तेन नञ् विशिष्टेनानञ्" (२।१।६० पा०) सूत्रप्रसङ्गे शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्। (वा०) इति कौमुदीवृत्तिः।

## दशमः सर्गः ।



अथ परिमलजामवाप्य लक्ष्मीम्
अवयवदीपितमण्डनश्रियस्ताः ।
वसतिमभिविहाय रम्यहावाः
सुरपतिसूनुविलोभनाय जग्मुः ॥ १ ॥

अथ आगन्तुकसहजशोभासम्पन्नतया समग्रसाधनाः स्त्रियः मुनिमनःप्रलोभनार्थं प्रास्थन् इति आह, अथेति ।—[ अथ ] प्रभाते [परिमलजां] सम्भोगसम्भूतां [लक्ष्मीं] शोभाम् [अवाप्य], "सम्भोगः स्यात् परिमले" इति वैजयन्ती । सम्भोगात् स्त्रियः शोभन्त इति भावः । एतेन आगन्तुकशोभासम्पत्तिः उक्ता ; अत एव सुरतादिवर्णनस्य प्रस्तुतोपयोगित्वं च उक्तम् । अथ सहजशोभासम्पत्तिम् आह, अवयवेति ।—[ अवयवदीपित-मण्डनश्रियः ] अवयवैः स्तनादिभिः दीपिता मण्डिता मण्डनश्रीः प्रसाधनशोभा याभिः ताः । [ रम्यहावाः ] मनोहरविलासाः [ ताः ] स्त्रियः । "हावो विलासश्चेष्टायाम्" इति विश्वः । [ वसतिं ] शिविरम् [ अभिविहाय ] सर्वतः त्यक्त्वा [ सुरपतिसूनुविलोभनाय ] सुरपतिसुनोः अर्जुनस्य विलोभनाय [ जग्मुः ]। अत्र अवयवदीपकतया प्रसिद्धस्य मण्डनस्य तद्दीप्यत्वासम्बन्धे अपि सम्बन्धाभिधानात् अवयव-सौन्दर्य्यातिशयद्योतनार्थत्वात् अतिशयोक्तिः अलङ्कारः। अस्मिन् सर्गे पुष्पिताग्रा वृत्तम् ।—"अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥ १ ॥

द्रुतपदमभियातुमिच्छतीनां
गगनपरिक्रमलाघवेन तासाम् ।
अवनिषु चरणैः पृथुस्तनीनाम्
अलघुनितम्बतया चिरं निषेदे ॥ २ ॥
निहितसरसयावकैर्बभासे
चरणतलैः कृतपद्धतिर्वधूनाम् ।

द्रुतेति ।—[ गगनपरिक्रमलाघवेन] गगनगमनवेगेन [द्रुतपदं] यथा तथा [अभियातुं] गन्तुम् [इच्छतीनां] ; किञ्च [पृथुस्तनीनां तासाम् ] अप्सरसाम् । किञ्च [ अलघुनितम्बतया ] न लघवः नितम्बाः यासां तासां भावः तत्ता तया स्थूलनितम्बतया [ चरणैः अवनिषु चिरं निषेदे ] स्थितम् । अभ्यासपाटवेन मनसा त्वरमाणानाम् अपि तासां स्तनजघनभारात् चरणाः न उत्तस्थुः इत्यर्थः ॥ २ ॥ *

निहितेति ।—[ निहितसरसयावकैः ] निहिताः आरोपिताः सरसयावकाः सान्द्रलाक्षारागाः येषु तैः [ वधूनां, चरणतलैः] चरणन्यासैः [ कृतपद्धतिः ] † कृतमार्गरेखा । अत एव [ अरुणितनीलतृणोलपा ] अरुणिताः अरुणीकृताः नील तृणोलपाः तृणानि दूर्वादीनि उलपाः वल्वजाख्याः तृणविशेषाश्च यस्याः सा । "उलपा वल्वजाः प्रोक्ताः" इति हलायुधः । "उलपा उशीरतृणानि" इति क्षीरस्वामी । अप्राण-

* त्वरप्रयत्नवतीनां अपि चिरचरणावस्थानं पृथिव्यां पीनपयोधरालघुनितम्बहेतुकं इति वाक्यार्थहेतुकं काव्यलिङ्गम् ।

† "हिमकाषिहतिषु च" (६।३।५४ पा०) इति पदादेशः ।

अविरलविततेव शक्रगोपै-
रुणितनीलतृणोलपा धरित्री ॥ ३ ॥
ध्वनिरगविवरेषु नूपुराणां
पृथुरशनागुणशिञ्जितानुयातः ।
प्रतिरवविततो वनानि चक्रे
मुखरसमुत्सुकहंससारसानि ॥ ४ ॥

परिव्राजकवत् उलपानां पृथक् निर्देशः । [ धरित्री, शक्रगोपैः ] इन्द्रगोपाख्यैः कीटकैः । "इन्द्रगोपस्त्वग्निरजः" इति हैमः । [ अविरलं ] निरन्तरं यथा तथा [ वितता ] व्याप्ता [ इव ] इति उत्प्रेक्षा । [ बभासे ] ॥ ३ ॥ *

ध्वनिरिति ।—[ अगविवरेषु ] नगरन्ध्रेषु, गुहासु इत्यर्थः । [ प्रतिरवविततः ] प्रतिरवैः प्रतिध्वनिभिः, विततः सम्मूर्च्छितः [ पृथुरशनागुणशिञ्जितानुयातः ] पृथुभिः रशनागुणानां शिञ्जितैः स्वनितैः अनुयातः, अनुगतः, मिलितः इति यावत् । अश्नोतेः युच् स्यात्, रशादेशश्च । † रशना काञ्ची तालव्यशकारवान् अयं, जिह्वावाची तु दन्त्यसकारवान् इति सिद्धान्तः । "काञ्ची, सप्तकी रशना तथा" इत्यमरः । "स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम्" इत्यमरः । [ नूपुराणां ध्वनिः ] ध्वानः [ वनानि, मुखरसमुत्सुकहंससारसानि ] मुखराः शब्दायमानाः समुत्सुकाः उत्कण्ठिताः हंसाः सारसाश्च येषां

* यावकरसरञ्जितपदपङ्क्तिमतीत्यरुणितत्वणशालिनीति काव्यलिङ्गं वर्णान्तराधानात् तद्गुणश्च उत्प्रेक्षाङ्गम् इति केचित् ।

† "अशेः रश च" ( उणा० २।७५ पा० ) ।

अवचयपरिभोगवन्ति हिंस्रैः
सहचरितान्यमृगाणि काननानि।
अभिदधुरभितो मुनिं वधूभ्यः
समुदितसाध्वसविक्लवञ्च चेतः॥ ५॥
नृपतिमुनिपरिग्रहेण सा भूः
सुरसचिवाप्सरसां जहार तेजः।

तानि [चक्रे]। अत्र हंसादिषु मुखरसमुत्सुकीकरणरूपेण वस्तुना तेषां नूपुरादिध्वनौ सादृश्यात् हंससारसान्तरकूजित-भ्रान्तिप्रतीतेः भ्रान्तिमदलङ्कारः व्यज्यते॥ ४॥

अवचयेति।—[अवचयपरिभोगवन्ति] अवचयः पुष्प-फलादिच्छेदनं, परिभोगः उपभोगः। तद्वन्ति [हिंस्रैः] हिंस्राः घातुकाः व्याघ्रादयः। "शरारुर्घातुको हिंस्रः" इत्य-मरः। तैः सहचरिताः सहचरन्तः। कर्त्तरि क्तः। "मतिबुद्धि" (३।२।१८८ पा०) इत्यादिसूत्रेण चकारात् शीलितादिवत् वर्त्तमानार्थता। अन्ये हिंस्रेतरे मृगाः हरिणादयः येषु तानि [सहचरितान्यमृगाणि काननानि]। तथा [समुदितसाध्वस-विक्लवं] समुदितेन साध्वसेन विक्लवं विवशं [चेतश्च वधूभ्यः]। "क्रियाग्रहणमपि कर्त्तव्यम्" * इति सम्प्रदानत्वात् चतुर्थी। [अभितः मुनिम् अभिदधुः] आसन्नं सूचयामासुः इत्यर्थः। अवचयादिलिङ्गचतुष्टयेन आसन्नः मुनिः इति अन्वमीयत इत्यर्थः॥ ५॥

नृपतिमुनिपरिग्रहेणेति।—[सा भूः, नृपतिमुनिपरिग्रहेण]

* क्रियया यमभिप्रैति सोऽपि सम्प्रदानम् (वा०)

उपहितपरमप्रभावधाम्नां
न हि जयिनां तपसामलङ्घ्यमस्ति ॥ ६ ॥
सचकितमिव विस्मयाकुलाभिः
शुचिसिकतास्वतिमानुषाणि ताभिः।
क्षितिषु ददृशिरे पदानि जिष्णोः
उपहितकेतुरथाङ्गलाञ्छनानि ॥ ७ ॥

---

नृपतिः एव मुनिः तस्य परिग्रहेण अधिष्ठानेन हेतुना [ सुरसचिवाप्सरसां ] सुरसचिवानां गन्धर्वाणाम् अप्सरसां च [ तेजः जहार ]। तदाश्रमप्रवेशात् एव निस्तेजस्काः अभूवन् इत्यर्थः। ननु कथं मानुषेण तेजसा अमानुषं तेजः निरस्तम्? इति आशङ्क्य आह।—[ हि ] यस्मात् [ उपहितपरमप्रभावधाम्नां ] उपहिते आहिते परमे प्रभावधाम्नी सामर्थ्यतेजसी येषां तेषां [ जयिनां] जयनशीलानाम्। "महताम्"इति पाठे—महताम् उत्कटानां [तपसाम् अलङ्घ्यं न अस्ति], किम् अपि असाध्यं न अस्ति इति भावः॥ ६ ॥ *

सचकितमिति।—[ विस्मयाकुलाभिः, ताभिः ] स्त्रीभिः कर्त्रीभिः [ शुचिसिकतासु ] शुचयः सिकताः यासु तासु, पादरेखाभिव्यक्तियोग्यासु इत्यर्थः। [ क्षितिषु, उपहितकेतुरथाङ्गलाञ्छनानि ] उपहितानि विन्यस्तानि केतुरथाङ्गलाञ्छनानि रेखास्वरूपध्वजचक्राणि एव चिह्नानि येषु तानि अत एव [ अतिमानुषाणि, जिष्णोः ] अर्जुनस्य [ पदानि,

* अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः

अतिशयितवनान्तरद्युतीनां
फलकुसुमावचयेऽपि तद्विधानाम् ।
ऋतुरिव तरुवीरुधां समृद्ध्या
युवतिजनैर्जगृहे मुनिप्रभावः ॥ ८ ॥
मृदितकिसलयः सुराङ्गनानां
ससलिलवल्कलभारभुग्नशाखः ।

सचकितम् इव ] सभयम् इव यथा तथा [ ददृशिरे ] दृष्टानि । अद्भुतवस्तुदर्शनात् भयविस्मयौ भवतः इति भावः ॥ ७ ॥ *

अतिशयितेति ।—[ अतिशयितवनान्तरद्युतीनां ] अतिशयिता अतिक्रान्ता वनान्तराणां द्युतिः याभिः तासाम् । कुतः ? [ फलकुसुमावचये ] फलानां कुसुमानाञ्च अवचये [ अपि ] लवने अपि सा एव विधा प्रकारः यासां [ तद्विधानां ], तथा एव समग्राणाम् इत्यर्थः । [ तरुवीरुधां ] तरूणां वीरुधाञ्च [ समृद्ध्या ] लिङ्गेन [ युवतिजनैः मुनिप्रभावः ऋतुः इव, जगृहे ] निश्चितः, कारणतया इति शेषः । उपमालङ्कारः ॥८॥

मृदितेति ।—[ससलिलवल्कलभारभुग्नशाखः ] ससलिलम्

* महापुरुषलक्षणान्वितानि अत एवातिमानुषाणि पदानि इति पदार्थहेतुककाव्यलिङ्गानुप्राणित लोकासाधारणशक्तिसम्पत्तिसमतिशयेन उदात्तालङ्कारः इति केचित् । वस्तुतस्तु अत्र अनुमानालङ्कृतौ मुद्राभेदः दर्शितः । तल्लक्षणं यथा,—

"तथाभूतार्थविज्ञान जनकत्वेन हेतुना ।
नाम्नादभिनयाल्लिख्य मुद्राविम्बादयः पृथक् ॥"

तद्विवरणं "चक्रध्वजाङ्कितजिष्णुपादमुद्रादर्शनात् सेयममानुषीपादमुद्राभवतीति संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः तदिदं अननुभूतार्थविषयम् उपमानमेवमुद्रेत्युच्यते यदपि च क्वचिदपि जिष्णुपदे सर्गोदृशामीदृशः स इति अनुमानज्ञानं तदपि उपमानार्थनिबन्धनमेव" इति कण्ठाभरणम् ।

बहुमतिमधिकां ययावशोकः
परिजनताऽपि गुणाय सद्गुणानाम् ॥ ९ ॥
यमनियमकृशीकृतस्थिराङ्गः
परिददृशे विधृतायुधः स ताभिः ।
अनुपमशमदीप्तागरीयान्
कृतपदपङ्क्तिरथर्वणेव वेदः ॥ १० ॥

आर्द्रं यत् वल्कलं तत् एव भारः तेन भुग्नशाखः नम्रशाखः, "वल्कं वल्कलमस्त्रियाम्" इत्यमरः । अत एव [ मृदितकिसलयः ] विलुलितपल्लवः । "क्वचिन्न" (वृ०) इति प्रतिषेधात् न वृद्धिः गुणः । [ अशोकः ] वृक्षविशेषः [ सुराङ्गनानाम् ] अप्सरसां सम्बन्धिनीम् [ अधिकां बहुमतिं ] तत्कर्तृकसम्मानं सज्जनसेवी धन्यः अयम् इति [ ययौ ] प्राप । ननु सेवकेषु का श्लाघा ? इत्यत आह, परीति ।—[ सद्गुणानां ] महतां [ परिजनता अपि ] अनुचरत्वम् अपि । भावे तल् । * [ गुणाय ] उत्कर्षाय, भवति इति शेषः । एतेन तासां मुनेः प्रभावदर्शनात् एव तत्पारवश्यं गम्यते ॥ ९ ॥ †

यमेति ।—[ यमनियमकृशीकृतस्थिराङ्गः ] यमः देशकालाद्यनपेक्षया शुद्धिहेतुः अहिंसादिः, नियमः तदपेक्षया शुद्धिहेतुः तपःस्वाध्यायादिः, ताभ्यां कृशीकृतानि अपि स्थिराणि दृढानि अङ्गानि यस्य सः । [ विधृतायुधः ] धृतशस्त्रः अत एव तपःक्षात्रतेजोयुक्तः [ सः ] अर्जुनः [ अनुपमशमदीप्ततागरीयान् ] शमः शान्तिः अभ्युदयकाङ्क्षे, दीप्तता उग्रता

* "तस्य भावस्त्वतलौ" (५।१।११९ पा० ) ।

† अर्थान्तरन्यासः ।

शशधर इव लोचनाभिरामैः
गगनविसारिभिरंशुभिः परीतः।
शिखरनिचयमेकसानुसद्मा
सकलमिवापि दधन्महीधरस्य ॥ ११ ॥
सुरसरिति परन्तपोऽधिगच्छन्
विधुतपिशङ्गबृहज्जटाकलापः।

अभिचारकाण्डे ताभ्याम् अनुपमाभ्यां गरीयान् उदग्रः। [ अथर्वणा ] वशिष्ठेन [ कृतपदपङ्क्तिः ] कृता रचिता पदानां पङ्क्तिः आनुपूर्वी यस्य सः [ वेदः ] चतुर्थवेदः इत्यर्थः। "अथर्वणस्तु मन्त्रा वशिष्ठकृताः" इति आगमः। सः [ इव ताभिः ] स्त्रीभिः [ परिददृशे ] दृष्टः ॥ १० ॥ *

अथ चतुर्भिः तम् एव विशिनष्टि, शशधरेत्यादिभिः।— [ शशधरः ] चन्द्रः [ इव लोचनाभिरामैः ] नेत्राह्लादकरैः [ गगनविसारिभिः, अंशुभिः ] तेजोभिः [ परीतः ] व्याप्तः, अम्बरवत् [ एकसानुसद्मा ] एकं सानु सद्म यस्य सः, एकदेशस्थः अपि इत्यर्थः। [ महीधरस्य ] इन्द्रकीलस्य [ सकलं शिखरनिचयम् अपि दधत् ] आवृण्वन् [ इव ] इति उत्प्रेक्षा ॥ ११ ॥

सुरेति।—पुनः [ सुरसरिति ] गङ्गाकूले [ परन्तपः अधिगच्छन् ] अर्जयन्, फलाभिलाषिणा इति शेषः। हविः समभिलषन् इति उपमानविशेषणसामर्थ्यात्। तथा [ विधुतपिशङ्गबृहज्जटाकलापः ] विधुतः पिशङ्गबृहज्जटाकलापः येन सः। अत एव [ उपवेदि ] वेद्याम्। विभक्त्यर्थे अव्ययीभावः]। [शिखा-

* उपमानोपमेययोः साधारणधर्मसम्बन्धादुपमा।

हविरिव विततः शिखासमूहैः
समभिलषन्नुपवेदि जातवेदाः ॥ १२ ॥
सदृशमतनुमाकृतेः प्रयत्नं
तदनुगुणामपरैः क्रियामलङ्घ्याम् ।
दधदलघु तपःक्रियानुरूपं
विजयवतीञ्च तपःसमां समृद्धिम् ॥ १३ ॥
चिरनियमकृशोऽपि शैलसारः
शमनिरतोऽपि दुरासदः प्रकृत्या ।

समूहैः ] ज्वालाजालैः [ विततः ] विस्तृतः [ हविः ] आज्यादिकं [ समभिलषन् ]। जातं वेदः हिरण्यं यस्मात् इति [ जातवेदाः ] वह्निः [ इव] स्थितः ॥ १२ ॥

सदृशमिति ।—पुनः [आकृतेः] वपुषः। "आकृतिः कथिता रूपे आकारवपुषोरपि" इति विश्वः। [ सदृशं ] तुल्यम् [ अतनुं ] महान्तं [ प्रयत्नम् ] उद्योगं [ दधत् ]। तथा [ तदनुगुणां ] प्रयत्नानुकूलाम् [ अपरैः ] अन्यैः [ अलङ्घ्यां ], कर्त्तुम् अशक्याम् इत्यर्थः। [ क्रियां ] व्यापारं दधत्। तथा [क्रियानुरूपं] क्रियानुगुणम् [अलघु] गुरु [तपः] दधत्। तथा [विजयवतीं] सर्वोत्कर्षवतीं विजयफलां वा तपःक्रियानुरूपां तपः-[समां समृद्धिम्] ऐश्वर्य्यं [ च ] दधत्। अत्र पूर्वं प्रति उत्तरस्य विशेषणतया स्थापनात्प्रथमैकावली अलङ्कारः। "यथापूर्वं परस्य विशेषणतया स्थापनापोहनो एकावली"इति सर्वस्वसूत्रात् ॥१३॥

चिरनियमेति ।—पुनश्च [ चिरनियमकृशः ] चिरनियमेन दीर्घकालतपसा कृशः क्षीणाङ्गः [अपि शैलसारः ]। उपमान-

ससचिव इव निर्जनेऽपि तिष्ठन्
मुनिरपि तुल्यरुचिस्त्रिलोकभर्तुः ॥ १४ ॥

॥ कलापकम् ॥

तनुमवजितलोकसारधाम्नीं
त्रिभुवनगुप्तिसहां विलोकयन्त्यः ।
अवययुरमरस्त्रियोऽस्य यत्नं
विजयफले विफलं तपोऽधिकारे ॥ १५ ॥

पूर्वपदः बहुव्रीहिः ।* [शमनिरतः] शमे निरतः [अपि,प्रकृत्या]† स्वभावेन [दुरासदः] दुर्धर्षः [निर्जने] विजने देशे [तिष्ठन् अपि, ससचिवः] सपरिवारः [इव]। किञ्च [मुनिः अपि] ऐश्वर्य्यरहितः अपि इत्यर्थः। [त्रिलोकभर्त्तुः] त्रयाणां लोकानां भर्त्तुः इन्द्रस्य। "तद्धितार्थ" (२।१।५१ पा०) इत्यादिना उत्तरपदसमासः। [तुल्यरुचिः] समानतेजाः। अपिशब्दः सर्वत्र विरोधद्योतनार्थः। स च मुनेः अतर्क्यमहिमत्वेन निरस्तः इति विरोधालङ्कारः।—"विरुद्धाभासत्वं विरोधः" इति सर्वस्वसूत्रात् ॥ १४ ॥

तनुमिति।—[अवजितलोकसारधाम्नीं] अवजिते तिरस्कृते लोकानां सारधाम्नी सत्त्वतेजसी यया ताम्। "अन उपधा" (४।१।२८ पा०) इत्यादिना ङीप्। [त्रिभुवनगुप्तिसहां] त्रयाणां भुवनानां समाहारः त्रिभुवनम्। "तद्धितार्थ" (२।१।५१ पा०) इत्यादिना समाहारार्थे तत्पुरुषः। पात्रादित्वात् स्त्रीत्वप्रति-

* "उपमानाच्च" (५।४।१३७ पा०)।

† सर्वविभक्तिबाधिका तृतीया। "प्रकृत्यादिभ्य उपसंख्यानं" इति वार्त्तिकात्।

मुनिदनुतनयान् विलोभ्य सद्यः
प्रतनुबलान्यधितिष्ठतस्तपांसि ।
अलघुनि बहु मेनिरे च ताः स्वं
कुलिशभृता विहितं पदे नियोगम् ॥१६॥
अथ कृतकविलोभनं विधित्सौ
युवतिजने हरिसूनुदर्शनेन ।

षेधः । * तस्य गुप्तौ रक्षणे सहां समर्थाम् । पचाद्यच् । [ तनुं ] मूर्त्तिं [ विलोकयन्त्यः, अमरस्त्रियः ] अप्सरसः [ विजयफले ] विजयार्थे [ तपोऽधिकारे ] तपोऽनुष्ठाने [अस्य] अर्जुनस्य [ यत्नं विफलम्, अवययुः ] मेनिरे । त्रैलोक्याधिपत्यादिमहाफलसाधनसमर्थस्य तुच्छफलाभिलाषः मत्तमातङ्गमांसभोगोचितस्य कण्ठीरवस्य जीर्णतृणचर्वणोत्कण्ठा इव न शोभाम् आवहति इति भावः । अत्र विशिष्टतनुविलोकनस्य स्त्रीविशेषणवैफल्यजननहेतुत्वोक्त्या पदार्थहेतुकं काव्यलिङ्गम् अलङ्कारः ॥ १५ ॥

मुनीति ।—[ प्रतनुबलानि ] अनुत्कृष्टसाराणि [ तपांसि, अधितिष्ठतः ] अनुतिष्ठतः [ मुनिदनुतनयान् ] मुनीन् दनुतनयान् दानवान् [ च सद्यः ] तत्क्षणम् एव [ विलोभ्य ] आकृष्य चिरात् [ कुलिशभृता ] शक्रेण [ अलघुनि ] महति [पदे] स्थाने [ विहितं ] दत्तं [स्वं] स्वकीयं [ नियोगम् ] अधिकारं [ताः] स्त्रियः [बहु] यथा तथा [ मेनिरे ] । निकृष्टपद-

* अत्र "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" (वा० ) इति स्त्रीत्वप्राप्तौ "पात्राद्यन्तस्य न" (वा०) वार्त्तिकेन तत्प्रतिषेधः पात्रादित्वात् ।

प्रसभमवततार चित्तजन्मा
हरति मनो मधुरा हि यौवनश्रीः ॥१७॥
सपदि हरिसखैर्वधूनिदेशात्
ध्वनितमनोरमवल्लकीमृदङ्गैः ।

वृत्तीनाम् उत्कृष्टपदलाभः महान् । बहुमानमूलम् इति भावः । विलोभ्य मेनिरे इति अन्वयः । यद्वा विलोभ्य लोभं कारयित्वा विहितं शक्रेण इति अन्वयात् समानकर्त्तृत्व-निर्वाहः ॥ १६ ॥ *

अथेति ।—[ अथ ] अनन्तरं [ कृतकविलोभनं ] कृत्रिमं विलोभनं [ विधित्सौ ] विधातुम् इच्छौ । विपूर्वात् दधातेः सन्नन्तात् उप्रत्ययः । [युवतिजने, हरिसूनुदर्शनेन] हरिसूनोः अर्जुनस्य दर्शनेन [ चित्तजन्मा ] कामः [ प्रसभं ] बलात् [ अवततार ] । देवतत्परं वञ्चयितुम् आगतस्य मोहः भवति । यतः स्वयं मुनिवञ्चनप्रवृत्ताः स्त्रियः तेन वञ्चिताः इत्यर्थः । युक्तञ्च एतत् । [हि] यस्मात् [ मधुरा ] मनोहरा [ यौवनश्रीः मनः हरति ], बलात् इति शेषः ॥ १७ ॥ †

सपदीति ।—[ सपदि, वधूनिदेशात् ] वधूनां निदेशात् नियोगात् [ ध्वनितमनोरमवल्लकीमृदङ्गैः ] ध्वनिताः नादिताः मनोरमाः वल्लक्यः वीणाः मृदङ्गाश्च यैः तैः [हरिसखैः] गन्धर्वैः [ वियति ] आकाशे [ वने च युगपत् ऋतुगणस्य ] ऋतुषट्-

---

* अलघुनि पदे महानुभावे विहित इति बहुमानाम्पदत्वम् । अत्रापि पदार्थहेतुकं काव्यलिङ्गम् ।

† सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

युगपदृतुगणस्य सन्निधानं
वियति वने च यथायथं वितेने ॥ १८ ॥

सजलजलधरं नभो विरेजे
विवृतिमियाय रुचिस्तड़िल्लतानाम् ।
व्यवहितरतिविग्रहैर्वितेने
जलगुरुभिः स्तनितैर्दिगन्तरेषु ॥ १९ ॥

---

कस्य [ सन्निधानम् ] आविर्भावः [ यथायथं ] यथास्वम्, असङ्करेण इत्यर्थः । "यथास्वं तु यथायथम्" * इति निपातः । [ वितेने ] वितस्तरे, उद्दीपनसामग्री सम्पादिता इत्यर्थः ॥१८॥

अथ वर्षाक्रमेण ऋतून् वर्णयति, सजलेत्यादि ।—[ सजलजलधरं ] सजलाः जलधराः यस्मिन् तत् [ नभः विरेजे । तड़िल्लतानां] तड़ितः लताः इव तासां [ रुचिः ] प्रभा [ विवृतिं ] विजृम्भणम् [ इयाय ]। तथा [ व्यवहितरतिविग्रहैः ] दूरीकृतरतिप्रकल्पितप्रणयकलहैः [ जलगुरुभिः ] जलभारात् गम्भीरैः इत्यर्थः । [ स्तनितैः ] गर्जितैः [ दिगन्तरेषु, वितेने ] विततैः अभावि । भावे लिट् । अकर्मकत्वं वैवक्षिकम् । अत एव दिगन्तरेषु इति अधिकरणत्वेन प्रयोगः ; अन्यथा कर्मत्वम् एव स्यात् ॥ १९ ॥ †

परीति ।—[ परि सुरपतिसूनुधाम ] अर्जुनाश्रमं प्रति । परीति लक्षणार्थे कर्मप्रवचनीयस्य योगात् द्वितीया । ‡ यद्वा

---

* "यथास्वे यथायथम्" ( ८।१।१४ पा० )।

† सजलजलेत्यंशे छन्त्यनुप्रासः । तृतीये च पादे छेकानुप्रासः ।

‡ "लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्य्यनवः" (१।४।९० पा०)।

परि सुरपतिसूनुधाम सद्यः
समुपदधन्मुकुलानि मालतीनाम्।
विरलमपजहार बद्धबिन्दुः
सरजसतामवनेरपां निपातः॥ २०॥
प्रतिदिशमभिगच्छताभिमृष्टः
ककुभविकाससुगन्धिनाऽनिलेन।

वर्जनार्थस्य तस्य अत्र विरोधात् विभक्त्यर्थे अव्ययीभावः। * तथा च सुरपतिसूनुधाम्नि इत्यर्थः। [ सद्यः, मालतीनां ] जाती-लतानाम्। "सुमना मालती जातिः" इत्यमरः। [ मुकुलानि समुपदधत् ] अनयत्। [ विरलं ] यथा तथा [ बद्धबिन्दुः अपां निपातः ] वृष्टिः [ अवनेः ] सम्बन्धिनीं [ सरजसतां ] सरजस्कत्वम्। "अचतुर" ( ५।४।७७ पा० ) इत्यादिसूत्रेण साकल्यार्थे अव्ययीभावः। "समासान्तनिपातस्य, बहुव्रीह्यर्थः तु लक्ष्यते। अव्ययीभावदर्शनन्तु प्रायिकम्" इति केचित्। [ अपजहार ] धूलिं शमयामास इत्यर्थः॥ २०॥

प्रतिदिशमिति।—दिशि दिशि [ प्रतिदिशम् ] यथार्थे अव्ययीभावः। शरत्प्रभृतित्वात् समासान्तनिपातः। † [ अभि-गच्छता ] संवाता [ ककुभविकाससुगन्धिना ] ककुभानि अर्जुनकुसुमानि। "इन्द्रद्रुः ककुभोऽर्जुनः" इत्यमरः। तेषां विकासेन सुगन्धिना मनोज्ञगन्धेन। ‡ "गन्धस्येत्त्वे तदेकान्त-

---

* "अव्ययं विभक्ति" (२।१।६ पा० ) इत्यादिना।

† "अव्ययीभावे शरत्प्रभृतिभ्यः" (५।४।१०७ पा० )।

‡ "गन्धस्येदुत्पूतिसुसुरभिभ्यः" (५।४।१३५ पा० )।

नव इव विबभौ सचित्तजन्मा
गतधृतिराकुलितश्च जीवलोकः ॥ २१ ॥

व्यथितमपि भृशं मनो हरन्ती
परिणतजम्बुफलोपभोगहृष्टा।
परभृतयुवतिः स्वनं वितेने
नवनवयोजितकण्ठरागरम्यम् ॥ २२ ॥

ग्रहणम्" (वा०) प्रायिकम्। [अनिलेन अभिमृष्टः] सम्पृष्टः अत एव [सचित्तजन्मा] कामाक्रान्तः इत्यर्थः। अत एव [गतधृतिः] गतधैर्य्यः [आकुलितः] क्षोभितः [च] रतिं प्रति इति भावः। एवम्भूतः [जीवलोकः नवः इव] अवस्थान्तरप्राप्त्या अपूर्वः इव [विबभौ] भाति स्म। इति उत्प्रेक्षा ॥२१॥ *

व्यथितमिति।—[व्यथितं] दुःखितम् [अपि मनः, भृशं हरन्ती] किमुत सुखितम् इति भावः। [परिणतजम्बुफलोपभोगहृष्टा] जम्ब्वाः फलं जम्बु। "वाहतश्च फले जम्बा जम्बूः स्त्री जम्बु जाम्बवम्" इत्यमरः। "जम्ब्वा वा" (४।३।१६५ पा०) इति अणभावपक्षे अपि "फले लुक्" (४।३।१६३ पा०) इति लुक्। "लुक् तद्धितलुकि" (१।२।४८ पा०) इति स्त्रीप्रत्ययनिवृत्तिः। जम्बु च तत् फलञ्च इति सामान्यविशेषयोः सह निर्देशः। यद्वा जम्ब्वाः फलम् इति विग्रहः। "इको ह्रस्वोऽङ्यो गालवस्य" (६।३।६१ पा०) इति ह्रस्वः। तस्य परिणतस्य उपभोगेन हृष्टा। अत एव [परभृतयुवतिः]

* अनिलेन अभिमृष्टः अतः समन्मथः गतधैर्य्यः इति वाक्यार्थहेतुकं काव्यलिङ्गमप्यस्त्यत्रम् इति केचित्।

अभिभवति मनः कदम्बवायौ
मदमधुरे च शिखण्डिनां निनादे ।
जन इव न धृतेश्चचाल जिष्णुः
न हि महतां सुकरः समाधिभङ्गः ॥२३॥
धृतबिसवलयावलिर्वहन्ती
कुमुदवनैकदुकूलमात्तबाणा ।

कोकिलाङ्गना [ नवनवयोजितकण्ठरागरम्यम् ] नवनवं नवप्रकारं यथा तथा योजितेन सम्पादितेन कण्ठरागेण कण्ठमाधुर्य्येण रम्यं, सौम्यम् इत्यर्थः । [स्वनं] स्वरं [वितेने] वर्षासु अपि मधुराः स्वराः कोकिलायाः इति प्रसिद्धिः ॥ २२ ॥

अभिभवतीति ।—[ कदम्बवायौ ] कदम्बसम्बन्धिनि मारुते [ मदमधुरे शिखण्डिनां निनादे च, मनः अभिभवति ] अभिहरति सति [ जिष्णुः ] * जयनशीलः अर्जुनः [ जनः ] पृथग्जनः [ इव धृतेः ] धैर्य्यात् [ न चचाल ]। वर्षाः अपि तद्रोपनाय न शेकुः इत्यर्थः । [ हि ] यस्मात् [ महतां समाधिभङ्गः सुकरः न ]। न केनापि कर्त्तुं शक्यते इत्यर्थः ॥२३॥ †

धृतेति ।—[ धृतबिसवलयावलिः ] बिसानि वलयानि इव तेषाम् आवलिः धृता यया सा । [ कुमुदवनैकदुकूलं ] कुमुदवनम् एकं मुख्यं दुकूलम् इव तत् [ वहन्ती ]। आत्ता

* "ग्लाजिस्थश्च क्स्नुः" ( ३।२।१३९ पा० )।

† "सुक्तात्मश्लाघना धैर्य्यं मनोवृत्तिरचञ्चला" इति दर्पणलक्षणात् अर्जुनस्य धीरता सूचिता । अत्र धृतेर्विचलनस्थापके हेतौ वर्त्तमानेऽपि तदभावात् विशेषोक्तिः अलङ्कारः । न च भविष्यन्तं समाधिभङ्गासामर्थ्यं भङ्ग्या सूचयतीति पर्य्यायोक्तं प्रकाशयति ; ततश्च सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, इत्येतेषां संसृष्टिः ।

शरदमलतले सरोजपाणौ
घनसमयेन वधूरिवाललम्बे ॥ २४ ॥
समदशिखिरुतानि हंसनादैः
कुमुदवनानि कदम्बपुष्पवृष्ट्या ।
श्रियमतिशयिनीं समेत्य जग्मुः
गुणमहतां महते गुणाय योगः ॥ २५ ॥

---

गृहीता वाणा नीलझिण्टी यया सा [ आत्तवाणा ] धृतशरा च । "गृह्णीयात् क्षत्रिया शरम्" इति स्मरणात् । "वाणोक्ता नीलझिण्टी च" इति वैजयन्ती । [ शरद्वधूः ] जाया [इव, घनसमयेन] वर्षर्त्तुना, वर्षेण इति शेषः । [ अमल तले ] निर्मलतले [ सरोजपाणौ ] सरोजं पाणिः इव तस्मिन् [ आललम्बे ] जगृहे । कर्मणि लिट् । बधूवरसमागमवदृतु सन्धिः अशोभत इत्यर्थः । अत्र "आत्तवाणा" इति झिण्टी शरयोः वाणयोः अभेदाध्यवसायात् श्लेषमूला अतिशयोक्तिः उपमाङ्गम् इति अनयोः सङ्करः ॥ २४ ॥

अथ ऋतुसन्धिं वर्णयति, समदेति ।—[ समदशिखि-रुतानि] मत्तमयूरकूजितानि [हंसनादैः समेत्य ] तथा [कुमुद-वनानि, कदम्बपुष्पवृष्ट्या ] कदम्वपुष्पसम्पदा समेत्य [ अति-शयिनीम् ] अतिशयवतीं [ श्रियं जग्मुः]। तथाहि ।—[ गुण-महतां ] गुणाधिकानां [ योगः ] परस्परसमागमः [ महते गुणाय ] उत्कर्षाय भवति इति शेषः । अत्र त्रिपाद्यां समा-लङ्कारः ।—"सा समालङ्कृतिर्योग्यवस्तुनोरुभयोरपि" इति लक्षणात् । सः अपि चतुर्थेन अर्थान्तरन्यासेन स्वसमर्थकेन अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ २५ ॥

सरजसमपहाय केतकीनां
प्रसवमुपान्तिकनीपरेणुकीर्णम्।
प्रियमधुरसनानि षट्पदाली
मलिनयति स्म विनीलबन्धनानि॥ २६॥
मुकुलितमतिशय्य बन्धुजीवं
धृतजलबिन्दुषु शाद्वलस्थलीषु।

सरजसमिति।—[ प्रियमधुः ] इष्टमकरन्दा। नात्र कप्समासान्तः "पुंलिङ्गोत्तरपदः बहुव्रीहिः" इति केचित्। नपुंसकलिङ्गस्य एव मधुशब्दस्य उरःप्रभृतिषु पाठात्।—"मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः। अर्द्धर्चादिगणे पाठात् पुंनपुंसकयो मधुः॥" इति अभिधानात्। [ षट्पदाली ] षट्पदावलिः [उपान्तिकनीपरेणुकीर्णम्] उपान्तिके यानि नीपानि कदम्बकुसुमानि तेषां रेणुभिः परागैः कीर्णं व्याप्तम्। किञ्च स्वतः अपि सह रजसा [ सरजसं ] न तु अरजस्कम् इति भावः। साकल्ये अव्ययीभावः। "अचतुर" (५।४।७७ पा०) इत्यादिना निपातः। [ केतकीनां, प्रसवं ] पुष्पम् [ अपहाय, विनीलबन्धनानि ] मलिनवृन्तानि [ असनानि ] प्रियकपुष्पाणि, मकरन्दभरितानि इति भावः। "सर्जकासनबन्धूकपुष्पप्रियकजीवकाः" इत्यमरः। [ मलिनयति स्म ]। यथा वृन्तात् अन्यत्र अपि मालिन्यं स्यात् तथा मधुलोभात् छादयामास इत्यर्थः। न हि मध्वासक्तः मधुलाभे असति विभूतिषु आसज्जति इति भावः॥ २६॥

मुकुलितमिति।—[ धृतजलबिन्दुषु ] धृताः जलबिन्दवः यासु तासु [शाद्वलस्थलीषु] शाद्वहरितप्रदेशेषु [ अविरलवपुषः ]

अविरलवपुषः सुरेन्द्रगोपाः
विकचपलाशचयश्रियं समीयुः ॥ २७ ॥

अविरलफलिनीवनप्रसूनः
कुसुमितकुन्दसुगन्धिगन्धवाहः ।
गुणमसमयजं चिराय लेभे
विरलतुषारकणस्तुषारकालः ॥ २८ ॥

निचयिनि लवलीलताविकासि
जनयति लोध्रसमीरणे च हर्षम् ।

---

स्थूलमूर्त्तयः [सुरेन्द्रगोपाः] कीटविशेषाः [मुकुलितं] मुकुलीकृतं [बन्धुजीवं] बन्धुजीवकमुकुलम् इत्यर्थः । "बन्धूको बन्धुजीवकः" इत्यमरः । [ अतिशय्य ] अतिक्रम्य [ विकचपलाशचयश्रियं ] विकचपलाशचयः विकसितकिंशुकराशिः । "पलाशे किंशुकः पर्णः" इत्यमरः । तस्य श्रियं तत्सदृशीं श्रियम् इत्यर्थः । अत एव निदर्शनालङ्कारः । [ समीयुः ] प्रापुः ॥ २७ ॥

अथ हेमन्तवर्णनम् आह, अविरलेति ।—[ अविरलफलिनीवनप्रसूनः ] अविरलानि घनानि फलिनीवनानां प्रियङ्गुवनानां प्रसूनानि यस्मिन् सः । "प्रियङ्गुः फलिनी फली" इत्यमरः । [ कुसुमितकुन्दसुगन्धिगन्धवाहः ] कुसुमितैः कुन्दैः माघ्यकुसुमैः सुगन्धिः गन्धवाहः यस्मिन् सः । "माघ्यं कुन्दम्" इत्यमरः । शैशिराणाम् अपि कुन्दानां हेमन्ते प्रादुर्भावात् अविरोधः । [ विरलतुषारकणः ] इति प्रारम्भोक्तिः । [ तुषारकालः ] हेमन्तः [चिराय, असमयजम् ] अकालसम्भवं [ गुणम् ] उत्कर्षं [ लेभे ] ॥ २८ ॥

विकृतिमुपययौ न पाण्डुसूनुः
चलति नयान्न जिगीषतां हि चेतः ॥२९॥

कतिपयसहकारपुष्परम्यः
तनुतुहिनोऽल्पविनिद्रसिन्दुवारः ।
सुरभिमुखहिमागमान्तशंसी
समुपययौ शिशिरः स्मरैकबन्धुः ॥ ३० ॥

निचयिनीति ।—[ निचयिनि ] उपचयवति [ लवलीलताविकासे ] लवलीलतानां विकासे पुष्पविजृम्भणे तथा [ लोध्रसमीरणे च हर्षं ] प्रमादम्, उत्कण्ठाम् इति यावत् [ जनयति] सति [ पाण्डुसूनुः विकृतिं न उपययौ ]। कुतः ?—[ हि ] यस्मात् [ जिगीषतां ] जेतुम् इच्छतां [ चेतः नयात् ] नीतेः [न चलति]। न हि क्रोधाक्रान्ते चेतसि शृङ्गाररसस्य विकाशः, तद्विरुद्धत्वात् रोषस्य इति भावः ॥ २९ ॥ *

कतिपयेति ।—[कतिपयसहकारपुष्परम्यः] कतिपयैः एव सहकारपुष्पैः चूतकुसुमैः रम्यः, न तु वसन्तवत् समग्रैः, नापि हैमन्तवत् तद्रहितैः इति भावः । [ तनुतुहिनः ] अल्पहिमः । न तु हैमन्तवत् बहुतुहिनः, नापि वसन्तवत् विरलतुहिनः इति भावः । [ अल्पविनिद्रसिन्दुवारः ] अल्पानि कतिपयानि विनिद्राणि सिन्दुवाराणि विकसितनिर्गुण्डीकुसुमानि यस्मिन् सः । अत्रापि सहकारवत् अभिप्रायः द्रष्टव्यः । "सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि" इत्यमरः । इत्थं [सुरभिमुखहिमागमान्तशंसी ] सुरभिमुखं वसन्तप्रारम्भं हिमागमान्तं

* अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

कुसुमनगवनान्युपैतुकामा
किसलयिनीमवलम्ब्य चूतयष्टिम्।
क्वणदलिकुलनूपुरा निरासे
नलिनवनेषु पदं वसन्तलक्ष्मीः ॥ ३१ ॥

---

हेमन्तावसानं च शंसति सूचयति इति सः तथोक्तः [ स्मरैकबन्धुः ] स्मरस्य एकबन्धुः सहकारी ; उभयर्तुधर्मसम्पत्तेः इति भावः। [ शिशिरः समुपययौ ] ॥ ३० ॥

अथ वसन्तप्रारम्भम् आह, कुसुमेति।—[कुसुमनगवनानि] कुसुमप्रधानानां नगानां वृक्षाणां कुसुमानां नगाः वृक्षाः वा तेषां वनानि [ उपैतुकामा ] उपैतुम् आरोढुं कामः यस्याः सा। "शैलवृक्षौ नगावगौ" इत्यमरः। "लुम्पेदवश्यमः कृत्ये तु' काममनसोरपि" इति मकारलोपः। [ वसन्तलक्ष्मीः, किसलयिनीं ] पल्लविनीं [ चूतयष्टिं ] चूतशाखाम् इव इति भावः। [ अवलम्ब्य ] अवष्टभ्य ; अन्यथा आरोढ़म् अशक्यत्वात् इति भावः। [ क्वणदलिकुलनूपुरा ] क्वणत् शिञ्जमानं शब्दायमानम् अलिकुलं नूपुरम् इव यस्याः सा तथोक्ता सती। "क्वणदलिकुलनूपुरम्" इत्यपि पाठः। अत्र अलिकुलवत् नूपुरम्। [ नलिनवनेषु पदं निरासे ] निदधे। तेषु प्रथमं प्रादुरासीत् इत्यर्थः। "उपसर्गादस्यत्यूह्योर्वा" * इति वचनात् आत्मनेपदम्। अत्र प्रक्रान्तवसन्तलक्ष्मीविशेषणसामर्थ्यात् अप्रस्तुतनायिकाव्यवहारसमारोपात् समासोक्तिः अलङ्कारः ॥ ३१ ॥

---

* "उपसर्गादस्यत्यूह्योर्वेति वाच्यम्" (वा०)

विकसितकुसुमाधरं हसन्तीं
कुरवकराजिवधूं विलोकयन्तम् ।
ददृशुरिव सुराङ्गना निषण्णं
सशरमनङ्गमशोकपल्लवेषु ॥ ३२ ॥

मुहुरनुपतता विधूयमानं
विरचितसंहति दक्षिणानिलेन
अलिकुलमलकाकृतिं प्रपेदे
नलिनमुखान्तविसर्पि पङ्कजिन्याः ॥३३॥

विकसितेति ।—[ विकसितकुसुमाधरं ] विकसितः विश्लिष्टः कुसुमम् एव अधरः यस्मिन् कर्मणि तत् यथा तथा [ हसन्तीं ] स्मयमानां [ कुरवकराजिवधूं ] कुरवकराजिः एव वधूः तां [ विलोकयन्तं ] कामुकतया इति भावः । अत एव [ अशोकपल्लवेषु ] पल्लवसंस्तरेषु [ निषण्णं ] स्थितम् इत्यर्थः । रिरंसया इति शेषः । [ सशरं ] नित्यविजयित्वात् इति भावः । इत्थं शृङ्गारवीरयोः एकाधिकरणभूतम् [ अनङ्गं सुराङ्गनाः ददृशुः इव ] इति उत्प्रेक्षा । अशोकाद्यवलोकनात् मदनसाक्षात्कारात् इव महान् मनःक्षोभः तासाम् आसीत् इत्यर्थः । अत्र रूपकोत्प्रेक्षयोः संसृष्टिः ॥ ३२ ॥

मुहुरिति ।—[ अनुपतता ] अनुधावता [ दक्षिणानिलेन ] मलयमारुतेन [ मुहुः, विधूयमानं ] कम्पितम् अत एव [ विरचितसंहति] विरचिता संहतिः येन, तत्सम्भूतम् इत्यर्थः । [ पङ्कजिन्याः ] यत् [ नलिनमुखान्तविसर्पि ] नलिनं मुखम्

श्वसनचलितपल्लवाधरोष्ठे
नवनिहितेर्ष्यमिवावधूनयन्ती ।
मधुसुरभिणि षट्पदेन पुष्पे
मुख इव शाललताबधूश्चुचुम्बे ॥ ३४ ॥
प्रभवति न तदा परो विजेतुं
भवति जितेन्द्रियता यदात्मरक्षा ।

इव तस्य अन्तः विसर्पि प्रान्तचारि [अलिकुलं] कर्त्तृ [अलकाकृतिम्] अलकसादृश्यं [प्रपेदे] ॥ ३३ ॥

श्वसनेति ।—[षट्पदेन] अलिना, शाललता सर्जतरुशाखा बधूः इव [शाललताबधूः] । "प्राकारगृहयोः शालः शालः सर्जतरुः स्मृतः" इति शाश्वतः । [श्वसनचलितपल्लवाधरोष्ठे] श्वसनेन वायुना निश्वासेन च चलितः पल्लवः अधरोष्ठः इव पल्लवाधरोष्ठः यत्र तस्मिन् । "ओत्वोष्ठयोः समासे वा" (वा०) इति पररूपं वक्तव्यम् । [मधुसुरभिणि] मधुना मकरन्देन मद्येन च सुरभिणि सुगन्धिनि [पुष्पे मुखे इव नवनिहितेर्ष्यं] नवं यथा तथा निहितेर्ष्यं कृतकोपम् [इव] इति क्रियाविशेषणम् । तथा [अवधूनयन्ती] कम्पयन्ती । "धूञ्प्रीञोर्नुग् वक्तव्यः" (वा०) इति णिचि नुगागमः । [चुचुम्बे] चुम्बिता । अत्र श्वसनशब्दार्थमधुशब्दार्थयोश्च स्वस्वभेदाध्यवसायात् श्लेषमूलातिशयोक्तिः । सा च उपमाङ्गम् इति अनयोः सङ्करः ॥ ३४ ॥

प्रभवतीति ।—[परः] शत्रुः [तदा] तस्मिन् काले

अत्रातिशयोक्तिमूला उत्प्रेक्षा ।

अवजितभुवनस्तथा हि लेभे
सिततुरगे विजयं न पुष्पमासः ॥ ३५ ॥
कथमिव तव सम्मतिर्भवित्री
सममृतुभिर्मुनिनाऽवधीरितस्य ।
इति विरचितमल्लिकाविकासः
स्मयत इव स्म मधुं निदाघकालः ॥३६॥

---

विजेतु' [न प्रभवति] न शक्नोति, [यदा जितेन्द्रियता] इन्द्रियजयित्वम् [आत्मरक्षा भवति] जायते। [तथाहि, अवजितभुवनः] त्रैलोक्यविजयी [पुष्पमासः] वसन्तः, [सिततुरगे] अर्जुने विषये [विजयं न लेभे]। अतः जितेन्द्रियाः दुर्जयाः इत्यर्थः। विशेषेण सामान्यार्थसमर्थनरूपः अर्थान्तरन्यासः अलङ्कारः ॥ ३५ ॥

अथ ग्रीष्मं वर्णयति, कथमिति।—[विरचितमल्लिकाविकासः, निदाघकालः] ग्रीष्मः [ऋतुभिः] वर्षादिभिः [समं मुनिना अवधीरितस्य] तिरस्कृतस्य [तव सम्मतिः] लोके योग्यत्वेन अनुमतिः मान्यत्वं [कथम् इव भवित्री?] न सम्मानः कथञ्चित् भविष्यति इत्यर्थः। [इति] इत्थं [मधुं] वसन्तं, "चैत्रे दैत्ये वसन्ते च जीवे कोके मधुः स्मृतः" इति विश्वः। [स्मयते स्म इव] जहास किम्? इति उत्प्रेक्षा। "लट् स्मे" (३।२।११८ पा०) इति भूतार्थे लट्। प्रहासस्य शुभ्रत्वेन कविप्रसिद्धेः मल्लिकाविकासे हासत्वाध्यवसायः। अत्र ऋतुभिः समम् अवधीरितस्य इत्यत्र अभेदाध्यवसायमूला सहोक्तिः अलङ्कारः। सम्बन्धभेदभिन्नस्य अवधीरणस्य अभिन्न-

बलवदपि बलं मिथो विरोधि
प्रभवति नैव विपक्षनिर्जयाय ।
भुवनपरिभवी न यत्तदानीं
तमृतुगणः क्षणमुन्मनीचकार ॥ ३७ ॥

श्रुतिसुखमुपवीणितं सहायै-
रविरललाञ्छनहारिणश्च कालाः ।

तया अध्यवसायात् तत् एव अवधीरणमसम्मतिद्वारा स्त्रयोत्-प्रेक्षा इति अनयोः अङ्गाङ्गिभावेन सङ्करः ॥ ३६ ॥

बलवदिति ।—[बलवत् अपि ] प्रबलम् अपि, प्रकृष्टगामि इति यावत् । [ मिथः विरोधि ] परस्परस्पर्द्धि [ बलं ] सैन्यम् । "वरूथिनी बलं सैन्यम्" इत्यमरः । [ विपक्षनिर्जयाय ] शत्रु-विजयाय । "तुमर्थाच्च" ( २।३।१५ पा० ) इत्यादिना चतुर्थी । शत्रून् जेतुम् इत्यर्थः [ न प्रभवति ] न शक्नोति [ एव ] । कुतः ?—[ यत् ] यस्मात् कारणात् [भुवनपरिभवी] भुवनानां परिभवी जेता अपि । "जिदृक्षि" ( ३।२।१५७ पा० ) इत्यादिना इनिप्रत्ययः । [ ऋतुगणः तदानीं तम् ] अर्जुनं [क्षणम्] अपि [ न उन्मनीचकार ] अनुन्मनसम् उन्मनसं न चकार । "अरुर्मनश्चक्षुः" ( ५।४।५१ पा० ) इत्यादिना अभूततद्भावे च्विप्रत्ययः, सलोपश्च । विशेषेण सामान्यसमर्थनरूपः अर्थान्तरन्यासः ॥ ३७ ॥

एवं तटस्थस्य उद्दीपनसामग्री विफला इत्युक्त्वा सम्प्रति विपरीता जाता इति आह, श्रुतीति ।—[ सहायैः ] तासां सहचरैः गन्धर्वैः, कृतम् इति शेषः । "न लोक" (२।३।६८ पा०)

अविहितहरिसूनुविक्रियाणि
त्रिदशवधूषु मनोभवं वितेनुः॥ ३८॥
न दलति निचये तथोत्पलानां
न च विषमच्छदगुच्छयूथिकासु।

---

इत्यादिना षष्ठीप्रतिषेधः। कर्त्तरि तृतीया।* [श्रुतिसुखं श्रोत्रमधुरम् [उपवीणितं] वीणया उपगानम्। "सत्यापपाश" (३।१।२५ पा०) इत्यादिना वीणाशब्दात् णिजन्तात् भावे क्तः [अविरललाञ्छनहारिणः] अविरलैः भूयोभिः लाञ्छनैः पूर्वोक्तैः फलकुसुमादिभिः चिह्नैः हारिणः मनोहराः कालाः वसन्तादि-ऋतवः [च, अविहितहरिसूनुविक्रियाणि] अविहिता अकृता हरिसूनोः अर्जुनस्य विक्रिया मनोविकृतिः यैः तानि तथाभूतानि सन्ति। नपुंसकमनपुंसकेन" (१।२।६८ पा०) इत्यादिना नपुंसकैकशेषः। [त्रिदशवधूषु मनोभवं, वितेनुः] विस्तारयामासुः। सः अयं परप्रहारार्थम् उद्यतम् आयुधं स्वात्मानम् एव प्रहरति इति न्यायवत् जातः इति भावः। अत्र मुनिविक्रियार्थं स्त्रीणां विक्रियारूपानर्थोत्पत्तिकथनात् द्वितीयः विषमालङ्कारः। तथा च सूत्रम्।—"विरूपकार्य्यानर्थयोरुत्पत्तिर्विरूपसंघटना च विषमम्" इति॥३८॥ †

तदस्थवत् आलम्बनगणः अपि विपरीतः अभूत् इति श्लोकद्वयेन आह, नेत्यादि।—[आसां लोचनानि हरिननयावयवदेषु यथा तथा, दलति] विकसति [उत्पलानां निचये अभिरतिं, न

* "कर्तृकरणयोस्तृतीया" (२।३।१८ पा०)

† अलङ्कारसर्वस्वे।

अभिरतिमुपलेभिरे यथासां
हरितनयावयवेषु लोचनानि ॥ ३९ ॥
मुनिमभिमुखतां निनीषवो याः
समुपययुः कमनीयतागुणेन ।
मदनमुपदधे स एव तासां
दुरधिगमा हि गतिः प्रयोजनानाम् ॥४०॥
प्रकृतमनुससार नाभिनेयम्
प्रविकसदङ्गुलि पाणिपल्लवं वा

---

उपलेभिरे] न प्रापुः । तथा [विषमच्छदगुच्छयूथिकासु] विषमच्छदगुच्छाः सप्तपर्णस्तवकाः यूथिका मल्लिकाश्च तासु अभिरतिं [ न च ] उपलेभिरे । "सप्तपर्णो विशालत्वक् शारदो विषमच्छदः" इत्यमरः । तथा रमणीयत्वात् तदवयवानाम् इत्यर्थः । इति चक्षुःप्रीतिः उक्ता ॥ ३९ ॥ *

अथ मनःसङ्गं सूचयति, मुनिमिति ।—[ याः ] स्त्रियः [कमनीयतागुणेन ] कमनीयता सौन्दर्य्यं सा एव गुणः तेन [ मुनिम् ] अर्जुनम् [ अभिमुखतां ] वश्यतां [निनीषवः ] नेतुम् इच्छवः [समुपययुः,तासां ] स्त्रीणां [ सः ] मुनिः [ एव मदनम् उपदधे ] जनयामास । तथाहि ।—[प्रयोजनानाम् ] उद्देश्यानां

* अत्र फुल्लपङ्कजनिचय-सप्तपर्णगुच्छयूथिकास्तवकेभ्यः उपमानेभ्यः उपमेयनायकानयनाङ्गत्वाद्याधिक्यारोपात् व्यतिरेकः । केचित् तु अर्जुनमनोहरणार्थं समागतानाम् अप्सरसां तदशक्यत्वात् आरब्धवैफल्यसंघटनात्, तथा कामोद्दीपनहेतुभिः तदङ्गदर्शनेन अप्सरसामेव कामोतपत्तिरूपविरूपसंघटनाच्च विषमालङ्कारमेव मन्यन्ते । "यद्वारब्धस्य वैफल्यमनर्थस्य च सम्भवः । विरूपयोः संघटना या च तद्विषमं मतम् ॥" इति दर्पणोक्तेः ।

प्रथममुपहितं विलासि चक्षुः
सिततुरगे न चचाल नर्त्तकीनाम् ॥४१॥
अभिनयमनसः सुराङ्गनायाः
निहितमलक्तकवर्त्तनाभिताम्रम्।

[ गतिः ] परिणतिः [ दुरधिगमा हि ] दुर्ज्ञेया खलु। अतः क्वचित् भवति क्वचित् न भवति इति भावः ॥ ४० ॥ *

अथ आसाम् अनुरागम् एव कार्य्यतः प्रपञ्चयति, प्रकृतमिति।—[ विलासि ] सविलासं [ नर्त्तकीनां ] सम्बन्धि। "शिल्पिनि ष्वुन्" ( ३।१।१४५ पा० ) इति ष्वुन्प्रत्ययः। "नृतिखनिरञ्जिभ्य एव" ( वा० ) इति नियमः। [ चक्षुः ] कर्त्तृ [ प्रकृतं ] प्रक्रान्तम् [ अभिनेयम् ] अभिनेतव्यं रसभावादिव्यञ्जकं [ न अनुससार ]। तद्दूषणं तदानुगुण्येन एव दृष्टिप्रयोगनियमात् इति भावः। तथा [प्रविकसदङ्गुलि] चञ्चलाङ्गुलि [ पाणिपल्लवं वा ] न अनुससार। स च दोषः "यतो हस्तस्ततो दृष्टिः" इति नियमात् इति भावः। "पल्लवोऽस्त्री किसलयम्" इत्यमरः। "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः। किन्तु [ प्रथमं ] प्रवेश एव [ सिततुरगे ] अर्जुने [ उपहितं ] सत् [ न चचाल ] तत्र एव लग्नं तस्थौ। रागान्धैर्न किञ्चित् करणीयम् अनुसन्धेयम् इति भावः ॥ ४१ ॥ †

* अत्रापि पूर्ववद्दैवालङ्कारः। स च सामान्येन विशेषसमर्थनरूपेणार्थान्तरन्यासेन सङ्कीर्यते।

† अत्र मुनिमोहनार्थं प्रवृत्तस्य नर्त्तकीवृन्दस्य विरूपकार्य्यरूपात्ममोहोत्पत्तौ प्रथमो विषमालङ्कारः।

चरणमभिपपात षट्पदाली
धृतनवलोहितपङ्कजाभिशङ्का ॥ ४२ ॥

अविरलमलसेषु नर्त्तकीनां
द्रुतपरिषिक्तमलक्तकं पदेषु ।
सवपुषमिव चित्तरागमूहुः
नमितशिखानि कदम्बकेसराणि ॥ ४३ ॥

---

अभिनयेति ।—[ अभिनयमनसः ] अभिनयः रसभावादिव्यञ्जकचेष्टाविशेषः । "व्यञ्जकाभिनयौ समौ" इत्यमरः । तत्र मनः यस्याः तस्याः,व्यासङ्गात् भृङ्गापातम्* अजानत्याः इत्यर्थः । [ सुराङ्गनायाः ] सम्बन्धि [ अलक्तकवर्त्तनाभिताम्रं ] अलक्तकवर्त्तनेन लाक्षारसरञ्जनेन अभिताम्रं, [निहितं] न्यस्तं [चरणं, षट्पदाली] कर्त्री [ धृतनवलोहितपङ्कजाभिशङ्का ] धृता नवलोहितपङ्कजानां अभिशङ्का प्रत्यग्रकोकनदभ्रमः यया सा [ अभिपपात ] अभिधावति स्म । अत्र षट्पदाल्याः स्त्रीचरणे पङ्कजभ्रमाभिधानात् भ्रान्तिमदलङ्कारः । तेन च उपमा व्यज्यते इति अलङ्कारेण अलङ्कारध्वनिः ॥ ४२ ॥

अविरलमिति ।—[ नमितशिखानि ] नर्त्तकीपादपीड़नात् नमिताग्राणि [ कदम्बकेसराणि ] रङ्गपूजादत्तानि इति शेषः । [ अविरलं ] सान्द्रं यथा तथा द्रुतः रागोष्मणा विगलितः अत एव परिषिक्तः प्रसृतस्तं [द्रुतपरिषिक्तं नर्त्तकीनाम् अलसेषु पदेषु ] पादन्यासेषु [ अल[illegible] ] लाक्ष[illegible] [ सवपुषं ] मूर्त्ति-

---

* भङ्गापातम् इति पाठे—[illegible] इत्यर्थः ।

नृपसुतमभितः समन्मथायाः
परिजनगात्रतिरोहिताङ्गयष्टेः ।
स्फुटमभिलषितं बभूव बध्वाः
वदति हि संवृतिरेव कामितानि ॥४४॥
अभिमुनि सहसा हृते परस्याः
घनमरुता जघनांशुकैकदेशे ।
चकितमवसनोरु सत्रपायाः
प्रतियुवतीरपि विस्मयं निनाय ॥ ४५ ॥

---

मन्तं [चित्तरागम्] उत्कटतया कायाद्बहिः निःसृतं मुनिविषयकं रागम् [इव] इति उत्प्रेक्षा । [ ऊहुः ] वहन्ति स्म ॥ ४३ ॥

अथ आसां शृङ्गारचेष्टां कथयति, नृपेति ।—[ नृपसुतम् ] अर्जुनम् [अभितः] सम्मुखं [ परिजनगात्रतिरोहिताङ्गयष्टेः ] परिजनस्य सखीजनस्य गात्रेण तिरोहिता लज्जया स्वाकारगोपनाय अन्तर्हिता अङ्गयष्टिः यस्याः सा तस्याः [ समन्मथायाः बध्वाः अभिलषितं ] मुनिं प्रति अनुरागः [ स्फुटं बभूव ] । "न च संव्रियमाणस्य अभिव्यक्तिः विरुद्धा इति वाच्यम्" इति आह ।—यतः [ संवृतिः ] सम्यक् गोपनम् [ एव कामितानि ] अनुरागान् । कामयतेः भावे क्तः । [ वदति हि ] प्रकटयति इत्यर्थः । अयम् अनुरागस्य स्वभावः उक्तः । यया चेष्टया रागः संव्रियते सा एव अस्य प्रकाशिका जाता इति भावः ॥ ४४ ॥

अभिमुनीति ।—[ अभिमुनि ] मुनिसमक्षं [ घनमरुता ] घनेन मरुता [ जघनांशुकैकदेशे ] जघनांशुकस्य एकदेशे

धृतबिसवलये निधाय पाणौ
मुखमधिरूषितपाण्डुगण्डलेखम्।
नृपसुतमपरा स्मराभितापात्
अमधुमदालसलोचनं निदध्यौ॥ ४६॥
सखि! दयितमिहानयेति सा मां
प्रहितवती कुसुमेषुणाभितप्ता।

---

[सहसा हृते] सति [सत्रपायाः] सलज्जायाः [परस्याः] सम्बन्धि [अवसनोरु] अवसनौ निरावरणौ ऊरू यस्मिन् तत् [चकितं] भयसम्भ्रमः [प्रतियुवतीः अपि] सपत्नीः अपि [विस्मयं निनाय.] "किमुत अन्यजनम्?" इति अपिशब्दार्थः। न तु मुनिम् इति आशयः॥ ४५॥ *

धृतेति।—[अपरा] स्त्री [स्मराभितापात्] हेतोः [धृतबिसवलये] धृतानि बिसानि एव वलयानि येन तस्मिन् [पाणौ, अधिरूषितपाण्डुगण्डलेखं] अधिरूषिते चन्दनादिचर्चिते पाण्डु गण्डलेखे गण्डस्थले यस्य तत् [मुखं निधाय] आरोप्य [अमधुमदालसलोचनं] अमधुमदे मधुमदरहिते तथापि अलसे लोचने यस्मिन् कर्मणि तत् यथा तथा तं [नृपसुतं निदध्यौ] पश्यति स्म। "निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः॥ ४६॥ †

* अत्र अर्थापत्तिरलङ्क्रिया कैमुतिकन्यायार्थबोधप्रसङ्गात् आशयावगाहे हेतौ सत्यपि फलाभावादविशेषोक्तिरपि इति एतयोरङ्गाङ्गित्वम्।

† अत्र मधुमदाभावेऽपि समदालसकटाक्षव्याक्षेपात् मधुमदशब्दे मदस्य आरोपात् अधिकारूढवैशिष्ट्यरूपकम्।

हृदयमहृदया न नाम पूर्वं
भवदुपकण्ठमुपागतं विवेद ॥ ४७ ॥
चिरमपि कलितान्यपारयन्त्या
परिगदितुं परिशुष्यता मुखेन ।
गतघृण ! गमितानि मत्सखीनां
नयनयुगैः सममार्द्रतां मनांसि ॥ ४८ ॥

---

अथ पञ्चभिः मुनिं प्रति दूतीवाक्यम् आह, सखीति ।— [ कुसुमेषुणा ] कामेन [ अभितप्ता ] पीड़िता [सा ] नायिका, हे [ सखि ! दयितं ] मुनिम् [ इह आनय इति मां प्रहितवती ] भवदन्तिकं प्रेषितवती । किन्तु अविमृष्यकारिणीयम् इति आह, हृदयमिति ।—[ अहृदया ] अमनस्का तस्याः त्वद्गतत्वात् इति भावः । अत एव सा [ पूर्वं ] प्राक् एव [ भवदुपकण्ठं ] त्वत्समीपम् [ उपागतं, हृदयं ] मनः [ न विवेद । नाम ] सम्भावनायाम् । अतः मत्प्रेषणं व्यर्थं तस्य अन्तरङ्गत्वात् वहिरङ्गस्य दुर्बलत्वात् इति भावः । एतेन मनःसङ्गः उक्तः । चक्षुःप्रीतिस्तु प्राक् एव सर्वासाम् उक्ता इति न पृथक् उच्यते ॥ ४७ ॥ *

"दृङ्मनःसङ्गसङ्कल्पा जागरः कृशता रतिः । ह्रीत्यागोन्माद-मूर्च्छान्ता इत्यनङ्गदशा दश ॥" इति । तत्र आद्यम् अवस्था-द्वयम् अभ्यधायि । सम्प्रति काचित् क्रमनैरपेक्ष्येण सूचयति, चिरमिति ।—[ चिरं [illegible] अपि ] सन्देशार्थं बुद्ध्या

---

* अहृदयेति हृदय [illegible] कामलिङ्गम् । हृदयमहृदयेति असक्तहृदाज्ञन.त्या [illegible]

अचकमत सपल्लवां धरित्रीं
मृदुसुरभिं विरहय्य पुष्पशय्याम्।
भृशमरतिमवाप्य तत्र चास्याः
तव सुखशीतमुपैतुमङ्कमिच्छा ॥ ४९ ॥

योजितानि अपि, वचनानि इति शेषः। [ परिशुष्यता मुखेन ] इति जागरोक्तिः। [ परिगदितुम् अपारयन्त्या ] अशक्नुवत्या तया हे [ गतघृण ! ] अद्यापि तां न अनुकम्पसे इति भावः। [ मत्सखीनां मनांसि नयनयुगैः समम् आर्द्रतां गमितानि ] उपचयं गमितानि इत्यर्थः। शोकवाष्पैः इति भावः। अत्र सखीशोकोक्त्या मूर्च्छावस्था सूच्यते। अत्र शोकवाष्परूपकारणभेदात् प्रतियोगिभेदात् च आर्द्रत्वभेदे अपि अभेदाध्यवसायः। तन्मूला च इयं नयनयुगैः समम् इति सहोक्तिः अलङ्कारः ॥ ४८ ॥

अचकमतेति।—किं वाच्यं च ? इति आह।—सा सखी मृद्वी सुरभिश्च या तां [ मृदुसुरभिं पुष्पशय्यां विरहय्य ] विहाय [ सपल्लवां धरित्रीम् अचकमत ] ऐच्छत्। तस्याः ततः अपि शीतलत्वात् इति भावः। कमेः णिङन्तात् * लुङ्। "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" ( ३।१।४८ पा० ) इति द्विर्भावः इति केचित्। तन्न, अचीकमत इति प्रसङ्गात्। अतः णिङभावपक्षे "कमेश्च्लेश्चङ् वक्तव्यः" ( वा० ) इति वक्तव्यात् चङि रूपम् एतत्। [ अस्याः ] नायिकायाः [ तत्र ] धरित्राम् [च] अपि [ भृशम्, अरतिं ] दुःखम् [ अवाप्य ]। सुखयति इति सुखः

* "कमेर्णिङ्" ( ३।१।३० पा० ) इति

तदनघ! तनुरस्तु सा सकामा
व्रजति पुरा हि परासुतां त्वदर्थे।
पुनरपि सुलभं तपोऽनुरागी
युवतिजनः खलु नाप्यतेऽनुरूपः॥ ५०॥
जहिहि कठिनतां प्रयच्छ वाचं
ननु करुणामृदु मानसं मुनीनाम्।

---

शीतः शीतलश्च तं [ सुखशीतं तव अङ्कम् ] उत्सङ्गम् [ उपैतुम् इच्छा ] वर्त्तते इति शेषः। अस्याश्च औत्सुक्यं कथितम्। अत्र अरतिजागरौ सुव्यक्तौ इति अस्याः नायिकायाः क्रमेण पुष्पशय्याद्यनेकाधारसम्बन्धकथनात् प्रथमः पर्य्यायालङ्कारः। तदुक्तम्।—"क्रमेणैकमनेकस्मिन्नाधारे वर्त्तते यदि। एकस्मिन्नथ वानेकं पर्य्यायालङ्कृतिर्द्विधा॥" इति लक्षणात्॥ ४९॥

तदिति।—[ तत् ] तस्मात् कारणात् तस्याः दुःखस्थत्वात् हेतोः हे [ अनघ! ] निष्पाप! [ तनुः ] कृशा इति कार्श्यावस्थाकथनम्। [सा] नायिका [सकामा] सफलमनोरथा [अस्तु, हि ] यस्मात् त्वम् एव अर्थः प्रयोजनं वस्तु वा तस्मिन् [त्वदर्थे] निमित्ते, सति इति शेषः; त्वाम् उद्दिश्य इत्यर्थः। [ परासुतां ] निष्प्राणत्वं [पुरा व्रजति] व्रजिष्यति, मरिष्यति इत्यर्थः। तथा च ते निमित्तहत्यया अनघत्वव्याघातः स्यात् इति भावः। "यावत्पुरानिपातयोर्लट्" (५।३।४ पा०) इति भविष्यदर्थे लट्। इदञ्च दशमावस्थाप्रदर्शनम्। "न च तपोनिष्ठत्वात् भेतव्यम्" इति आह, पुनरिति।—[ पुनः अपि ] पश्चात् अपि। "पुनरप्रथमे भेदे" इति विश्वः। [ तपः सुलभं अनुरागी

उपगतमवधीरयन्त्यभव्याः

स निपुणमेत्य कयाचिदेवमूचे ॥ ५१ ॥

सललितचलितत्रिकाभिरामाः

शिरसिजसंयमनाकुलैकपाणिः ।

---

अनुरूपः ] योग्यश्च [ युवतिजनः ] तु [ न आप्यते ] न लभ्यते [ खलु ] ॥ ५० ॥ *

एवं प्रलोभितस्य अपि मुनेः मौनं न भग्नम् इति आह, जहिहीति ।—[ कठिनतां ] निःस्पृहतां [ जहिहि ] त्यज इत्यर्थः । जहातेः "आ च हौ" ( ६।४।११७ पा० ) इति इकारः । [वाचं प्रयच्छ] सम्भाषस्व इत्यर्थः । [मुनीनां मानसं] मनः [ करुणामृदु ननु ] दयार्द्रं खलु । "स्वान्तं हृन्मानसं मनः" इत्यमरः । किञ्च [ अभव्याः ] निर्भाग्याः [ उपगतं] प्राप्तं, विषयम् इति शेषः । [ अवधीरयन्ति ] अवमन्यन्ते । [ एवम् ] उक्तप्रकारेण [सः] अर्जुनः [ कयाचित्, एत्य ] समीपम् आगत्य [ निपुणं ] चतुरं यथा स्यात् तथा [ ऊचे ] उक्तः । नायिकया दूतीं प्रति वचनम् उक्तं, तया दूत्या च मुनिं प्रत्युक्तं कथितम् इत्यर्थः । अत्र पञ्चश्लोक्यां विप्रलम्भशृङ्गारस्य औत्सुक्यनाम्नः व्यभिचारिभावस्य च अपुनरुक्तिः । अनौचित्येन नायिकायाः प्रवृत्तेः आभासत्वम् अनुसन्धेयम् । तदुक्तम् ।—"एकत्र चेदनुरागस्तिर्य्यङ्म्लेच्छगतोऽपि वा । योषितां बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ॥" इति । तन्निबन्धनात् ऊर्जस्वित्वम् अलङ्कारः । तथा च सूत्रम् ।—"रसभावतदाभासतत्-

---

* खण्डिततपः पुनरपि साध्यते, अनुरक्तानुरूपा च कामिनी तु, दुष्प्राप्यैव इति रमणीयः आत्मसम्मनुनयः । अत्र वाक्यार्थहेतुकं काव्यलिङ्गम् ।

सुरपतितनयेऽपरा निरासे
मनसिजजैत्रशरं विलोचनार्द्धम् ॥ ५२ ॥
कुसुमितमवलम्ब्य चूतमुच्चैः
तनुरिभकुम्भपृथुस्तनानताङ्गी ।
तदभिमुखमनङ्गचापयष्टिः
विसृतगुणेव समुन्ननाम काचित् ॥५३॥

प्रशमानां निबन्धनेन रसवत्प्रेय ऊर्जस्विसमाहितानि" इति समाहितातिरसबन्धे रसवदलङ्कारः। भावनिबन्धे प्रेयोऽलङ्कारः। रसभावनिबन्धे तूर्जस्वलालङ्कारः। तत् प्रशमनिबन्धने समाहितालङ्कारः इति सूत्रार्थः ॥५१॥

सललितेति।—[ सललितचलितत्रिकाभिरामाः ] सललितं सविलासं यथा तथा चलितेन विवर्त्तितेन त्रिकेण कटिभागेन। "पृष्ठवंशाधरे त्रिकम्" इत्यमरः। अभिरामाः [ शिरसिजसंयमनाकुलैकपाणिः ] शिरसि जाताः शिरसिजाः। "सप्तम्यां जनेर्डः (३।२।९७ पा०)। "अमूर्द्धमस्तकात् स्वाङ्गादकामे" (६।३।१२ पा०) इति अलुक्। "उपपदमतिङ्" (२।२।१९ पा०) इति समासः। एतेन मनसिजः व्याख्यातः। तेषां संयमने बन्धने आकुलः व्यग्रः एकः पाणिः यस्याः सा [ अपरा ] स्त्री [ सुरपतितनये ] अर्जुने [ मनसिजजैत्रशरं ] जेता एव जैत्रः। जेतृशब्दात् तृजन्तात् "प्रज्ञादिभ्यश्च" (५।४।३८ पा०) इति अण्प्रत्ययः। मनसिजस्य जैत्रः शरः तं तथाभूतं [ विलोचनार्द्धं ] विलोचनस्य अर्द्धम् एकदेशं, कटाक्षम् इत्यर्थः। [ निरासे ] विससर्ज ॥ ५२ ॥ *

* अत्र कटाक्षे जैत्रशरत्वारोपाद्रूपकालङ्कृतिः।

सरभसमवलम्ब्य नीलमन्या
विगलितनीवि विलोलमन्तरीयम् ।
अभिपतितुमनाः ससाध्वसेव
च्युतरसनागुणसन्दितावतस्थे ॥ ५४ ॥

कुसुमितमिति ।—[ इभकुम्भपृथुस्तनानताङ्गी ] इभकुम्भवत् पृथुभ्यां स्तनाभ्याम् आनतम् अङ्गं यस्याः सा । "अङ्गगात्रकण्ठेभ्यश्च" ( वृ० ) इति ङीष् । [काचित्, तनुः] तन्वी । "वोतो गुणवचनात्" ( ४।१।४४ पा० ) इति विकल्पात् न ङीष् । [ कुसुमितम्, उच्चैः ] उन्नतं [ चूतम् अवलम्ब्य ] । अत एव चूतलतायोगात् [ विस्तृतज्या ] विस्तृत: विस्तृतः गुणः ज्या यस्याः सा । "विस्तृतं विस्तृतं ततम् ।" इति "मौर्वी ज्या शिञ्जिनी गुणः" इति च अमरः । [अनङ्गचापयष्टिः इव ] आकृष्टमुक्ता इति भावः । [ तदभिमुखं समुन्ननाम ] समुज्जजृम्भे, अङ्गभङ्गं चकार इत्यर्थः ॥ ५३ ॥ *

सरभसमिति ।—[ अन्या ] अपरा [ विगलितनीवि ] श्लथबन्धनम् अत एव [विलोलं] स्थानचलितं ; नील्या रक्तं [नीलं] "नील्या अन् वक्तव्यः" (वा०) इति अन्प्रत्ययः । [ अन्तरीयं ] परिधानम् [ अवलम्ब्य ] हस्तेन गृहीत्वा [ सरभसं ] सत्वरम् [अभिपतितुमनाः] अभिपतितुं मनः यस्याः सा तूर्णोक्ता, अपगन्तुम् उद्युक्ता इत्यर्थः । तथापि [ससाध्वसा इव] न तु वस्तुतः ससाध्वसा, किन्तु [ च्युतरसनागुणसन्दिता ] च्युतेन गलितेन

* अत्र कुसुमितं चूतमवलम्ब्य संस्थिता इति वाक्यार्थहेतुकं काव्यलिङ्गम् । तदङ्गाणिता उत्प्रेक्षा ।

यदि मनसि शमः किमङ्ग ! चापं
शठ ! विषयास्तव वल्लभा न मुक्तिः ।
भवतु दिशति नान्यकामिनीभ्यः
तव हृदये हृदयेश्वरावकाशम् ॥ ५५ ॥
इति विषमितचक्षुषाभिधाय
स्फुरदधरोष्ठमसूयया कयाचित् ।

रसनागुणेन सन्दिता बद्धा सती [ अवतस्थे ] स्थिता । "बद्धे सन्दानितं मूतमुदितं सन्दितं सितम्" इत्यमरः । कर्म्मणि क्तः । द्यतिस्यतिमास्थाम्" (७।४।४०) इति इकारः ॥ ५४ ॥ *

काचित् युग्मेन आह, यदीत्यादि ।—[तव मनसि, शमः] शान्तिः [ यदि ] अस्ति इति शेषः । [ अङ्ग ! ] भो ! [ चापं किं ] किमर्थम् ? इत्यर्थः । किन्तु हे [ शठ ! ] हे वञ्चक ! तव [विषयाः] शब्दादयः [ वल्लभाः ] प्रियाः, [न] तु [मुक्तिः] । तत् एव द्रढ़यितुम् आह ।—[भवतु] कः दोषः ? इति शेषः । यदि अहं रागी तर्हि किम् इति भवतीः न गणयामि ? इति शङ्कां निवारयति, दिशतीति ।—[ तव हृदये ] मनसि [हृदयेश्वरा ] काचित् तव प्रेयसी [ अन्यकामिनीभ्यः ] स्त्र्यन्तरेभ्यः [ अवकाशं, न दिशति ] न प्रयच्छति । स्त्र्यन्तरासक्त्या न अस्मान् गणयसि, न तु वैराग्यात् ; तदर्थम् एव अयं ते सकलः प्रयासः अपि इत्यर्थः ॥ ५५ ॥

* च्युतरसनागुणसन्दिता रसनागुणबद्धा अत एव अवतस्थे इति पदार्थहेतुकं काव्यलिङ्गम् । सखाध्वसा इव इति उत्प्रेक्षा च । एतयोः स्वतन्त्रं स्थितयोः संसृष्टिः ।

अगणितगुरुमानलज्जयासौ
स्वयमुरसि श्रवणोत्पलेन जघ्ने ॥ ५६ ॥

युग्मम्।

सविनयमपराभिसृत्य साचि
स्मितसुभगैकलसत्कपोललक्ष्मीः।
श्रवणनियमितेन तं निदध्यौ
सकलमिवासकलेन लोचनेन ॥ ५७ ॥

इतीति।—[ इति ] इत्थम् [ असूयया ] मत्सरेण [ स्फुरदधरोष्ठं ] स्फुरन् अधरोष्ठः यस्मिन् कर्म्मणि तद् यथा तथा [अभिधाय] उक्त्वा [ विषमितचक्षुषा ] कुटिलीकृतदृष्ट्या [ अगणितगुरुमानलज्जया ] अगणिताः गुरवः आचार्य्यादयः मानः अभिमानः लज्जा च यया तया [कयाचित् असौ] मुनिः [उरसि स्वयं ] स्वहस्तेन एव [ श्रवणोत्पलेन, जघ्ने ] हतः ॥ ५६ ॥

सविनयमिति।—[अपरा, सविनयम्] अनौद्धत्येन [साचि] तिर्य्यक् [ अभिसृत्य ] समीपं गत्वा [ स्मितसुभगैकलसत्कपोललक्ष्मीः ] स्मितेन मन्दहासेन सुभगैकस्य लसतः कपोलस्य लक्ष्म्यः यस्याः सा इति। बहुवचनपदोत्तरः बहुव्रीहिः। अन्यथा कप्रत्ययः स्यात् इति उक्तं प्राक्। [ श्रवणनियमितेन ] कर्णान्तप्रापितेन श्रोत्ररुद्धप्रसरेण, तावदायतेन इत्यर्थः। [असकलेन ] असम्पूर्णेन, कटाक्षेण इति यावत् [लोचनेन, तं] मुनिं धनञ्जयम्। [ सकलम् इव ] समग्रप्रायं यथा तथा [निदध्यौ] पश्यति स्म। कटाक्षेण एव गाढ़म् अद्राक्षीत् इत्यर्थः। एषु श्लोकेषु भावाभासनिबन्धनत्वात् ऊर्जस्वलालङ्कारः। औत्सुक्यम्

करुणमभिहितं त्रपा निरस्ता
तदभिमुखञ्च विमुक्तमस्रु ताभिः।
प्रकुपितमभिसारणेऽनुनेतुं
प्रियमियती ह्यबलाजनस्य भूमिः॥ ५८॥

असकलनयनेक्षितानि लज्जा
गतमलसं परिपाण्डुता विषादः।
इति विविधमियाय तासु भूषां
प्रभवति मण्डयितुं वधूरनङ्गः॥ ५९॥

---

एव भावः। आभासत्वं च अस्य विरक्तमुनौ अनौचित्यात् इति उक्तं प्राक् एव इति॥ ५७॥

अथ आसां मुनिविलोभनम् उपसंहरति, करुणमिति।—
[ताभिः] स्त्रीभिः [तदभिमुखं] मुनिसमक्षं [करुणं] दीनम् [अभिहितम्] उक्तं; [त्रपा निरस्ता] लज्जा त्यक्ता। किं बहुना?—[अस्रु च विमुक्तं]; ततः परं न किञ्चित् विधेयम् आसीत् इति भावः। कुतः?—[हि] यस्मात् [अबलाजनस्य अभिसारणे] समागमविषये [प्रकुपितम्] अननुकूलं [प्रियम्, अनुनेतुम्] अनुकूलयितुम् [इयती भूमिः] इति एतावती सीमा, साधनानां परमावधिः इति भावः। अर्थान्तरन्यासः अलङ्कारः॥ ५८॥

अथ आसाम् अनुरागदार्ढ्यं निगमयति, असकलेति।—
[असकलनयनेक्षितानि] नयनार्द्धविलोकितानि [लज्जा अलसं गतं] मन्दगमनं [परिपाण्डुता] पाण्डुरवर्णत्वं [विषादः] इष्टानवाप्तिनिमित्तः चेतोभङ्गः [इति] एवंप्रकारं [विविधं]

अलसपदमनोरमं प्रकृत्या
जितकलहंसबधूगति प्रयातम् ।
स्थितमुरुजघनस्थलातिभारात्
उदितपरिश्रमजिह्मितेक्षणं वा ॥ ६० ॥

भृशकुसुमशरेषुपातमोहात्
अनवसितार्थपदाकुलोऽभिलापः ।

---

नानाविचेष्टितम् । "नपुंसकमनपुंसकेन" (१।२।६९ पा०) इत्यादिना नपुंसकैकशेषत्वम् । [तासु भूषाम् इयाय] इति भावप्राधान्येन योज्यम् । तथा हि ।—[अनङ्गः] मदनः [बधूः मण्डयितुं प्रभवति], सर्वावस्थासु इति भावः । अतः तासाम् अनङ्गभूषितानाम् अखिलं भूषणम् एव इति भावः ॥ ५८ ॥ *

इदानीम् एतासां त्रिभिः मुनिविलोभने प्रयासवैफल्यम् आह, अलसेति ।—बधूनां सम्बन्धि [प्रकृत्या अलसपदमनोरमम्] अलसैः पदैः मनोरमं मनोज्ञम् अत एव [जितकलहंसबधूगति] जिता कलहंसबधूनां गतिः येन तत् [प्रयातं] गमनम् । भावे क्तः । तथा [उरुजघनस्थलातिभारात्] उरुणः अतिविपुलस्य जघनस्थलस्य अतिभारात् अतिगौरवात् [उदितपरिश्रमजिह्मितेक्षणम्] उदितपरिश्रमेण उद्गतश्रमेण जिह्मिते घूर्णिते ईक्षणे यस्मिन् तत् [स्थितं वा] स्थितिश्च । सर्वत्र वाशब्दः समुच्चये ।—"वा समुच्चये एवार्थे उपमानविकल्पयोः" इति हेमचन्द्रः ॥ ६० ॥

---

* अत्र सामान्यं न विशेषसमर्थनरूपः अर्थान्तरन्यासः । स च अपाङ्गवीक्षितादीनां सर्वेषामिव शृङ्गाराङ्गत्वात् प्रस्तुतानां भूषणत्वरूपैकधर्मसम्बन्धात् तुल्ययोगिता, इति अन्योऽन्य नैरपेक्षेण संसृष्टिः ।

अधिकविततलोचनं वधूनाम्
अयुगपदुन्नमितभ्रु वीक्षितं च ॥ ६१ ॥
रुचिकरमपि नार्थवद् बभूव
स्तिमितसमाधिशुचौ पृथातनूजे।
ज्वलयति महतां मनांस्यमर्षे
न हि लभतेऽवसरं सुखाभिलाषः ॥६२॥

॥ विशेषकम् ॥

भृशेति।—तथा [भृशकुसुमशरेषुपातमोहात्] भृशेन गाढ़ेन कुसुमशरस्य कामस्य इषोः पातेन निपातेन यः मोहः मूर्च्छा तस्मात् हेतोः [अनवसितार्थपदाकुलः] अनवसितार्थैः अस्फुटोच्चारणात् अनवधारिताभिधेयैः पदैः सुप्तिङन्तादिभिः सुभितशब्दैः आकुलः सङ्कीर्णः [अभिलापः] वाक्यप्रयोगश्च [अधिकविततलोचनम्] अधिकं विततं विस्तृतं लोचनं यस्मिन् तत् [अयुगपदुन्नमितभ्रु] अयुगपत् पर्य्यायेण उन्नमितं भ्रुवौ यस्मिन् तत् तथोक्तम्। "ह्रस्वो नपुंसके प्रातिपदिकस्य" (१।२।४७ पा०) इति ह्रस्वः। [वीक्षितं] वीक्षणं [च] ॥६१॥ *

रुचिकरमिति।—पूर्वोक्तं [रुचिकरं] स्पृहाजनकम् [अपि]। "रुचिः कान्त्यर्चिषोः भासि स्त्रियां शोभा-स्पृहार्थयोः" इति वैजयन्ती। [स्तिमितसमाधिशुचौ] स्तिमितेन स्थिरेण समाधिना तपोयोगेन शुचौ शुद्धे, निर्व्विकारचेतसि इत्यर्थः। [पृथातनूजे] अर्जुने विषये [अर्थवत्] सप्रयोजनं [न बभूव, हि] तथा हि।—[महतां] धीराणां [मनांसि,

* अत्र प्रगाढ़ानुरागस्य तद्वत्याश्च यथोचितवर्णनप्रसङ्गात् स्वभावोक्तिः।

स्वयं संराध्यैवं शतमखमखण्डेन तपसा
परोच्छित्त्या लभ्यामभिलषति लक्ष्मीं हरिसुते ।
मनोभिः सोद्वेगैः प्रणयविहतिध्वस्तरुचयः
सगन्धर्वा धाम त्रिदशवनिताः स्वं प्रतिययुः ॥६३॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये अर्जुन-
विलोभनप्रत्याख्यानः नाम दशमः सर्गः ॥ १० ॥

अमर्षे ] क्रोधे [ ज्वलयति ] सति [ सुखाभिलाषः, अवसरम् ] अवकाशं [ न लभते ] रौद्रस्य शृङ्गारविरोधित्वात् इति भावः । अत्र विशेषके अर्थान्तरन्यासः अलङ्कारः ॥ ६२ ॥

स्वयमिति ।—[ एवं हरिसुते ] अर्जुने [ स्वयम् अखण्डेन ] अविलुप्तेन [ तपसा शतमखम् ] इन्द्रं [ संराध्य ] प्रीणयित्वा [ परोच्छित्त्या ] शत्रुवधेन [ लभ्यां ] साध्यां [ लक्ष्मीं ] राजलक्ष्मीं [ अभिलषति ] सति [ सोद्वेगैः ] कार्य्यसिद्ध्यभावात् सनिर्वेदैः [ मनोभिः ] उपलक्षिताः । किञ्च [ प्रणयविहतिध्वस्तरुचयः ] प्रणयविहत्या प्रार्थनाभङ्गेन ध्वस्तरुचयः नष्टकान्तयः [ सगन्धर्वाः ] गन्धर्वसहिताः [ त्रिदशवनिताः, स्वं धाम ] स्वस्थानं [ प्रतिययुः ]। शिखरिणी वृत्तम् एतत् ।—"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात् ॥ ६३ ॥ *

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीय-
काव्यव्याख्यायां घण्टापथसमाख्यायां दशमः सर्गः ।

* अत्राभीष्टसाधनं दूरापास्तं सगर्वं स्वीकृतस्य महेन्द्रादेश्मालाग्रहस्याप्यसाधन-योगात् पदभ्रंशशङ्का सम्मानहान्यादि अनिष्टापत्तेः द्वितीयः विषमः ।

# एकादशः सर्गः ।



अथामर्षान्निसर्गाच्च जितेन्द्रियतया तया ।
आजगामाश्रमं जिष्णोः प्रतीतः पाकशासनः ॥१॥
मुनिरूपोऽनुरूपेण सूनुना ददृशे पुरः ।
द्राघीयसा वयोऽतीतः परिक्लान्तः किलाध्वना ॥२॥

---

अथेति ।—[अथ] अप्सरसां प्रतिप्रयाणानन्तरम् । [पाकशासनः] पाकः नाम कश्चित् राक्षसः तस्य शासनः इन्द्रः । नन्द्यादित्वात् ल्युप्रत्ययः । [तया] अप्सरोमुखात् श्रुतया [अमर्षात्] द्विषद्द्वेषात् [निसर्गात् च] या [जितेन्द्रियतया] जितेन्द्रियता, तया आगन्तुकानागन्तुकोभयविधहेतुकया [प्रतीतः] हृष्टः सन् । "ख्याते हृष्टे प्रतीतः" इत्यमरः । [जिष्णोः] अर्जुनस्य । "जिष्णुः शक्रे धनञ्जये" इत्यमरः । [आश्रमम् आजगाम] । अत्र अमर्षनिसर्गयोः जितेन्द्रियताहेतुकं रोचकरम् अपि इति काव्यलिङ्गं स्फुटम् अवगम्यते ॥१॥

किम् इन्द्रः निजरूपेणैव आगत ? नेत्याह, मुनिरूप इति ।—मुनेः रूपम् इव रूपं यस्य सः [मुनिरूपः] मुनिवेशधारी इत्यर्थः, सः इन्द्रः [अनुरूपेण] दर्शनप्रदानयोग्येन इत्यर्थः, [सूनुना] पुत्रेण अर्जुनेन [पुरः] अग्रे [ददृशे] दृष्टः । कथम्भूतः ? [वयोऽतीतः] वयः यौवनादिकम् अतीतः वृद्धः । "द्वितीया श्रित" (२।१।२४ पा०) इत्यादिना द्वितीया-

जटानां कीर्णया केशैः संहत्या परितः सितैः ।
पृक्तयेन्दुकरैरह्नः पर्य्यन्त इव सन्ध्यया ॥ ३ ॥
विशदभ्रूयुगच्छन्नवलितापाङ्गलोचनः ।
प्रालेयावततिम्लानपलाशाब्ज इव ह्रदः ॥ ४ ॥

---

समासः । [ द्राघीयसा ] अतिदीर्घेण । "प्रियस्थिर" ( ६।४। १५७ पा० ) इत्यादिना दीर्घशब्दस्य द्राघादेशः । [ अध्वना ] अध्वगमनेन इत्यर्थः । [परिक्लान्तः] परिश्रान्तः । [किल] इति अलीके । "किल सम्भाव्यवार्त्तयोः । हेत्वरुच्योरलीके च" इति हेमचन्द्रः । वृद्धः इव दूराध्वश्रान्तः इव स्थितः इत्यर्थः । "इव" इति पाठे स्पष्टार्थः ॥ २ ॥

अथ चतुर्भिः इन्द्रं विशिनष्टि, जटानामिति ।—[ परितः सितैः केशैः कीर्णया ] व्याप्तया [जटानां, संहत्या] समूहेन उपलक्षितः, अत एव [ इन्दुकरैः ] इन्दुकिरणैः [ पृक्तया ] युक्तया [सन्ध्यया] उपलक्षितः [ अह्नः पर्य्यन्तः ] दिनान्तः [ इव ] स्थितः । तस्य अपि परिणतरूपत्वात् वृद्धोपमानत्वं, जटानां संहत्येत्युक्तत्वात् सन्ध्यासाम्यम् ॥ ३ ॥

विशदेति ।—पुनश्च [विशदभ्रूयुगच्छन्नवलितापाङ्गलोचनः] विशदेन पलितपाण्डुरेण भ्रूयुगेन छन्ने वलितापाङ्गे वलिमत्प्रान्ते लोचने यस्य सः तथोक्तः । "अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः । पामादित्वात् लोमादिसूत्रेण वलच्प्रत्ययः । * [प्रालेयावततिम्लानपलाशाब्जः ] प्रालेयावतत्या हिमसंहत्या म्लान-

* "लोमादिपामादिपिच्छादिभ्यः शनेलचः" ( ५।२।१०० पा० ) ।

आसक्तभरनीकाशैरङ्गैः परिकृशैरपि ।
आद्यूनः सद्गृहिण्येव प्रायो यष्ट्यावलम्बितः ॥५॥
गूढोऽपि वपुषा राजन् धाम्ना लोकाभिभाविना ।
अंशुमानिव तन्वभ्रपटलच्छन्नविग्रहः ॥ ६ ॥

पलाशानि क्रान्तदलानि अङ्गानि यस्मिन् सः [ ह्रदः इव ] स्थितः ॥ ४ ॥ *

आसक्तेति।—पुनश्च [ परिकृशैः ] परिक्षीणैः [ अपि, आसक्तभरनीकाशैः ] भाराक्रान्तसदृशैः, सभारवद्गुरुभवद्भिः इत्यर्थः। "इकः काशे" (६।३।१२३ पा०) इति दीर्घः। [ अङ्गैः ] उपलक्षितः, कार्श्यात् लघूनि अपि स्वाङ्गानि स्वयं वोढुम् असमर्थः इत्यर्थः। अत एव [ आद्यूनः ] औदरिकः। "आद्यूनः स्यादौदरिके विजिगीषाविवर्जिते" इत्यमरः। आङ्-पूर्वात् दीव्यतेः क्तः। "च्छ्वोः शूडनुनासिके च" (६।४।१९ पा०) इति ऊठादेशः। "दिवोऽविजिगीषायाम्" (८।२।४९ पा०) इति निष्ठानत्वम्। [ सद्गृहिण्या ] अनुकूलकलत्रेण [ इव, प्रायः ] प्राचुर्य्येण [ यष्ट्या ] अवलम्बनदण्डेन [ अवलम्बितः ] धारितः, न तु स्वशक्त्या इति भावः ॥ ५ ॥ †

गूढ इति।—[ वपुषा गूढः अपि ] प्रच्छन्नरूपः अपि इत्यर्थः। प्रकृत्यादिभ्यः उपसंख्यानात् तृतीया। ‡ [ तन्वभ्रपटलच्छन्नविग्रहः ] स्तोकाभ्रवृन्दान्तरितमूर्त्तिः [ अंशुमान् इव, लोकाभिभाविना ] लोकव्यापिना [ धाम्ना ]

* अत्र उपमालङ्कृतिः।

† अत्रोपमानोपमेयसाधारणधर्म्मसम्बन्धिनी उपमा।

‡ "प्रकृत्यादिभ्यः उपसंख्यानम्" (वा०)।

जरतीमपि बिभ्राणस्तनुमप्राकृताकृतिः ।
चकाराक्रान्तलक्ष्मीकः ससाध्वसमिवाश्रमम् ॥७॥
अभितस्तं पृथासूनुः स्नेहेन परितस्तरे ।
अविज्ञातेऽपि बन्धौ हि बलात्प्रह्लादते मनः ॥८॥

---

तेजसा । "धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः" इति हेमचन्द्रः । [राजन्] दीप्यमानः ददृशे इति पूर्वेण सम्बन्धः ॥ ६ ॥ *

जरतीमिति ।—[जरतीं] जीर्णाम् । "जीनो जीर्णो जरन्नपि" इत्यमरः । जीर्य्यतेः अतीतार्थे शतृप्रत्ययः । "उगितश्च" (४।१।६ पा०) इति ङीप् । [तनुं] शरीरं [बिभ्राणः] दधत् [अपि, अप्राकृताकृतिः] अप्राकृता अलोकसामान्या आकृतिः मूर्त्तिः यस्य सः इन्द्रः आक्रान्ता अभिभूता लक्ष्मीः आश्रमशोभा येन सः [आक्रान्तलक्ष्मीकः] । एकवचनान्तलक्ष्मीशब्दोत्तरपदबहुव्रीहौ "उरःप्रभृतिभ्यः कप्" (५।४।१५१ पा०) इति नित्यं कप् । एकवचनोत्तरपदस्यैव लक्ष्मीशब्दस्य उरःप्रभृतिषु पाठात् 'शेषाद्विभाषा' (५।४।१८४ पा०) इति विकल्पाश्रयणे तु द्विवचनबहुवचनोत्तरपद इति विवेकः । [आश्रमं ससाध्वसम् इव चकार] । तेजस्विदर्शनात् भयं भवति, तत् तु न दुःखजनकं तस्य अमानुषत्वात् इति सूचयितुम् इवशब्दः ॥ ७ ॥ †

अभित इति ।—[पृथासूनुः] अर्जुनः [तम्] इन्द्रम् [अभितः] तं प्रति [स्नेहेन परितस्तरे] । तद्गोचरेण प्रेम्णा

---

* अत्र उपमानोपमेयसाधारणधर्मसम्बन्धनिबन्धनात् उपमालङ्कारः ।

† अत्र उत्प्रेक्षालङ्कारः ।

आतिथेयीमथासाद्य सुतादपचितिं हरिः ।
विश्रम्य विष्टरे नाम व्याजहारेति भारतीम् ॥ ९ ॥
त्वया साधु समारम्भि नवे वयसि यत्तपः ।
ह्रियते विषयैः प्रायो वर्षीयानपि मादृशः ॥१०॥

---

पर्य्यावृतः । स्तृणोतेः कर्म्मणि लिट् । "ऋतश्च संयोगादेर्गुणः" (७।४।१० पा० ) इति गुणः । ननु अज्ञातसम्बन्धविशेषस्य तस्येन्द्रे कथं स्नेहोदयः ? इत्यतः आह, अविज्ञात इति ।—[ बन्धौ ] सुहृदि [ अविज्ञाते अपि ] बन्धुः अयम् इति अज्ञाते अपि [ बलात् ] बान्धवसत्तावशात् एव [ मनः प्रह्लादते हि ] स्निह्यति इत्यर्थः ॥ ८ ॥

आतिथेयीमिति ।—[ अथ हरिः ] इन्द्रः [ सुतात् ] अर्जुनात् [ आतिथेयीम् ] अतिथिषु साध्वीम् । "पथ्यतिथिवसतिस्वपतेर्ढञ्" ( ४।४।१०४ पा० ) । [ अपचितिं ] पूजाम् [ आसाद्य ] प्राप्य । "पूजा नमस्यापचितिः" इत्यमरः । [ विष्टरे ] आसने । "ऋदोरप्" (३।३।५७ पा०) इति स्तृणातेः अप्प्रत्ययः । "वृक्षासनयोर्विष्टरः" ( ८।३।९३ पा० ) इति षत्वम् । [ विश्रम्य नाम ] विश्रम्य किल, श्रमम् अपनीय इत्यर्थः । [ इति ] वक्ष्यमाणप्रकारां [ भारतीं, व्याजहार ] उक्तवान् । "व्याहार उक्तिर्लपितम्" इत्यमरः ॥ ९ ॥

अथ प्रथमं तावत् मुनिवत् एनं मुमुक्षुं ज्ञात्वा आह, त्वयेति ।—[ त्वया साधु, समारम्भि ] सम्यक् उपक्रान्तम् । रभेः कर्म्मणि लुङ् । कुतः ?—[ यत् ] यस्मात् [ नवे वयसि ] यौवने [ तपः ] चर्य्यते इति शेषः । तथा हि ।—अहम् इव

श्रेयसीं तव सम्प्राप्ता गुणसम्पदमाकृतिः ।
सुलभा रम्यता लोके दुर्लभं हि गुणार्जनम् ॥११॥
शरदम्बुधरच्छायागत्वर्य्यो यौवनश्रियः ।
आपातरम्या विषयाः पर्य्यन्तपरितापिनः ॥१२॥

दृश्यते असौ [माहृशो. वर्षीयान् ] अतिवृद्धः [ अपि ] । "प्रिय-स्थिर" ( ६।४।१५७ पा० ) इत्यादिना वृद्धशब्दस्य वर्षादेशः । [ प्रायो विषयैः, क्रियते ] आकृष्यते । किमु भवादृशः यवीयान् इति भावः ॥ १० ॥ *

अथ एवम् अनारम्भे तव स्वाकारलाभः अपि विफलः स्यात् इति आशयेन आह. श्रेयसीमिति ।—[तव, आकृतिः] मूर्त्तिः, रम्या इति शेषः । [ श्रेयसीं ] श्रेष्ठां [ गुणसम्पदं ] तपः-समारम्भरूपां [ सम्प्राप्ता ] , अतः न निष्फला इति भावः । न च स्वाकाराः गुणाढ्याश्च कियन्तः न सन्ति इति वाच्यम् इति आह, लोक इति ।—[ लोके, रम्यता ] रम्याकारता [ सुलभा हि, गुणार्जनं] गुणसम्पादनं.[दुर्लभं], त्वयि तु उभयं, सम्पद्यते इति हेम्नः परमामोदः इति भावः ॥ ११ ॥ †

यदुक्तं "त्वया साधु समारम्भि" इति तत् एव साधुत्वं संसारनिःसारताख्यापनाय युग्मेन उपपादयति, शरदिति ।— [यौवनश्रियः] तावत् [शरदम्बुधरच्छायागत्वर्य्यो] शरदम्बुधर-

* अत्र हि तपसोऽभाजनेऽपि नवे वयसि तपःप्रातिकूल्यायाः लोकातिशयसम्पत्ते-र्वर्णनात् उदात्तालङ्कारः । स च द्वितीयार्द्धगतसामान्येन विशेषसमर्थनरूपार्थान्तर-न्यासेन संसृष्टः ।

† अर्थान्तरन्यासः ।

अन्तकः पर्य्यवस्थाता जन्मिनः सन्ततापदः ।
इति त्याज्ये भवे भव्यो मुक्तावुत्तिष्ठते जनः ॥१३॥

च्छाया इव गत्वर्य्यः चञ्चलाः । "गत्वरश्च" (३।२।१६४ पा०) इति क्वरबन्तः निपातः । "टिड्ढाणञ्" (४।१।१५ पा०) इत्यादिना ङीप् । [ विषयाः] शब्दादयः तु [आपातरम्याः] तत्कालरमणीयाः । "तदात्वे पात आपातः" इति वैजयन्ती । [ पर्य्यन्तपरितापिनः ] पर्य्यन्ते अवसाने परितापयन्ति दुःखं कुर्वन्ति इति तथोक्ताः ॥ १२ ॥ *

अन्तक इति ।—किञ्च [सन्ततापदः] सन्तताः अनवच्छिन्ना आपदः क्लेशाः यस्य तस्य [ जन्मिनः ] प्राणिनः । "प्राणी तु चेतनो जन्मी" इत्यमरः । व्रीह्यादित्वात् इनिः । † [अन्तकः] मृत्युः । [ पर्य्यवस्थाता ] प्रतिरोद्धा । प्रथमं तावत् जन्मिनः जन्मदुःखम् एव दुस्तरं, ततः जातस्य जीवनम् अपि सततं दुःखसम्भिन्नतया विषयुक्तान्नप्रायं, तत् अपि मृत्युग्रस्तम् इति सः अयं—"काकमांसं शुनोच्छिष्टं दुर्गन्धं क्रिमिसङ्कुलम् । म्लेच्छपक्वं सुरासिक्तं स्वल्पं तदपि दुर्लभम् ॥" इति न्यायात् इति भावः । [इति] उक्तहेतोः [त्याज्ये, भवे ] संसारे । भवति इति [भव्यः] योग्यः [जनः] भवादृशः इति शेषः । "भव्यं सुखे शुभे चापि भेद्यवद् योग्यभाविनोः" इति विश्वः । "भव्यगेय" (३।४।६८ पा० ) इत्यादिना कर्त्तरि निपातः । [मुक्तावुत्तिष्ठते] मुक्तौ मोक्षे उत्तिष्ठते उद्युक्तः भवति । "उदोऽनूर्ध्वकर्म्मणि" ( १।३।२४ पा० ) इति आत्मनेपदम् ॥ १३ ॥

* उपमालङ्कृतिः ।

† इनिठनाधिकारे "व्रीह्यादिभ्यश्च" (५।२।११६ पा० ) ।

चित्तवानसि कल्याणी यत्त्वां मतिरुपस्थिता।
विरुद्धः केवलं वेषः सन्देहयति मे मनः॥ १४॥
युयुत्सुनेव कवचं किमामुक्तमिदं त्वया।
तपस्विनो हि वसते केवलाजिनवल्कले॥ १५॥

सम्प्रति प्रशंसापूर्वकं स्वाभिसन्धिं दर्शयति, चित्तवान् इति।—[ चित्तवान् ] प्रशस्तचित्तः [ असि ]। प्रशंसायां मतुप्। * कुतः ? [ यत् ] यतः [त्वां, कल्याणी] साध्वी। "बह्वादिभ्यश्च" ( ४।१।४५ पा० ) इति ङीष्। [ मतिः, उपस्थिता ] सङ्गता। किन्तु [ केवलम् ] एकं यथा तथा [विरुद्धः वेषः मे मनः, सन्देहयति ] संशययुक्तं करोति। यद्वा वेषः केवलं, वेषः एव इत्यर्थः। "केवलः कृत्स्न एके च" "केवलं चावधारिते" इति उभयत्र अपि शाश्वतः॥ १४॥

वेषविरोधम् एव आह, युयुत्सुनेति।—[ युयुत्सुना इव ] योद्धुम् इच्छुना इव [ त्वया ]। युधेः सन्नन्तात् उप्रत्ययः। † [ किम् इदं कवचं ] वर्म [ आमुक्तम् ] अर्पितम् ? "तत्र कः विरोधः" इत्यत्र आह।—[ हि ] यस्मात् [ तपस्विनः, केवलाजिनवल्कले ] केवले एके, कवचाद्यसहचरिते इति यावत्, ते च ते अजिनवल्कले च। "निर्णीते केवलम्" इति "त्रिलिङ्गं त्वेक-

* "तदस्यास्त्यस्मिन्निति मतुप्" ( ५।२।९४ पा० ) सूत्रे वार्त्तिककारिका यथा—"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः॥" अस्तिविवक्षायां उक्तार्थेषु मतुबादयः प्रत्ययाः इति वार्त्तिकार्थः।

† "सनाशंसभिक्ष उः" ( ३।२।१६८ पा० )।

प्रपित्सोः किन्नु ते मुक्तिं निःस्पृहस्य कलेवरे ।
महेषुधी धनुर्भीमं भूतानामनभिद्रुहः ॥ १६ ॥
भयङ्करः प्राणभृतां मृत्योर्भुज इवापरः ।
असिस्तव तपःस्थस्य न समर्थयते शमम् ॥ १७ ॥

॥ युग्मम् ॥

कृत्स्नयोः” इत्यमरः । [ वसते ] आच्छादयन्ति । * अतः तपस्विनः ते कवचधारणं विरुद्धम् इत्यर्थः ॥ १५ ॥

प्रपित्सोरिति ।—[ किन्नु मुक्तिं, प्रपित्सोः] प्राप्तुम् इच्छोः । “सनि मीमा” (७।४।५४ पा० ) इत्यादिना इसादेशः । “अत्र लोपोऽभ्यासस्य” ( ७।४।५८ पा० ) इति अभ्यासलोपः । अतः मुमुक्षुत्वात् एव [ कलेवरे ] शरीरे [ निःस्पृहस्य ] गतस्पृहस्य, अतः न आत्मरक्षार्थं धनुर्धारणं युक्तम् इत्यर्थः । न अपि परहिंसार्थम् इति आह ।—[ भूतानां ] जन्तूनाम् । “क्ष्मादौ जन्तौ च भूतानि” इति वैजयन्ती । “क्रुधद्रुहोरुपसृष्टयोः कर्म” ( १।४।३८ पा० ) इति कर्मसंज्ञायाम् । “कर्त्तृकर्मणोः कृति” ( २।३।६५ पा० ) इति कर्त्तरि षष्ठी । [अनभिद्रुहः ] अहिंसकस्य । “सत्सूद्विष” ( ३।२।६१ पा० ) इत्यादिना क्विप् । [ ते ] तव [ महेषुधी ] महानिषङ्गौ [ भीमं ] त्रासजनकं [ धनुः ] च न समर्थयते शमम् इत्युत्तरेण अन्वयः । समर्थयते इति वचनविपरिणामः कार्य्यः ॥ १६ ॥ †

भयङ्कर इति ।—तथा [मृत्योः अपरः भुजः इव प्राणभृतां] प्राणिनाम् । भयं करोतीति [भयङ्करः] । “मेघर्त्तिभयेषु कृञः”

* वस आच्छादने अनुदात्तेत् अदादिगणीय: ।

† अत्र युग्मे हि तपस्विवेषस्य योद्धृवेषस्य च विरूपवेषयोः संघटनात् विषमालङ्कारः ।

जयमत्रभवान् नूनमरातिष्वभिलाषुकः।
क्रोधलक्ष्म क्षमावन्तः क्वायुधं क्व तपोधनाः? ॥१८॥

(३।२।४३ पा०) इति खच्प्रत्ययः। "अरुर्द्विष" (६।३।६७ पा०) इत्यादिना मुमागमः। [असिः] खड्गः। [तपःस्थस्य] तपसि तिष्ठति इति तपःस्थः, तपः चरन् इत्यर्थः। "सुपि स्थः" (३।२।४ पा०) इति कप्रत्ययः। तस्य [तव, शमं] शान्तिं [न समर्थयते] न सम्भावयति। "किं शान्तस्य शस्त्रेण?" इति भावः॥ १७॥ *

ननु अशान्तस्य किं तपसा? इति आशङ्क्य जयार्थम् इति आह, जयमिति।—[अत्रभवान्] पूज्यः इत्यर्थः। "इतराभ्योऽपि दृश्यन्ते" (५।३।१४ पा०) इति प्रथमार्थे प्राग्दिशीयः त्रल्प्रत्ययः। सुप्सुपा इति समासः। "त्रिषु तत्रभवान् पूज्यस्तथैवात्रभवानपि" इति यादवः। [अरातिषु] शत्रुषु विषये [जयम् अभिलाषुकः] जयम् इच्छुः। "लषपत"(३।२।१५४ पा०) इत्यादिना उकञ्प्रत्ययः। "न लोक" (२।३।६९ पा०) इत्यादिना षष्ठीप्रतिषेधः। [नूनम्] इति निश्चये। "नूनं तर्केऽपि निश्चये" इत्यमरः। [क्रोधलक्ष्म] क्रोधस्य लक्ष्म कोपस्य लिङ्गम् [आयुधं क्व? क्षमावन्तः] शान्ताः [तपोधनाः क्व?] क्रोधशान्त्योः विरोधात् तत्कार्य्ययोः शस्त्रतपसोः अपि एकत्र असङ्गतेश्च शस्त्रिणः ते तपो जयार्थं, न तु मोक्षार्थम् इति निश्चयः इत्यर्थः॥ १८॥ †

* असेः मृत्युभुजङ्गपत्नीत्प्रेक्षणात् उत्प्रेक्षालङ्कारः।

† अत्र हि विषमालङ्कारः बोद्धव्यः।

यः करोति वधोदर्काः निःश्रेयसकरीः क्रियाः ।
ग्लानिदोषच्छिदः स्वच्छाः स मूढः पङ्कयत्यपः॥१९॥
मूलं दोषस्य हिंसादेरर्थकामौ स्म मा पुषः ।
तौ हि तत्त्वावबोधस्य दुरुच्छेदावुपप्लवौ ॥ २० ॥

तपसः जयार्थत्वे दोषम् आह, य इति ।—[ यः ] पुमान् निश्चितं श्रेयः निःश्रेयसं मुक्तिः । "अचतुर" ( ५।४।७७ पा० ) इत्यादिना समासान्तः निपातः । "मुक्तिः कैवल्यनिर्वाणश्रेयो-निःश्रेयसामृतम्" इत्यमरः । निःश्रेयसं कुर्वन्ति इति [ निःश्रेयसकरीः ] निःश्रेयसहेतून् इत्यर्थः । "कृञो हेतु-ताच्छील्यानुलोम्येषु" ( ३।२।२० पा० ) इति हेत्वर्थे टप्रत्ययः । टित्त्वात् ङीप् । [ क्रियाः ] तपोदानादिकर्माणि [ वधोदर्काः ] हिंसाफलकाः [ करोति ] । "उदर्कः फलमुत्तरम्" इत्यमरः । अत एव [ मूढः, सः ] पुमान् । ग्लानिः एव दोषः तं छिन्दन्ति इति [ ग्लानिदोषच्छिदः ] पिपासाहारिणीः । क्विप् । * [ स्वच्छाः ] निर्मलाः [ अपः पङ्कयति ] पङ्कवतीः करोति । "णाविष्ठवद्भावे विन्मतोर्लुक्" † इति मतुपः लुक् । महाफल-साधनस्य तपसः तुच्छफलैः विनियोगः स्वच्छाम्बुनः पङ्कसङ्कर-वत् प्रेक्षावद्भिः गर्हितः इत्यर्थः । अत्र "यत्तपसो वधोदर्की-करणं तन्निर्मलस्य पयसः पङ्कसङ्करीकरणम्" इति वाक्ये वाक्यार्थान्तरम् आरोप्य प्रतिबिम्बकरणाक्षेपात् असम्भववस्तु-सम्बन्धात् वाक्यार्थवृत्तिनिदर्शनालङ्कारः ॥ १९ ॥

---

* "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" (३।२।६१ पा०) ।

† प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च ( ग० सू ) प्रातिपदिकाद्धात्वर्थे णिच् स्यादिष्ठे यथा प्रातिपदिकस्य पुंवद्भावटिलोपविन्मतुब्लोप-यणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वत् णावपि स्युः ।

अभिद्रोहेण भूतानामर्जयन् गत्वरीः श्रियः।
उदन्वानिव सिन्धूनामापदामेति पात्रताम् ॥२१॥
या गम्याः सत्सहायानां यासु खेदो भयं यतः।
तासां किं यन्न दुःखाय विपदामिव सम्पदाम्॥२२॥

---

ननु अर्थकामयोः अपि मोक्षवत् पुरुषार्थत्वात् तपसः तदर्थत्वे कः दोषः? तत्र आह, मूलमिति।—[ हिंसादेः ] इति तद्गुणसंविज्ञानः बहुव्रीहिः। आदिशब्दात् अनृतस्तेयादीनां संग्रहः। [ दोषस्य ] अवगुणस्य [ मूलं ] कारणभूतौ। "स्त्रीकामा धनकामाश्च किं न कुर्वन्ति पातकम्?" इति भावः। [अर्थकामौ मा स्म पुषः]। न उपचिनुष्व "स्मोत्तरे लङ् च" (३।३।१७६ पा०) इति लुङ्। "पुषादि" (३।१।५५ पा०) इत्यादिना च्लेः अङादेशः। [ हि ] यस्मात् [ तौ ] अर्थकामौ [ तत्त्वावबोधस्य ] तत्त्वज्ञानस्य, मोक्षसाधनस्य इति शेषः। [ दुरुच्छेदौ] दुर्वारौ [उपप्लवौ] हिंसादिप्रवर्त्तकत्वात् अन्तकौ; अतः पुरुषार्थपरिपन्थिनौ एतौ न पुरुषार्थौ इत्यर्थः॥ २०॥

मुक्तिप्रतिबन्धकत्वात् अपुरुषार्थौ अर्थकामौ इति उक्तम्। तत्र अर्थस्य दुःखैकनिदानत्वात् अपि अपुरुषार्थत्वम् इति पञ्चभिः प्रपञ्चयति, अभिद्रोहेणेत्यादि।—[ भूतानाम् अभिद्रोहेण ] हिंसया [ गत्वरीः ] अस्थिराः [ श्रियः ] सम्पदः [ अर्जयन् ] जनः। उदकम् अस्ति अत्र इति [ उदन्वान् ] उदधिः। "उदन्वानुदधौ च" (८।२।१३ पा०) इति निपातनात् साधुः। [ सिन्धूनां ] नदीनाम् [ इव आपदां, पात्रतां ] मूलत्वम् [ एति ]॥ २१॥

आपत्पात्रताम् एव व्यनक्ति, या इति।—[ याः ] सम्पदः

दुरासदानरीनुग्रान् धृतेर्विश्वासजन्मनः ।
भोगान् भोगानिवाहेयानध्यास्यापन्न दुर्लभा ॥२३।

[सत्त्वशालिनां] विद्यमानसाधनानाम् एव पुंसां [गम्याः] प्राप्याः विपदः अपि सत्त्वशालिनाम् एव गम्याः, निस्तीर्य्याः इत्यर्थः। "कृत्यानां कर्त्तरि वा" (२।३।७१ पा०) इति षष्ठी। [यासु] सतीषु [खेदः] रक्षणादिक्लेशः, विपत्सु स्वतः एव इति विशेषः। [यतः] याभ्यः सम्पद्भ्यः [भयम्], अनेकानर्थमूलत्वात् इति भावः। विपद्भ्यः तु स्वरूपतः एव इति भावः। किं बहुना? [विपदाम् इव तासां सम्पदां] सम्बन्धि। न [किम्?], अस्ति इति शेषः। [यत् दुःखाय न] भवति; सर्वं दुःखावहम् एव इति भावः। यदाहुः—"अर्थानामर्जने दुःखमर्जितानां च रक्षणे। नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम्॥" इति। अतः हेया इति भावः। अत्र यत् न दुःखाय इत्युत्तरवाक्यस्य यच्छब्दसामर्थ्यात् तासां किम्? इति पूर्ववाक्ये तच्छब्दोपादानं न अपेक्षते; तत् एतत् काव्यप्रकाशे स्पष्टम्॥ २२॥

दुरासदानिति।—किञ्च [दुरासदान्] दुष्प्रापान् [विश्वासजन्मनः] विश्वासात् जन्म यस्याः तस्याः। जन्मोत्तरपदत्वात् व्यधिकरणः बहुव्रीहिः। [धृतेः] सन्तोषस्य [उग्रान् अरीन्]; धनिकस्य सर्वत्र अनाश्वाससम्भवात् विस्रम्भसुखभञ्जकान् इत्यर्थः। भुज्यन्ते इति [भोगान्] धनानि। [आहेयान्] अहिषु भवान्। "दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् (४।३।५६ पा०)। [भोगान्] फणान् [इव]। "भोगः सुखे धने चाहेः शरीरफणयोरपि" इति उभयत्र अपि विश्वः। [अध्यास्य] अधिष्ठाय

नान्तरज्ञाः श्रियो जातु प्रियैरासां न भूयते ।
आसक्तास्तास्वमी मूढ़ा वामशीला हि जन्तवः॥२४॥
कोऽपवादः स्तुतिपदे यदशीलेषु चञ्चलाः ।
साधुवृत्तानपि क्षुद्रा विक्षिपन्त्येव सम्पदः ॥२५॥

[आपत्] विपत् [न दुर्लभा] । आशीविषमुखम् इव नेच्छन्तम् एव भोगिनं पुमांसं बलात् आपदः अवस्कन्दन्ति इत्यर्थः ॥२३॥

इतः अपि श्रियः हेयाः इति आह, नेति ।—[ श्रियः ] सम्पदः [ जातु ] कदाचित् [ अन्तरज्ञाः ] नीचानीचविशेषाभिज्ञाः [न] भवन्ति । अत एव [ आसां ] श्रियां [ प्रियैः न भूयते ] ; न ताः कुत्र अपि अनुरज्यन्ति इत्यर्थः । ननु अयं स्त्रीदोषो न पुरुषदोषः इति चेत् तत्र आह ।—[ मूढ़ाः अमी ] जनाः [तासु] अननुरक्तासु अपि स्त्रीषु [ आसक्ताः ] । * स्त्रीषु इव स्त्रीषु अननुरक्तासु अनुरागः पुंसाम् एव अयं दोषः इत्यर्थः । किमर्थं तर्हि तासु एव सर्वेषाम् आसक्तिः ? इति अर्थान्तरं न्यस्यति, वामेति ।—[ जन्तवः वामशीलाः ] वक्रस्वभावाः [ हि ] । स्वभावस्य दुर्वारत्वात् इति भावः ॥ २४ ॥

यत् उक्तम् "नान्तरज्ञाः श्रियः" इति, तत् एव भङ्ग्यन्तरेण आह, क इति ।—[ यत् सम्पदः, अशीलेषु ] दुःशीलेषु विषये [चञ्चलाः ] अस्थिराः. न तद्विरुद्धम् उच्यते यतः चञ्चला इति । अतः [स्तुतिपदे] स्तुतिविषये तत्र [कः अपवादः ?] का निन्दा ? किन्तु [ क्षुद्राः सम्पदः [ साधुवृत्तान् अपि विक्षिपन्ति एव ] जहति एव ; तत् एव तासां निन्दास्पदम् इत्यर्थः । तस्मात् अर्थः न पुरुषार्थः इति सन्दर्भार्थः ॥ २५ ॥

---

* आङ्पूर्व्वस्य सञ्जधातोः भोगार्थत्वे अधिकरणता, व्यापनार्थत्वे कर्म्मता स्यादेव । तथा च रघुः—"भूयः स भूमेर्धुरमाससञ्ज" इति ।

कृतवानन्यदेहेषु कर्त्ता च विधुरं मनः ।
अप्रियैरिव संयोगो विप्रयोगः प्रियैः सह ॥ २६ ॥
शून्यमाकीर्णतामेति तुल्यं व्यसनमुत्सवैः ।
विप्रलम्भोऽपि लाभाय सति प्रियसमागमे ॥२७॥

"ननु न अर्थम् अहम् अर्थये, किन्तु वीरधर्मम् अनुपालयन् वैरनिर्य्यातनम् इच्छामि" इति. आशङ्क्य तत् अपि परपीड़ात्मकत्वात् अयुक्तम् इति श्लोकचतुष्टयेन आचष्टे, कृतवानिति ।— तत्र आत्मदृष्टान्तेन एव परपीड़ातः निवर्त्तितव्यम् इत्याशयेन आह ।—[अप्रियैः] अनिष्टवस्तुभिः [ संयोगः इव प्रियैः ] इष्टवस्तुभिः [सह, विप्रयोगः] विरहः [अन्यदेहेषु] स्वस्य एव देहान्तरेषु, अतीतानागतेषु इति शेषः । [ मनः विधुरं ] दुःखितं [ कृतवान्, कर्त्ता ] करिष्यति [ च] । भविष्ये लुट् * । तद्वर्त्तमाने च अनुभूयते इति शेषः । इष्टनाशः दुःखहेतुः इति सर्वत्र अपि त्रैकालिकसिद्धम् इति श्लोकार्थः ॥ २६ ॥

सम्प्रति इष्टसमागमस्य सुखहेतुत्वम् आह, शून्यमिति ।— [ प्रियसमागमे ] इष्टजनसंयोगे [सति, शून्यं ] रिक्तम् अपि [आकीर्णतां] सम्पूर्णताम् [एति] ; सम्भृतम् इव प्रतीयते इत्यर्थः । [ व्यसनं ] विपत् अपि [ उत्सवैः तुल्यम् ] । "व्यसनं विपदि भ्रंशे" इत्यमरः । [विप्रलम्भः] वञ्चना, प्रतारणम् इति यावत् ; सः [ अपि लाभाय ] । किं बहुना ? प्रियसङ्गतस्य सर्वावस्थासु अपि सुखम् एव इत्यर्थः ॥ २७ ॥

* "लोडर्थलक्षणे च" (३।३।८ पा०) लोडर्थः प्रैषादिर्लक्ष्यते येन तस्मिन्नर्थे वर्त्तमानाद्धातोर्भविष्यति लट् वा स्यात् । पक्षे लुट्-लृटौ । "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" ( ३।३।१६३ पा० ) इति प्रैषाद्यर्थः ।

तदा रम्याण्यरम्याणि प्रियाः शल्यं तदासवः ।
तदैकाकी सबन्धुः सन्निष्टेन रहितो यदा ॥२८॥
युक्तः प्रमाद्यसि हितादपेतः परितप्यसे ।
यदि नेष्टात्मनः पीड़ा मा सञ्जि भवता जने ॥२९॥

पुनः प्रकारान्तरेण प्रियवियोगस्य दुःखहेतुत्वम् आह, तदेति ।—[तदा रम्याणि] अपि [अरम्याणि] अमनोहराणि भवन्ति । किं बहुना ? [प्रियाः, असवः] प्राणाः अपि [शल्यं], शल्यवत् असह्याः भवन्ति इत्यर्थः । किञ्च [तदा सबन्धुः सन्] अपि [एकाकी] असहाय एव । "एकादाकिनिच्चासहाये" (५।३।५२ पा०) इति आकिनिच्प्रत्ययः । कदा ? इति आकाङ्क्षायाम् आह ।—[यदा इष्टेन रहितः] भवति, [तदा] सर्वम् असह्यम् इति ॥ २८ ॥

युक्त इति ।—किञ्च [युक्तः], हितेन इति शेषः । हितेन इष्टेन युक्तः सन् [प्रमाद्यसि] प्रकर्षेण माद्यसि हृष्यसि । [हितात् अपेतः, परितप्यसे] परितप्तः भवसि । तपेः दैवादिकात् कर्त्तरि लट् । "सत्यम् एवं ततः किम् ?" अतः आह, यदीति ।—[पीड़ा, आत्मनः] स्वस्य च [न इष्टा यदि] तर्हि [भवता जने] परस्मिन् अपि [मा सञ्जि] न सज्यताम् । सञ्जतेः ण्यन्तात् कर्मणि लुङ् । आत्मदृष्टान्तेन परपीड़ातः निवर्त्तितव्यम् इत्यर्थः ; पीड़ायाः परात्मनोः समत्वात् ॥२९॥ *

* "प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा । आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥" इति अनुष्टुप् श्लोकः ।

जन्मिनोऽस्य स्थितिं विद्वान् लक्ष्मीमिव चलाचलाम् ।
भवान्मा स्म वधीन्न्याय्यं न्यायाधारा हि साधवः ॥३०॥
विजहीहि रणोत्साहं मा तपः साधु नीनशः ।
उच्छेदं जन्मनः कर्त्तुमेधि शान्तस्तपोधन ! ॥३१॥

अथ देहास्थैर्य्यश्रद्धया च परपीड़ा न कार्य्या इति आह, जन्मिन इति ।—[अस्य, जन्मिनः] उत्पत्तिधर्मिकस्य शरीरिणः । व्रीह्यादित्वात् इनिः । * [स्थितिं लक्ष्मीम् इव, चलाचलां] चञ्चलां जन्मिधर्मत्वात् एव चलाम्, अनित्याम् इत्यर्थः । चलतेः पचाद्यच् । "चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम्" (वा०) इति द्विर्भावः, अभ्यासस्य आगागमश्च । [विद्वान्] जानन् इत्यर्थः । "विदेः शतुर्वसुः" (७।१।३६ पा०) इति वैकल्पिको वसुरादेशः [भवान्] । न्यायात् अनपेतं [न्याय्यम्] । "धर्मपथ्यर्थन्यायादनपेते" (४।४।९२ पा०) इति यत्प्रत्ययः । [मा स्म वधीत्] मा नाशय इत्यर्थः । "स्मोत्तरे लङ् च" (३।३।१७६ पा०) इति लुङ् । "लुङि च" (२।४।४३ पा०) इति हनः वधादेशः । "शेषे प्रथमः" (१।४।१०८ पा०) इति प्रथमपुरुषः । [हि] यस्मात् [साधवः न्यायाधाराः] न्यायावलम्बाः । बहुव्रीहिः तत्पुरुषः वा । न्यायत्यागे साधुत्वम् एव न स्यात् इति भावः । "न्यायाचाराः" इति पाठे—न्यायम् आचरन्ति इति तथोक्ताः । "कर्मण्यण्" (३।२।१ पा०) ॥ ३० ॥ †

"तर्हि किं मे कर्त्तव्यम्" ? तत्र आह, विजहीहीति ।—

* "व्रीह्यादिभ्यश्च" (५।२।११६ पा०) ।

† अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

जीयन्तां दुर्जया देहे रिपवश्चक्षुरादयः ।
जितेषु ननु लोकोऽयं तेषु कृत्स्नस्त्वया जितः॥३२॥
परवानर्थसंसिद्धौ नीचवृत्तिरपत्रपः ।
अविधेयेन्द्रियः पुंसां गौरिवैति विधेयताम् ॥३३॥

हे [ तपोधन ! रणोत्साहं ] रणोद्योगम् । लोकोत्तरेषु कार्य्येषु स्थेयान् प्रयत्नः उत्साहः, तं [विजहीहि] त्यज । "आ च हौ" (६।४।११७ पा० ) इतीकारः । [साधु] समीचीनं, निःश्रेयस-करत्वात् इति भावः । [तपः मा नीनशः ] न नाशय । नश्यतेः एयन्तान्माङ्योगात् आशिषि लुङ्, अडागमनिषेधश्च । किन्तु [ जन्मनः उच्छेदं कर्त्तुं ] मोक्षं साधयितुम् इत्यर्थः । [ शान्तः एधि ] विजिगीषानिवृत्तः भव इत्यर्थः । "हुझल्भ्यो हेर्धिः" (६।४।१०१ पा० ) इति धिः । "घ्वसोरेद्धावभ्यासलोपश्च" (६।४।११९ पा० ) इत्येकारः इति ॥ ३१ ॥

अथ सर्वथा मे विजयकण्डूतिः न निवर्त्तते इति आशङ्क्य तर्हि अन्तःशत्रुविजयेन विधीयतां तदपनोद इति आह, जीयन्तामिति ।—[ दुर्जयाः ] अजय्याः [ चक्षुरादयः देहे ] वर्त्तमानाः [ रिपवः जीयन्तां ] यस्मात् [तेषु] अन्तःशत्रुषु [ जितेषु ] सत्सु [ त्वया अयं कृत्स्नः लोकः जितः । ननु ] किमुत अन्ये शत्रवः तदन्तर्गताः ? इत्यर्थः । जितेन्द्रियस्य इन्द्रियार्थनिःस्पृहस्य निर्भरवैरानुदयात् विजयव्यपदेशः ॥३२॥

अजितेन्द्रियस्य अनिष्टम् आचष्टे, परवानिति ।—[ अर्थ-संसिद्धौ ] अभ्यवहारादिस्वार्थसाधने [ परवान् ] पराधीनः । "परतन्त्रः पराधीनः परवान्" इत्यमरः । [ नीचवृत्तिः ] कर्षण-वहनादिनिकृष्टकर्मा [ अपत्रपः ] निर्लज्जः [ अविधेयेन्द्रियः ]

श्वस्त्वया सुखसंवित्तिः स्मरणीयाधुनातनी।
इति स्वप्नोपमान्मत्वा कामान्मा गास्तदङ्गताम्॥३४॥
श्रद्धेया विप्रलब्धारः प्रिया विप्रियकारिणः।
सुदुस्त्यजास्त्यजन्तोऽपि कामाः कष्टा हि शत्रवः॥३५॥

---

अजितेन्द्रियः पुमान् [ गौः ] बलीवर्दः [ इव पुंसां विधेयतां ] यथोक्तकारितां, प्रेष्यताम् इति यावत्। "विधेयो विनयग्राही वचने स्थित आश्रवः" इत्यमरः। [ एति ] प्राप्नोति। उपमालङ्कारः अयम्। "प्रकृताप्रकृतयोरर्थसाधर्म्यात् श्लेषे तु शब्दमात्रसाधर्म्यम्" इति॥ ३३॥

न केवलं हिंसादिदोषमूलत्वात् विषयाणां हेयत्वं, किन्तु अपारमार्थिकत्वात् अपि इति आह, श्व इति।—अधुना भवा [ अधुनातनी ] इदानीन्तनी। "सायं चिरम्" (४।३।२३ पा॰) इत्यादिना ट्यु प्रत्ययः। [सुखसंवित्तिः] सुखानुभवः [ श्वः ] परे अहनि [त्वया स्मरणीया] न तु अनुभवनीया, [इति] हेतोः [ कामान् ] काम्यन्ते इति कामाः विषयाः तान् [ स्वप्नोपमान् ] स्वप्नतुल्यान् [मत्वा] अतात्त्विकान्निश्चित्य [ तदङ्गतां ] तच्छेषत्वं कामपरतन्त्रतां [ मा गाः ] न गच्छ। "इणो गा लुङि" (२।४।४५ पा॰) इति गादेशः॥ ३४॥ *

इतः अपि च हेयाः कामाः इति आह, अश्रद्धेया इति।—श्रद्धातुम् अर्हाः [श्रद्धेयाः] विश्वसनीयाः तथा [विप्रलब्धारः] प्रतारकाः, विश्वासघातकाः इत्यर्थः। तथा प्रीणयन्ति इति [प्रियाः] प्रीतिजनकाः। "इगुपध" (३।१।१३५ पा॰) इत्यादिना

---

* वर्त्तमानसमयोपभुक्ता अपि सुखवर्गाः क्षणात्परमेव स्मरणीयाः नानुभवनीया इति स्वप्नोपमत्वं कामानाम्। अत्र वाक्यार्थहेतुकं काव्यलिङ्गम्।

विविक्तेऽस्मिन्नगे भूयः प्लाविते जह्नुकन्यया ।
प्रत्यासीदति मुक्तिस्त्वां पुरा मा भूरुदायुधः॥३६॥
व्याहृत्य मरुतां पत्याविति वाचमवस्थिते ।
वचः प्रश्रयगम्भीरमथोवाच कपिध्वजः ॥ ३७ ॥

---

कप्रत्ययः । तथापि [ विप्रियकारिणः ] दुःखजननशीलाः । किञ्च [ त्यजन्तः अपि ] पुरुषं विहाय गच्छन्तः अपि [ सुदुस्त्यजाः ] स्वयं तेन त्यक्तुम् अशक्याः [ कामाः ] विषयाः [ कष्टाः ] कुत्सिताः [ शत्रवः हि ] प्रसिद्धशत्रुवैधर्म्यात् इति भावः । अत्र अद्वेयत्वादीनां विप्रलम्भकत्वादीनां च एकत्र विरोधः विषयस्वाभाव्येन समाधीयते इति विरोधाभासः अलङ्कारः । तेन च कामानां प्रसिद्धशत्रुवैधर्म्यं व्यतिरेकेण व्यज्यते इति अलङ्कारेण अलङ्कारध्वनिः ॥ ३५ ॥

तर्हि किं कर्त्तव्यम् ? इति आशङ्क्य उपसंहरन् आह, विविक्त इति ।—[ विविक्ते ] विजने । "विविक्तविजनच्छन्ननिःशलाकास्तथा रहः" इत्यमरः । [ जह्नुकन्यया ] गङ्गया [भूयः] भूयिष्ठं पुनःपुनः वा । "भूयः पुनः पुनः ख्यातं भूतार्थे पुनरव्ययम्" इति विश्वः । [ प्लाविते ] सिक्ते "पाविते" इति पाठे—पवित्रीकृते इत्यर्थः । [ अस्मिन् नगे ] इन्द्रकीले [ त्वां मुक्तिः पुरा ] निकटे [ प्रत्यासीदति ] सन्निकृष्टा भविष्यति इत्यर्थः । "पुरा पुराणे निकटे प्रबन्धातीतभाविषु" इति विश्वः । [ उदायुधः ] गृहीतशस्त्रः [ मा भूः ] शस्त्रं विमुञ्च इत्यर्थः ॥ ३६ ॥

व्याहृत्येति ।—[मरुतां पत्यौ] देवेन्द्रे [इति वाचं, व्याहृत्य] उक्त्वा [ अवस्थिते] सति तूष्णीं स्थिते सति । [ अथ, कपिध्वजः ]

**प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम् ।**
**साकाङ्क्षमनुपस्कारं विष्वग्गति निराकुलम् ॥३८॥**
**न्यायनिर्णीतसारत्वान्निरपेक्षमिवागमे ।**
**अप्रकम्प्यतयान्येषामाम्नायवचनोपमम् ॥ ३९ ॥**

---

अर्जुनः [ प्रश्रयगम्भीरं ] विनयमधुरम् । "विनयप्रश्रयौ समौ" इति यादवः । [ वचः उवाच ] उक्तवान् ॥ ३७ ॥

किम् उवाच ? इति अपेक्षायां चतुर्भिः इन्द्रवाक्यम् उपश्लोकयन् आह, प्रसादेति ।—[ प्रसादरम्यं ] प्रसादः अत्र प्रसिद्धार्थपदत्वं, तेन रम्यम् । "प्रसिद्धार्थपदत्वं यत्स प्रसादो निगद्यते" इति लक्षणात् । [ ओजस्वि ] समासभूयिष्ठम् । "ओजः समासभूयस्त्वम्" इति शासनात् । [ गरीयः ] अर्थभूयस्त्वपरिगतं, न तु शब्दाडम्बरमात्रम् इत्यर्थः । [लाघवान्वितं] विस्तरदोषरहितम् । [ साकाङ्क्षं ] आकाङ्क्षावत्पदकदम्बात्मकं, न तु दशदाडिमादिवाक्यवत् अनाकाङ्क्षितम् इत्यर्थः । [अनुपस्कारम् ] अध्याहारदोषरहितम् । [ विष्वग्गति ] कृत्स्नार्थप्रतिपादकं, न तु सावशेषार्थम्, अत एव [निराकुलम्] असङ्कीर्णार्थम् ॥ ३८ ॥

न्यायेति ।—पुनः [ न्यायनिर्णीतसारत्वात् ] न्यायेन युक्त्या निर्णीतसारत्वात् निश्चितार्थत्वात् हेतोः [आगमे] शास्त्रे विषये [निरपेक्षं] स्वतन्त्रम् [इव], युक्तिदार्ढ्यात् एवं प्रतीयते । वस्तुतस्तु शास्त्रसिद्धार्थम् इव इति इवशब्दार्थः । किञ्च [ अन्येषां ] प्रतिवादिनाम् [ अप्रकम्प्यतया ] अनुमानादिभिः अबाध्यत्वात् अप्रत्याख्येयतया [ आम्नायवचनोपमं ] वेदवाक्यतुल्यम् इत्यर्थः ॥ ३९ ॥

अलङ्घ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम्।
औदार्य्यादर्थसम्पत्तेः शान्तं चित्तमृषेरिव ॥४०॥
इदमीदृग्गुणोपेतं लब्धावसरसाधनम्।
व्याकुर्य्यात् कः प्रियं वाक्यं यो वक्ता नेदृगाशयः॥४१॥

॥ कलापकम् ॥

अलङ्घ्यत्वादिति।—[ अन्यैः जनैः अलङ्घ्यत्वात् ] अनुल्लङ्घनीयत्वात् [ क्षुभितोदन्वदूर्जितम् ] उद्वेलाम्भोधिगम्भीरम्, [औदार्य्यात्] उक्तिविशेषत्वात्, श्लाघ्यविशेषणत्वात् वा। तदुक्तं दण्डिना—"उत्कर्षवान् गुणः कश्चिदुक्ते यस्मिन् प्रतीयते। तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः। श्लाघ्यै विशेषणैर्युक्तमुदारं कैश्चिदिष्यते॥" इति। "अग्राम्यार्थत्वात्" इति केचित्। अन्यत्र—त्यागित्वात् इत्यर्थः। [अर्थसम्पत्तेः] प्रयोजनसम्पत्तेः, अन्यत्र—अणिमादिसमृद्धेः [ ऋषेः ] मुनेः [ चित्तम् इव, शान्तं ] सौम्यम् ॥ ४० ॥ *

इदमिति।—[ इदम् ईदृग्गुणोपेतं ] यथोक्तगुणयुक्तम्। इदम्-उपपदात् दृशेः क्विप्। "इदं किमोरीश्की" ( ६।३। ९० पा० ) इति ईशादेशः। [ लब्धावसरसाधनं ] लब्धे प्राप्ते अवसर-साधने कालोपायौ येन तत् [ प्रियं ] प्रीतिकरं [ वाक्यं कः वक्ता व्याकुर्य्यात् ] व्याहरेत्। [ यः वक्ता न ईदृगाशयः ] ईदृग्विवक्षावान् न भवति इति शेषः। ईदृग्बुद्धिशाली न भवति इति तस्य अर्थस्य वक्तुम् अशक्यत्वात् इति भावः ॥४१॥ †

---

* पदार्थहेतुककाव्यलिङ्गोत्थापितोपमा।

† अप्रस्तुतप्रशंसालङ्कारः। वस्तुतस्तु अत्र कलापके वस्तुनः वक्तव्यांशस्योत्तरोत्तरोत्कर्षसम्बन्धात् सारालङ्कारः,—व्याख्यानोत्कर्षवत्त्वाम् व्याख्यातार्थ्यपरमोत्कर्षाशयः इति अलङ्कारेण वस्तुध्वनिः।

न ज्ञातं तात ! यत्नस्य पौर्वापर्य्यममुष्य ते ।
शासितुं येन मां धर्मं मुनिभिस्तुल्यमिच्छसि॥४२॥
अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि ।
व्रजत्यफलतामेव नयद्रुह इवेहितम् ॥ ४३ ॥

एवम् इन्द्रवाक्यम् उपश्लोक्य न अहम् अस्य उपदेशस्य अधिकारी इति परिहरति, नेति ।—हे [तात ! अमुष्य यत्नस्य] तपोरूपस्य अस्य मदीयोद्योगस्य पूर्वं च अपरञ्च पूर्वापरे, त एव [ पौर्वापर्य्यं ] कारणं फलञ्च । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्-प्रत्ययः । * [ ते ] तव [ न ज्ञातं ] त्वया न ज्ञायते इत्यर्थः । "मतिबुद्धि" ( ३।२।१८८ पा० ) इत्यादिना वर्त्तमाने क्तः । तद्योगात् एव षष्ठी । कुतः ? [ येन ] कारणेन [ मां मुनिभिः तुल्यं ] सदृशं [ धर्मं ] मोक्षधर्मं [ शासितुम् ] उपदेष्टुम् [इच्छसि] । शासिः अयं दुहादित्वात् द्विकर्मकः ज्ञेयः ॥४२॥

अथ पौर्वापर्य्यम् अज्ञात्वा अपि उपदेशे दोषम् आह, अविज्ञातेति ।—[ अविज्ञातप्रबन्धस्य ] अविज्ञातः प्रबन्धः पूर्वापर-सङ्गतिः येन तस्य [ वाचस्पतेः ] बृहस्पतेः [अपि] । कस्कादित्वात् सः । † अथवा "षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु" (वा० ) इति सकारः । एतस्मात् एव ज्ञापकात् अलुक् इति केचित् । [ वचः ] उपदेशः [ नयद्रुहः ] नीतिविरुद्धकारिणः पुरुषस्य [ ईहितम् ] उद्योगः [ इव, अफलतां ] निष्फलत्वं [ व्रजति एव ] गच्छति एव ॥ ४३ ॥ ‡

* "चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्" ( वा० ) ।

† "कस्कादिषु च" ( ८।३।४८ पा० ) सूत्रम् ।

‡ अज्ञाततत्त्वयाथार्थ्यस्योपदेशसमुच्चयाः विरुद्धनयोद्योगिन इव प्रयासाः निष्फलाः इति श्रौतीसमासगा उपमालङ्कृतिः ।

श्रेयसोऽप्यस्य ते तात! वचसो नास्मि भाजनम्।
नभसः स्फुटतारस्य रात्रेरिव विपर्य्ययः ॥४४॥
क्षत्त्रियस्तनयः पाण्डोरहं पार्थो धनञ्जयः।
स्थितः प्रास्तस्य दायादैर्भ्रातुर्ज्येष्ठस्य शासने॥४५॥

ननु सदुपदेशस्य कुतः वैफल्यम्? इति आशङ्क्य सः अपि अस्थाने प्रयुक्तः चेत् ऊषरक्षेत्रे शालिबीजवत् विफलः एव इति आशयेन आह, श्रेयस इति।—हे [तात!] "पुत्रे पितरि पूज्ये च तातशब्दः प्रयुज्यते" इति। [श्रेयसः अपि] हितार्थयोगात् प्रशस्ततरस्य अपि [अस्य, ते] तव [वचसः] हितोपदेशरूपस्य [रात्रेः विपर्य्ययः] दिवसः [स्फुटतारस्य] व्यक्ततारकस्य [नभसः इव, भाजनं] पात्रं [न अस्मि] अनधिकारित्वात् इति भावः। अत्र अङ्गः नभोमात्रसम्बन्धसम्भवे अपि तारासम्बन्धासम्भवात् तद्विशिष्टनभःसम्बन्धविरोधात् युक्तं तारकितस्य नभसः न पात्रम् अहः इति ॥ ४४ ॥ *

"कुतः ते मोक्षोपदेशानधिकारित्वम्? किञ्च ते तपसः पौर्वापर्य्यं कथं न जाने?" इति आशङ्क्य तत् सर्वं स्वजात्यादिकथनपूर्वकं निरूपयति, क्षत्त्रिय इति।—[अहं, क्षत्त्रियः] † क्षत्त्रियकुले जातः। तत्र अपि महाकुले प्रसूतः, वीरसन्तानश्च इति आह।—[पाण्डोस्तनयः] इति। तत्र अपि कौन्तेयः अस्मि, न माद्रेयः इति आह।—[पार्थः] इति। पृथा कुन्ती तत्सुतः पार्थः। "तस्यापत्यम्" (४।१।९२ पा०) इति अण्। अर्जुनः अहं महावीरश्च इति आह।—[धनञ्जयः] इति।

* अत्रापि समासगाश्रौतीउपमा।

† "क्षत्त्रादघः" (४।१।१३८ पा०) इति सूत्रम्।

**कृष्णद्वैपायनादेशाद् बिभर्मि व्रतमीदृशम्।**
**भृशमाराधने यत्तः स्वाराध्यस्य मरुत्वतः ॥४६॥**

उत्तरकुरून् * विजित्य धनाहरणात् धनञ्जयः अस्मि इत्यर्थः। "खचि मुमागमः" इत्युक्तं प्राक्। धनञ्जय इति उक्ते शरीरस्थः वायुः सर्पविशेषः वा स्यात् तदर्थं पार्थः, गन्धर्वः अपि कश्चित् पृथासुतः अस्ति तदर्थं पाण्डोः सुतः, नैमिषारण्ये पाण्डुः विप्रः तत्पत्नी पृथा नाम काचित् ब्राह्मणी तत्पुत्रः अपि स्यात् तदर्थं चत्त्रिय इति। अथ एवं चेत् किमर्थं तर्हि तपस्यसि मोक्षार्थं वा किं न तपस्यसि? तत्र आह, स्थित इति।—[ दायादैः ] दायं पैतृकं धनम् आददते इति दायादाः ज्ञातयः। "दायादौ ज्ञातिपुत्रयोः" इति। "विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः" इति च विश्वः। "स्वामीश्वरादि" ( ३।३।३८ पा० ) सूत्रेण सोपसर्गात् अपि दायादेति कप्रत्ययान्तः निपातनात् साधुः। † तैः [ प्रास्तस्य ] राज्यात् निरस्तस्य वैरिनिर्यातनार्थिनः इत्यर्थः। [ ज्येष्ठस्य भ्रातुः ] युधिष्ठिरस्य। वृद्धशब्दात् इष्ठन्प्रत्ययः। वृद्धस्य च ज्यादेशः। ‡ [ शासने ] निदेशे [ स्थितः ] तदाज्ञया तपस्यामि इत्यर्थः। अन्यथा मानहानिः सौभ्रात्रभङ्गः पूज्यपूजाव्यतिक्रमदोषश्च स्यात् इति भावः। अत एव हिंसैकरसस्य रागद्वेषकषायितचेतसः कुतः मे मोक्षाधिकारः? इति तात्पर्य्यार्थः। सार्थविशेषणत्वात् परिकरालङ्कारः ॥ ४५ ॥

* नववर्षात्मकस्य जम्बुद्वीपस्य वर्षविशेषान् "मङ्गोलिया" "साइबिरिया" इति पाश्चात्त्याः।

† सोपसर्गादप्यादन्तात् अत एव निपातनात् कः इति तत्त्वबोधिनी।

‡ "अतिशायने तमबिष्ठनौ" ( ५।३।५५ पा० ) इति वृद्धशब्दात् इष्ठनि "वृद्धस्य च" ( ५।३।६२ पा० ) इति ज्यादेशे सिद्धम्।

दुरक्षान् दीव्यता राज्ञा राज्यमात्मा वयं वधूः।
नीतानि पणतां नूनमीदृशी भवितव्यता ॥ ४७ ॥

यत् उक्तम् "विरुद्धः केवलं वेषः" इति तत्र उत्तरम् आह, कृष्णेति।—[ कृष्णद्वैपायनादेशात् ] द्वीपः अयनं जन्मभूमिः यस्य सः द्वीपायनः, सः एव द्वैपायनः व्यासः। प्रज्ञादित्वात् स्वार्थे अण्प्रत्ययः। * सः एव कृष्णवर्णत्वात् कृष्णद्वैपायनस्त। तस्य आदेशात् उपदेशात् [ ईदृशं ] विरुद्धवेषम् इत्यर्थः। [ व्रतं ] तपोनियमं [ बिभर्मि ] धारयामि, न तु स्वेच्छया इति भावः। अथ उपास्यां देवताम् आह, भृशमिति।—[ स्वाराध्यस्य ] सुखम् आराध्यस्य। प्रादिसमासः। "स्वाराधस्य" इति पाठे—उपसृष्टात् खल्प्रत्ययः। † [ मरुत्वतः ] इन्द्रस्य [ भृशं ] सम्यक् [ आराधने, यत्तः ] प्रयत्नवान् इत्यर्थः। तस्य क्षत्रियदैवतत्वात् इति भावः ॥ ४६ ॥

"ननु भवादृशभ्रातृसहायस्य महावीरस्य युधिष्ठिरस्य कथम् अरिपरिभवप्राप्तिः"? इत्यत आह, दुरक्षानिति।—[दुरक्षान्] कपटपाशकैः इत्यर्थः। "दिवः कर्म च" (१।४।४३ पा०) इति करणे कर्मसंज्ञा। [ दीव्यता ] क्रीड़ता। "आहूतो न निवर्त्तेत द्यूतादपि रणादपि" इति शास्त्रात्। न तु व्यसनितया इति भावः। [ राज्ञा ] युधिष्ठिरेण [ राज्यं ] राष्ट्रम् [ आत्मा ] स्वयं [ वयं ] चत्वारः अनुजाः [वधूः] जाया द्रौपदी च [पणतां] ग्लहत्वम्। "पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते" इत्यमरः। [नीतानि] सर्वं द्यूते राज्ञा हारितम् इत्यर्थः।

* "प्रज्ञादिभ्यश्च" ( ५।४।३८ पा० )।

† "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" ( ३।३।१२६ पा० )।

तेनानुजसहायेन द्रौपद्या च मया विना ।
भृशमायामियामासु यामिनीष्वभितप्यते ॥४८॥

हृतोत्तरीयां प्रसभं सभायामागतह्रियः ।
मर्मच्छिदा नो वचसा निरतक्षन्नरातयः ॥४९॥

---

नीतानि इति नपुंसकैकशेषः । नयतेः द्विकर्मकत्वात् प्रधाने कर्मणि क्तः । ननु सर्वज्ञस्य राज्ञः कथम् इयम् अविमृष्यकारिता ? तत्र आह ।—[ भवितव्यता ] अनर्थानाम् अवश्यं भाविता [ ईदृशी नूनं ] निश्चितं, न अत्र संशयः इत्यर्थः । बुद्धिः अपि भवितव्यतानुसारिणी एव, न स्वतन्त्रा इत्यर्थः ॥ ४७ ॥ *

ननु तथापि तव एव तेषु आसङ्गः न तेषां त्वयि तत्र आह, तेनेति ।—[ अनुजसहायेन ] अनुजाः सहजाताः सहायाः यस्य तेन, अनुजयुक्तेन इत्यर्थः । तुल्ययोगः सहायार्थः । [ तेन ] युधिष्ठिरेण [ द्रौपद्या च, मया विना ] मद्विरहात् इत्यर्थः । [ आयामियामासु ] आयामिनः दीर्घाः यामाः प्रहराः यासां ताः तासु ; दुःखितस्य तथाभावात् इति भावः । [ यामिनीषु भृशम् अभितप्यते । ] भावे लट् । तेषु मद्वत् तेषां मयि अपि आसङ्गात् न वैराग्यावकाशः इत्यर्थः ॥ ४८ ॥

अथ वैरनिर्य्यातनस्य अवश्यम्भावद्योतनाय चतुर्भिः परापकृतिं दर्शयन् परनिकारान् वर्णयति, हृतेत्यादि ।—[अरातयः] शत्रवः [ सभायां, प्रसभं ] बलात्कारेण [ हृतोत्तरीयाम् ] अत एव [ आगतह्रियः ] सम्प्राप्तलज्जान् । [ नः ] अस्मान्

---

* अवश्यंभाविता ईदृशी नूनम् इति नास्ति युधिष्ठिरस्याविमृष्यकारितादोषः । एवं वाक्यार्थहेतुकं काव्यलिङ्गम् ।

उपाधत्त सपत्नेषु कृष्णाया गुरुसन्निधौ।
भावमानयने सत्याः सत्यङ्कारमिवान्तकः ॥५०॥
तामैक्षन्त क्षणं सभ्याः दुःशासनपुरःसराम्।
अभिसायार्कमावृत्तां छायामिव महातरोः ॥५१॥

[मर्मच्छिदा] मर्मच्छेदिना [वचसा, निरतक्षन्] अशातयन्; वस्त्राद्यपहारवाक्पारुष्याभ्यां तथा व्यथयामासुः इत्यर्थः। तक्षण-शब्दसामर्थ्यात् वचसां वा अस्त्रौपम्यं गम्यते इति वस्तुना अलङ्कारध्वनिः ॥ ४८ ॥

अथ अतिदुःसहनिकारान्तरम् आह, उपाधत्तेति।— [अन्तकः] मृत्युः [गुरुसन्निधौ] भीष्मद्रोणादिसमक्षम् एव [सत्याः] पतिव्रतायाः [कृष्णायाः] द्रौपद्याः [आनयने] केशाम्बरादिकर्षणे [भावं] चित्ताभिप्रायम् इतः परम् अनेन पाण्डवाभिभवेन एतान् स्वनगरं नेष्यामि इति एवम्भूतं [सत्यङ्कारम् इव]। क्रियते अनेन इति कारः *। करणे घञ्। सत्यस्य कारः सत्यङ्कारः सत्यापनं, चिकीर्षितस्य कार्य्यस्य अवश्यं क्रियास्थापनार्थं परहस्ते यत् दीयते सः सत्यङ्कारः। क्रियादौ सत्यदार्ढ्याय प्राग्दीयमानः तन्मूल्यैकदेशश्च। "क्लीबे सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियाम्" इत्यमरः। "कारे सत्यागदस्य" (६।३।७० पा०) इति मुमागमः। तम् इव [सपत्नेषु, उपाधत्त] निहितवान्। तेषां विनाशकाले विपरीत बुद्धिम् उत्पादितवान् इत्यर्थः ॥ ५० ॥ †

---

* "अकर्त्तरि च कारके संज्ञायाम्" (३।३।१९ पा०)।

† अत्र कृष्णानिग्रहभावस्य अवकलनं शमनसत्यङ्कारनियमसूचनमिव। सपत्नेषु समुत्प्रेक्ष्यते इति वाच्योत्प्रेक्षा।

अयथार्थक्रियारम्भैः पतिभिः किं तवेक्षितैः ।
अरुध्येतामितीवास्या नयने वाष्पवारिणा ॥५२॥

---

"केन इयम् आकृष्टा, सभ्यैः वा किं कृतम्" ? तत्र आह, तामिति ।—[ दुःशासनपुरःसराम् ] दुःशासनः पुरःसरः यस्याः तां तथोक्तां, दुःशासनेन सभां प्रति आकृष्यमाणाम् इत्यर्थः । "अनुपसर्जनात्" ( ४।१।१४ पा० ) इति न ङीप् । [ तां ] कृष्णाम् । सभायां साधवः [सभ्याः] । "सभाया यः" ( ४।४।१०५ पा०) इति यप्रत्ययः । [ अभिसायार्कं ] दिनान्तसूर्य्याभिमुखं, स्थितस्य इति शेषः । "सायो नाशदिनान्तयोः" इति विश्वः ।"लक्षणेनाभिप्रती आभिमुख्ये" ( २।१।१४ पा० ) इति अव्ययीभावः । [ महातरोः ] सम्बन्धिनीम् [ आवृत्तां छायाम् इव तां ] कृष्णां [ क्षणम् ऐक्षन्त ] न चिरं जुगुप्सितत्वात् । न अपि किञ्चित् व्याप्रियन्त माध्यस्थभङ्गभयात्, ते तु अर्कवत् एव साक्षित्वमात्रम् आस्थिताः इत्यर्थः । अत्र आकृष्यमाणायाः कृष्णायाः आकृष्टारं प्रति पराङ्मुखत्वात् आवृत्तच्छायोपम्यम् । तथापि तां न मुञ्चति इति दुःशासनस्य तरुसाम्यम् ॥५१॥

अथ अस्याः तादात्मिकतां वर्णयति, अयथार्थेति ।—[ अयथार्थक्रियारम्भैः ] अयथार्थाः मिथ्याभूताः क्रियारम्भाः पतिशब्दप्रवृत्तिनिमित्तभूतकर्मोद्योगाः येषां तैः, ताम् अरक्षद्भिः इत्यर्थः । [तव] सम्बन्धिभिः । [ पतिभिः ] पान्ति रक्षन्ति इति पतयः भर्त्तारः । "पातेर्डतिः" (उणा० पाद ४।५७) इति औणादिकः डतिप्रत्ययः । तैः [ ईक्षितैः ] अवेक्षितैः [ किम् ? ] न किञ्चित् फलम् अस्ति इत्यर्थः । [ इति ] इत्थं विचार्य्य [इव] इति उत्प्रेक्षा । [ वाष्पवारिणा अस्याः ] कृष्णायाः [नयने

सोढ़वान् नो दशामन्त्यां ज्यायानेव गुणप्रियः ।
सुलभो हि द्विषां भङ्गो दुर्लभा सत्स्ववाच्यता ॥ ५३ ॥
स्थित्यतिक्रान्तिभीरूणि स्वच्छान्याकुलितान्यपि ।
तोयानि तोयराशीनां मनांसि च मनस्विनाम् ॥ ५४ ॥

अरुध्येताम् ] आवृते । रुधेः कर्मणि लङ्, अशरणा ... इत्यर्थः ॥ ५२ ॥

"ननु भवद्भिः किमर्थम् असमर्थैः इव उपेक्षितम् ? ... आह, सोढ़वानिति ।—गुणाः प्रियाः यस्य सः [ गुणप्रि... प्रियगुणः । "वा प्रियस्य" (वा०) इति परनिपातः । [ज्या... अग्रजः युधिष्ठिरः [एव ], वृद्धशब्दात् ईयसुनि "ज्यादादी..." ( ६।४।१६० पा० ) इति आकारादेशः । [नः] अस्माकम् ... भवाम् [अन्त्यां] निकृष्टां [ दशाम् ] अवस्थां [ सोढ़वान् ... वयम्, किन्तु तदवरुद्धाः इति भावः । ननु शत्रुपेक्षा ... ऽनर्थकारिणी इति आशङ्क्य आह, सुलभ इति ।—[ ... विद्विषां [ भङ्गः सुलभः ] कालान्तरे अपि इति शेषः । ... सज्जनेषु [ अवाच्यता ] अनिन्द्यता [ दुर्लभा ] न तु श... [हि] प्रसिद्धौ । शत्रूपेक्षातः लोकापवादः एव बलवान् ... उत्पन्नस्य पुनः अप्रतिविधेयत्वात् । स च सम... स्यात् एव इति भावः ॥ ५३ ॥

ननु शत्रुवधे राज्ञां कः नाम अपवादः ? प्रत्यु... एव, इति आशङ्क्य सत्यं स एव समयोल्लङ्घनकर्तॄ... महानिन्दानिदानम् इति आशयेन आह, स्थितीति ।—[ तोय... राशीनां ] समुद्राणां [ तोयानि मनस्विनां मनांसि च ... भवन्ति । उभयं विशिनष्टि ।—[ स्थित्यतिक्रान्तिभीरूणि

धार्त्तराष्ट्रैः सह प्रीतिर्वैरमस्मास्वसूयत ।
असन्मैत्री हि दोषाय कूलच्छायेव सेविता ॥५५॥
अपवादादभीतस्य समस्य गुणदोषयोः ।
असद्वृत्तेरहो ! वृत्तं दुर्विभावं विधेरिव ॥ ५६ ॥

---

स्थित्यतिक्रान्तेः मर्य्यादोल्लङ्घनात् हेतोः भीरूणि अत एव [ आकुलितानि ] सङ्क्षोभितानि [अपि, स्वच्छानि] अकलुषाणि, न त्वरन्ते इत्यर्थः। मनस्वी अयं युधिष्ठिरः इति भावः। अत्र तोयानां सामान्यतः मनस्विनां च अप्रकृतानाम् एव गुणतौल्यात् औपम्यस्य गम्यतया तुल्ययोगितालङ्कारः। गुणश्च अत्र भीरुत्वं स्वच्छता च ॥ ५४ ॥

"ननु अजातशत्रोः स्वजनवैरे किं कारणम्" इति आशङ्का असत्सौहार्दम् एव इति आह, धार्त्तराष्ट्रैरिति।—[धार्त्तराष्ट्रैः] धृतराष्ट्रपुत्रैः [ सह, प्रीतिः ] सौहार्दम् एव [अस्मासु ] विषये [ वैरम्, असूयत ] सूतवती। सूयतेः दैवादिकात् कर्त्तरि लङ्। ननु सौहार्दं वैरजनकं चेत् विप्रतिषिद्धं, तत्र आह, असदिति।—[ हि ] यस्मात् [असन्मैत्री] दुर्जनेन सङ्गतिः [ कूलच्छाया] कूलस्य आसन्नपातस्य नदीतटस्य छाया [इव, सेविता] श्रिता सती [ दोषाय ] अनर्थाय भवति। न खलु दुर्जनः सुजनवत् मित्रद्रोहपातकं पश्यति इति भावः। उपमाप्राणितः अयम् अर्थान्तरन्यासः अलङ्कारः ॥ ५५ ॥

"ननु आदौ एव तेषां वृत्तम् अविज्ञाय कथं मैत्री कृता ?" इति आशङ्क्य किं कुर्मः ? दुर्जनवृत्तं दुर्विज्ञेयम् इति आह, अपवादादिति।—[ अपवादात् ] जनाक्रोशात् [ अभीतस्य ] अजुगुप्समानस्य इत्यर्थः। [ गुणदोषयोः, समस्य ] तुल्यबुद्धेः ;

ध्वंसेत हृदयं सद्यः परिभूतस्य मे परैः।
यद्यमर्षः प्रतीकारं भुजालम्बं न लम्भयेत् ॥५७॥
अवधूयारिभिर्नीता हरिणैस्तुल्यवृत्तिताम्।
अन्योऽन्यस्यापि जिह्रीमः किं पुनः सहवासिनाम्॥५८॥

---

निग्रहानुग्रहौ गुणदोषयोः अननुरूपतः इत्यर्थः। विधौ अपि एतत् विशेषणं योज्यम्। [अहो! असद्वृत्तेः] दुराचारस्य धूर्त्तस्य [वृत्तम्] ईहितं [विधेः] दैवस्य वृत्तम् [इव, दुर्विभावं] विभावयितुम् अशक्यम्। किन्तु कार्य्यैकसमधिगम्यम् इत्यर्थः। भवतेः ण्यन्तात् कृच्छ्रार्थे खल्प्रत्ययः॥ ५६ ॥ *

"ननु एवं मानी कथं परिभूतः जीवसि?" तत्र आह, ध्वंसेतेति।—[परैः] शत्रुभिः [परिभूतस्य मे हृदयं सद्यः ध्वंसेत] भ्रश्येत् इत्यर्थः। [अमर्षः] कर्त्ता [प्रतीकारं] प्रतिक्रियारूपं [भुजालम्बं] हस्तावलम्बनं [न लम्भयेत्] न ग्राहयेत् [यदि] हृदयेन इति शेषः। सत्यं जीवामि प्रतिविधित्सया, न तु निर्लज्जतया इति भावः॥ ५७ ॥

"ननु तव एव कः अयम् अभिमानः?" तत्र आह, अवधूयेति।—[अरिभिः, अवधूय] परिभूय [हरिणैः] मृगैः [तुल्यवृत्तितां] तुल्यजीवनत्वं, वन्याहारताम् इत्यर्थः। [नीताः] प्रापिताः वयं, पश्चात् अपि इति शेषः। [अन्योऽन्यस्य अपि, जिह्रीमः] लज्जामहे। [सहवासिनां] सहचारिणां [किं पुनः?] प्राक् एव जिह्रीम इति किमु वक्तव्यम्?

---

* अत्र उपमालङ्कृतिः स्फुटैव।

शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः ।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः॥५६॥
अलङ्घ्यं तत्तदुद्वीक्ष्य यद् यदुच्चैर्महीभृताम् ।
प्रियतां ज्यायसीं मा गमन् महतां केन तुङ्गता॥६०॥

इत्यर्थः। क्रियायोगे सम्बन्धसामान्ये षष्ठी। अत्र वयं पञ्च अपि तुल्याभिमानाः एव, इदं तु मदेकसाध्यं कर्म इति मुनिशासनात् मया अनुष्ठीयते इति भावः ॥ ५८ ॥ *

"ननु तर्हि दुःखैकनिदानम् अन्तःशत्रुः मानः एव त्यज्यताम्" इति आशङ्क्य तत्त्यागे दोषम् आह, शक्तीति।—[ शक्तिवैकल्यनम्रस्य ] शक्तिवैकल्येन उत्साहादिशक्तिवैधुर्य्येण अवष्टम्भसामर्थ्यविरहेण च नम्रस्य प्रह्वीभूतस्य विधेयभूतस्य च [निःसारत्वात् ] दुर्बलत्वात् स्थिरांशरहितत्वात् च। "सारो बले स्थिरांशे च" इत्यमरः। [लघीयसः] गौरवहीनस्य नीरसस्य च इत्यर्थः। [ मानहीनस्य, जन्मिनः ] जन्तोः। व्रीह्यादित्वात् इनिः। † [ तृणस्य च गतिः ] अवस्था [ समा ] इति। मानहीनस्य तृणात् अपि निकृष्टत्वात् न त्याज्यः मानः इति भावः। श्लेषालङ्कारः अयं तदनुप्राणिता इयम् उपमा इति अनेकार्थदीपिका इति व्यज्यते ॥ ५६ ॥

मानत्यागे दोषम् उक्त्वा तत्सद्भावे षड्भिः गुणम् आह, अलङ्घ्यमिति।—[ महीभृतां ] पर्वतानां सम्बन्धि [ यत् यत् ] शृङ्गादिकम् [ उच्चैः ] उन्नतं [ तत् तत् अलङ्घ्यम्, उद्वीक्ष्य ]

---

* परस्परस्यापि लज्जाविर्भावः किं पुनरन्यसहवासिनो जनस्य इत्यर्थापत्तिरलङ्कारः।

† "व्रीह्यादिभ्यश्च" (५।२।११६ पा० )।

**तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः ।**
**पुरुषस्तावदेवासौ यावत् मानात् न हीयते ॥६१॥**

उत्प्रेक्ष्य, तर्कयित्वा इति यावत् । [महतां] महात्मनां [तुङ्गता] मानोन्नत्यं [ज्यायसीं, प्रियतां] प्रियत्वं [केन] हेतुना [मा गात् ?] न केन अपि, प्रियत्वं गच्छति एव इत्यर्थः ; आशिषि "माङि लुङ्" (३।३।१७५ पा०) अटोऽपवादः । दैवाटनिच्छतोऽपि इच्छाम् उत्पादयति एव औषधवत् अस्मिन् अर्थे इति आशंसनार्थम् आशीःप्रयोगः । उद्वीक्ष्य इति असमानकर्तृकत्वनिर्देशः क्वचित् प्रयोगदर्शनात् सोढव्यः । * केचित् उद्वीक्ष्यम् इति पठन्ति । तत्र यत् यत् उच्चैः तत् तत् अलङ्घ्यम् उद्वीक्ष्यम् अवलोकनीयं न च उल्लङ्घनीयम् इति । अतः महताम् इत्यादि योजयन्ति ॥ ६० ॥

तावदिति ।—किञ्च [तावत्] एव [असौ लक्ष्म्या आश्रीयते । तावत्, अस्य] पुंसः [यशः स्थिरम् । तावत् एव] असौ [पुरुषः] पुरुषत्वेन गण्यते इत्यर्थः । [यावत्, मानात्] अभिमानात्, न हीयते न भ्रश्यति । मानहीनस्य न किञ्चित् शुभम् अस्ति इत्यर्थः ॥ ६१ ॥ †

---

* "समानकर्तृकयोः पूर्वकाले" (३।४।२१ पा०) इति एककर्तृकयोः धात्वर्थयोः पूर्वकालसंस्थितात्धातोः क्त्वा । उद्वीक्ष्य मा गात् इति क्रिययोर्नैककर्तृकत्वम् । अतः "क्वचिन्न स्थित्याद्यध्याहारेऽपि" इति जौमराः ।

† "यावत् मानात् न हीयते" इति ।—कस्मिन् वाच्ये प्रयोगोऽयम् ? मानादित्यत्र कथं पञ्चमी ? कथं वा "मानात्" इत्यत्र तसिः न स्यात् ? इति प्रश्ने "अपादाने चाहीयरुहोः" (५।४।४५ पा०) इति पाणिनीये सौपद्मे च सूत्रे, "रुहहाकोरप्रयोगे तसिर्वापादानपञ्चम्याः" इति जौमरेऽपि सूत्रे "स्वार्थाद् हीयते" इत्येकमेव उदाहरणं प्रदत्तम् । तदेवावलम्ब्य जौमरीयटीकाकृता गोयीचन्द्रेण यद् विवृतं तदेवात्र उद्धृत-

स पुमानर्थवज्जन्मा यस्य नाम्नि पुरःस्थिते।
नान्यामङ्गुलिमभ्येति सङ्ख्यायामुद्यताङ्गुलिः ॥६२॥
दुरासदवनज्यायान् गम्यस्तुङ्गोऽपि भूधरः।
न जहाति महौजस्कं मानप्रांशुमलङ्घ्यता ॥६३॥

---

स इति।—[सः पुमान् अर्थवज्जन्मा] सार्थकजन्मा [यस्य] पुंसः [नाम्नि, पुरः] अग्रे [स्थिते] सति [संख्यायां] पुरुषगणनाप्रस्तावे [उद्यता] गुणम् अधिकृत्य उन्नमिता [अङ्गुलिः, अन्यां] द्वितीयाम् [अङ्गुलिम्] उद्यताम् इति शेषः। [न अभ्येति] न प्राप्नोति, अद्वितीयत्वात् अस्य इत्यर्थः। एतत् मानरहितस्य न सम्भवतीति भावः ॥ ६२ ॥

दुरासदेति।—[दुरासदवनज्यायान्] दुरासदैः वनैः ज्यायान् प्रवृद्धः तथापि [तुङ्गः अपि भूधरः, गम्यः] गन्तुं शक्यः एव, प्रसिद्धं च एतत् इति भावः। [महौजस्कं] प्रतापसम्पन्नं [मानप्रांशुं] मानोन्नतं, पुरुषम् इति शेषः। [अलङ्घ्यता न जहाति] न कदाचित् मानी लङ्घयितुं शक्यते इत्यर्थः। गिरेः अपि गरीयान् मानाधिक इति भावः। अत्र उपमानात् भूधरात् उपमेयस्य मानिनः धर्मान्तरसाम्ये अपि अलङ्घ्यत्वेन आधिक्यकथनात् व्यतिरेकालङ्कारः ॥ ६३ ॥

---

मस्माभिः। यथा—"अपादानसंज्ञकस्य सार्थस्य विश्लेषक्रियायां स्वातन्त्र्यमपि विवक्षणीयम्। तेन "तत्प्रमुद्दिष्टं कर्म्म" इति कर्म्मसंज्ञा विरुद्धा। सार्थस्य स्वातन्त्र्यविवक्षायाञ्च कर्त्तृसंज्ञाया अपादानसंज्ञा न बाध्यते, ह्वाक्प्रयोगे पञ्चम्याः तसिनिषेधसामर्थ्यात्। कर्म्मकर्त्तरि प्रयोगोऽस्य नेष्यते इत्याचार्य्याः, भावे चास्य प्रयोगो नेष्यते इति। तेन सार्थाद्धीयते देवदत्तेनेति न भवति, कर्म्मकर्त्तर्य्ययं प्रयोग इति वाभटः॥" इति। काशिकायान्तु "हीयते इति विकारनिर्द्देशः जहातेः प्रतिपत्त्यर्थः" इति उक्तम्।

गुरून् कुर्वन्ति ते वंश्यान् अन्वर्था तैर्वसुन्धरा ।
येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥६४॥
उदाहरणमाशीःषु प्रथमे ते मनस्विनाम् ।
शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते ॥६५॥

गुरूनिति ।—[ते] नराः [ वंश्यान् ] अन्वयभवान् [ गुरून् कुर्वन्ति ] प्रथयन्ति । स्वनाम्ना व्यपदेशयन्ति रघुदिलीपादिवत् इत्यर्थः । [ तैः ] नरैः, वसूनि धनानि धरति इति [ वसुन्धरा ]। "संज्ञायां भृतॄवृजि" ( ३।२।४६ पा० ) इत्यादिना खच्प्रत्यये "खचि ह्रस्वः" ( ६।४।९४ पा० ) इति ह्रस्वात् मुमागमस्य । [ अन्वर्था ] अनुगतार्था, तेषां वसुभूतानां धारणात् इति भावः । [ येषां शुभ्राणि यशांसि इन्दुमण्डलं ह्रेपयन्ति ] लज्जयन्ति, यशसः निष्कलङ्कत्वात् इति भावः । ईदृशं हि यशः मानमहतः एव सम्भवति इति तात्पर्य्यार्थः । ह्रीधातोः ण्यन्तात् लट् । "अर्त्तिह्री" ( ७।३।३६ पा० ) इत्यादिना पुगागमः । अत्र ह्रेपणस्य सादृश्यपर्य्यवसानात् उपमालङ्कारः ॥ ६४ ॥

उदाहरणमिति ।—[ यैः, अमर्षः ] क्रोधः [ शुष्के ] नीरसे [ अशनिः इव अरातिषु ] विषये [ पात्यते ] प्रक्षिप्यते, [ मनस्विनां ] मानिनां [ प्रथमे ] अग्रेसराः [ ते, आशीःषु ] पुरुषैः एवं भवितव्यम् एवंरूपासु [उदाहरणं] निदर्शनं, भवन्ति इति शेषः, रामादिवत् उपमानं भवन्ति इत्यर्थः । अतः न त्याज्यः मानः इति सन्दर्भार्थः ॥ ६५ ॥

न सुखं प्रार्थये नार्थमुदन्वद्वीचिचञ्चलम् ।
नानित्यताशनेस्त्रस्यन् विविक्तं ब्रह्मणः पदम्॥६६॥
प्रमार्ष्टुमयशःपङ्कमिच्छेयं छद्मना कृतम् ।
वैधव्यतापितारातिवनितालोचनाम्बुभिः ॥६७॥
अपहस्येऽथवा सद्भिः प्रमादो वास्तु मे धियः ।
अस्थानविहितायासः कामं जिह्रेतु वा भवान्॥६८॥

यत् उक्तम् "अभिद्रोहेण भूतानाम्" इत्यादि, तत्र युग्मेन उत्तरम् आह, नेत्यादि ।—[उदन्वद्वीचिचञ्चलम्] उदन्वद्वीचिः इव चञ्चलं समुद्रतरङ्गवत् अस्थिरं [सुखं] कामं [न प्रार्थये] न इच्छामि । तथा चञ्चलम् [अर्थम्] च [न] प्रार्थये । किञ्च [अनित्यताशनेः] अनित्यता विनाशिता सा एव अशनिः तस्मात् [त्रस्यन्] बिभ्यत् । "वा भ्राश" (३।१।७०) इत्यादिना श्यन्प्रत्ययः । [विविक्तं] निर्बाधं [ब्रह्मणः] वेधसः आत्मनः । पद्यते इति [पदं] स्थानम् ऐक्यलक्षणं मुक्तिञ्च [न] प्रार्थये । एतेन यत् उक्तम् "उच्छेदं जन्मनः कर्त्तुम्" इत्यादि, तत् समाहितम् ॥ ६६ ॥ *

प्रमार्ष्टुमिति ।—किन्तु [छद्मना] कपटेन [कृतं], शत्रुभिः इति शेषः । [अयशः] एव [पङ्कम्] इति रूपकालङ्कारः । [वैधव्यतापितारातिवनितालोचनाम्बुभिः] वैधव्येन तापितानां दुःखीकृतानाम् अरातिवनितानां लोचनाम्बुभिः [प्रमार्ष्टुं] क्षालयितुम् [इच्छेयम्] अभिलषेयम् । इषिधातोः लिङि रूपम् । वैरनिर्यातनातिरिक्तं न किञ्चित् इच्छामि इत्यर्थः ॥ ६७ ॥

एवं तर्हि "यः करोति वधोदर्काः" इत्याद्युक्तदोषः स्यात्

* अत्र अनित्यताशनेः विनाशिता कुलिशात् बिभ्यत् अत एव निर्बाधं मोक्षपदमपि न प्रार्थये इति पदार्थहेतुकं काव्यलिङ्गम् ।

वंशलक्ष्मीमनुद्धृत्य समुच्छेदेन विद्विषाम् ।
निर्वाणमपि मन्येऽहमन्तरायं जयश्रियः ॥६९॥

॥ युग्मम् ॥

अजन्मा पुरुषस्तावत् गतासुस्तृणमेव वा ।
यावन्नेषुभिरादत्ते विलुप्तमरिभिर्यशः ॥७०॥

---

इति आशङ्काम् अङ्गीकृत्य "ग्लानिः न दोषाय" इति न्यायम् आश्रित्य युग्मेनोत्तरमाह. अपहस्य इत्यादि ।—[ अथवा, सद्भिः] पण्डितैः [ अपहस्ये ] अपहसिष्ये इत्यर्थः । "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" ( ३।३।१३१ पा० ) इति हसतेरप्यन्तात् कर्म्मणि लट् । ण्यन्तस्तु भ्रान्तः पाठः । [ मे धियः प्रमादः ] अनवधानत्वं [ वा अस्तु । भवान् ] अपि [ अस्थानविहितायासः ] अस्थाने अयोग्यविषये विहितः आयासः हितोपदेशप्रयासः येन सः तथोक्तः, विफलप्रयत्नः सन् इत्यर्थः । [कामं वा जिह्रेतु ] लज्जताम् ॥ ६८ ॥

वंशेति ।—[ अहं ] तु [ विद्विषां] शत्रूणां [ समुच्छेदेन ] विनाशेन करणेन [ वंशलक्ष्मीम्, अनुद्धृत्य ] अपुनरावर्त्त्य [ निर्वाणं ] मोक्षम् [अपि जयश्रियः, अन्तरायं ] विघ्नं [मन्ये], न तु पुरुषार्थम् इत्यर्थः । किमुत अन्योत्सवादिकम् ? इति भावः ॥ ६९ ॥ *

"ननु अयं ते दुराग्रहः" इत्यत: आह, अजन्मेति ।—[ पुरुषः यावत् अरिभिः, विलुप्तं ] संहृतं [ यशः इषुभिः न आदत्ते ] † अरिवधेन न प्रत्याहरति इत्यर्थः । [ तावदजन्मा ] अजातप्रायः

---

* अत्र कैमुतिकन्यायावलम्बनार्थात् अर्थापत्तिरलङ्कारः ।

† "आङो दोऽनास्यविहरणे" (१।३।२० पा०) इत्यात्मनेपदम् ।

अनिर्जयेन द्विषतां यस्यामर्षः प्रशाम्यति ।
पुरुषोक्तिः कथं तस्मिन् ब्रूहि त्वं हि तपोधन ! ॥७१॥
कृतं पुरुषशब्देन जातिमात्रावलम्बिना ।
योऽङ्गीकृतगुणैः श्लाघ्यः सविस्मयमुदाहृतः ॥७२॥

इत्यर्थः । ननु अजातोऽपि जननानन्तरम् उपयुज्यते एवेति अरुच्या पक्षान्तरमाह ।—[ गतासुः ] मृतः, मृततुल्यः इत्यर्थः । मृतोऽपि प्राक् उपयुक्तवान् इति अरुच्याह ।—[ तृणमेव वा ] इति तृणतुल्यः इत्यर्थः । अकिञ्चित्करस्य त्रैकाल्यानुपयोगात् जीवन्मृतः इत्यर्थः । अतः न अहमाग्रहात् ब्रवीमि, किन्तु वीरधर्म्मम् अनुपालयामि इति भावः ॥ ७० ॥

सर्वथा वैरनिर्य्यातनं कर्त्तव्यम् इत्युक्तं, तदकरणे पुरुषगुणानां हानिदोषमाह, अनिर्जयेनेति ।—[यस्य, अमर्षः] क्रोधः [ द्विषतां ] शत्रूणाम् [ अनिर्जयेन ] निर्जयं विना एव [ प्रशाम्यति ]। उपलक्षणे तृतीया । [ तस्मिन्, पुरुषोक्तिः ] पुरुष इत्युक्तिः । "पुरुषशब्दः" [ कथम् ? ] न कथञ्चित् इत्यर्थः, प्रवर्त्तते इति शेषः । प्रवृत्तिनिमित्तस्य पुरुषकारस्य अभावात् इति भावः । हे [ तपोधन ! त्वं हि ] त्वमेव [ ब्रूहि ] कथय ; न च ते किञ्चित् अविदितम् अस्तीति भावः । "हि हेताववधारणे" इत्यमरः ॥ ७१ ॥

"ननु पुरुषत्वजात्यैव पुरुषोक्तिप्रवृत्तेः किं पुरुषकारेण ? तत्राह कृतमित्यादिना द्वयेन ।—[ जातिमात्रावलम्बिना ] जातिमात्राभिधायिना [ पुरुषशब्देन कृतम् ] अलं, न तेन किञ्चित् साध्यते इत्यर्थः । अत्र गम्यमानसाधनक्रियापेक्षया

ग्रसमानमिवौजांसि सदसा गौरवेरितम् ।
नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान् ॥७३

॥ युग्मम् ॥

करणत्वात् तृतीया, इत्युक्तं प्राक् । * कृतमिति निषेधार्थम् अव्ययं चादिषु पठ्यते । सत्यं जातिमात्रेऽपि पुरुषशब्दः प्रवर्त्तते, परन्तु न असौ पुंसाम् आशास्यः ; पश्वादिसाधारण्यात् इति तात्पर्य्यार्थः । तर्हि कीदृक् श्लाघ्यः ? इति आशङ्क्य आह, य इत्यादिना अर्धद्वयेन । † [अङ्गीकृतगुणैः] गुणपक्षपातिभिः [ यः ] पुमान् [ श्लाघ्यः ] स्तुत्यः सन् [ सविस्मयं ] ससम्भ्रमम् [ उदाहृतः ] कथितः । पुंसा ईदृशेन भवितव्यम् इति निदर्शितः ॥ ७२ ॥

ग्रसमानमिति ।—किञ्च [ सदसा ] सभया [ गौरवेरितं ] गौरवेण ईरितं कथाप्रसङ्गेषु गौरवपूर्वकम् उच्चारितं सत् [ ओजांसि ] शृण्वतां तेजांसि [ ग्रसमानं ] गिलत् [इव] स्थितं [ यस्य ] पुंसः [ नाम द्विषोऽपि अभिनन्दन्ति ] अनुमोदन्ते, किमुत सुहृदः ? इति भावः । [ सः पुमान् पुमान् ] पुरुषत्वेन गण्यते इत्यर्थः । प्रथमः पुंशब्दः जातिवचनः द्वितीयः गुणवचनः ; सः एव श्लाघ्यः । अत्र पुमान् पुमान् इति तात्पर्य्यमात्रभेदभिन्नशब्दार्थपौनरुक्त्यलक्षणः लाटानुप्रासः अल-

* करणलक्षणम् हरिणोक्तम्,—

"क्रियायाः परिनिष्पत्तिः यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदास्मृतम् ॥" इति, "गम्यमानापि क्रियाविभक्तौ प्रयोजिका ।" इति च सि० कौ० ।

† अर्धत्रयेणेति पाठे—गुणपक्षपातिभिः स्तुत्यः, सर्वेषाम् उदाहरणं, तत्र च उदाहरणे विस्मयश्च इति त्रीणि व्यञ्जितानि ।

यथाप्रतिज्ञं द्विषतां युधि प्रतिचिकीर्षया।
ममैवाध्येति नृपतिस्तृष्यन्निव जलाञ्जलेः ॥ ७४ ॥
स वंशस्यावदातस्य शशाङ्कस्येव लाञ्छनम्।
कृच्छ्रेषु व्यर्थया यत्र भूयते भर्त्तुराज्ञया ॥७५॥
कथं वाऽऽदीयतामर्वाङ्मुनिता धर्मरोधिनी।
आश्रमानुक्रमः पूर्वैः स्मर्य्यते न व्यतिक्रमः ॥७६॥

---

ङ्कारः। तथा च सूत्रम्—"तात्पर्य्यभेदयुक्तो लाटानुप्रासः" इति ॥ ७३ ॥

"ननु सत्सु भीमादिषु तव एव अयं कः अभिनिवेशः?" इत्यत आह, यथेति।—[ नृपतिः ] युधिष्ठिरः [ यथाप्रतिज्ञं * युधि द्विषतां प्रतिचिकीर्षया ] द्विषतः प्रतिकर्त्तुम् इच्छया, प्रतिज्ञानुसारेणैव जिघांसया इत्यर्थः। [ तृष्यन् ] पिपासुः [ जलाञ्जलेः इव, ममैव अध्येति ] इच्छति, कार्य्यसिद्धेः मदायत्तत्वात् माम् एव स्मरति ; अतः अयं मम अभिनिवेशः इत्यर्थः। "अधीगर्थ" ( २।३।५२ पा० ) इत्यादिना कर्मणि षष्ठी ॥७४॥ †

"ननु युधिष्ठिरः स्वार्थं साधयति; त्वया च स्वार्थमात्रम् अनुसन्धीयताम्" इत्यतः आह, स इति।—[सः] नरः [अवदातस्य] स्वच्छस्य [वंशस्य शशाङ्कस्य इव, लाञ्छनं ] कलङ्कः। [ यत्र ] यस्मिन् पुरुषे [कृच्छ्रेषु] व्यसनेषु [ भर्त्तुः ] स्वामिनः [आज्ञया व्यर्थया भूयते ]। भावे लट्। आपदि स्वार्थसाधकः कुलघातकः ; तत् कथं स्वार्थनिष्ठकार्य्यता युक्ता इत्यर्थः ॥ ७५ ॥

यदुक्तम् "विजहीहि रणोत्साहम्" इत्यादि, तत्रोत्तरमाह,

---

* "अव्ययं विभक्ति" (२।१।६ पा० ) इति समासः।

† अत्र वाक्यार्थहेतुककाव्यलिङ्गानुप्राणिता उपमालङ्कृतिः।

आसक्ता धूरियं रूढ़ा जननी दूरगा च मे ।
तिरस्करोति स्वातन्त्र्यं ज्यायांश्चाचारवान् नृपः ॥७७॥

कथमिति ।—[ धर्मरोधिनी ] धर्मविरोधिनी [ अर्वाक् ] गार्हस्थ्यात् प्राक् एव [मुनिता] वानप्रस्थत्वं चतुर्थाश्रमता वा । वर्णक्रमेण तस्य विधानात् "त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः" इति सूत्रकारवचनात् च क्षत्रियस्य अपि कैश्चित् इष्टत्वात् । तत् एतत् सम्यक् विवेचितम् अस्माभिः रघुवंश-सञ्जीवन्यां,—"स किलाश्रममन्त्यमाश्रितः" इत्यत्र । * [कथं वा आदीयतां ] मया कथं वा अङ्गीक्रियताम् ? सम्प्रश्ने लोट् । † तथाहि ।—[ पूर्वैः ] मन्वादिभिः [आश्रमानुक्रमः स्मर्य्यते । न] तु [व्यतिक्रमः] । "ब्रह्मचारी भूत्वा गृही भवेत् । गृही भूत्वा वनी भवेत् । वनी भूत्वा प्रव्रजेत्" इति श्रुत्यनुसारात् इत्यर्थः । एतत् अपि "चत्वार आश्रमाः" इत्येतत्पक्षम् आश्रित्य उक्तम् । "यदि चेत् वैराग्यं तदा ब्रह्मचर्य्यात् एव प्रव्रजेत् गृहात् वनात् वा" इति व्युत्क्रमपक्षस्यापि श्रवणात् । सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः ॥ ७६ ॥

"ननु भवान् गृहस्थ एव, तत् कथम् अर्वाङ्मुनित्वविरोधः" ? इति आशङ्क्य, सत्यं गृहस्थः अस्मि, तथापि कृतनिखिल-गृहस्थकर्त्तव्यस्य एव वानप्रस्थाधिकारः न गृहस्थमात्रस्य । न च अहम् अद्यापि कृतकृत्यः ;—इति उत्तरमाह, आसक्तेति ।—[ आसक्ता ] लग्ना, अवश्यं कर्त्तव्या इत्यर्थः । [ रूढ़ा ] प्रसिद्धा,

* ८म सर्गे १४श श्लोके द्रष्टव्यम् ।

† "लोट् च" (३।३।१६२ पा०) इति सूत्रे विध्याद्यर्थेषु लोट् एवं चात्र सम्प्रश्नार्थग्रहः "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्" ( ३।३।१६१ पा० ) ।

स्वधर्ममनुरुन्धन्ते नातिक्रममरातिभिः।
पलायन्ते कृतध्वंसा नाहवान्मानशालिनः॥ ७८॥
विच्छिन्नाभ्रविलायं वा विलीये नगमूर्द्धनि।
आराध्य वा सहस्राक्षमयशःशल्यमुद्धरे॥७९॥

महती इत्यर्थः। [इयं] पूर्वोक्ता [धूः] वैरनिर्य्यातनभारः। [दूरगा] दूरवर्त्तिनी [जननी च] माता अपि। तथा [नृपः] अपि [आचारवान्] तपोऽधिकः इत्यर्थः। तत्र अपि [ज्यायान्] ज्येष्ठः नृपः युधिष्ठिरः [च, मे] मम [स्वातन्त्र्यं] स्वाच्छन्द्यं [तिरस्करोति] दूरीकरोति, आश्रमं प्रतिबध्नाति इत्यर्थः। तिरस्करोति इति प्रत्येकम् अभिसम्बध्यते, अन्यथा बहुवचन-प्रसङ्गात्॥ ७७॥ *

उक्तम् अर्थम् उपसंहरति, स्वधर्ममिति।—[मानशालिनः, स्वधर्मं] क्षात्रधर्मम् [अनुरुन्धन्ते] अनुवर्त्तन्ते। [अतिक्रमं] स्वधर्मातिक्रमं [न] अनुरुन्धन्ते। ततः किम्? अतः आह, अरातिभिरिति।—[अरातिभिः, कृतध्वंसाः] कृतापकाराः सन्तः [आहवात् न पलायन्ते]। अयम् एव स्वधर्मानुरोधः इत्यर्थः। "उपसर्गस्यायतौ" (८।२।१९ पा०) इति रेफस्य लत्वम्। अत्र मनुः।—"न निवर्त्तेत संग्रामात् क्षात्रधर्ममनुस्मरन्" इति। अत्र उत्तरवाक्यार्थं प्रति पूर्ववाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम् अलङ्कारः॥ ७८॥

"किं बहुना? मम अयं निश्चयः श्रूयताम्," इत्याह, विच्छिन्नेति।—विच्छिन्नं वाताहतं यत् अभ्रं तदिव विलीय

* अत्र साभिप्रायविशेषणत्वात् परिकरालङ्कारः।

इत्युक्तवन्तं परिरभ्य दोर्भ्यां
तनूजमाविष्कृतदिव्यमूर्त्तिः ।
अघोपघातं मघवा विभूत्यै
भवोद्भवाराधनमादिदेश ॥ ८० ॥
प्रीते पिनाकिनि मया सह लोकपालैः
लोकत्रयेऽपि विहिताप्रतिवार्य्यवीर्य्यः ।

इति [विच्छिन्नाभ्रविलायं] यथा तथा । "उपमाने कर्मणि च" ( ३।४।४५ पा० ) इति कर्त्तरि उपपदे णमुल् । [ नगमूर्द्धनि ] अस्मिन् गिरिशृङ्गे [ विलीये ] विशीर्य्ये [ वा ] । "कषादिषु यथाविध्यनुप्रयोगः" (३।४।४६ पा० ) । यत् [ वा सहस्राक्षम् ] इन्द्रम् [आराध्य अयशः] एव [शल्यं ] तत् उद्धरे उद्धरिष्यामि । न तु गत्यन्तरशङ्का इत्यर्थः । वाशब्दः विकल्पे ॥ ७९ ॥ *

इतीति ।--[ मघवा ] इन्द्रः [ इत्युक्तवन्तं, तनूजं ] पुत्रम् अर्जुनम् । [आविष्कृतदिव्यमूर्त्तिः] आविष्कृता प्रकटिता दिव्यमूर्त्तिः निजरूपं येन सः तथोक्तः सन् [ दोर्भ्यां ] बाहुभ्यां [ परिरभ्य, विभूत्यै] श्रेयसे । उपहन्यते अनेन इति उपघातम् । करणे घञ्प्रत्ययः ।† अघानां दुःखानाम् उपघातम् [अघोपघातं, भवोद्भवाराधनं ] भवः संसारः तस्य उद्भवः कारणम् इति भवोद्भवः शिवः तस्य आराधनम् उपासनम् [ आदिदेश ] । शिवम् उद्दिश्य तपः चर इति आज्ञापयामास इत्यर्थः ॥ ८० ॥

* अत्र पूर्व्वार्द्धे विच्छिन्नाभ्रवदिति सादृश्यस्फुरणात् उपमालङ्कारः । उत्तरार्द्धे तु अयशः एव शल्यमिति अभेदबोधनात् रूपकम् ; इत्यनयोः परस्परमनपेक्षावस्थानात् तिलतण्डुलवत् संसृष्टिः ।

† "अकर्त्तरि च कारके संज्ञायाम्" ( ३।३।१९ पा० ) इति घञ् ।

लक्ष्मीं समुत्सुकयितासि भृशं परेषाम्
उच्चार्य्य वाचमिति तेन तिरोबभूवे ॥८१॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये इन्द्रसमागमः
नाम एकादशः सर्गः ॥ ११ ॥

प्रीत इति।—[ पिनाकिनि ] शिवे [ प्रीते ] सति [ लोकपालैः सह मया लोकत्रये अपि, विहिताप्रतिवार्य्यवीर्य्यः ] विहितं दत्तम् अप्रतिवार्य्यम् अनिवार्य्यं वीर्य्यं यस्य सः तथोक्तः सन्, [ परेषां ] शत्रूणां [ लक्ष्मीं भृशं समुत्सुकयितासि ] समुत्सुकां त्वयि अनुरक्तां कर्त्तासि, पुनः आहरिष्यसि इत्यर्थः। वीरभोग्याः सम्पदः इति भावः। उत्सुकशब्दात् "तत्करोति" * इति ण्यन्तात् कर्त्तरि लुट्। [ इति वाचम् उच्चार्य्य, तेन ] इन्द्रेण [ तिरोबभूवे ] अन्तर्दधे। भावे लिट् ॥ ८१ ॥

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ-सूरि-विरचितायां किरातार्जुनीय-काव्य-व्याख्यायां घण्टापथसमाख्यायां एकादशः सर्गः।

* "तत्करोति तदाचष्टे" ( गण० )। करोत्याचष्ट इति धात्वर्थमात्रं णिजर्थः लडर्थस्त्वविवचितः। "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" (गण०) एतस्य प्रपञ्चः।

# द्वादशः सर्गः ।



अथ वासवस्य वचनेन
रुचिरवदनस्त्रिलोचनम् ।
क्लान्तिरहितमभिराधयितुं
विधिवत् तपांसि विदधे धनञ्जयः ॥१॥
अभिरश्मिमालि विमलस्य
धृतजयधृतेरनाशुषः ।

अथेति ।—[ अथ ] इन्द्रतिरोधानानन्तरं [ रुचिरवदनः ] इन्द्रसाक्षात्कारसन्तोषात् प्रसन्नमुखः [ धनञ्जयः ] अर्जुनः [ वासवस्य, वचनेन ] उपदेशेन [ त्रिलोचनं ] शिवं [ क्लान्तिरहितं ] यथा तथा [ अभिराधयितुं ] प्रसादयितुं [ तपांसि विधिवत् ] विध्यर्हं, यथाशास्त्रम् इत्यर्थः। "तदर्हम्" (५।१।११७ पा० ) इति वतिप्रत्ययः। [ विदधे ] चक्रे । अस्मिन् सर्गे उद्गता वृत्तम् ।—"सजसादिमे सलघुकौ च न सजगुरुकैरथोद्गता । त्र्यङ्घ्रिगत भनजला गयुताः स ज सा जगौ चरणमेकतः पठेत् ॥" इति लक्षणात् ॥ १ ॥

अभिरश्मीति ।—[ अभिरश्मिमालि ] अभिसूर्य्यं सूर्य्याभिमुखं [ भुवि, एकचरणं निभ्रे ... ]एकचरणेन तिष्ठतः [ विमलस्य ] वाह्यान्तरशुद्धि... [ धृत]जयधृतेः ] धृता जयधृतिः जयेच्छा येन तस्य ... अनश्नतः "उपेयि-

तस्य भुवि बहुतिथास्तिथयः
प्रतिजग्मुरेकचरणं निषीदतः ॥ २ ॥

वपुरिन्द्रियोपतपनेषु
सततमसुखेषु पाण्डवः ।
व्याप नगपतिरिव स्थिरतां
महतां हि धैर्य्यमविभाव्यवैभवम् ॥३॥

वाननाश्वानन्नूचानश्च" ( ३।२।१०९ पा० ) इति निपातः । [ तस्य ] अर्जुनस्य बहूनां पूरणाः [ बहुतिथाः ] बहुसंख्यकाः इत्यर्थः । "तस्य पूरणे डट्" ( ५।२।४८ पा० ) । "बहुपूगगणसङ्घस्य तिथुक्" (५।२।५२ पा०) इति तिथुगागमः । [तिथयः] दिनानि [ प्रतिजग्मुः ] । अत्र तिथिशब्दः पुंलिङ्गः । "तदाद्यास्तिथयो द्वयोः" इति अभिधानात् । अन्यथा बहुतिथाः इति अत्र टित्त्वात् ङीप् स्यात् ॥ २ ॥

वपुरिति ।—[ पाण्डवः ] अर्जुनः [सततं, वपुरिन्द्रियोपतपनेषु ] वपुषः इन्द्रियाणां च उपतपनेषु सन्तापकरेषु । करणे ल्युट् ।* [असुखेषु] अनशनादिदुःखेषु अपि [नगपतिः] गिरीन्द्रः [ इव, स्थिरतां ] दार्ढ्यं [ व्याप ] प्राप । [हि] तथाहि [महतां धैर्य्यम्, अविभाव्यवैभवम् ] अविभाव्यं दुर्बोधं वैभवं सामर्थ्यं यस्य तत् तथोक्तम् । धीराणाम् अकिञ्चित्करं दुःखम् इति भावः ॥ ३ ॥ †

* "करणाधिकरणयोश्च" ( ३।३।११७ पा० ) इति ल्युट् ।

† अत्र उपमानुप्राणितः समान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः ।

न पपात सन्निहितपक्ति-
सुरभिषु फलेषु मानसम् ।
तस्य शुचिनि शिशिरे च पय-
स्यमृतायते हि सुतपः सुकर्मणाम् ॥४॥

न विसिस्मिये न विषसाद
मुहुरलसतां न चाददे ।
सत्त्वमुरुधृति रजस्तमसी
न हतः स्म तस्य हतशक्तिपेलवे ॥ ५ ॥

नेति ।—[ तस्य ] अर्जुनस्य [ मानसं ] मनः [ सन्निहित-पक्तिसुरभिषु ] सन्निहितानि समीपस्थानि यानि पक्तिसुरभीणि पाकसुगन्धीनि तेषु [ फलेषु ]। तथा [ शुचिनि ] स्वच्छे [ शिशिरे ] शीतले [ पयसि च न पपात ] न किञ्चित् आचकाङ्क्ष इति भावः। प्राणधारणं तु तस्य तपः एव इत्याह,—[हि] तथाहि। [ सुकर्मणां ] सुकृतिनां शोभनं तपः [ सुतपः ] एव [ अमृतायते ] अमृतवत् आचरति। “किं तपस्तृप्तानां तर्पणान्तरैः ?” इति भावः। “लोहितादिडाज्भ्यः क्यष्” (३।१।१३ पा० )। “वा क्यषः” ( १।३।९० पा० ) इति आत्मनेपदम्। लोहितादिः आकृतिगणः ॥ ४ ॥ *

नेति ।—सः अर्जुनः [न विसिस्मिये] “अहो महत् तपः तप्तम्” इति न विस्मयं जगाम ।“तपः क्षरति विस्मयात्” इति स्मृतेः इति भावः। [ न विषसाद ] फलविलम्बात् गतोत्साहः न बभूव। “विषादश्चेतसो भङ्गः” इति लक्षणात्। “सदिरप्रतेः” ( ८।३।६६ पा० ) इति षत्वम्। [ मुहुः अलसतां ]

* अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। स च अमृतायत इति उपमानुप्राणितः।

तपसा कृशं वपुरुवाह
स विजितजगत्त्रयोदयम् ।
त्रासजननमपि तत्त्वविदां
किमिवास्ति यत् न सुकरं मनस्विभिः ? ॥६॥
ज्वलतोऽनलादनुनिशीथम्
अधिकरुचिरम्भसां निधेः ।

तपसि मन्दोद्यमत्वं [ च न आददे ] न अगमत् । किञ्च, हत-शक्तिनी हतसारे अत एव पेलवे भङ्गुरे ते [ हतशक्तिपेलवे रजस्तमसी ] गुणौ [ उपेत्य ] महासारं [ तस्य ] अर्जुनस्य [ सत्त्वं ] सत्त्वगुणं [ न हतः स्म ] न हतवती । हन्तेः "लट् स्मे" ( ३।२।११८ पा० ) इति भूतार्थे लट् ॥ ५ ॥ *

तपसेति ।—[ सः ] अर्जुनः [ तपसा कृशं ] तथापि [ विजितजगत्त्रयोदयं ] विजितः जगत्त्रयस्य भुवनत्रयस्य उदयः उत्कर्षः येन तत् तथोक्तम् । किञ्च [ तत्त्वविदाम् अपि ] लोकहितार्थतत्त्वं जानताम् अपि [ त्रासजननं ] भयङ्करं [ वपुः, उवाह ] वहति स्म । न च एतत् चित्रम् इत्याह, किमिति ।—[यत् मनस्विभिः न सुकरं] तत् [किम् इव अस्ति ?] न किमपि इत्यर्थः । इवशब्दः वाक्यालङ्कारे । "मनस्विनाम्" इति पाठे—शेषे षष्ठी स्यात् एव । कृद्योगलक्षणायाः "न लोक" ( २।३।६९ पा० ) इत्यादिना निषेधात् ॥ ६ ॥ †

ज्वलत इति ।—[ विजयी सः ] अर्जुनः [ अनुनिशीथम् ] अर्द्धरात्रे । विभक्त्यर्थे अव्ययीभावः । ‡ "अर्द्धरात्रनिशीथौ

* अत्र तपोरूपाऽलौकि[illegible]द्धवस्तुवर्णनात् उदात्तालङ्कारः ।

† अत्र सामान्येन विशे[illegible]ऽर्थान्तरन्यासः ।

‡ "अव्ययं विभक्ति" ( २।१।६ पा० ) ।

धैर्य्यगुणमवजयन् विजयी
ददृशे समुन्नततरः स शैलतः ॥ ७ ॥
जपतः सदा जपमुपांशु
वदनमभितो विसारिभिः ।
तस्य दशनकिरणैः शुशुभे
परिवेषभीषणमिवार्कमण्डलम् ॥ ८ ॥
कवचं स बिभ्रदुपवीत-
पदनिहितसज्यकार्मुकः ।

द्वौ" इत्यमरः । [ ज्वलतः ] दीप्यमानात् [ अनलात् ] अग्नेः [अधिकरुचिः] दीप्यमानः तथा [अम्भसां निधेः, धैर्य्यगुणं] धैर्य्यं गाम्भीर्य्यं तत् एव गुणः तम् [ अवजयन् ]। किञ्च [ शैलतः ] शैलात् अपि [ समुन्नततरः, ददृशे ] दृष्टः । अत्र रुच्यादिभिः अनलाद्याधिक्यासम्बन्धेऽसम्बन्धाभिधानात् अतिशयोक्तिः अलङ्कारः ॥ ७ ॥

जपत इति ।—[ सदा, उपांशु ] रहः, गूढम् इत्यर्थः । "रहस्योपांशु चालिङ्गे" इत्यमरः । "करणवदशब्दमनुप्रयोग उपांशु" इति कौमारे लक्षणम् । जप्यत इति जपः तं [जपं] मन्त्रम् इत्यर्थः । [ जपतः ] पठतः [ तस्य ] अर्जुनस्य [वदनं] कर्त्तृ [ अभितः, विसारिभिः ] प्रसरणशीलैः [ दशनकिरणैः ] हेतुभिः [ परिवेषभीषणम् अर्कमण्डलम् इव शुशुभे ] । "परिवेषस्तु परिधिरुपसूर्य्यकमण्डले" इत्यमरः ॥ ८ ॥ *

---

* अत्रोपमालङ्कारः ।

शैलपतिरिव महेन्द्रधनुः-
परिवीतभीमगहनो विदिद्युते ॥ ६ ॥
प्रविवेश गामिव कृशस्य
नियमसवनाय गच्छतः।
तस्य पदविनमितो हिमवान्
गुरुतां नयन्ति हि गुणा न संहतिः ॥१०॥

कवचमिति।—[कवचं] वर्म [बिभ्रत्, उपवीतपदनिहित-सज्यकार्मुकः] उपवीतपदे यज्ञोपवीतस्थाने निहितम् आरोपितं सज्यं कार्मुकं येन सः तथोक्तः [सः] अर्जुनः [महेन्द्र-धनुःपरिवीतभीमगहनः] महेन्द्रधनुषा परिवीतं परिवेष्टितं भीमं गहनं वनं यस्य सः [शैलपतिः इव] हिमवान् इव [विदिद्युते] शुशुभे ॥ ६ ॥ *

प्रविवेशेति।—[नियमसवनाय] नियमस्नानाय। "सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च" इति विश्वः। [कृशस्य] तपःकर्शितस्य तथा [गच्छतः, तस्य] अर्जुनस्य [पदविनमितः] पदैः पादन्यासैः विनमितः [हिमवान्, गां] भुवं [प्रविवेश इव] इति उत्प्रेक्षा। ननु कृशस्य कथम् इयत् गौरवम्? तत्र आह—[गुणाः] साराद्यः [गुरुतां, नयन्ति] प्रापयन्ति [हि]। [संहतिः] सङ्घातः, मूर्त्तिः इति यावत्, [न] नयति। अन्तः-सारात् हि गौरवं भवति, न तु वाह्यात् स्थौल्यात्। तत्र च हेमपिण्डतूलपिण्डौ एव निदर्शनम् इति भावः ॥ १० ॥ †

* अत्रोपमानोपमेयसाधारणधर्मसम्बन्धादुपमा (श्रौती)।

† अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। स च उत्प्रेक्षया सङ्कीर्णः।

परिकीर्णमुद्यतभुजस्य
भुवनविवरे दुरासदम् ।
ज्योतिरुपरि शिरसो विततं
जगृहे निजान् मुनिदिवौकसां पथः॥११॥

रजनीषु राजतनयस्य
बहुलसमयेऽपि धामभिः ।
भिन्नतिमिरनिकरं न जहे
शशिरश्मिसङ्गमयुजा नभःश्रिया ॥१२॥

परिकीर्णमिति ।—[ उद्यतभुजस्य ] ऊर्द्ध्वबाहोः तस्य [ शिरसः उपरि ] । "षष्ठ्यतसर्थप्रत्ययेन" (२।३।३० पा०) इति षष्ठी । [ विततं ] विस्तृतं [ भुवनविवरे ] भुवनयोः विवरे द्यावापृथिव्योः अन्तराले [ परिकीर्णं ] व्याप्तम् । [ दुरासदं ] दुर्धर्षं [ ज्योतिः ] तेजः [ मुनिदिवौकसां ] मुनीनां दिवौकसां च [ निजान् ] नियतान् [ पथः ] मार्गान् [ जगृहे ] जग्राह, प्रतिबबन्ध इत्यर्थः ॥ ११ ॥ *

रजनीष्विति ।—[ बहुलसमये ] कृष्णपक्षे [ अपि रजनीषु ] रात्रिषु [राजतनयस्य ] अर्जुनस्य [ धामभिः ] तेजोभिः [भिन्न-तिमिरनिकरं ] भिन्नः तिमिरनिकरः यस्य तत् [नभः, शशि-रश्मिसङ्गमयुजा ] शशिरश्मीनां सङ्गमेन हेतुना युजा सङ्गतया [ श्रिया ] तच्छ्रीतुल्यया श्रिया इत्यर्थः । अत एव निदर्शना-लङ्कारः । † [ न जहे ] न त्यक्तम् । जहातेः कर्मणि लिट् । ज्योत्स्नातुल्यं ज्योतिः जातम् इत्यर्थः ॥ १२ ॥

* शारीरकतेजसः मुनिवर्गसरणिप्रतिरोधकासम्बन्धेऽपि सम्बन्धकथनात् अति-शयोक्तिः ।

† स च असम्बन्धे सम्बन्धरूपातिशयोक्तिसहितः ।

महता मयूखनिचयेन
शमितरुचि जिष्णुजन्मना ।
ह्रीतमिव नभसि वीतमले
न विराजते स्म वपुरंशुमालिनः ॥१३॥
तमुदीरितारुणजटांशुम्
अधिगुणशरासनं जनाः ।

महतेति ।—[ जिष्णुजन्मना ] जिष्णोः अर्जुनात् जन्म यस्य तेन । जन्मोत्तरपदत्वात् व्यधिकरणः बहुव्रीहिः । * [ महता मयूखनिचयेन ] बहुकिरणसमूहेन [ शमितरुचि ] हतप्रभम् [ अंशुमालिनः वपुः ] अर्कबिम्बं [ ह्रीतं ] जितत्वात् लज्जितम् [इव] इति उत्प्रेक्षा । [ वीतमले ] विमले । मेघनीहाराद्यावरणरहिते अपि इत्यर्थः । [ नभसि न विराजते स्म ] ॥ १३ ॥

तमिति ।—उदीरिताः उद्गताः अरुणाः जटानाम् अंशवः यस्य तम् [उदीरितारुणजटांशुम्] अधिगुणम् अधिज्यं शरासनं यस्य तम् [ अधिगुणशरासनं, तम् ] अर्जुनं [ जनाः ] सिद्धगणाः । [ आसुरीः ] असुरसम्बन्धिनीः [ पुरीः मिमन्थिषुं ] मथितुम् इच्छुम् । मथेः सन्नन्तात् उप्रत्ययः । तथा [अनुदितललाटदृशं ] अनुदिता अनुत्पन्ना ललाटे दृक् यस्य तं साक्षात् त्रिपुरविजयोद्यतम् अभालाक्षं [रुद्रम् इव ददृशुः] । अत्र अभालाक्षस्य रुद्रस्य असम्भवात् स्वतः सिद्धोपमानासिद्धेः न इयम्

* "सप्तमी विशेषणे बहुव्रीहौ" ( २।२।३५ पा० ) इति सूत्रे सप्तम्यन्तस्य तु कण्ठाद्यन्वयद्वारैव क्रियान्वयाद्विशेषणत्वे सिद्धे सप्तमीग्रहणं वैयधिकरण्येऽपि अत्र बहुव्रीहिसमासं ज्ञापयति ; तेन "जन्माद्युत्तरपदत्वात्" इत्यादौ विभक्त्यन्तरविशेषणेऽपि व्यधिकरणो बहुव्रीहिः साधुः ।

रुद्रमनुदितललाटदृशं
दद्दशुर्मिमन्थिषुमिवासुरीः पुरीः॥१४॥
मरुतां पतिः स्विदहिमांशुः
उत पृथुशिखः शिखी तपः ।
तप्तुमसुकरमुपक्रमते
न जनोऽयमित्यवययेे स तापसैः ॥१५॥
न ददाह भूरुहवनानि
हरितनयधाम दूरगम् ।

उपमा, किन्तु उत्प्रेक्षा। सा च अभालाक्षम् इति उपमानात् उपमेयस्य न्यूनत्वकथनार्थे अन्वयव्यतिरेकेण उज्जीविता, इति अनयोः अङ्गाङ्गिभावेन सङ्करः। उपमा तु व्यज्यते इति अलङ्कारेण अलङ्कारध्वनिः ॥ १४ ॥

मरुतामिति।—[ मरुतां पतिः स्वित् ] देवेन्द्रः वा, [ अहिमांशुः उत ] सूर्य्यः वा, [ पृथुशिखः ] महाज्वालः [ शिखी ] पावकः वा, [ असुकरं ] दुष्करं [ तपः तप्तुम् उपक्रमते। अयं जनः ] पुरुषः कश्चित् प्राकृतः [ न इति, सः ] अर्जुनः [तापसैः] तपस्विभिः। "अण् च" ( ५।२।१०३ पा० ) इति मत्वर्थीयः अण्प्रत्ययः। [ अवययेे ] अवगतः। यातेः अवपूर्वात् कर्मणि लिट्। अत्र इन्द्रत्वादिकं धर्मम् आरोप्य जनत्वापवादात् साम्यम् आरोप्य अपह्नवालङ्कारः। सामान्यलक्षणं तु—"निषिद्धविषये साम्यारोपो ह्यपह्नवः" इति लक्षणात् ॥ १५ ॥

न ददाहेति।—[ दूरगं ] व्यापकम् इत्यर्थः। [ हरितनयधाम ] हरितनयस्य इन्द्रसुतस्य अर्जुनस्य धाम तेजः [ भूरुहवनानि ] वृक्षषण्डान् [ न ददाह ], अग्निवत् इति भावः।

न स्म नयति परिशोषमपः
सुसहं बभूव न च सिद्धतापसैः ॥ १६ ॥
विनयं गुणा इव विवेकम्
अपनयभिदं नया इव ।
न्यायमवधय इवाशरणाः
शरणं ययुः शिवमथो महर्षयः ॥ १७ ॥

---

नया [ अपः ] जलानि [ परिशोषं न नयति स्म ], अर्कवत् इति भावः। तथापि इति शेषः। [ सिद्धतापसैः ] सिद्धाश्च तापसाश्च तैः [ सुसहं न च बभूव ]; अतः अस्य अलौकिकं तेजः इति भावः। अत एव दुःसहत्वदाहाद्यजनकत्वयोः विरोधात् विरोधाभासः अलङ्कारः।—"आभासत्वे विरोधस्य विरोधालङ्कृतिर्मता" इति लक्षणात्॥ १६ ॥

विनयमिति।—[ अथो ] अनन्तरम् [ अशरणाः महर्षयः ] मुनयः [ विनयं ] शिक्षां [ गुणाः ] औदार्यादयः [ इव ], अशिक्षितस्य तदभावात् इति भावः। [ अपनयभिदं ] दुर्नीतिवारकं [ विवेकं ] सदसज्ज्ञानं [ नयाः ] नीतयः [ इव ] अविवेकिनः नीत्यभावात् इति भावः। नीतिः षाड्गुण्यप्रयोगः। [ न्यायं ] नीयते अनेन इति न्यायः नियामकं प्रमाणं तम्। [ अवधयः ] समयाः [ इव ]; अप्रामाणिकस्य समयोल्लङ्घितत्वात् इति भावः। [ शिवं ] त्रिनयनं [ शरणं ] रक्षितारम्। "शरणं गृहरक्षित्रोः" इत्यमरः। [ ययुः ] जग्मुः। शरणत्वेन प्रापुः इत्यर्थः। अशरणाः शरणम् इति च उपमासु अपि यथायोग्यं योज्यम्। उपमालङ्कारः॥ १७ ॥ *

* अत्रोपमाभेदः मालोपमा, तल्लक्षणं दर्पणकारः,—"मालोपमा यदेकस्योपमानं बहु दृश्यते" इति।

परिवीतमंशुभिरुदस्त-
दिनकरमयूखमण्डलैः ।
शम्भुमुपहतदृशः सहसा
न च ते निचायितुमभिप्रसेहिरे ॥१८॥

अथ भूतभव्यभवदीशम्
अभिमुखयितुं कृतस्तवाः ।
तत्र महसि ददृशुः पुरुषं
कमनीयविग्रहमयुग्मलोचनम् ॥ १९ ॥

परिवीतमिति ।—[ उदस्तदिनकरमयूखमण्डलैः ] उदस्तं निरस्तं छादितं दिनकरमयूखमण्डलं यैः तैः, सूर्य्यतेजोविजयिभिः इत्यर्थः । [ अंशुभिः ] तेजोभिः [ परिवीतं ] व्याप्तं [ शम्भुं ] शिवम् [ उपहतदृशः ] प्रतिहतदृष्टयः [ ते ] महर्षयः [ सहसा ] झटिति [ निचायितुं ] निशामयितुं, द्रष्टुम् इत्यर्थः । "चायृ पूजानिशामनयोः" इति धातोः "शकधृष" ( ३।४।६५ पा० ) इत्यादिना तुमुन् । [ न च अभिप्रसेहिरे ] न शेकुः ॥ १८ ॥ *

अथेति ।—[ अथ ] दृगुपघातानन्तरं [ भूतभव्यभवदीशं ] भूतभव्यभवतां भूतभविष्यद्वर्त्तमानानाम् ईशं देवम् [ अभिमुखयितुम् ] † अभिमुखीकर्त्तुं [ कृतस्तवाः ] कृतस्तोत्राः सन्तः, न तु अन्यथा इति भावः । "स्तवः स्तोत्रं स्तुतिर्नुतिः" इत्यमरः । [ तत्र ] पूर्वोक्ते [ महसि ] तेजसि [ कमनीयविग्रहं ]

* ज्वलदुज्ज्वलवस्त्ववलोकने सहसा दृक्शक्तिव्याघातः स्वाभाविकः इति स्वभावोक्तिरलङ्कृतिः ।

† "तत्करोति तदाचष्टे" (गण०) णिजन्तात् तुमुन् ।

ककुदे वृषस्य कृतबाहुम्
अकृशपरिणाहशालिनि
स्पर्शसुखमनुभवन्तमुमा-
कुचयुग्ममण्डल इवार्द्रचन्दने ॥२०॥
स्थितमुन्नते तुहिनशैल-
शिरसि भुवनातिवर्त्तिना ।

रम्यमूर्त्तिम् [ अयुग्मलोचनं ] अयुग्मानि त्रीणि लोचनानि यस्य तं [ पुरुषं ददृशुः ] ॥ १९ ॥

अथ पञ्चभिः पुरुषं विशिनष्टि, ककुद इत्यादिना ।— कीदृशं पुरुषम् ? [ अकृशपरिणाहशालिनि ] अकृशेन महता परिणाहेन विशालतया शालते इति तथोक्ते । "परिणाहो विशालता" इत्यमरः । [ वृषस्य ] वृषभस्य [ ककुदे ] अंसकूटे, आश्रयीकृते इति शेषः । [ आर्द्रचन्दने, * उमाकुचयुग्म-मण्डले ] उमायाः कुचयुग्ममण्डले [ इव, कृतबाहुं ] न्यस्तहस्तम्, अत एव [स्पर्शसुखम् अनुभवन्तं] ; ककुदस्य तथाविध-स्पर्शसुखकरत्वात् इति भावः । उपमालङ्कारः ॥ २० ॥

स्थितमिति ।—[ उन्नते, तुहिनशैलशिरसि ] हिमवतः शिखरे [ स्थितं ] क्वचित् कोणे स्थितम् इत्यर्थः । तथापि [ भुवनातिवर्त्तिना ] सर्वलोकातिशायिना [ओजसा ] तेजसा । [साद्रिजलधिजलवाहपथम्] अद्रिभिः पर्वतैः जलधिभिः समुद्रैः

* चन्दनेन आर्द्रः आर्द्रचन्दनः, तस्मिन् । अत्र "राजदन्तादिषु परम्" (२।२।३१ पा० ) इति पूर्व्वस्य परप्रयोगः "षष्ठीसमासकर्म्मधारयद्वन्द्वसमासनिष्पन्नानाम् एतद्गणेऽभिनिवेशात्सर्वसमासविपर्य्ययमेतत् लक्षणम्" इति सरला ।

साद्रिजलधिजलवाहपथं
सदिगश्नुवानमिव विश्वमोजसा ॥२१॥
अनुजानुमध्यमवसक्त-
विततवपुषा महाहिना ।
लोकमखिलमिव भूमिभृता
रवितेजसामवधिनाधिवेष्टितम् ॥२२॥
परिणाहिना तुहिनराशि-
विशदमुपवीतसूत्रताम् ।

जलवाहपथेन आकाशेन च सह वर्त्तते इति तथोक्तम् । दिग्भिः सह वर्त्तते इति [ सदिक् ] । उभयत्र अपि "तेन सहेति तुल्ययोगे" ( २।२।२८ पा० ) इति बहुव्रीहिः । [ विश्वम् अश्नुवानं ] व्याप्नुवन्तम् [ इव ] स्थितम्, इति उत्प्रेक्षा । "अशूङ् व्याप्तौ" इति धातोः शानच् ॥ २१ ॥ *

अनुजान्विति ।—जानुनोः मध्ये [ अनुजानुमध्यम् ] विभक्त्यर्थे अव्ययीभावः । [ अवसक्तं ] लग्नं [विततवपुषा ] विततम् आयतं च वपुः यस्य तेन [ महाहिना ] अवसक्तिका-बन्धभूतेन इत्यर्थः । [ अधिवेष्टितम् ] अत एव [ रवितेजसाम् अवधिना ] पर्य्यन्तभूतेन [ भूमिभृता ] लोकालोकाचलेन अधिवेष्टितम् [ अखिलम् लोकम् इव ] स्थितम्, इति उपमा । असूर्य्यम्पश्यापरभागो लोकालोकाचलः, इति आगमः ॥२२॥

परिणाहिनेति ।—पुनः च [ तुहिनराशिविशदं ] तुहिन-

* अत्र गिरीन्द्रैकदेशस्थितस्य विश्वव्यापकत्वोक्तिनिबन्धनात् विरोधः । तेजसा समर्थनात् आभासत्वम् इति विरोधाभासः ; स च उत्प्रेक्षाया अङ्गम् इति सङ्करः ।

नीतमुरगमनुरञ्जयता
शितिना गलेन विलसन्मरीचिना॥२३॥
प्लुतमालतीसितकपाल-
कुमुदमवरुद्धमूर्द्धजम्।
शेषमिव सुरसरित्पयसां
शिरसा विसारि शशिधाम बिभ्रतम्॥२४॥

---

शशिवत् विशदं शुभ्रम् [ उपवीततां ] यज्ञोपवीतत्वं [नीतं] प्रापितम् [ उरगं ] शेषाहिम् [ अनुरञ्जयता ] स्वगुणोपरक्तं कुर्वता, श्यामीकुर्वता इत्यर्थः। [ परिणाहिना ] विशालेन [ विलसन्मरीचिना ] प्रसृतकिरणेन [ शितिना ] नीलेन [ गलेन ] कण्ठेन उपलक्षितम्। "कण्ठो गलोऽथ ग्रीवायाम्" इत्यमरः। अत्र उरगस्य स्वधवलिमत्यागेन अन्यजन्यनीलिमग्रहणात् तद्गुणालङ्कारः।—"तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहः" इति लक्षणात्॥ २३॥

प्लुतेति।—पुनः च [प्लुतमालतीसितकपालकुमुदं] मालती जातीकुसुमम्। "सुमना मालती जातिः" इति "पुष्पे जातीप्रभृतयः स्वलिङ्गाः व्रीहयः फले" इति च अमरः। तद्वत् सितं यत् कपालम् एव कुमुदं तत् प्लुतम् आप्लुतं येन तत् तथोक्तम्। [ अवरुद्धमूर्द्धजं ] व्याप्तशिरोरुहम्। अत एव [ सुरसरित्पयसां शेषम् इव ] निर्य्यातावशिष्टं गाङ्गम् अम्भः इव, स्थितम् इत्यर्थः। उत्प्रेक्षालङ्कारः। [ विसारि ] विस्त्वरं [ शशिधाम ] चन्द्रतेजः [शिरसा बिभ्रतं ]; पुरुषं ददृशुः इति पूर्वेण अन्वयः॥ २४॥

बहुभिश्च बाहुभिरहीन-
भुजगवलयैर्विराजितम् ।
चन्दनतरुभिरिवालघुभिः
प्रवलायतैर्मलयमेदिनीभृतम् ॥ २५ ॥

॥ कुलकम् ॥

मुनयस्ततोऽभिमुखमेत्य
नयनविनिमेषनोदिताः ।
पाण्डुतनयतपसा जनितं
जगतामशर्म भृशमाचचक्षिरे ॥ २६ ॥

---

बहुभिरिति ।—[ अहीनभुजगवलयैः ] अहीनाः महान्तः भुजगाः सर्पाः, त एव वलयानि कटकानि येषां तैः, [ बहुभिः च ] अनेकैः च [बाहुभिः ] भुजैः [ विराजितं ] शोभितम्, अत एव अहीनभुजगवलयैः बृहद्विषधरवेष्टनैः [ अलघुभिः ] अनेकैः [ प्रवलायतैः ] प्रवलैः बृहत्तनुभिः आयतैः दीर्घैः च । विशेषणमेतत् बाहुपक्षेऽपि योज्यम् । तत्र तु प्रवलैः वीर्य्यवद्भिः आयतैः दीर्घैः इत्यर्थः उन्नेयः । [ चन्दनतरुभिः] मलयजवृक्षैः विराजितं [ मलयमेदिनीभृतमिव ] मलयाचलमिव स्थितं पुरुषं ददृशुः इति पूर्वेणान्वयः । अत्र मलयपदस्य श्लिष्टत्वात् श्लेषसङ्कीर्णेयमुपमा ॥ २५ ॥ *

मुनय इति ।—[ ततः ] दर्शनानन्तरं [ मुनयः अभिमुखम् एत्य ] शिवस्य इति शेषः । [ नयनविनिमेषनोदिताः ] नयन-

---

* विंशश्लोकोपष्टम्भे "पञ्चभिः पुरुषं विशिनष्टि" इति मल्लिनाथोक्त्या पुरुषविशेषणत्वेन विन्यस्तोऽयं श्लोकः प्रक्षिप्तः इत्यस्माभिः अनुमायापि व्याख्यातः ।

तरसैव कोऽपि भुवनैक-
पुरुष ! पुरुषस्तपस्यति ।
ज्योतिरमलवपुषोऽपि रवेः
अभिभूय वृत्र इव भीमविग्रहः ॥२७॥
स धनुर्महेषुधि बिभर्त्ति
कवचमसिमुत्तमं जटाः ।
वल्कमजिनमिति चित्रमिदं
मुनिताविरोधि न च नास्य राजते॥२८॥

विनिमेषेण नेत्रसंज्ञया नोदिताः प्रेरिताः सन्तः [ पाण्डुतनय-तपसा ] पाण्डुतनयस्य अर्जुनस्य तपसा [ जनितं ] तत् पूर्वोक्तं [जगताम्. अशर्म] असुखं, दुःखम् इत्यर्थः । "शर्मशातसुखानि च" इत्यमरः । [भृशं] सम्यक् [आचचक्षिरे] कथितवन्तः ॥२६॥

तरसेति ।—हे [ भुवनैकपुरुष ! ] पुरुषोत्तम ! [ वृत्रः ] वृत्रासुरः [ इव, भीमविग्रहः कः अपि ] अविज्ञातः इत्यर्थः । [ पुरुषः तरसा ] बलात्कारेण [ एव ] । "तरसा बलरंहसो" इति विश्वः । [ अमलवपुषः ] उज्ज्वलमूर्त्तेः [ रवेः अपि ज्योतिः अभिभूय तपस्यति ] तपः चरति । "कर्मणो रोमन्थ-तपोभ्यां वर्त्तिचरोः" ( ३।१।१५ पा० ) इति क्यङ् ॥ २७ ॥

स इति ।—किञ्च [ सः ] पुरुषः महान्तौ इषुधी यस्य तत् [महेषुधि धनुः, कवचं] वर्म [उत्तमम् असिं ] खड्गं [जटाः वल्कं ] चीरम् [ अजिनं ] चर्म [ बिभर्त्ति, इति ] एवं-रूपम् [ इदं ] विरुद्धवेशधारणं [ मुनिताविरोधि ] मुनित्व-प्रतिबन्धकं तथापि [ अस्य न राजते ] इति [ न च ] किन्तु

चलनेऽवनिश्चलति तस्य
करणनियमे सदिङ्मुखम् ।
स्तम्भमनुभवति शान्तमरुद्-
ग्रहतारकागणयुतं नभस्तलम् ॥२९॥
स तदोजसा विजितसारम्
अमरदितिजोपसंहितम् ।
विश्वमिदमपिदधाति पुरा
किमिवास्ति ? यन्न सुकरं खलु तेन ॥३०॥

राजते एव इत्यर्थः। [ चित्रम् ] आश्चर्य्यम्। "सम्भाव्य-निषेधनिवर्त्तने द्वौ प्रतिषेधौ" इति वामनः ॥ २८ ॥ *

चलन इति।—किञ्च [ तस्य ] पुंसः [ चलने अवनिः ] पृथिवी [ चलति ] तथा [ करणनियमे ] समाधिना इन्द्रिय-निरोधे सति। "करणं साधकतमं चेत्रगात्रेन्द्रियेष्वपि" इत्य-मरः। [शान्तमरुद्ग्रहतारकागणयुतं] शान्तैः स्तिमितैः मरुतां वायूनां ग्रहाणां सूर्य्यादीनां तारकाणां नक्षत्रादीनां च गणैः युतं [नभस्तलं] व्योम [सदिङ्मुखं] दिक्सहितं [स्तम्भं] निश्चल-ताम् [ अनुभवति ] इत्यर्थः। अतः विश्वातिशायिनो तस्य शक्तिः उपलभ्यते इति भावः ॥ २८ ॥ †

"न च एतत् उपेक्ष्यम्" इति आशयेन आह, स इति।—[ सः ] पुमान् [ ओजसा विजितसारं ] निरस्तसत्त्वम्। [ अमरदितिजोपसंहितं ] सुरासुरसहितं [ तत् इदं विश्वं

---

* भीषणविग्रहाभिचारिरूपधारिणमपि नयनरञ्जनम् इति विरोधेऽपि महापुरुषे सर्वं सम्भाव्यते इत्याभासात् उदात्ताश्रयः विरोधाभासः।

† अत्र तेजःसम्पत्तेरसाधारणप्रसङ्गादुदात्तालङ्कारः। स च असम्बन्धे सम्बन्ध-रूपातिशयोक्त्या अङ्गवान्, इत्येतयोः साङ्कर्य्यम्।

विजिगीषते यदि जगन्ति
युगपदथ सञ्जिहीर्षति।
प्राप्तुमभवमभिवाञ्छति वा
वयमस्य नो विषहितुं क्षमा रुचः ॥३१॥

किमुपेक्षसे ? कथय नाथ !
न तव विदितं न किञ्चन।

---

पुरा अपिदधाति ] अपिधास्यति इत्यर्थः। शीघ्रम् एव हरिष्यति इति भावः। "निकटागामिके पुरा" इत्यमरः। "यावत् पुरानिपातयोर्लट्" (५।३।४ पा०) इति भविष्यदर्थे लट्। तथा हि [यत्] कर्म [खलु तेन] पुंसा [न सुकरं] अपरेषां दुष्करं तत् [किम् इव अस्ति ?] न किञ्चित् तेन दुष्करमस्ति इत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३० ॥

"न च एतत् अन्यफलकं तपः" इति आह, विजिगीषते इति।—स पुरुषः [जगन्ति] भुवनानि [युगपत् विजिगीषते यदि] विजेतुम् इच्छति वा। "पूर्ववत्सनः" (१।३।६२ पा०) इति आत्मनेपदम्। [अथ] युगपत् [सञ्जिहीर्षति।] संहर्तुम् इच्छति वा। [अभवम्] अपवर्गं [प्राप्तुम् अभिवाञ्छति वा]। न विद्मः इति शेषः। किन्तु [वयम्] अपि [अस्य रुचः] तेजांसि [विषहितुं] सोढुम्। "तीषसहलुभरुषरिषः" (७।२।४८ पा०) इति विकल्पात् इडागमः। [नो क्षमाः] न शक्ताः। केचित् "रुचः कामितानि विषहितुमवधारयितुम्" इति व्याचक्षते; तत्र सहेः अवधारणार्थत्वं विचार्यम् ॥ ३१ ॥

किमिति।—[हे नाथ! किं] किमर्थम् [उपेक्षसे ?

त्रातुमलमभयदार्हसि नः
त्वयि मा स्म शासति भवत् पराभवः ॥३२॥
इति गां विधाय विरतेषु
मुनिषु वचनं समाददे ।
भिन्नजलधिजलनादगुरु
ध्वनयन् दिशां विवरमन्धकान्तकः ॥३३॥
बदरीतपोवननिवास-
निरतमवगात माऽन्यथा ।

कथय ], त्वम् इति शेषः । [ तव न विदितं ] त्वया अज्ञायमानम् इत्यर्थः । "क्तस्य च वर्त्तमाने" ( २।३।६७ पा० ) इति षष्ठी । [ न किञ्चन ] किमपि न । हे [ अभयद । नः ] अस्मान् [ अलं त्रातुम् अर्हसि । त्वयि शासति ] सति [ पराभवः मा स्म भवत् ] मा भूत् । "स्मोत्तरे लङ् च" (३।३।१७६ पा०) इति लङ् ॥ ३२ ॥

इतीति ।—[ इति ] इत्थं [ गां ] वाचं [ विधाय ] अभिधाय इत्यर्थः । सामान्यस्य विशेषपर्य्यवसानात् । [ मुनिषु विरतेषु ] तूष्णीम्भूतेषु सत्सु [ अन्धकान्तकः ] शिवः [ भिन्नजलधिजलनादगुरु ] भिन्नस्य उद्वेलस्य जलधेः जलस्य नादम् इव गुरु गम्भीरं यथा तथा [ दिशां विवरम् ] अन्तरालं [ ध्वनयन् वचनं समाददे ] स्वीचकार, उवाच इत्यर्थः ॥ ३३ ॥

बदरीति ।—[ बदरीतपोवननिवासनिरतं ] बदरीतपोवने बदरिकाश्रमे निवासनिरतं नित्यनिवासिनं [ गां गतं ] भुवम् अवतीर्णं [ जगताम् उदयनिधने ] सृष्टिसंहारौ [ धातुः ] तयोः

धातुरुदयनिधने जगतां
नरमंशमादिपुरुषस्य गां गतम् ॥३४॥
द्विषतः परासिसिषुरेषः
सकलभुवनाभितापिनः ।
क्रान्तकुलिशकरवीर्य्यबलान्
मदुपासनं विहितवान् महत् तपः॥३५॥

---

कर्त्तुः इत्यर्थः। "तृन्" (३।२।१३७ पा०) इति दधातेः तृन्प्रत्ययः। अत एव "न लोक" (२।३।६९ पा०) इत्यादिना कर्मणि षष्ठीप्रतिषेधः। [आदिपुरुषस्य] विष्णोः [अंशम्] अंशभूतं [नरं] नरसंज्ञकम् इत्यर्थः। यः नारायणसख इति भावः। [अन्यथा] उक्तवैपरीत्येन एनं [मा अवगात] मनुष्यमात्रं मा जानीत इत्यर्थः। "इणो गा लुङि" (२।४।४५ पा०) इति गादेशः ॥ ३४ ॥ *

अथ तस्य तपसः निमित्तम् आह, द्विषत इति।—[एषः] नरः [सकलभुवनाभितापिनः] सकलभुवनानि अभितापयन्ति अभीक्ष्णम् इति तथोक्तान्। "बहुलमाभीक्ष्ण्ये" (३।२।८१ पा०) इति णिनिः। [क्रान्तकुलिशकरवीर्य्यबलान्] क्रान्ते आक्रान्ते कुलिशकरस्य इन्द्रस्य वीर्य्यबले शक्तिसैन्ये यैः तान् [द्विषतः] शत्रून् [परासिसिषुः] परासितुम् इच्छुः। अस्यतेः सन्नन्तात् उप्रत्ययः। † [मदुपासनं] मदाराधनम्। करणे ल्युट्। ‡ [महत् तपः विहितवान्]। अत्र निमित्तं शत्रुक्षय एव इति॥ ३५ ॥

---

* अत्र अङ्ग तस्य अतीतस्य नररूपस्य प्रत्यक्षायमाणत्वात् भाविकालङ्कारः।

† "सनाशंसभिक्ष उः" (३।२।१६८ पा०)।

‡ "करणाधिकरणयोश्च" (३।३।११७ पा०)।

अयमच्युतश्च वचनेन
सरसिरुहजन्मनः प्रजाः ।
पातुमसुरनिधनेन विभू
भुवमभ्युपेत्य मनुजेषु तिष्ठतः ॥३६॥

सुरकृत्यमेतदवगम्य
निपुणमिति मूकदानवः ।
हन्तुमभिपतति पाण्डुसुतं
त्वरया तदत्र सह गम्यतां मया ॥३७॥

अथ अस्य मानुषावतारे कारणम् आह, अयमिति ।— [ विभू ] प्रभू [ अयं ] नरः [ अच्युतः ] कृष्णः [ च, सरसिरुहजन्मनः ] ब्रह्मणः [ वचनेन ] प्रार्थनया [ असुरनिधनेन ] असुराणां निधनेन मारणेन करणेन [ प्रजाः, पातुं ] रक्षितुं [ भुवम् अभ्युपेत्य मनुजेषु तिष्ठतः ]। वस्तुतस्तु साक्षात् नरनारायणौ एतौ कृष्णार्जुनौ इत्यर्थः ॥ ३६ ॥ *

अथ अस्य सत्त्वसम्पदं प्रकाशयितुम् आह, सुरेति ।— [ मूकदानवः ] मूकाख्यः कश्चित् असुरः [ एतत् ] पाण्डवकृत्यं [ सुरकृत्यम् इति निपुणम् अवगम्य ] साधु निश्चित्य [ पाण्डुसुतम् ] अर्जुनं [ हन्तुम् अभिपतति । तत् ] तस्मात् कारणात् [ अत्र ] अर्जुनाश्रमे विषये आश्रमं प्रति इत्यर्थः । [ मया सह त्वरया गम्यतां ] द्रष्टुम् इति शेषः ॥ ३७ ॥

* अत्र भाविकालङ्कारः ।

विवरेऽपि नैनमनिगूढम्
अभिभवितुमेष पारयन् ।
पापनिरतिरविशङ्कितया
विजयं व्यवस्यति वराहमायया ॥३८॥
निहते विडम्बितकिरात-
नृपतिवपुषा रिपौ मया ।
मुक्तनिशितविशिखः प्रसभं
मृगयाविवादमयमाचरिष्यति ॥३९॥

विवर इति ।—[ पापनिरतिः ] पापे निरतिः अतिप्रीतिः यस्य सः [एषः] दानवः [विवरे] रन्ध्रे [ अपि ] एकान्ते अपि इत्यर्थः । [ एनं ] पाण्डवम् [ अनिगूढं ] प्रकाशं स्पष्टं यथा तथा [ अभिभवितुं, न पारयन् ] न शक्नुवन् । [ अविशङ्कितया ] स्वरूपगूहनात् निःशङ्कितया । "नञ्" ( २।२।६ पा० ) इति नञ्समासः । [वराहमायया] वराहभूमिकया [विजयं व्यवस्यति ] विजयं प्रति उद्युक्तः इत्यर्थः ॥ ३८ ॥

ततः किं भविष्यति ? इत्यत आह, निहत इति ।—[विडम्बितकिरातनृपतिवपुषा] विडम्बितम् अनुकृतं किरातनृपतिवपुः येन तेन, तद्रूपधारिणा इत्यर्थः । [ मया, निहते रिपौ ] वराहे विषये [ मुक्तनिशितविशिखः ] सन् [ अयं ] पाण्डवः [ प्रसभं ] प्रसह्य [ मृगयाविवादं ] मृगप्रहारकलहम्

तपसा निपीड़ितकृशस्य
विरहितसहायसम्पद: ।
सत्त्वविहितमतुलं भुजयो:
बलमस्य पश्यत मृधेऽधिकुप्यत: ॥४०॥
इति तानुदारमनुनीय
विषमहरिचन्दनालिना ।

[आचरिष्यति] करिष्यति । मत्प्रहतम् एव मृगं प्रहृत्य स्वयम् अहम् एव प्रहर्त्ता इति कलहयिष्यते इत्यर्थ: ॥ ३९ ॥

"तत: अपि किं भावि"? इत्याह, तपसेति ।— [तपसा] नितरां पीड़ित: अत एव कृश: तस्य [निपीड़ितकृशस्य]। "पूर्वकाल" (२।१।४९ पा०] इत्यादिना समास: । तथा [विरहितसहायसम्पद:] विरहिता सहायसम्पत् यस्य तस्य एकाकिन: [मृधे] रणे। "मृधमास्कन्दनं संख्यम्" इत्यमर: । [अधिकुप्यत:] अधिकं कुप्यत: [अस्य] पाण्डवस्य [सत्त्वविहितं] स्वभावकृतं, स्वाभाविकम् इत्यर्थ: । "सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे । आत्मभावे पिशाचादौ द्रव्ये सत्तास्वभावयो: । प्राणे बलेऽन्त:करणे" इति वैजयन्ती । [अतुलं] निरुपमं [भुजयो:] बाह्वो: [बलं] शक्तिं [पश्यत] । "बलं शक्तिर्बलं सैन्यम्" इति शाश्वत: ॥४०॥

अथ त्रिभि: अस्य किरातभावं वर्णयति, इतीत्यादि ।— शिव: [इति] इत्थं [तान्] मुनीन् [उदारं] युक्तियुक्तं यथा तथा [अनुनीय] शिक्षयित्वा, उक्त्वा इति यावत् । रुचिर: किरातपृतनापति: संववृते इति उत्तरेण अन्वय: । किरातसेनापतिवेषधारी बभूव इत्यर्थ: । कथम्भूत: ? [विषमहरि-

घर्मजनितपुलकेन लसद्-
गजमौक्तिकावलिगुणेन वक्षसा ॥४१॥
वदनेन पुष्पितलतान्त-
नियमितविलम्बिमौलिना।
बिभ्रदरुणनयनेन रुचं
शिखिपिच्छलाञ्छितकपोलभित्तिना ॥४२॥

---

चन्दनालिना] विषमा विकृतविन्यासा हरिचन्दनस्य आलयः रेखाः यस्मिन् तेन। [घर्मजनितपुलकेन] घर्मेण स्वेदेन जनिताः पुलकाः रोमाञ्चाः यस्मिन् तेन। "पुलकः पुनः। रोमाञ्चः कण्टको रोमविकारो रोमहर्षणम्" इति हेमचन्द्रः। "घर्मः स्यादातपे ग्रीष्मे उष्णस्वेदाम्भसोरपि" इति विश्वः। [लसद्गजमौक्तिकावलिगुणेन] लसन्तः शोभमानाः गजमौक्तिकानां करिकुम्भोद्भवमौक्तिकानाम् आवलयः एव गुणाः सूत्राणि यस्मिन् तेन [वक्षसा] वक्षःस्थलेन उपलक्षितः। करिणां मुक्तायोनित्वे प्रमाणम् आह अगस्त्यः—"जीमूतकरिमत्स्याहिवंशशङ्खवराहजाः। शुक्त्युद्भवाश्च विज्ञेया अष्टौ मौक्तिकयोनयः॥" इति॥ ४१॥

वदनेनेति।—[पुष्पितलतान्तनियमितविलम्बिमौलिना] पुष्पितैः लतान्तैः विकसितलताग्रैः नियमिताः संयताः विलम्बिनश्च ते मौलयः संयतकेशाः यस्य तेन। "चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः। [शिखिपिच्छलाञ्छितकपोलभित्तिना] शिखिपिच्छलाञ्छिते बर्हिबर्हाङ्किते कपोलभित्तौ यस्य तेन [अरुणनयनेन] आरक्तनेत्रेण [वदनेन, रुचं] शोभां [बिभ्रत्]॥ ४२॥

उरुदुद्वहन् जलदनादि
धनुरुपहितैकमार्गणम् ।
मेघनिचय इव संववृते
रुचिरः किरातपृतनापतिः शिवः ॥४३॥

॥ विशेषकम् ॥

अनुकूलमस्य च विचिन्त्य
गणपतिभिरात्तविग्रहैः ।
शूलपरशुशरचापभृतैः
महती वनेचरचमूर्विनिर्ममे ॥ ४४ ॥

उरुदिति।—पुनश्च। जलदः इव नदति इति [जलदनादि]। "कर्त्तर्युपमाने" (३।२।७९ पा०) इति णिनिः। [उपहितैकमार्गणं] संहितैकबाणं [उरु महत् धनुः उद्वहन्]। अत एव [मेघनिचयः इव] स्थितः इति उपमा। अत्र विशेषके स्वभावोक्तिः अलङ्कारः।—"स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्" इति लक्षणात् ॥ ४३ ॥

अनुकूलमिति।—[अस्य] शिवस्य [अनुकूलं च विचिन्त्य] प्रियम् इति निश्चित्य [आत्तविग्रहैः] गृहीतकिरातदेहैः, तथा [शूलपरशुशरचापभृतैः] शूलानि, परशवः कुठाराः, शराः चापानि च तानि भृतानि यैः तैः। "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" (वा०) इति निष्ठायाः परनिपातः। [गणपतिभिः] प्रमथमुख्यैः [महती वनेचरचमूः] सेना [विनिर्ममे] निर्मिता। माङ्—माने, कर्मणि लिट्। "ह्रस्वः" (७।४।५९ पा०) इति अभ्यासस्य ह्रस्वत्वम् ॥ ४४ ॥

विरचय्य काननविभागम्
अनुगिरमथेश्वराज्ञया ।
भीमनिनदपिहितोरुभुवः
परितोऽपदिश्य मृगयां प्रतस्थिरे॥४५॥
क्षुभिताभिनिःसृतविभिन्न-
शकुनिमृगयूथनिस्वनैः ।
पूर्णपृथुवनगुहाविवरः
सहसा भयादिव ररास भूधरः ॥ ४६ ॥

---

विरचय्येति ।—[ अथ ईश्वराज्ञया, अनुगिरं ] गिरौ । विभक्त्यर्थे अव्ययीभावः । "गिरेश्च सेनकस्य" (५।४।११२ पा०) इति समासान्तः । [काननविभागं] वनविभागं [विरचय्य] अस्य अयम् इति देशविभागं कृत्वा इत्यर्थः । [भीमनिनदपिहितोरुभुवः] भीमैः निनदैः कलकलैः पिहिताः उरवः भुवः यैः ते तथोक्ताः सन्तः [ मृगयाम्, अपदिश्य ] व्याजीकृत्य [परितः, प्रतस्थिरे ] प्रस्थिताः ॥ ४५ ॥

क्षुभितेति ।—[ क्षुभिताभिनिःसृतविभिन्नशकुनिमृगयूथनिस्वनैः ] क्षुभिताः त्रस्ताः अभिनिःसृता स्वस्थानात् निर्गताः विभिन्नाः मुक्तसङ्गाश्च ये शकुनयः पक्षिणः मृगाश्च तेषां यूथानि तानि तेषां निस्वनैः [ पूर्णपृथुवनगुहाविवरः ] पूर्णानि पृथूनि वनानि गुहाविवराणि च यस्य सः [ भूधरः सहसा भयात् इव] इति उत्प्रेक्षा । [ररास] चुक्रोश । रस—आक्रोशे, लिट् ॥४६॥*

---

* पार्वत्यजन्तूनामाक्रोशेन गुहाविवरध्वानैः पर्वताक्रोश उत्प्रेक्ष्यते ।

न विरोधिनी रुषमियाय
पथि मृगविहङ्गसंहतिः ।
घ्नन्ति सहजमपि भूरिभियः
सममागताः सपदि वैरमापदः ॥ ४७ ॥

चमरीगणैः शिवबलस्य
बलवति भयेऽप्युपस्थिते ।
वंशविततिषु विषक्तपृथु-
प्रियबालबालधिभिराददे धृतिः ॥४८॥

नेति ।—[ पथि ] पलायनमार्गे [ विरोधिनी ] जातिवैरिणी [ मृगविहङ्गसंहतिः ] मृगाणां सिंहव्याघ्रादीनां विहङ्गानां काकोलूकादीनां च संहतिः सङ्घः [ रुषं ] परस्परक्रोधं [न इयाय] न प्राप, किन्तु सहैव चचार इत्यर्थः । तथाहि ।—[भूरिभियः] भूरि प्रभूता भीः यासु ताः [ समं ] साधारण्येन [आगताः, आपदः ] विपत्तयः [ सहजम् ] स्वाभाविकम् [अपि वैरं सपदि घ्नन्ति ] । न हि सङ्घातव्यसनेषु प्रजायते वैरानुबन्धः इति भावः ॥ ४७ ॥ *

चमरीति ।—[ वंशविततिषु ] वेणुगुल्मेषु [ विषक्तपृथुप्रियबालबालधिभिः ] विषक्ता लग्नाः पृथवः भृशं प्रियबालाः प्रियरोमाणः बालधयः पुच्छानि येषां तैः । "पुच्छोऽस्त्री लोमलाङ्गूले बालहस्तश्च बालधिः" इत्यमरः । [ चमरीगणैः ] मृगविशेषैः [ शिवबलस्य] गणबलस्य सम्बन्धिनि, तद्धेतुके इत्यर्थः । सम्बन्धमात्रविवक्षायां षष्ठी । अन्यथा "भीत्रार्थानां भयहेतुः"

* अत्र सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः ।

हरसैनिकाः प्रतिभयेऽपि
गजमदसुगन्धिकेसरैः।
स्वस्थमभिददृशिरे सहसा
प्रतिबोधजृम्भितमुखैर्मृगाधिपैः॥ ४९॥
विभरांबभूवुरपवृत्त-
जठरशफरीकुलाकुलाः।

( १।४।२५ पा० ) इति पञ्चमी स्यात्। [ बलवति ] प्रबले [भये उपस्थिते] प्राप्ते [अपि, धृतिः] धैर्य्यम् [आददे ] स्वीकृता। मालच्छेदभयात् प्राणहानिम् अपि अवगणय्य स्थितम् इत्यर्थः॥ ४८॥

हरेति।—[ प्रतिभये ] भयहेतौ। "भयङ्करं प्रतिभयम्" इत्यमरः। प्राप्ते [अपि] इति शेषः। [ गजमदसुगन्धिकेसरैः ] गजमदैः सुगन्धयः सुरभयः केसराः सटाः येषां तैः, हतानेकगजैः इत्यर्थः। [ सहसा ] सेनाकलकलश्रवणानन्तरम् एव [ प्रतिबोधजृम्भितमुखैः ] प्रतिबोधेन निद्रापगमेन जृम्भितानि आत्तानि मुखानि येषां तैः [मृगाधिपैः] सिंहैः [स्वस्थं] निःशङ्कम् एव यथा तथा [ हरसैनिकाः, अभिददृशिरे ] ईक्षिताः। न तु किञ्चित् क्षुभितम् इत्यर्थः। युक्तं च एतत् राजनामधारिणां कर्मविगाम् इति भावः॥ ४९॥ *

विभरामिति।—[ अपवृत्तजठरशफरीकुलाकुलाः ] अपवृत्तजठरैः तत्कालक्षोभात् लुठितोदरैः शफरीकुलैः आकुलाः

* अत्र हेतुं विना स्वास्थ्यदर्शनरूपकार्योत्पादनात् विभावना। अस्वास्थ्यकारणसत्त्वेऽपि तदनुत्पादात् विशेषोक्तिः ; इत्येतयोः सन्देहसाङ्कर्य्यं, वीरस्वभावोक्तिश्च।

पङ्कविषमिततटाः सरितः
करिरुग्णचन्दनरसारुणं पयः ॥ ५० ॥
महिषक्षतागुरुतमाल-
नलदसुरभिः सदागतिः ।
व्यस्तशुकनिभशिलाकुसुमः
प्रणुदन् ववौ वनसदां परिश्रमम् ॥५१॥

---

व्याख्या: [ पङ्कविषमिततटाः ] पङ्कैः विषमितानि दुर्गमीकृतानि तटानि कूलानि यासां ताः [सरितः, करिरुग्णचन्दनरसारुणं] करिभिः, पलायमानैः इति शेषः। रुग्णानां मार्गरोधितया भग्नानाम्। "श्रोदितश्च" (८।२।४५ पा०) इति निष्ठानत्वम्। चन्दनानां रसैः अरुणं [पयः बिभराम्बभूवुः]। भृधातोः "भीह्रीभृहुवां श्लुवच्च" (३।१।३९ पा०) इति आम्प्रत्ययः, श्लुवद्भावश्च। "कृञ्चानुप्रयुज्यते लिटि" (३।१।४० पा०) इति भुवः अनुप्रयोगः ॥ ५० ॥ *

महिषेति।—[महिषक्षतागुरुतमालनलदसुरभिः] महिषैः लुलापैः क्षतानि बिदलितानि तैः अगुरुभिः तमालैः नलदैः उशीरैः च सुरभिः सुगन्धिः[व्यस्तशुकनिभशिलाकुसुमः] व्यस्तानि विक्षिप्तानि शुकनिभानि शुकसवर्णानि शिलाकुसुमानि शैलेयाख्याः ओषधिविशेषाः येन सः। अतः शीतलः इति भावः। "कालानुसार्य्यवृद्धाश्मपुष्पशीतशिवानि तु। शैलेयम्" इत्यमरः। शुकनिभेति स्वरूपकथनम्। [ सदागतिः ] वायुः [ वनसदां ] वनेचराणां [ परिश्रमं प्रणुदन् ] अतः मन्दः इति भावः। "मातरिश्वा सदागतिः" इत्यमरः। [ववौ] वाति स्म ॥५१॥

---

* अत्र तद्गुणालङ्कारः।

मथिताम्भसो रयविकीर्ण-
मृदितकदलीगवेधुकाः ।
क्लान्तजलरुहलताः सरसीः
विदधे निदाघ इव सत्त्वसंप्लवः ॥५२॥
इति चालयन्नचलसानु-
वनगहनजानुमापतिः ।

---

मथिताम्भस इति ।—[सत्त्वसंप्लवः] प्राणिसंक्षोभः [निदाघः] ग्रीष्मः [ इव, सरसीः ] सरांसि । "कासारः सरसी सरः" इत्यमरः । [ मथिताम्भसः ] संक्षोभितोदकाः, [ रयविकीर्णमृदितकदलीगवेधुकाः ] रयेण पलायनवेगेन विकीर्णं व्याकीर्णं यथा तथा मृदिताः निष्पीड़िताः कदल्यः गवेधुकाः तृणधान्यविशेषाश्च यासां ताः तथाक्ताः । "तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुकाः" इत्यमरः । मृदित इति "क्ङिति च" ( १।१।५ पा० ) इति गुणप्रतिषेधः । [ क्लान्तजलरुहलताः ] क्लान्ताः जलरुहलताः पद्मिन्यः यासु ताः एवम्भूताः [ विदधे ] चकार ॥ ५२ ॥ *

इतीति ।—[ इति ] इत्थम् [ उमापतिः, अचलसानुवनगहनजान् ] अचलसानुषु वनेषु उपभोग्यवृक्षेषु गहनेषु दावेषु च जाताः तथोक्तान्. सत्त्वान् इति शेषः । [ चालयन्, मुदितहरिणीदशनक्षतवीरुधं ] मुदितानां हरिणीनां दशनैः क्षताः वीरुधः लताः यस्यां ताम् इन्द्रसूनोः इमाम् [ ऐन्द्रसूनवीं ] ।

* अत्र उपमानोपमेयसाधारणधर्मसम्बन्धादुपमा ।

प्राप मुदितहरिणीदशन-
क्षतवीरुधं वसतिमैन्द्रसूनवीम् ॥ ५३ ॥

स तमाससाद घननीलम्
अभिमुखमुपस्थितं मुनेः ।
पोत्रनिकषणविभिन्नभुवं
दनुजं दधानमथ शौकरं वपुः ॥ ५४ ॥

कच्छान्ते सुरसरितो निधाय सेनाम्
अन्वीतः स कतिपयैः किरातवर्य्यैः ।

वसति अत्र इति [ वसतिम् ] आश्रमम् । "वहिवस्यर्त्तिभ्यश्च" ( उणा० ४।६० ) इति औणादिकः वसतेः अतिप्रत्ययः । [ प्राप ] ॥ ५३ ॥

स इति ।—[ अथ ] अनन्तरं [ सः ] शिवः [ घननीलं ] मेघमेचकं [ मुनेः ] अर्जुनस्य [ अभिमुखम् उपस्थितम् ] आगतम् । [ पोत्रनिकषणविभिन्नभुवं ] पोत्रस्य मुखाग्रस्य निकषणेन उल्लेखनेन विभिन्ना विदारिता भूः येन तम् । "मुखाग्रे क्रोड़हलयोः पोत्रम्" इत्यमरः । "हलशूकरयोः पुवः" ( ३।२।१८३ पा० ) इति ष्ट्रन्प्रत्ययः । शूकरस्य इदं [शौकरं] वाराहं [ वपुः दधानं तं दनुजं ] दानवम् [आससाद] प्राप, ददर्श इति यावत् ॥ ५४ ॥

कच्छान्त इति ।—[ लक्ष्मीवान् ] "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" ( ८।२।९ पा० ) इति मतुपः मकारस्य वकारादेशः । [सः] शिवः । [सुरसरितः] मन्दाकिन्याः [कच्छान्ते]

प्रच्छन्नस्तरुगहनैः सगुल्मजालैः
लक्ष्मीवाननुपदमस्य सम्प्रतस्थे ॥ ५५ ॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये
ईश्वराभिगमनो नाम द्वादशः
सर्गः ॥ १२ ॥

अनूपप्रान्ते । "जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः" इत्यमरः । [सेनां, निधाय] स्थापयित्वा इत्यर्थः । [कतिपयैः किरातवर्य्यैः अन्वीतः] अनुगतः सन् । "ई गतौ" इति धातोः अनुपूर्वात् कर्मणि क्तः । [सगुल्मजालैः] लताप्रतानसहितैः [तरुगहनैः प्रच्छन्नः] छादितः । "वा दान्तशान्त" (७।२।२७ पा० ) इत्यादिना निपातः । [अस्य] वराहस्य । पदम् अनु [अनुपदं], पदानुसारेण इत्यर्थः । [सम्प्रतस्थे] प्रस्थितः । "समवप्रविभ्यः स्थः" (१।३।२२ पा० ) इति आत्मनेपदम् । प्रहर्षिणी वृत्तम् ॥ ५५ ॥ *

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ-सूरि-विरचितायां किरातार्जुनीय-काव्य-व्याख्यायां घण्टापथसमाख्यायां द्वादशः सर्गः ।

अत्र मृगयुधर्म्मविधानस्य यथावद्विन्यासात् स्वभावोक्तिरलङ्कारः ।

---

# त्रयोदशः सर्गः ।



वपुषा परमेण भूधराणाम्
अथ सम्भाव्यपराक्रमं विभेदे ।
मृगमाशु विलोकयाञ्चकार
स्थिरदंष्ट्रोग्रमुखं महेन्द्रसूनुः ॥ १ ॥
स्फुटबद्धसटोन्नतिः स दूरात्
अभिधावन्नवधीरितान्यकृत्यः ।

वपुषेति ।—[ अथ ] ईश्वरप्रस्थानानन्तरं [ महेन्द्रसूनुः ] अर्जुनः [ परमेण ] महता [ वपुषा ] हेतुना [ भूधराणां ‡ विभेदे ] विदारणे [ सम्भाव्यपराक्रमं ] क्षमः अयम् इति प्रतर्क्यपौरुषम् । [ स्थिरदंष्ट्रोग्रमुखं ] स्थिराभ्यां दृढ़ाभ्यां दंष्ट्राभ्याम् उग्रं मुखं यस्य तं [ मृगं ] वराहमित्यर्थः । [ आशु ] तदागमनानन्तरम् अविलम्बेन इत्यर्थः । [ विलोकयाञ्चकार ] ददर्श । अस्मिन् सर्गे प्राक् पञ्चविंशत्श्लोकादौपच्छन्दसिकं वृत्तम् ॥ १ ॥

स्फुटेति ।—[ स्फुटबद्धसटोन्नतिः ] स्फुटं स्पष्टं बद्धा विरचिता सटानां केसराणाम् उन्नतिः उद्गतिः यस्य सः, क्रोधात् हर्षितलोमा इत्यर्थः । "सटा जटाकेसरयोः" इति विश्वः ।

‡ भूधरादौ कर्म्मणः शेषत्वविवक्षया प्रयोगसिद्धिः पचाद्यजन्तेन धरशब्देन, अन्यथा "कर्म्मण्यण्" ( ३।२।१ पा० ) इत्यनिष्टापत्तिः । "प्रायोऽणविषये च" इति अच् स्यादिति पद्मनाभः ।

जयमिच्छति तस्य जातशङ्के
मनसीमं मुहुराददे वितर्कम्॥ २ ॥
घनपोत्रविदीर्णशालमूलः
निविड़स्कन्धनिकाषरुग्णवप्रः ।
अयमेकचरोऽभिवर्त्तते मां
समरायेव समाजुहूषमाणः ॥ ३ ॥

---

[दूरात् अभिधावन् ] सम्मुखमापतन् ; तथा [ अवधीरितान्यकृत्यः ] त्यक्तान्यकर्मा [सः] वराहः [जयम् इच्छति] जयार्थिनि अत एव [ जातशङ्के ] स्वयं जिघांसोः द्विषाम् एकलक्ष्यत्वात् इति भावः। [ तस्य ] मुनेः [ मनसि मुहुः, इमं वितर्कं ] वक्ष्यमाणम् ऊहम्। "अध्याहारस्तर्क ऊहः" इत्यमरः। [ आददे ] उत्पादयामास ॥ २ ॥

अथ एकादशभिः वितर्कम् एव निरूपयति, घनपोत्रेति।— [ घनपोत्रविदीर्णशालमूलः ] घनेन कठिनेन पोत्रेण मुखाग्रेण विदीर्णानि विदलितानि शालमूलानि वृक्षबुध्ना येन सः। "मूलं बुध्नोऽङ्घ्रिनामकः" इत्यमरः। [निविड़स्कन्धनिकाषरुग्णवप्रः] निविड़स्य स्कन्धस्य निकाषेण निकषणेन रुग्णवप्रः भग्नसानुः, अतः महासत्त्वसम्पन्नः इति भावः। एकस्य असौ चरश्च इति [ एकचरः ] एकाकी, यूथात् अपेत इत्यर्थः। अतः [ अयं] वराहः [ समराय ] समरं कर्त्तुम्। "क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः" ( २।३।१४ पा० ) इति चतुर्थी। [ समाजुहूषमाणः इव ] समाह्वातुम् इच्छन् इव। इवशब्दः सम्भावनायाम्। समाह्वायतेः सन्नन्तात् शानच्प्रत्ययः। "स्पर्द्धाया-

इह वीतभयाः तपोऽनुभावात्
जहति व्यालमृगाः परेषु वृत्तिम् ।
मयि तां सुतरामयं विधत्ते
विकृतिः किं नु भवेदियं नु माया ? ॥४॥

अथवैष कृतज्ञयेव पूर्वं
भृशमासेवितया रुषा न मुक्तः ? ।

---

माङः" (१।३।२१ पा०) । "पूर्ववत् सनः" (१।३।६२ पा०) इति आत्मनेपदम् । "अभ्यस्तस्य च" (६।१।३३ पा०) इति सम्प्रसारणम् । [माम् अभिवर्त्तते] माम् अभिधावति । उपसर्गवशात् सकर्मकत्वम् । अतः सर्वथा न अयम् उपेक्ष्यः इति भावः ॥३॥

इहेति ।—[ इह ] आश्रमे [ तपोऽनुभावात् वीतभयाः ] लक्षणया विगतवैराः इत्यर्थः ; अत एव [व्यालमृगाः] क्रूरव्याघ्रादयः । "व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि" इति विश्वः । [ परेषु ] प्राण्यन्तरेषु [ वृत्तिं ] जीविकां [ जहति ], हिंसया न जीवन्ति इत्यर्थः । [ अयं ] वराहः [ मयि ] मद्विषये [तां] वृत्तिं [ सुतरां विधत्ते ] जिघांसति इत्यर्थः । तत् [ इयं विकृतिः ] तपःसामर्थ्यभङ्गरूपा [ भवेत् किं नु ? ] यद्वा [ माया ] कस्यचित् दैत्यस्य वराहभूमिका भवेत् [ नु ? ] किं नु शब्दौ वितर्के ॥ ४ ॥

अथवेति ।—[ अथवा ] इति पक्षान्तरे । [ एषः ] मृगः [ पूर्वं ] जन्मान्तरे [ भृशम् ] अत्यर्थम् [ आसेवितया ] अतिपरिचितया [रुषा] क्रुधा, मद्गोचरया इति शेषः । [कृतज्ञया इव ] पूर्वकृतं वैरानुबन्धं सम्प्रति जानाति इव इति उत्प्रेक्षा ।

अवधूय विरोधिनीः यदारात्
मृगजातीरभियाति मां जवेन ? ॥५॥
न मृगः खलु कोऽप्ययं जिघांसुः
स्खलति ह्यत्र तथा भृशं मनो मे ।
विमलं कलुषीभवच्च चेतः
कथयत्येव हितैषिणं रिपुं वा ॥ ६ ॥

[न मुक्तः] न त्यक्तः, अद्यापि इति शेषः । नूनम् अयं प्राग्भवीय-वैरानुबन्धी कश्चित्, सम्प्रति वैरबीजासम्भवात् इति भावः । कुतः ? [ यत् ] यतः [ आरात् ] समीपतः । "आराद्दूरसमीपयोः" इत्यमरः । [ विरोधिनीः मृगजातीः, अवधूय ] त्यक्त्वा [जवेन माम् अभियाति] अभिधावति ; अन्यथा न अभियायात् इति भावः ॥ ५ ॥

न केवलम् अभियानम् एव, किन्तु मनोवृत्तिः अपि अत्र प्रमाणम् इति आह, न मृग इति ।—[ अयं मृगः न खलु] किन्तु [ कः अपि ] कश्चित् अन्यः एव [ जिघांसुः ] हन्तुम् इच्छुः । हन्तेः सन्नन्तात् उप्रत्ययः । "अभ्यासाच्च" ( ७।३।५५ पा० ) इति कुत्वम् । "अज्झनगमां सनि" ( ६।४।१६ पा० ) इति दीर्घः । कुतः ? [ हि ] यस्मात् [ अत्र ] अस्मिन् मृग-विषये [ मे मनः तथा भृशं स्खलति ] क्षुभ्यति ; यथा अयं जिघांसुः इति बुद्धिः उत्पद्यते इत्यर्थः । तथा हि । [विमलं] प्रसन्नं तथा [ कलुषीभवत् ] क्षुभ्यत् [च चेतः एव हितैषिणं रिपुं वा ] मित्रम् अमित्रं च [ कथयति ] । यत्र

मुनिरस्मि निरागसः कुतो मे
भयमित्येष न भूतयेऽभिमानः।
परवृद्धिषु बद्धमत्सराणां
किमिव ह्यस्ति दुरात्मनामलङ्घ्यम् ?॥७॥
दनुजस्विदयं क्षपाचरो वा ?
वनजे नेति बलं बतास्ति सत्त्वे।

---

यत्र मनः प्रसीदति तत् एव मित्रम्; यत्र क्षुभ्यति सोऽमित्र इति निश्चितम् इत्यर्थः। अतः अयं बध्यः इति भावः ॥ ६ ॥ *

ननु मुनेः किम् अनया दुःशङ्कया ? तत्र आह, मुनिरिति।—[मुनिः अस्मि] अतः [निरागसः] निरपराधस्य [मे कुतः भयम् ? इति एषः, अभिमानः] अहङ्कारः। "गर्वोऽभिमानोऽहङ्कारः" इत्यमरः। अनपकारिणो मे कः अपि किं करिष्यति ? इति बुद्धिः [भूतये] श्रेयसे [न] भवति। तथा हि [परवृद्धिषु] विषये [बद्धमत्सराणां दुरात्मनाम् अलङ्घ्यं किम् इव अस्ति हि ?] न किञ्चित् अकार्य्यम् अस्ति इत्यर्थः। इवशब्दः वाक्यालङ्कारे ॥ ७ ॥

अस्तु जिघांसुः अपि तुच्छः किं करिष्यति ? इत्यत्र आह, दनुज इति।—[अयं दनुजः स्वित्] दानवः [वा क्षपाचरः] राक्षसः वा, न तु मृगः एव इत्यर्थः। कुतः ? [वनजे सत्त्वे] वन्यप्राणिनि [इति] ईदृशं [बलं न अस्ति, बत] इति आश्चर्य्ये। बलम् एव समर्थयते।—[तथा हि। मेघनीलः]

* अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

अभिभूय तथा हि मेघनील:
सकलं कम्पयतीव शैलराजम् ॥ ८ ॥
अयमेव मृगव्यसत्रकाम:
प्रहरिष्यन्मयि मायया शमस्थे ।
पृथुभिर्ध्वजिनीरवैरकार्षीत्
चकितोद्भ्रान्तमृगाणि काननानि ॥९॥

अयं वराह: [सकलं शैलराजम्, अभिभूय] आक्रम्य [कम्पयति इव] पदविष्टम्भभरात् तथा प्रतीयते इत्यर्थ:। अत्र कम्पयति इव इति उत्प्रेक्षागर्भ: अयं शैलकम्पनरूपकार्य्येण तत्कारणबलातिरेकसमर्थनात् कार्य्येण कारणसमर्थनरूप: अर्थान्तरन्यास: ॥ ८ ॥

किञ्च, य: अयं शैले मृगयाकलकल: इव श्रूयते स: अपि एतन्मायापरिकल्पित: एव इति आह, अयमिति।—[अयम् एव, शमस्थे] शान्तनिविष्टे इति रन्ध्रोक्ति:। [मयि] अधिकरणविवक्षायां सप्तमी। [मायया, प्रहरिष्यन्] प्रहर्त्तुम् इच्छन् इत्यर्थ:। "लृट् शेषे च" (३।३।१३ पा०) इति चकारात् क्रियार्थायां क्रियायां लृट्। "लृट: सद्वा" (३।३।१४ पा०) इति शत्रादेश:। मृगव्यं मृगया तस्य सत्रं वनं, तदर्थं वनम् इत्यर्थ:। तत्कामयते इति [मृगव्यसत्रकाम:] मृगयाभूमिपरिग्रहार्थी सन् इत्यर्थ:। "कर्मण्यण्" (३।२।१ पा०)। "आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्" इति। "सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च" इति च अमर:। [पृथुभि:] वृहद्भि: [ध्वजिनीरवै:] सेनाकलकलै:, स्वमायया कल्पितै: एव इत्यर्थ:। [काननानि,

बहुश: कृतसत्कृतेर्विधातुं
प्रियमिच्छन्नथवा सुयोधनस्य ।
क्षुभितं वनगोचराभियोगात्
गणमाशिश्रियदाकुलं तिरश्चाम् ?॥ १०॥

अवलीढसनाभिरश्वसेन:
प्रसभं खाण्डवजातवेदसा वा ।

चकितोद्भ्रान्तमृगाणि ] चकितोद्भ्रान्ता: त्रस्तपलायिता: मृगा: येषु तानि [चकार्षीत् ] चकार । य अयं रन्ध्रान्वेषी मत्प्रहारार्थं स्वयम् एव मृगयु: भूत्वा वनावरोधाय सैनाघोषं कल्पयामास, स: मृगरूपेण आगच्छति इत्यर्थ: ॥ ८ ॥

वितर्कान्तरम् आह, बहुश इति ।—[अथवा, बहुश: कृतसत्कृते: ] बहुश: कृता सत्कृति: सत्कार: येन तस्य [ सुयोधनस्य प्रियं ] मद्वधरूपं प्रतिप्रियं [विधातुं] कर्त्तुम् [इच्छन् ], य: कश्चित् इति शेष: । [वनगोचराभियोगात्] वनं गोचर: स्थानं येषां तेषां वनगोचराणाम् अभियोगात् अवरोधात् । "अभियोगोऽवरोध: स्यात्" इति हलायुध: । [क्षुभितम् ] उद्विग्नम् [ आकुलं ] व्यग्रं [ तिरश्चां ] मृगादिपशूनां [गणम्, आशिश्रियत् ] वराहरूपेण प्राविशत् । "णिश्रिद्रुस्रुभ्य: कर्त्तरि चङ्" ( ३।१।४८ पा० ) । "चङि" ( ६।१।११ पा० ) इति द्विर्भाव: ॥ १० ॥

वितर्कान्तरम् आह, अवलीढेति ।—[खाण्डवजातवेदसा ] खाण्डववनाग्निना [ प्रसभम् अवलीढसनाभि: ] दग्धबन्धु: । "सपिण्डास्तु सनाभय: । सगोत्रबान्धवज्ञातिबन्धुस्वस्वजना:

प्रतिकर्त्तुमुपागतः समन्युः
कृतमन्युः यदि वा वृकोदरेण ? ॥११॥
बलशालितया यथा तथा वा
धियमुच्छेदपरामयं दधानः ।
नियमेन मया निवर्हणीयः
परमं लाभमरातिभङ्गमाहुः ॥ १२ ॥

---

समाः" इत्यमरः । अत एव [ समन्युः] बद्धवैरः ; तस्य अर्जुनस्य अपकारयितृत्वात् इति भावः। [ अश्वसेनः ] तक्षकपुत्रः कश्चित् महासर्पः [ प्रतिकर्त्तुं ] वैरनिर्य्यातनार्थम् [ उपागतः ] वराहमायया इति शेषः। पक्षान्तरम् आह।—[यदि वा वृकोदरेण ] भीमसेनेन [ कृतमन्युः ] जनितक्रोधः [ वा ] कश्चित् इति शेषः। पुरा किल पाण्डवः खाण्डवदाहे पावकभयात् पलायमानान् तक्षकपुत्रान् अश्वसेनस्य बन्धून् बाणैः अवरुध्य दाहयामास इति भारतकथानुसन्धेया इति ॥ ११ ॥

अथ द्वाभ्यामनन्तरकरणीयम् अध्यवस्यति, बलेत्यादिना ।— किं बहुना ? [ यथा तथा वा ] अस्तु अयं मायिकः, पारमार्थिको वा अस्तु इत्यर्थः। सर्वथापि [बलशालितया ] बलदृप्ततया इत्यर्थः। [उच्छेदपरां धियं दधानः] मां जिघांसुरित्यर्थः। अतः [अयं] मृगः [ नियमेन ] अवश्यं [ मया, निवर्हणीयः ] बध्यः। "प्रमापणं निवर्हणम्" इत्यमरः। तथा हि [अरातिभङ्गं] शत्रुक्षयं [ परमं लाभम् आहुः ] ॥ १२ ॥ *

* अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

कुरु तात ! तपांस्यमार्गदायी
विजयायेत्यलमन्वशान्मुनिर्माम्
बलिनश्च वधादृतेऽस्य शक्यं
व्रतसंरक्षणमन्यथा न कर्त्तुम् ॥ १३ ॥

इति तेन विचिन्त्य चापनाम
प्रथमं पौरुषचिह्नमाललम्बे ।
उपलब्धगुणः परस्य भेदे
सचिवः शुद्ध इवाददे च बाणः ॥१४॥

ननु तपोविरोधिनी हिंसेत्याशङ्क्याह, कुर्विति।—हे [तात !] वत्स ! मार्गदायी न भवतीति [अमार्गदायी] रन्ध्रान्वेषिणां प्रवेशम् अयच्छन् इत्यर्थः। कुतः ? जयार्थित्वात् इत्याह।—[विजयाय तपांसि कुरु इति मुनिः] व्यासः [माम्, अलं] भृशम् [अन्वशात्] अनुशिष्टवान्। अनुशासेर्लङ्। ननु मुनिः वा कथम् अधर्मम् अन्वशात् ? तत्राह, बलिन इति।—[अस्य] मृगस्य [बलिनश्च] प्रबलस्य च [वधादृते] वधं विना। "अन्यारादितरर्त्ते" (२।३।२८ पा०) इत्यादिना पञ्चमी। [अन्यथा] उपायान्तरेण [व्रतसंरक्षणं] तपोरक्षणं [कर्त्तुं न शक्यम्]। हिंसापि दुष्टनिग्रहात्मिका न अधर्म इत्यर्थः ॥ १३ ॥

इतीति।—[तेन] अर्जुनेन [इति] इत्थं [विचिन्त्य] वितर्क्य [चापनाम] चापाख्यं [प्रथमं पौरुषचिह्नं], तस्य मुख्यायुधत्वात् इति भावः। [आललम्बे] गृहीतम्। कर्मणि लिट्। अथ [परस्य] शत्रोः [भेदे] विदारणे उपजापे च [उप-

अनुभाववता गुरु स्थिरत्वात्
अविसंवादि धनुर्धनञ्जयेन ।
स्वबलव्यसनेऽपि पीड्यमानं
गुणवन्मित्रमिवानतिं प्रपेदे ॥ १५ ॥
प्रविकर्षनिनाद्भिन्नरन्ध्रः
पदविष्टम्भनिपीड़ितस्तदानीम् ।

---

लब्धगुणः] ज्ञातशक्तिः, बाणस्तु प्राप्तमौर्वीकश्चेति शेषः । [शुद्धः ] ऋजुः दिग्धत्वादिदोषरहितो वा । "न कर्णभेदैर्नो दिग्धैर्नाग्निज्वलिततेजनैः" इति निषेधात् । अन्यत्र—शुद्धो निर्मलचित्त इति यावत् । [ बाणश्च सचिव इव आददे ] जगृहे । अत्र बाणसचिवयोः शब्दमात्रसाधर्म्यात् श्लेषालङ्कारः । प्रकृताप्रकृतविषय इति सर्वस्वकारः । उपमैवेति केचित् ॥ १४ ॥

अनुभावेति ।—[ गुरु ] महत् पूज्यं च [ स्थिरत्वात् ] सारवत्त्वात् [ अविसंवादि] अभङ्गुरम् । अन्यत्र—प्रतिष्ठितत्वात् असत्यरहितं [ गुणवत् ] सज्यम्, अन्यत्र—औदार्य्यादिगुणवत् [ धनुः मित्रमिव, अनुभाववता ] निश्चयबुद्धिमता । "अनुभावः प्रभावे च सतां च मतिनिश्चये" इत्यमरः । [ धनञ्जयेन स्वबलव्यसनेऽपि ] तपसा क्षीणत्वेऽपि । अन्यत्र—स्वं धनं तदेव बलं तस्य व्यसने नाशेऽपि [ पीड्यमानम् ] आकृष्यमाणम् अवरुद्ध्यमानञ्च सन्मित्रम् इव [ आनतिं ] नम्रताम् आनुकूल्यञ्च [ प्रपेदे ]। अलङ्कारस्तु पूर्ववत् ॥ १५ ॥

प्रविकर्षेति ।—[ तदानीं ] तस्मिन् काले [ महेषौ ] बाणे [गाण्डिवम् ] अर्जुनधनुः [अधिरोहति ] सति । "कपिध्वजस्य

अधिरोहति गाण्डिवं महेषौ
सकलः संशयमारुरोह शैलः ॥ १६ ॥
ददृशेऽथ सविस्मयं शिवेन
स्थिरपूर्णायतचापमण्डलस्थः ।
रचितस्त्रिसृणां पुरां विधातुं
वधमात्मेव भयानकः परेषाम् ॥ १७ ॥

---

गाण्डीवगाण्डिवौ पुंनपुंसकौ" इत्यमरः । "गाण्डाजगात् संज्ञायाम्" (५।२।११० पा०) इति वप्रत्ययः । [प्रविकर्षणनिनादभिन्नरन्ध्रः] प्रविकर्षेण ज्यास्फालनेन यो निनादः तेन भिन्नरन्ध्रो विदलितगह्वरः । तथा [पदविष्टम्भनिपीडितः] पदविष्टम्भेन पादाक्रमणेन निपीड़ितः नुन्नः [सकलः] सर्व्वः [शैलः, संशयं] जीवितसन्देहम् [आरुरोह] प्राप इत्यर्थः । अत्र शैलस्य संशयासम्बन्धेऽपि सम्बन्धकथनात् अतिशयोक्तिरलङ्कारः ॥ १६ ॥ *

ददृश इति ।—[अथ] बाणसन्धानानन्तरं [शिवेन, स्थिरपूर्णायतचापमण्डलस्थः] स्थिरं निश्चलं पूर्णञ्च यथा तथा आयते आकृष्टे चापमण्डले तिष्ठतीति तथोक्तः, चापमण्डलमन्तर्धाय स्थित इत्यर्थः । [तिसृणाम्] । "न तिसृचतसृ" (६।४।४ पा०) इति दीर्घप्रतिषेधः । [पुरां] त्रिपुरासुरस्य इत्यर्थः [वधं] संहारं [विधातुं] कर्त्तुं [रचितः] कल्पितः, स्थानविशेषे स्थापित इति यावत् । [आत्मा] स्वयम् [इव परेषां भयानकः] भयङ्करः । सः अर्जुनः [सविस्मयं, ददृशे] दृष्टः । उपमालङ्कारः ॥ १७ ॥

---

* सचात्र संशयारोहणप्रतिपादाक्रमणेन पीड़नस्य विकर्षणनिनादेन विदलनस्य च पदार्थस्य हेतुत्वात् पदार्थहेतुककाव्यलिङ्गेन सङ्कीर्णः ।

विचकर्ष च संहितेषुरुच्चैः
चरणास्कन्दननामिताचलेन्द्रः ।
धनुरायतभोगवासुकिज्या-
वदनग्रन्थिविमुक्तवह्नि शम्भुः ॥ १८ ॥

स भवस्य भवक्षयैकहेतोः
सितसप्तेश्च विधास्यतोः सहार्थम् ।
रिपुराप पराभवाय मध्यं
प्रकृतिप्रत्यययोरिवानुबन्धः ॥ १९ ॥

अथ पिनाकिवृत्तान्तमाह, विचकर्षेति ।—अथ [ शम्भुश्च संहितेषुः ] सन् [ उच्चैः ] भृशं [चरणास्कन्दननामिताचलेन्द्रः] चरणास्कन्दनेन पदविष्टम्भेन नामितः अधो नीतः अचलेन्द्रो येन स तथोक्तः । [ आयतभोगवासुकिज्यावदनग्रन्थिविमुक्त-वह्नि ] आयतभोगः आकृष्टकायः वासुकिः एव ज्या तस्य वदनमेव ग्रन्थिस्तेन विमुक्तः उत्सृष्टो वह्निः यस्य तत् [ धनुः विचकर्ष ] इति स्वभावोक्तिः ॥ १८ ॥

स इति । [सहार्थं] सह सम्भूय अर्थम् अरिवधरूपप्रयोजनं [ विधास्यतोः] करिष्यतोः, अन्यत्र—सहार्थम् अभिधेयम् अभि-धास्यतोः इत्यर्थः । "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः" इति वचनात् । [ भवक्षयैकहेतोः ] संसारोच्छेदनिदानस्य [ भवस्य ] शिवस्य [ सितसप्तेः ] अर्जुनस्य [ च, मध्यं स, रिपुः] वराहः । [प्रकृति-प्रत्यययोः ] यस्मात् प्रत्ययो विधीयते सा प्रकृतिः धात्वादिः, प्रत्ययः सनादिः, तयोः मध्यम् [ अनुबन्धः ] इत्संज्ञको वर्णः ।

अथ दीपितवारिवाहवर्त्मा
रवविलासितवारणादवार्य्यः ।
निपपात जवादिषुः पिनाकात्
महतोऽभ्रादिव वैद्युतः कृशानुः ॥२०॥
व्रजतोऽस्य बृहत्पतत्रजन्मा
कृततार्क्ष्योपनिपातवेगशङ्कः ।

यथाभूतं भूतिः इत्यादौ ककारः । स [ इव परान्भयाय ] लोपार्थमेव [ आप ] न तु स्थित्यर्थमित्यर्थः ॥ १९ ॥

अथेति ।—[ अथ ] रिपोः मध्यप्रवेशानन्तरं [ दीपितवारिवाहवर्त्मा] दीपितं वारिवाहवर्त्म आकाशं येन सः । [अवार्य्यः] दुर्वारः [ इषुः ] शरः [ रवविलासितवारणात् ] स्वघोषभीषितगजात् [ पिनाकात् ] शिवधनुषः । "पिनाकोऽजगवं धनुः" इत्यमरः । [ महतोऽभ्रात् ] मेघात्, विद्युतोऽयं [ वैद्युतः कृशानुः ] अग्निः [ इव, जवात् ] वेगात् [ निपपात ] आजगाम ॥ २० ॥

व्रजत इति ।—[व्रजतः] धावतः [अस्य] बाणस्य, [बृहत्पतत्रजन्मा] बृहद्भ्यः पतत्रेभ्यः पत्रेभ्यो जन्म यस्य स तथोक्तः । [ कृततार्क्ष्योपनिपातवेगशङ्कः ] कृता तार्क्ष्योपनिपातवेगशङ्का गरुडागमनवेगभ्रमो येन सः । अत एव [ महोरगाणां ] सर्पाणां हृदयानि श्रोत्राणि च भिनत्तीति [हृदयश्रोत्रभित् ] । "नसुद्राश्चाहः" ( ४।४।११८ पा० ) इति सूत्रे पूर्वनिपातव्यभिचारात् श्रोत्रशब्दस्य पूर्वनिपातव्यभिचारः । [ प्रतिनादमहान् ] प्रतिनादैः प्रतिध्वनिभिः महान् संमूर्च्छितः [ नादः उत्पपात ]

प्रतिनादमहान् महोरगाणां
हृदयश्रोत्रभिदुत्पपात नादः ॥ २१ ॥
नयनादिव शूलिनः प्रवृत्तैः
मनसोऽप्याशुतरं यतः पिशङ्गैः।
विदधे विलसत्तडिल्लताभैः
किरणैर्व्योमनि मार्गणस्य मार्गः ॥२२॥
अपयन् धनुषः शिवान्तिकस्थैः
विवरेसद्भिरभिख्यया जिहानः।

उत्थितः। अत्र नादस्य उरगहृदयभेदकत्वासम्बन्धेऽपि सम्बन्धाभिधानात् अतिशयोक्तिः। सा च तार्क्ष्यवेगभ्रमोत्थापितेति तयोरङ्गाङ्गिभावेन सङ्करः ॥ २१ ॥

नयनादिति।—[ शूलिनो नयनात् प्रवृत्तैः ] निर्गतैः [इव] स्थितैः इति उत्प्रेक्षा। नेत्राग्निशिखाकल्पैः इत्यर्थः। [पिशङ्गैः] पिङ्गलैः [ विलसत्तडिल्लताभैः ] विद्युद्दामतुल्यैः इत्युपमा। [ मनसः ] चित्तात् [ अपि, आशुतरं ] शीघ्रतरम्। आशुशब्दादनव्ययात् तरप्। अतः "किमेत्तिङव्यय" ( ५।४।११ पा० ) इत्यादिना आम्प्रत्ययो न। "क्लीवे शीघ्राद्यसत्त्वे स्यात् त्रिष्वेषां सत्त्वगामि यत्" इत्यमरः। [यतः] गच्छतः। इणः शतृप्रत्ययः। [ मार्गणस्य ] शरस्य। "कलम्बमार्गणशराः" इत्यमरः। [ किरणैः, व्योमनि ] आकाशे [ मार्गः ] उल्कारेखाकारः पन्थाः [ विदधे ] विरचित इति स्वभावोक्तिः अलङ्कारः ॥ २२ ॥

अपयन्निति।—[ पृषत्कः ] बाणः। "पृषत्कबाणविशिखाः"

युगपत् ददृशे विशन् वराहं
तदुपोढैश्च नभश्चरैः पृषत्कः॥ २३॥
स तमालनिभे रिपौ सुराणां
घननीहार इवाविषक्तवेगः।
भयविप्लुतमीक्षितो नभःस्थै-
र्जगतीं ग्राह इवापगां जगाहे॥२४॥

---

इत्यमरः। [धनुषः] पिनाकात् [अपयन्] निर्यन्, निर्गच्छन् इत्यर्थः। इणः शतृप्रत्ययः। [शिवान्तिकस्थैः नभश्चरैः, अभिख्यया] शोभया [जिहानः] शोभां गच्छन् इत्यर्थः। "ओहाङ् गतौ" इति धातोः शानच्। "अभिख्या नामशोभयोः" इत्यमरः। विवरे सीदन्तीति विवरेसदस्तैः [विवरेसद्भिः] अन्तरालवर्त्तिभिः नभश्चरैः। "सत्सूद्विष" (३।२।६१ पा०) इत्यादिना क्विप्। "तत्पुरुषे कृति बहुलम्" (६।३।१४ पा०) इत्यलुक्। अथ [वराहं विशन्] प्रविशन् [तदुपोढैः] तं वराहम् उपोढैः प्रत्यासन्नैः। वहेः कर्त्तरि क्तः। [च] नभश्चरैः [युगपत्, ददृशे] दृष्ट इति बाणवेगोक्तिः। अत्र क्रमेण निष्क्रमणादिक्रियाविशिष्टस्य बाणस्य शिवान्तिकादिभिन्नदेशस्थनभश्चरकर्त्तृकदर्शनयौगपद्यासम्बन्धेऽपि तत्सम्बन्धोक्तिमूलातिशयोक्त्या लोकोत्तरवेगप्रतीतिः अलङ्कारेण वस्तुध्वनिः॥ २३॥

स इति।—[सः] बाणः [तमालनिभे] तमालप्रभे, नीलाभे इति यावत्। [सुराणां रिपौ] वराहे [घननीहारे] सान्द्रतुहिने [इव, अविषक्तवेगः] अप्रतिबद्धवेगः सन्। तथा [नभःस्थैः] खेचरैः [भयविप्लुतं] भयेन विप्लुतं विह्वलं यथा

सपदि प्रियरूपपर्वरेख:
सितलोहाग्रनखः खमाससाद ।
कुपितान्तकतर्जनाङ्गुलिश्रीः
व्यथयन् प्राणभृतः कपिध्वजेषुः ॥२५॥

तथा [ ईरितः ] सन् । [ आपगां ] अपां सम्बन्धी वेग आपः, अपां समूहो वा आपम्, आपेन गच्छतीति आपगा नदी ताम् । गृह्णातीति [ ग्राहः ] जलग्रहः, जलचर इति यावत् । "जलचरे" इति वक्तव्यात् "विभाषया ग्रहः" ( ३।१।१४३ पा० ) इति णप्रत्ययः । सः [ इव । जगतीं ] भूमिम् । "जगती विष्टपे भूम्याम्" इति वैजयन्ती । [ जगाहे ] विवेश, अन्तर्हित इत्यर्थः ॥ २४ ॥ *

अथ अर्जुनबाणप्रयोगमाह, सपदीति ।—[ सपदि ] शिवबाणप्रयोगसमय एव, [प्रियरूपपर्वरेखः] प्रियाः रूपम् आकृतिः पर्वाणि ग्रन्थयो रेखा रचनाश्च यस्य सः । अङ्गुलिपक्षे—पर्वरेखाः प्रसिद्धाः । लोहाग्रमयः फलं तत् नखम् इव, इति उपमितसमासः । [ सितलोहाग्रनखः ] सितं लोहाग्रनखं यस्य सः । [ कुपितान्तकतर्जनाङ्गुलिश्रीः ] कुपितस्य अन्तकस्य मृत्योः या तर्जना तस्या अङ्गुलिः तर्जनाङ्गुलिः तर्जनी, तस्याः श्रीरिव श्रीः यस्य सः [ कपिध्वजेषुः ] अर्जुनबाणः [ प्राणभृतो व्यथयन् ] भीषयमाणः [ खम् ] आकाशम् [ आससाद ] प्राप । उपमालङ्कारः ॥ २५ ॥

* अत्र द्वयोः रूढग्रलक्ष्मीसमुल्लासप्रसङ्गादुपमा ।

परमास्त्रपरिग्रहोरु तेजः
स्फुरदुल्काकृति विक्षिपन् वनेषु ।
स जवेन पतन् परःशतानां
पततां व्रात इवारवं वितेने ॥ २६ ॥
अविभावितनिष्क्रमप्रयाणः
शमितायाम इवातिरंहसा सः ।

---

परमिति ।—[ परमास्त्रपरिग्रहोरु ] परमास्त्रपरिग्रहेण दिव्यास्त्राधिष्ठानेन उरु महत्, अत एव [ स्फुरदुल्काकृति ] उल्कावत् दीर्घायमाणम् इत्यर्थः । [ तेजः वनेषु, विक्षिपन् ] विकिरन् सन्, [ जवेन पतन् ] धावन् [सः] वाणः, [ परःशतानां ] शतात्परे परःशताः तेषां, शताधिकसंख्यकानाम् इत्यर्थः । "परःशताद्यास्ते येषां परा संख्या शताधिकात्" इत्यमरः । "पञ्चमी" * इति योगविभागात् समासः । "राजदन्तादिषु परम्" ( २।२।३१ पा० ) इति उपसर्जनस्य शतशब्दस्य परनिपातः । पारस्करादित्वात् सुडागमः । † [ पततां ] पतत्रिणाम् । "पतत्पत्ररथाण्डजाः" इत्यमरः । [व्रातः ] समूहः [ इव आरवं वितेने ] विस्तारयामास ॥ २६ ॥

अविभावितेति ।—[ अतिरंहसा ] अतिवेगेन [ अविभावितनिष्क्रमप्रयाणः ] अविभाविते अलक्षिते निष्क्रमो गाण्डीवात् निःसरणं प्रयाणम् अन्तरागमनं च यस्य सः । तथा [शमितायामः] सङ्क्षिप्तदैर्घ्यः [इव] स्थित इति उपात्तवेग-

* "पञ्चमी भयेन" ( २।१।३७ पा० ) इति सूत्रे योगो विभज्यते ।

† "पारस्करप्रभृतीनि च संज्ञायाम्" ( ६।१।१५७ पा० )

सह पूर्वतरं नु चित्तवृत्ते-
रपतित्वा नु चकार लक्ष्यभेदम् ॥२७॥
स वृषध्वजसायकावभिन्नं
जयहेतुः प्रतिकायमेषणीयम् ।
लघु साधयितुं शरः प्रसेहे
विधिनेवार्थमुदीरितं प्रयत्नः ॥ २८ ॥

गुणनिमित्ता दैर्घ्यगुणाभावोत्प्रेक्षा । [सः] शरः । [सह नु] सह वा, चित्तवृत्त्या इति शेषः । [ चित्तवृत्तेः पूर्वतरं नु ] प्राक् एव वा । उभयत्र अपि लक्ष्ये पतित्वा इति शेषः । अथवा [ अपतित्वा ] नु लक्ष्ये इति शेषः । [लक्ष्यभेदं चकार] । अत्र उपात्तवेगगुणनिमित्तात् बाणस्य चित्तवृत्त्या सहपातपूर्वपात-पतनाभावोत्प्रेक्षाः तिस्रः, उत्तरोत्तरोत्कर्षेण वेगातिशय-व्यञ्जिकाः इति अलङ्कारेण वस्तुध्वनिः ॥ २७ ॥ *

स इति ।—[ जयहेतुः स शरो वृषध्वजसायकावभिन्नं ] शिवशरविद्धम् [ एषणीयं ] वेद्धुम् इति शेषः । इषेरिच्छार्था-दनीयरप्रत्ययः । [ प्रतिकायं ] प्रतिशरीरं, प्रतिपक्षम् इति यावत् । [ विधिना ] विधिवाक्येन [ उदीरितं] फलसाधनतया प्रतिपादितम् [अर्थं] यागादिकं [प्रयत्नः ] पुरुषव्यापारः [ इव । लघु ] अक्लेशेन यथा तथा [ साधयितुम् ] स्वार्थणिजन्तात् तुमुन् । [ प्रसेहे ] शशाक । उपमालङ्कारः ॥ २८ ॥

* अत्र च एतासां परस्परम् अङ्गाङ्गित्वेन संसृष्टिः ।

अविवेकवृथाश्रमाविवार्थं
क्षयलोभाविव संश्रितानुरागम्।
विजिगीषुमिवानयप्रमादौ
अवसादं विशिखौ विनिन्यतुस्तम्॥२९॥

अथ दीर्घतरं तमः प्रवेक्ष्यन्
सहसा रुग्णरयः स सम्भ्रमेण।
निपतन्तमिवोष्णरश्मिमुर्व्यां
वलयीभूततरुं धराञ्च मेने॥ ३०॥

अविवेकेति।—[ अविवेकवृथाश्रमौ] अविवेकः अन्तरानभिज्ञत्वं, वृथाश्रमः निष्फलप्रयासः तौ [ अर्थं ] धनम् [ इव ]। अस्थानविनियोगहेतुकत्वात् अनयोः धनहानिकरत्वम् इति भावः। [ क्षयलोभौ ] क्षयः अनुपचयः, लोभः अदातृत्वं, तौ। [संश्रितानुरागं] संश्रितानाम् अनुजीविनाम् अनुरागम् [इव]। अकिञ्चित्करे स्वामिनि अनुरागस्य अनवस्थानात् इति भावः। [ अनयप्रमादौ ] अनयः दुर्नीतिः, प्रमादः अनवधानता, तौ। [ विजिगीषुम् इव ]। रन्ध्रभूयिष्ठस्य जयासिद्धेः इति भावः। [ विशिखौ ] शिवार्जुनबाणौ [तं] वराहम् [ अवसादं ] करणशैथिल्यं [ विनिन्यतुः ] नीतवन्तौ। नयतिः द्विकर्मकः। मालोपमेयम्॥ २९॥

अथेति।—[ अथ सः ] वराहः [ दीर्घतरं तमः ] दीर्घनिद्रां [ प्रवेक्ष्यन् ] मरिष्यन् इत्यर्थः। [ सहसा ] झटिति [ रुग्णरयः ] भग्नवेगः [ सम्भ्रमेण ] भ्रान्त्या। "सम्भ्रमो भ्रान्तिहावयोः" इति विश्वः। [ उष्णरश्मिम्, उर्व्यां] भूमौ

स गतः क्षितिमुष्णशोणितार्द्रः
खुरदंष्ट्राग्रनिपातदारिताश्मा ।
असुभिः क्षणमीक्षितेन्द्रसूनुः
विहितामर्षगुरुध्वनिर्निरासे ॥ ३१ ॥
स्फुटपौरुषमापपात पार्थः
तमथ प्राज्यशरः शरं जिघृक्षुः ।

[ निपतन्तम् इव मेने ; धराञ्च, वलयीभूततरु ] वलयीभूता मण्डलीभूताः तरवः यस्याः तां तथा मेने, तथा बभ्राम इत्यर्थः । स्वभावोक्तिरलङ्कारः ॥ ३० ॥ *

स इति ।—[ क्षितिं गतः ] क्षितौ पतितः [ उष्ण-शोणितार्द्रः ] उष्णेन प्रत्यग्रत्वात् शोणितेन आर्द्रः क्लृप्तः [खुरदंष्ट्राग्रनिपातदारिताश्मा] खुराणां दंष्ट्रयोश्च अग्राणां निपातेन आघातेन दारिताश्मा पाटितपाषाणः । किञ्च, [ क्षणम् ईक्षितेन्द्रसूनुः ] क्षणम् ईक्षितः इन्द्रसूनुः येन सः । स्वार्थ-विघातरोषात् इति भावः । अत एव [ विहितामर्षगुरुध्वनिः ] विहितः कृतः अमर्षगुरुः क्रोधोद्धतः ध्वनिः क्रन्दितं येन स तथोक्तः [ सः ] वराहः [ असुभिः ] प्राणैः [ निरासे ] निरस्तः, त्यक्तः इत्यर्थः । अस्यतेः कर्मणि लिट् । इयं च स्वभावोक्तिः ॥ ३१ ॥

स्फुटेति ।—[ अथ ] वराहपातानन्तरं [ पार्थः ] अर्जुनः [प्राज्यशरः] प्रभूतशरः सन् अपीत्यर्थः । "प्रभूतं प्रचुरं प्राज्यम्"

* अत उष्णरश्मिम् उर्व्यां निपतन्तमिव धरां वलयीभूततरुमिव च इति उत्प्रेक्षाद्वय-संसर्गः । तेन च शस्त्रपातकृतातिशय्यम् मुमूर्षावस्था परमागम्य ध्वन्यते इत्यलङ्कारेण वस्तुध्वनिः ।

न तथा कृतवेदिनां करिष्यन्
प्रियतामेति यथा कृतावदानः ॥३२॥
उपकार इवासति प्रयुक्तः
स्थितिमप्राप्य मृगे गतः प्रणाशम्।
कृतशक्तिरधोमुखो गुरुत्वात्
जनितव्रीड़ इवात्मपौरुषेण ॥ ३३ ॥

---

इत्यमरः। [स्फुटपौरुषं] व्यक्तविक्रमं वराहभेदिनं [तं शरं, जिघृक्षुः] ग्रहीतुमिच्छुः। ग्रहेः सबन्तात् उप्रत्ययः। [आपपात] आधावति स्म; कृतज्ञतया शरग्रहणं, न तु लोभात् इत्यर्थः। ननु अन्येऽपि उपकर्त्तार एव, किमिति तत्र एव आदरः तस्य इत्यत आह।—[कृतवेदिनां] कृतज्ञानां [कृतावदानः] कृतकर्मा। "अवदानं कर्म वृत्तम्" इत्यमरः। [यथा प्रियताम् एति तथा करिष्यन्] उपकरिष्यन् जन इति शेषः। [न] प्रियताम् एति। कृतकरिष्यमाणयोः कृतं बलीय इति न्यायादिति भावः ॥ ३२ ॥ *

अथ युग्मेनाह, उपकार इति।—[असति] नीचे [प्रयुक्तः उपकार इव मृगे स्थितिम् अप्राप्य प्रणाशम्] अदर्शनं [गतः] इति उपमा। तथा [कृतशक्तिः] कृतपौरुषः [गुरुत्वात्] लोहभारात् महत्त्वाच्च [अधोमुखः] नम्रमुखः। अत एव [आत्मपौरुषेण जनितव्रीड़ इव] स्थित इति उत्प्रेक्षा ॥ ३३ ॥ †

* अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

† अत्र संसृष्टयोरेतयोरन्यस्य श्लेषोऽङ्गं, गुरुत्वादित्यनेन भारमहत्त्वयोरभिधानात्।

स समुद्धरता विचिन्त्य तेन
स्वरुचं कीर्त्तिमिवोत्तमां दधानः ।
अनुयुक्त इव स्ववार्त्तमुच्चैः
परिरेभे नु भृशं विलोचनाभ्याम् ॥३४॥

॥ युग्मम् ॥

तत्र कार्मुकभृतं महाभुजः
पश्यति स्म सहसा वनेचरम् ।
सन्निकाशयितुमग्रतः स्थितं
शासनं कुसुमचापविद्विषः ॥ ३५ ॥

स इति ।—[ उत्तमां, स्वरुचं ] स्वकान्तिं [ कीर्त्तिम् इव दधानः ] इति उत्प्रेक्षा । किं च, [ विचिन्त्य ] सर्वथा प्राप्यो-ऽयम् इति विमृश्य [ समुद्धरता, तेन ] अर्जुनेन [उच्चैः, स्ववार्त्त] स्वपाटवम् । "वार्त्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्" इति यादवः । [ अनुयुक्तः ] पृष्टः [इव] स्थित इति उत्प्रेक्षा । आदरात् तथा प्रतीयते इत्यर्थः । "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः । [ सः ] बाणः [ विलोचनाभ्यां ] नयनाभ्यां [ भृशं परिरेभे नु ? ] आलिङ्गितः किम् ? इति उत्प्रेक्षा । तेन अत्यादरेण दृष्ट इत्यर्थः ॥ ३४ ॥

तत्रेति ।—[ तत्र ] प्रदेशे [ महाभुजः ] अर्जुनः । [कुसुम-चापविद्विषः ] स्मरारेः शिवस्य [ शासनं ] वक्ष्यमाणम् आदेशं [ सन्निकाशयितुं ] प्रकाशयितुं, निवेदयितुम् इति यावत् । [ अग्रतः स्थितं कार्मुकभृतं वनेचरं सहसा ] झटिति [पश्यति स्म ] । इतः प्रभृति रथोद्धता वृत्तम् ।—"रो नराविह रथोद्धता लगौ" इति लक्षणात् ॥ ३५ ॥

स प्रयुज्य तनये महीपतेः
आत्मजातिसदृशीं किलानतिम् ।
सान्त्वपूर्वमभिनीतिहेतुकं
वक्तुमित्थमुपचक्रमे वचः ॥ ३६ ॥
शान्तता विनययोगि मानसं
भूरिधाम विमलं तपः श्रुतम् ।
प्राह ते नु सदृशी दिवौकसाम्
अन्ववायमवदातमाकृतिः ॥ ३७ ॥

स इति ।—[सः] वनेचरः [ महीपतेः तनये ] राजपुत्रेऽर्जुने [ आत्मजातिसदृशीं ] किरातजात्यनुरूपां [ किल ]। किलेति जातेः अलीकतां दर्शयति ; यतः परमार्थतः प्रथम एव सः । [ आनतिं ] प्रणतिं [ प्रयुज्य, सान्त्वपूर्वं ] सामपूर्वकम् । "साम सान्त्वमुभे समे" इत्यमरः । [अभिनीतिहेतुकं] प्रिययुक्तिहेतुकं [ वचः । इत्थं ] वक्ष्यमाणप्रकारेण [ वक्तुम्, उपचक्रमे ] उद्युक्तवान् ॥ ३६ ॥

तत्र तावत् चतुर्भिः सान्त्वमाह, शान्ततेति ।—[ शान्तता ] वहिरनौद्धत्यं [ते] तव [ विनययोगि ] अनौद्धत्ययुक्तं [मानसं] कर्म [प्राह नु ] ब्रूते खलु । तथा [ भूरिधाम ] भूरि बहु धाम तेजो यस्मिन् तत् [तपः] कर्त्तृ [ विमलं ] सम्प्रदायशुद्धं [ श्रुतं ] प्राह । किं च, द्यौर्दिवं वा ओको येषां तेषां [ दिवौकसां ] देवानाम् । पृषोदरादित्वात् साधुः । "दिवं स्वर्गेऽन्तरिक्षे च" इति विश्वः । [ सदृशी ] तुल्या [ आकृतिः ] मूर्त्तिः

दीपितस्त्वमनुभावसम्पदा
गौरवेण लघयन् महीभृतः।
राजसे मुनिरपीह कारयन्
आधिपत्यमिव शातमन्यवम् ॥ ३८ ॥

[ अवदातं ] शुद्धम् [ अन्ववायं ] वंशं प्राह। "वंशोऽन्ववायः सन्तानः" इत्यमरः। शान्ततादिभिः लिङ्गैः विनयादयो अनुमीयन्ते। अन्यथा तदसम्भवात् इति भावः ॥ ३७ ॥ *

दीपित इति।—[ मुनिरपि ] ऐश्वर्य्यरहितोऽपि इत्यर्थः। [ अनुभावसम्पदा ] प्रभावातिशयेन [ दीपितः ] प्रकाशितः। "अनुभावः प्रभावे च" इत्यमरः। [ गौरवेण ] महत्तया [ महीभृतः ] राज्ञः [ लघयन् ] लघूकुर्वन् [ त्वमिह ] अद्रौ। शतमन्योः इदं [ शातमन्यवम् ] ऐन्द्रम्। "तस्येदम्" ( ४।३।१२० पा० ) इति अण्प्रत्ययः। "शतमन्युर्दिवस्पतिः" इत्यमरः। अधिपतेः कर्म्म [आधिपत्य'] त्रैलोक्यरक्षाधिकारम्। ब्राह्मणादित्वात् ष्यञ्प्रत्ययः। † [ कारयन् इव ], इन्द्रेण इति शेषः। [ राजसे ] तस्य अपि उपजीव्य इति प्रतीयसे, स्वमहिम्ना इत्यर्थः ॥ ३८ ॥

* अत्र शान्ततादिभिः विनययोगित्वाद्यनुमानात् अनुमानालङ्कृतिः। एवं वक्ष्यमाणस्य "हर्तुमर्हसि वराहमेदिनं नैनमस्मदधिपस्य सायकं" इत्यन्तस्य पद्यस्तोमस्य अनुचितत्वातिशय्यद्योतनायेयं प्रशंसा न गुणगणाख्यापनाय इति व्याजस्तुतिनामालङ्कारः अङ्गी, एवं यथासम्भवं योजनीयम्।

† "गुणवचनब्राह्मणादिभ्यः कर्मणि च" ( ५।१।१२४ पा० )।

तापसोऽपि विभुतामुपेयिवान्
आस्पदं त्वमसि सर्वसम्पदाम् ।
दृश्यते हि भवतो विना जनै:
रन्वितस्य सचिवैरिव द्युतिः ॥ ३८ ॥

विस्मयः क इव वा जयश्रिया
नैव मुक्तिरपि ते दवीयसी ।
ईप्सितस्य न भवेदुपाश्रयः
कस्य निर्जितरजस्तमोगुणः ॥ ४० ॥

तापस इति ।—विभोर्भावः विभुता तां [ विभुतां ] प्रभावम् [ उपेयिवान् ] उपगतः, अत एव [ तापसोऽपि त्वं सर्वसम्पदाम् आस्पदं ] स्थानम् [ असि ]। "आस्पदं प्रतिष्ठायाम्" (६।१।१४६ पा०) इति निपातः। विभुताम् एव समर्थयते।—[ हि ] यस्मात् [ भवतः ] तव [ जनैः विना ] एकाकिनोऽपि इत्यर्थः। [ सचिवैः अन्वितस्य इव ] अमात्यादियुक्तस्य इव [ द्युतिः ] तेजः [दृश्यते]। अतः सर्वसम्पदाम् आस्पदत्वं युक्तम् इत्यर्थः ॥ ३८ ॥ *

विस्मय इति ।—किं च [ जयश्रिया ] हेतुना, प्राप्तया अपि इति शेषः। [ क इव वा विस्मयः ? ] किमाश्चर्य्यम् ? न कश्चित् इत्यर्थः। "विस्मयोऽद्भुतमाश्चर्य्यं चित्रम्" इत्यमरः। अतः [ मुक्तिरपि, ते] तव [ दवीयसी ] दूरतरा दुर्लभा [न] भवति [एव]। "स्थूलदूर" ( ६।४।१५६ पा० ) इत्यादिना यणादिपर-

---

* अत्र एकाकिनः अपि अनेकसहायस्येव इति उत्प्रेक्षालङ्कारः, कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासश्च, इत्येतयोरङ्गाङ्गित्वम् ।

ह्रेपयन्नहिमतेजसं त्विषा
स त्वमित्थमुपपन्नपौरुषः ।
हर्त्तुमर्हसि वराहभेदिनं
नैनमस्मदधिपस्य सायकम् ॥ ४१ ॥
स्मर्य्यते तनुभृतां सनातनं
न्याय्यमाचरितमुत्तमैर्नृभिः ।

लोपः, पूर्वगुणश्च । तथाहि [ निर्जितरजस्तमोगुणः ] निर्जितौ रजस्तमसौ एव गुणौ येन सः भवत्सदृशः पुरुषः [ कस्य ईप्सितस्य ] वाञ्छितस्य [ उपाश्रयः ] आस्पदं [ न भवेत् ? ] इत्यर्थः ॥ ४० ॥ *

अथ आगमनप्रयोजनम् उपालम्भमुखेनाह, ह्रेपयन्निति ।— [ त्विषा ] तेजसा [ अहिमतेजसम् ] उष्णतेजसं [ ह्रेपयन् ] लज्जयन् [ उपपन्नपौरुषः ] सम्भावितपराक्रमः [ सः ] प्रसिद्धः [त्वं, वराहभेदिनं] कृतोपकारम् इत्यर्थः । [ एनं ] त्वत्करगतं [ अस्मदधिपस्य सायकं ] शरम् [ इत्थं ] साहसेन [ हर्त्तुं न अर्हसि ] ॥ ४१ ॥ †

अनर्हत्वम् एवाह ‡ स्मर्य्यत इति ।—[ उत्तमैर्नृभिः ] सत्पुरुषैः मन्वादिभिः [ तनुभृतां ] शरीरिणां [ सनातनं ] नित्यं [ न्याय्यं ] न्यायात् अनपेतम् § [ आचरितम् ] आचारः

* अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

† अत्र अहिमतेजसं त्विषा ह्रेपयन् इत्यत्र उपमालङ्कारः ।

‡ उक्तमनर्हत्वं द्रढयन्नाह प्रकारान्तरेण ।

§ "धर्मपथ्यर्थन्यायादनपेते" ( ४।४।९२ पा० ) इति यत् ।

ध्वंसते यदि भवादृशस्ततः
कः प्रयातु वद तेन वर्त्मना ? ॥४२॥
आकुमारमुपदेष्टुमिच्छवः
सन्निवृत्तिमपथात् महापदः।
योगशक्तिजितजन्ममृत्यवः
शीलयन्ति यतयः सुशीलताम् ॥४३॥

[ स्मर्य्यते ], कर्त्तव्यतया इति शेषः, न तु अनाचार इत्यर्थः। अथ अपि अनाचरणे, दोषमाह, ध्वंसत इति।—भवानिव दृश्यते इति [ भवादृशः ततः ] सदाचारात् [ ध्वंसते ] भ्रश्यते [ यदि ] तदा [तेन वर्त्मना] न्यायमार्गेण [कः प्रयातु] गच्छतु ? [वद] कथय ; न कोऽपि इत्यर्थः। तथा च सन्मार्ग एव खिलः स्यात् इति भावः॥ ४२ ॥

आकुमारमिति।—किं च [ योगशक्तिजितजन्ममृत्यवः ] योगशक्त्या आत्मज्ञानमहिम्ना जितौ जन्ममृत्यू यैः ते [ यतयः ] योगिनः। आ कुमारेभ्यः [ आकुमारं ] कुमारात् आरभ्य इत्यर्थः। "आङ् मर्य्यादाभिविध्योः" ( २।१।१३ पा० ) इति अव्ययीभावः। महत्यः आपदः यस्मिन् तस्मात् [ महापदः ] महानर्थहेतोः इत्यर्थः। [ अपथात् ] अमार्गात्। "पथो विभाषा" ( ५।४।७२ पा० ) इति निषेधविकल्पात् समासान्तः। "अपथं नपुंसकम्" (२।४।३० पा०)। [सन्निवृत्तिम्] अपगमम् [ उपदेष्टुम् इच्छवः ] सन्तः [ सुशीलतां ] सद्वृत्तताम्। "शीलं स्वभावे सद्वृत्ते" इत्यमरः। [ शीलयन्ति ] अभ्यस्यन्ति। अतो न त्याज्यं शीलमित्यर्थः॥ ४३ ॥

तिष्ठतां तपसि पुण्यमासजन्
सम्पदोऽनुगुणयन् सुखैषिणाम् ।
योगिनां परिणमन् विमुक्तये
केन नास्तु विनयः सतां प्रियः ? ॥४४॥
नूनमत्रभवतः शराकृतिं
सर्वथाऽयमनुयाति सायकः ।

न केवलं सौशील्यात् अनर्थनिवृत्तिः, किन्तु अर्थप्राप्तिरपि इत्याह, तिष्ठतामिति ।—[ तपसि तिष्ठतां ] तपोनिष्ठानां, धर्मार्थिनाम् इत्यर्थः । [ पुण्यं ] धर्मम् [ आसजन् ] सम्पादयन् । "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः । [सुखैषिणां] सुखार्थिनां [ सम्पदः ] सुखसाधनभूतान् अर्थान्, [ अनुगुणयन् ] अनुकूलयन्; अर्थकामयोः अपि हेतुभूत इत्यर्थः । तथा [ योगिनां विमुक्तये ] अपवर्गाय [ परिणमन् ] सम्पद्यमानः [ विनयः ] सौशील्यं [ केन ] हेतुना [ सतां प्रियो न अस्तु ? ] सम्भावनायां लोट् । सर्वथा विनय एव चतुर्वर्गसाधनम् इत्यर्थः । अतः त्वया न अस्मत्स्वामिशरचौर्य्यं कार्य्यम् इति तात्पर्य्यम् ॥ ४४ ॥

अथवा किं भवादृशेषु अन्यसम्भावनया यतो भ्रान्तिरपि सम्भाव्यते इति मृदूक्तिमवलम्ब्याह, नूनमिति ।—[अयम्] अस्मदीयः [ सायकोऽत्रभवतः ] पूज्यस्य इत्यर्थः । "पूज्यस्तत्रभवानत्रभवान्" इति सज्जनः । "इतराभ्योऽपि दृश्यन्ते" ( ५।३।१४ पा० ) इति सार्वविभक्तिकः त्रल्प्रत्ययः, सुप्सुपेति समासः । [ शराकृतिं सर्वथा ] रूपेण रेखादिना च सर्वप्रका-

सोऽयमित्यनुपपन्नसंशयः
कारितस्त्वमपथे पदं यया ॥ ४५ ॥
अन्यदीयविशिखे न केवलं
निःस्पृहस्य भवितव्यमाहृते ।
निघ्नतः परनिबर्हितं मृगं
व्रीडितव्यमपि ते सचेतसः ॥ ४६ ॥

रेण [ अनुयाति ] अनुसरति, अत्यन्तम् अनुकरोति इत्यर्थः । [ नूनम् ] इति वितर्के । [ यया ] आकृत्या कर्त्र्या [ त्वम् अनुपपन्नसंशयः] अत्यन्तसादृश्यात् अनुत्पन्नस्वान्यदीयत्वसन्देहः सन् । [ सोऽयमिति ] यः स्वकीयः स एव अयम् इति भ्रान्त्या-त्यत्त्या एव इति शेषः । [ अपथे ] अमार्गे शरापहरणरूपे [ पदं कारितः ] निधापितः इत्यर्थः । "हृक्रोरन्यतरस्याम्" ( १।४।५३ पा० ) इत्यणिकर्त्तुः कर्मता । "ण्यन्ते कर्त्तुश्च कर्मणः" * इति तत्रैव अभिहिते कर्मणि क्तः ॥ ४५ ॥

पुनरपि श्लेषमेव द्रढयन् दोषान्तरम् आपादयति, अन्य-दीयेति ।—सह चेतसा वर्त्तत इति सचेताः तस्य [ सचेतसः ] मनस्विनः ते [ अन्यदीयविशिखे ] विषये [आहृते] यदाहृतम् आहरणम् । भावे क्तः । तस्मिन् । अन्यदीयविशिखस्य आहरणे इत्यर्थः । [ निःस्पृहस्य केवलं ] निःस्पृहेणैव [ न भवितव्यं ] किन्तु [परनिबर्हितं] परेण आहतं [ मृगं, निघ्नतः ] प्रहरतः [ ते ] निघ्नता त्वया इत्यर्थः । "कृत्यानां कर्त्तरि वा"

* "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्मणः ॥" इति भाष्यकृत् ।

सन्ततं निशमयन्त उत्सुकाः
यैः प्रयान्ति मुदमस्य सूरयः।
कीर्त्तितानि हसितेऽपि तानि यं
व्रीड़यन्ति चरितानि मानिनम् ॥४७॥
अन्यदोषमिव स स्वकं गुणं
ख्यापयेत् कथमधृष्टताजड़ः ?।

---

(२।३।७१ पा०) इति षष्ठी। [व्रीड़ितव्यं] लज्जितव्यम् [अपि]। भावे तव्यप्रत्ययः। सम्प्रति तु त्वया परविद्धं मृगं विद्धापि न व्रीड्यते, प्रत्युत स्वेयमेव क्रियत इत्यहो महत् साहसम् इत्यर्थः। मृगम् इत्यत्र शेषत्वाविवक्षणात् "जासिनिप्रहणनाटक्राथपिषां हिंसायाम्" (२।३।५६ पा०) इति षष्ठी न भवति, शेषाधिकारात्। निप्रहणेत्यत्र निप्रयोः सङ्घातव्यस्तविपर्य्यस्तानां ग्रहणात् ॥ ४६ ॥

अथ अस्मिन् कृतघ्नताभियोगाय स्वीयोपकारकत्वं वर्णयितुं विकत्थनदोषं तावत् युग्मेन परिहरन् आह, सन्ततमित्यादि।—[सूरयः] विद्वांसः [अस्य] अस्मत्स्वामिनः सम्बन्धिभिः [यैः] चरितैः करणभूतैः [सन्ततं] सततम् [उत्सुकाः] सोत्कण्ठाः सन्तः [निशमयन्तः] चरितानि शृण्वन्तः [मुदं प्रयान्ति]। अत्र चरितानां मुत्प्राप्तौ शाब्दं करणत्वम्; अर्थात् निशमनकर्मत्वम् इति विवेकः। [तानि चरितानि हसितेऽपि] परिहासेऽपि [कीर्त्तितानि] परैः उच्चारितानि सन्ति [यं मानिनं व्रीड़यन्ति]। मानित्वात् व्रीड़ा, न तु चरितदोषात्; तेषाम् अलङ्काररूपत्वात् इति भावः ॥ ४७ ॥

अन्येति।—[अधृष्टताजड़ः] अधृष्टतया विकत्थनेन

उच्यते स खलु कार्य्यवत्तया
धिग् विभिन्नबुधसेतुमर्थिताम् ॥ ४८ ॥

॥ युग्मकम् ॥

दुर्वचं तदथ मा स्म भून्मृगः
त्वय्यसौ यदकरिष्यदोजसा ।

शालीनतया जडः स्तब्धः, अविकत्थन इत्यर्थः । [ सः ] अस्मत्-स्वामी [ अन्यदोषं ] परावरगुणम् [ इव स्वकं ] स्वकीयं [ गुणं कथं ख्यापयेत् ? ] प्रकटयेत् ? "आत्मप्रशंसां परगर्हामिव वर्ज-येत्" इति स्मरणात् । तथापि [ कार्य्यवत्तया ] कर्मार्थितया इत्यर्थः । [ सः ] स्वगुणः [ उच्यते खलु ] । कार्य्यार्थिनः कुतो गर्वः ? इति भावः । निर्विस इव आह, धिगिति ।— [ विभिन्नबुधसेतुम् ] अतिक्रान्तसुजनमर्य्यादाम् [ अर्थितां याचनां [ धिक् ] निन्दामि इत्यर्थः । यत् अयमपि इत्थं विकत्थयितुं प्रवृत्त इति भावः । "धिक् निर्भर्त्सननिन्दयोः" इत्यमरः । "उभ-सर्वतसोः कार्य्याधिक्युपर्य्यादिषु त्रिषु । द्वितीयाम्रेड़ितान्तेषु ततोऽन्यत्रापि दृश्यते ॥" * इति द्वितीया ॥ ४८ ॥ †

सम्प्रति स्वकृतोपकारं दर्शयति, दुर्वचमिति ।—[वाहिनी-पतिः ] सेनापतिः अस्मत्स्वामी [ शितेन पत्रिणा ] शरेण [एनं] मृगम् [आशु न प्रत्यपत्स्यत यदि] न अभियुञ्जीत चेत् [असौ

* "उपान्वध्याङ् वसः" ( १।४।४८ पा० ) इति सूत्रवृत्तिव्याख्याने कारिका उप-पदविभक्तिसाधिका ।

† अत्र कार्य्यानुरोधात् निन्दास्पदापि विकत्थना क्रियते इति पदार्थहेतुकं काव्यलिङ्गम् ।

नैनमाशु यदि वाहिनीपतिः
प्रत्यपत्स्यत शितेन पत्रिणा ॥ ४९ ॥

को न्विमं हरितुरङ्गमायुध-
स्थेयसीं दधतमङ्गसंहतिम् ।
वेगवत्तरमृते चमूपते-
र्हन्तुमर्हति शरेण दंष्ट्रिणम् ? ॥ ५० ॥

---

मृगः, आञ्जसा ] बलेन [ त्वयि ] विषये [ यत् अकरिष्यत् ] यत् अनिष्टं कुर्य्यात् तत् [ दुर्वचं ] दुर्वाच्यम्, अमङ्गलतया वक्तुं न शक्यते । [तत्] अनिष्टम् [अथ] अनन्तरम् अपि [मा स्म भूत्] इति सौहार्दकथनं ; तदुपेक्षणे स मृगः त्वां हन्यात् इति भावः । "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" ( ३।३।१३९ पा० ) इति करोतेः पद्यतेश्च लृङ् ॥ ४९ ॥

ननु मयैव हतो मृगो, न तु सेनापतिना, तत्राह, क इति ।— [ हरितुरङ्गमायुधस्थेयसीं ] हरितुरङ्गमायुधम् इन्द्रायुधं तद्वत् स्थेयसीं स्थिरतराम्, वज्रकठिनाम् इत्यर्थः । स्थिरशब्दादीयसुन् । "प्रियस्थिर" ( ६।४।१५७ पा० ) इत्यादिना स्थादेशः । [ अङ्गसंहतिम् ] अवयवसङ्घातं [ दधतं ] धारयन्तम् । [ वेगवत्तरं ] * दुर्वारवेगम् [ इमं दंष्ट्रिणं ] वराहं [ चमूपतेः ] किरातवाहिनीपतेः [ ऋते ] विना । "अन्यारात्" (२।३।२९ पा० ) इत्यादिना पञ्चमी । [ कः नु ] को वा [ शरेण ] एकेन इति भावः ; [ हन्तुम् अर्हति ? ] न कः अपि इत्यर्थः ॥५०॥

* "द्विवचनविभज्योपपदे तरबीयसुनौ" (५।३।५७ पा० ) इति तरप् ।

मित्रमिष्टमुपकारि संशये
मेदिनीपतिरयं तथा च ते ।
तं विरोध्य भवता निरासि मा
सज्जनैकवसतिः कृतज्ञता ॥ ५१ ॥
लभ्यमेकसुकृतेन दुर्लभाः
रक्षितारमसुरक्ष्यभूतयः ।

अस्तु स एव मृगस्य हन्ता, ततः किम् ? इत्यत आह, मित्रमिति ।—[तथा च] तस्य एव मृगहन्तृत्वे सति इत्यर्थः । [अयं मेदिनीपतिः] किरातभूपतिः [ते] तव [संशये] प्राणसङ्कटे [उपकारि] उपकारकारकम् [इष्टं मित्रम्] । ततोऽपि किम् ? तत्राह, तमिति ।—[तं] मित्रभूतं [विरोध्य, सज्जनैकवसतिः] भवादृशसुजनमात्राधारा [कृतज्ञता] उपकारवेदित्वं [मा निरासि] न निराक्रियतां [भवता] । अन्यथा जगति कृतज्ञत्वम् अस्तं यायात्, कृतघ्नता च ते भवेत् इत्यर्थः । अस्यतेः कर्म्मण्याशिषि माङि लुङ् ॥ ५१ ॥ *

ननु सर्वस्य अर्थमूलत्वात् स एवास्तु, किं मित्रेण ? इत्याशङ्क्य मित्रस्य सर्वाधिक्यं युग्मेनाह, लभ्यमिति ।—[जिगीषतां] जेतुमिच्छताम् । जयतेः सन्नन्तात् शतृप्रत्ययः । [दुर्लभाः] कष्टेण अपि लब्धुम् अशक्याः तथापि [असुरक्ष्यभूतयः] रक्षितुम् अशक्यमहिमानः । नित्यं रक्षणादिक्लेशावहाश्च

* अत्र प्राणसंशयोपकारिमित्रत्वमेदिनीपतित्वादिसाभिप्रायैः विशेषणैः परिकरालङ्कृतिः ।

स्वन्तमन्तविरसा जिगीषतां
मित्रलाभमनु लाभसम्पदः ॥ ५२ ॥
चञ्चलं वसु नितान्तमुन्नताः
मेदिनीमपि हरन्त्यरातयः ।
भूधरस्थिरमुपेयमागतं
माऽवमंस्त सुहृदं महीपतिम् ॥ ५३ ॥
॥ युग्मम् ॥

इति भावः । [ अन्तविरसाः ] गत्यर्थ इत्यर्थः । [ लाभसम्पदः ] लभ्यन्ते इति लाभाः अर्थाः तेषां सम्पदः । [ एकसुकृतेन ] एकोपकारेण [ लभ्यं ] सुलभं, न तु दुर्लभं, [ रक्षितारं ] न तु रक्ष्यं [ स्वन्तं ] शुभावसानं, न त्वन्तविरसं [ मित्रलाभम् अनु ] मित्रलाभात् हीनाः, निकृष्टा इत्यर्थः । "हीने" (१।४।८६ पा० ) इत्यनोः कर्मप्रवचनीयसंज्ञा । तद्योगे द्वितीया । अत्र उपमेयस्य मित्रलाभस्य लाभान्तरं प्रति आधिक्याभिधानाद् व्यतिरेकालङ्कारः ॥ ५२ ॥

चञ्चलमिति ।—किं च [ वसु ] धनं [ नितान्तं चञ्चलं मेदिनीमपि, उन्नताः] प्रबलाः [अरातयो हरन्ति] । मित्रं तु न तथा इत्याह, भूधर इति ।—[ भूधरस्थिरं ] भूधरवत् स्थिरम् [ उपेयम् ] अन्विष्य गन्तव्यम् अपि [ आगतं ] स्वतः प्राप्तं [ महीपतिं ] सर्वधुरीणम् इत्यर्थः । [ सुहृदं ] मित्रं [माऽवमंस्त] माऽवज्ञासीत्, भवानिति शेषः । अन्यश्लोकगतो वा भवच्छब्दो विभक्तिविपरिणामेन अत्र द्रष्टव्यः । अन्यथा मध्यमपुरुषः

जेतुमेव भवता तपस्यते
नायुधानि दधते मुमुक्षव:।
प्राप्स्यते च सकलं महीभृता
सङ्गतेन तपस: फलं त्वया ॥ ५४ ॥

वाजिभूमिरिभराजकाननं
सन्ति रत्ननिचयाश्च भूरिश:।

स्यात्। मन्यते: कर्त्तरि माङि लुङ्। अलङ्कारस्तु व्यतिरेक एव। भूधरस्थिरम् इति उपमासङ्गतिसङ्कर: ॥ ५३ ॥

ननु मुमुक्षो: किं मित्रसङ्ग्रहेण ? इत्यत्राह, जेतुमिति।— [ भवता, जेतुं ] जयार्थम् [ एव, तपस्यते ] तपश्चर्य्यते। "कर्मणो रोमन्थ" ( ३।१।१५ पा० ) इत्यादिना चरणे क्यङ्। ततो भावे लट्। कुत: ?—[ मुमुक्षव: ] मोक्षार्थिन: [आयुधानि न दधते] न धारयन्ति। अत: मित्रसङ्ग्रह: कार्य्य: इति भाव:। तथापि किं भवत्स्वामिसख्येन ? तत्राह, प्राप्स्यत इति।—[ महीभृता ] सह [ सङ्गतेन त्वया सकलञ्च तपस: फलं प्राप्स्यते ]। अत: ते सखा अस्मत्स्वामी युक्त इत्यर्थ: ॥ ५४ ॥

ननु अकिञ्चन: कुत्रोपयुज्यते ? तत्राह, वाजीति।—तस्य भूपते: [वाजिभूमि:] अश्वाकर: [ इभराजकाननं ] इभराजानां काननं गजोत्पत्तिस्थानं [ भूरिशो रत्ननिचयाश्च सन्ति ] इति भाव:। ननु ईदृगाढ्य: किम् एकस्मै काञ्चनपत्रकाण्डाय कलहायते ? तत्राह।—[अस्य काञ्चनेन] सौवर्णेन [पत्रिणा] शरेण [ किम् इव ? ] न किञ्चित् प्रयोजनम् अस्तीत्यर्थ:। परन्तु [ केवलं विलङ्घनं ] व्यतिक्रमं [ न सहते ]। नायं

काञ्चनेन किमिवास्य पत्रिणा
केवलं न सहते विलङ्घनम् ॥ ५५ ॥
सावलेपमुपलिप्सिते परैः
अभ्युपैति विकृतिं रजस्यपि ।
अर्थितस्तु न महान् समीहते
जीवितं किमु धनं धनायितुम् ॥ ५६ ॥
तत् तदीयविशिखातिसर्जनात्
अस्तु वां गुरु यदृच्छयागतम् ।

अरलुब्धः ; किन्तु अधिक्षेपासहिष्णुः इत्यर्थः । अत्र प्रथमार्द्धे समृद्धिमद्वस्तुवर्णनात् उदात्तालङ्कारः ॥ ५५ ॥

ननु ईदृग्लुब्धः किम् उपकर्त्ता ? तत्राह, सावलेपमिति ।—[ महान् ] स [ रजसि अपि ] धूलौ अपि [ परैः सावलेपं ] सगर्वम् [ उपलिप्सिते ] उपलब्धुमिष्टे जिघृक्षिते सति [ विकृतिम् अभ्युपैति ] प्रकुप्यति इत्यर्थः । [ अर्थितः ] याचितः [ तु जीवितं, धनायितुं ] धनीकर्त्तुम् । क्यजन्तात्तुमुन् । [ न समीहते ] न उत्सहते, जीवितमपि आत्मनो न इच्छति, किन्तु अर्थितः प्रयच्छति इत्यर्थः । तर्हि [धनं किमु ?] धनम् आत्मन एषितुं धनायितुम् इति विग्रहः । अत्र इच्छामात्रमर्थः, अन्यथा धनम् इत्यनेन पौनरुक्त्यं स्यात् । "सुप आत्मनः क्यच्" ( ३।१।८ पा० ) । "अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु" ( ७।४।३४ पा० ) इति निपातनादाकारः ॥ ५६ ॥

उक्तमर्थं निगमयति, तदिति ।—[ तत् ] तस्मात् [ तदीय-

राघवप्लवगराजयोरिव
प्रेम युक्तमितरेतराश्रयम् ॥ ५७ ॥
नाभियोक्तुमनृतं त्वमिष्यसे
कस्तपस्विविशिखेषु चादरः ? ।
सन्ति भूभृति शरा हि नः परे
ये पराक्रमवसूनि वज्रिणः ॥ ५८ ॥

विशिखातिसर्जनात् ] तदीयविशिखस्य अतिसर्जनात् प्रत्यर्पणात् [ वां ] युवयोः । "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ" ( ८।१।२० पा० ) इति वामादेशः । [ राघवप्लवगराजयोः ] रामसुग्रीवयोः [ इव, यदृच्छया ] दैवात् [आगतं, गुरु ] महत् [ युक्तम् ] अनुरूपम् [ इतरेतराश्रयम् ] अन्योन्यविषयं [ प्रेम ] सख्यम् [ अस्तु ] ॥ ५७ ॥

ननु शरलोभात् मिथ्याभियुज्यसे ? इत्याह, नेति ।— [ त्वमनृतं ] मिथ्या [ अभियोक्तुम् ] अभ्याख्यातुम् । ब्रूञोऽर्थग्रहणाद् द्विकर्मकता । "मिथ्याभियोगोऽभ्याख्यानम्" इत्यमरः । अस्माभिः इति शेषः । [न इष्यसे] न इष्टोऽसि । कुतः ?— [ तपस्विविशिखेषु ] तपस्वी मुनिः शोच्यश्च । "मुनिशोच्यौ तपस्विनौ" इति शाश्वतः । तस्य विशिखेषु [ च, कः आदरः ?] का आस्था ? न काचित् इत्यर्थः । [ हि ] यस्मात् [ नः ] अस्माकं [ भूभृति ] शैले [ परे ] अन्येऽपि [ शराः सन्ति, ये ] शराः [ वज्रिणः ] शक्रस्य [ पराक्रमवसूनि ] पराक्रमधनानि, शौर्य्यसर्वस्वभूता इत्यर्थः । वज्रिग्रहणात् वज्रादपि अतिरिक्ता इति सूच्यते । अत्र शरेषु पराक्रमसाधनेषु पराक्रमरूपेण वस्तु व्यज्यते ॥ ५८ ॥

मार्गणैरथ तव प्रयोजनं
नाधसे किमु पतिं न भूभृतः ?।
त्वद्विधं सुहृदमेत्य सोऽर्थिनं
किं न यच्छति विजित्य मेदिनीम् ? ॥५८॥
तेन सूरिरुपकारिताधनः
कर्त्तुमिच्छति न याचितं वृथा।

अथ ते शरापेक्षा चेत् तर्हि तथा उच्यतामित्याह, मार्गणैरिति।—[ अथ ] उत [ तव, मार्गणैः ] शरैः [ प्रयोजनं ] कृत्यं तर्हि [ भूभृतः ] गिरेः [ पतिं ] प्रभुं [किमु न नाधसे ?] किम् इति न याचसे ? "नाधृ-नाथृ-याच्ञोपतापैश्वर्य्याशीःषु" इति धातोर्लट्। * न च याच्ञाभङ्गशङ्का कार्य्येत्याह, त्वदिति।—[ सः ] अस्मत्स्वामी [ त्वद्विधं ] तवेव विधा प्रकारो यस्य तं त्वद्विधं त्वादृशं, महानुभावम् इत्यर्थः। तथापि [ सुहृदं ] मित्रभूतम् [ अर्थिनम्, एत्य ] लब्ध्वा [ मेदिनीं विजित्य न यच्छति ] न ददाति [ किं ? ] किन्तु दास्यति एव ; किं पुनः शरानिति भावः ॥ ५८ ॥

यदुक्तम् "त्वद्विधम्" इत्यादि तत्र उपपत्तिमाह, तेनेति।—[ तेन ] कारणेन [ सूरिः ] विद्वान् अत एव [ उपकारिताधनः ] उपकारकत्वमात्रधनः। स किरातभूपतिः। [याचितं]

* अत्र "नाधसे किमु पतिं न भूभृतः" इति पाठे—"आशिषि नाथः" ( वा० ) इति वार्त्तिकनियमेन नात्मनेपदप्राप्तिः इति विचार्य्य भट्टोजीदीक्षितेन प्रोक्तं,—"नाथसे इति पाठ्यम्" इति।

सीदतामनुभवन्निवार्थिनां
वेद यत् प्रणयभङ्गवेदनाम् ॥ ६० ॥
शक्तिरर्थपतिषु स्वयङ्ग्रहं
प्रेम कारयति वा निरत्ययम्।
कारणद्वयमिदं निरस्यतः
प्रार्थनाऽधिकबले विपत्फला ॥ ६१ ॥

याच्ञां [वृथा] व्यर्थं [कर्त्तुं न इच्छति]। कुतः?—[यत्] येन कारणेन [सीदतां] क्लिश्यताम् [अर्थिनां, प्रणयभङ्ग-वेदनां] याच्ञाभङ्गदुःखं स्वयम् [अनुभवन् इव वेद] वेत्ति; अतो न वैफल्यशङ्का कार्य्या इत्यर्थः॥ ६० ॥ *

ननु स्वयङ्ग्राहिणः किं याच्ञादैन्यं? तत्राह, शक्तिरिति।—[अर्थपतिषु] विषये [शक्तिः] सामर्थ्यं [स्वयङ्ग्रहं] स्वाम्यनुज्ञां विना ग्रहणं [कारयति। वा] यद्वा [निरत्ययम्] अपराधेऽपि अविकारि [प्रेम] कर्त्तृ स्वयङ्ग्रहं कारयति, प्रबलः प्रियो वा परस्य धनं स्वयं गृह्णातीत्यर्थः। अन्यथा दोषमाह।—[इदं] पूर्वोक्तं [कारणद्वयं, निरस्यतः] त्यजतः; पुंस इति शेषः। [अधिकबले] प्रबले विषये [प्रार्थना] † तद्धन-जिघृक्षा [विपत्फला] अनर्थफलिका; अशक्तस्य अप्रियस्य सतः प्रबलधनग्रहणाशा फणिशिरोमणिग्रहणसाहसवत् अनर्थाय कल्पत इत्यर्थः॥ ६१ ॥

* प्रणयभङ्गक्लेशं जानन् इत्यर्थिप्रार्थनां निष्फलां न चिकीर्षति। इति उत्प्रेक्षानु-प्राणितं वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः।

† अत्र प्रार्थना इति पदेन प्रसह्य स्वयं जिघृक्षा लक्ष्यते न चानुकूलार्थना अप्रसिद्धार्थे प्रयोगात्।

अस्त्रवेदमधिगम्य तत्त्वतः
कस्य चेह भुजवीर्य्यशालिनः।
जामदग्न्यमपहाय गीयते
तापसेषु चरितार्थमायुधम्? ॥ ६२ ॥
अभ्यघानि मुनिचापलात् त्वया
यन्मृगः क्षितिपतेः परिग्रहः।

अथ शस्त्रार्थसम्पत्त्या शक्तत्वाभिमानः, तत्राह, अस्त्रवेदमिति।—[इह] जगति [तापसेषु] तपस्विनां मध्ये। "यतश्च निर्धारणम्" (२।३।४१ पा०) इति सप्तमी। [जामदग्न्यं] जमदग्नेः अपत्यं पुमान् जामदग्न्यः। "गर्गादिभ्यो यञ्" (४।१।१०५ पा०) तम्। [अपहाय] परशुरामं विना इत्यर्थः। [अस्त्रवेदं तत्त्वतोऽधिगम्य]। भुजवीर्य्येण शालते इति [भुजवीर्य्यशालिनः] उभयसम्पन्नस्य इत्यर्थः। शालनक्रियापेक्षया समानकर्त्तृकत्वात् क्त्वानिर्देशः। * कस्य च] वा [आयुधं]; चरितः प्राप्तोऽर्थो येन तत् [चरितार्थं] सार्थकं [गीयते?] न कस्यापि इत्यर्थः। अतः तवापि तापसत्वात् अकिञ्चित्करस्य तेन सह सख्यमेव मुख्यमिति भावः॥ ६२॥

ननु युष्मन्मृगवधशरहरणाभ्यां द्रोहिणो मम तेन कथं सख्यं स्यात्? इत्याशङ्क्य सत्यं तथापि तावत् मृगवधापराधः क्षमिष्यत इत्याह, अभ्यघानीति।—[त्वया, मुनिचापलात्] ब्राह्मणचापल्यात् इत्यर्थः। [क्षितिपतेः] अस्मत्स्वामिनः। परिगृह्यत इति [परिग्रहः], तेन स्वीकृत इत्यर्थः। "परिग्रहः

* "समानकर्त्तृकयोः पूर्वकाले" (३।४।२१ पा०)।

अक्षमिष्ट तदयं प्रमाद्यतां
संवृणोति खलु दोषमज्ञता ॥ ६३ ॥
जन्मवेषतपसां विरोधिनीं
मा कृथाः पुनरमूमपक्रियाम् ।
आपदेत्युभयलोकदूषणी
वर्त्तमानमपथे हि दुर्मतिम् ॥ ६४ ॥

परिजने पक्षयोः स्वीकारमूलयोः" इति विश्वः । [ यत् मृगः अभ्यघानि ] अभिहत इति । हन्तेः कर्मणि लुङ् । [ तत् ] हननम् [ अयम् ] मत्स्वामी [ अक्षमिष्ट ] सोढ़वान् एव । तथाहि [ प्रमाद्यताम् ] अविमृश्यकारिणाम् इत्यर्थः । [दोषम्] अपराधम् [ अज्ञता ] अज्ञानिता [ संवृणोति ] आच्छादयति [ खलु ] । न अज्ञस्य अपराधो गण्यत इत्यर्थः ॥ ६३ ॥ *

अथ सुहृद्भावेन हितम् उपदिशति, जन्मेति ।—[ जन्मवेषतपसां ] जन्म सत्कुले प्रसूतिः, वेषो जटावल्कलादिः, तपो नियमः, तेषां [विरोधिनीं] विरुद्धाम् [अमूम्] एवंविधाम् [अपक्रियाम्] अपकारं, [ पुनः ] इतः परमित्यर्थः । [ मा कृथाः ] मा कुरु । करोतेः कर्त्तरि माङि लुङ् । "वयोबुद्ध्यर्थवाग्वेषश्रुताभिनयकर्मणाम् । आचरेत् सदृशीं वृत्तिमजिह्मामशठां तथा ॥" इति स्मरणात् । उक्तवैपरीत्ये दोषमाह, आपदिति ।—[ हि ] यस्मात् [अपथे वर्त्तमानं दुर्मतिं ], पुरुषम् इति शेषः । उभौ लोकौ दूषयति हन्तीति [ उभयलोकदूषणी ] । "तद्धितार्थ" ( २।१।५१ पा० ) इत्यादिना उत्तरपदसमासः ।

---

* अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

यष्टुमिच्छसि पितॄन् न साम्प्रतं
संवृतोऽर्चिचयिषुर्दिवौकसः ।
दातुमेव पदवीमपि क्षमः
किं मृगेऽङ्ग ! विशिखं न्यवीविशः ? ॥ ६५ ॥

---

[आपत् एति] प्राप्नोति । समासविषये उभशब्दस्थाने उभयशब्द-प्रयोग एव साधुः । यदाह कैयटः—"उभादुदात्तो नित्यम्" (५।२।४४ पा०) इति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषये उभ-शब्दस्य प्रयोगो मा भूत् । उभयशब्दस्यैव रूपं यथा स्यादि-त्युभयतेत्यादि भवति" इति ॥ ६४ ॥

यदुक्तम् "अभ्यघानि" इति तदेव स्फुटयति, यष्टुमिति ।—[ साम्प्रतं ] सम्प्रति । "सम्प्रतीदानीमधुना साम्प्रतं तथा" इत्यमरः । [ पितॄन् ] कव्यादान् [ यष्टुम् ] अर्चयितुं [ न इच्छसि ] । यतः [ संवृतः ] एकान्ते स्थितः ; तथा [ दिवौकसः ] देवान् [ अर्चिचयिषुः अपि ] अर्चयितुम् इच्छुरपि न असि । अतो न पित्रर्था इयं हिंसा, नापि देवतार्था ; तदाराधने तद्विहितत्वात् इति भावः । अथ "सर्वत आत्मानं गोपायीत" इति श्रुतेः आत्मरक्षार्थम् इति चेत् न इत्याह, दातुमिति ।—[अङ्ग ! ] हे ! [पदवीं ] मार्गं [ दातुम् एव ] न तु हन्तुं, मुनित्वात् इति भावः । [ क्षमः] अपि योग्यः सन् अपि । [ किं ] किमर्थं [ मृगे विशिखं न्यवीविशः ?] निवेशितवान् ? विशतेर्ण्यन्ताल्लुङ् । अभिधावतो मृगात् अपसरणेनैव आत्मरक्षणे कर्त्तव्ये यदवधीः तत् चापलमेव । "न हिंस्यात् सर्वाभूतानि" इति श्रुतिनिषेधात् इति भावः ॥ ६५ ॥*

* संवृतः साधकः इति न देवपितृवञ्चकः अतः पदार्थहेतुकं काव्यलिङ्गमलङ्कारः

सज्जनोऽसि विजहीहि चापलं
सर्वदा क इव वा सहिष्यते ? ।
वारिधीनिव युगान्तवायवः
क्षोभयन्त्यनिभृता गुरूनपि ॥ ६६ ॥
अस्त्रवेदविदयं महीपतिः
पर्वतीय इति मावजीगणः ।

---

किं बहुना ? परमार्थः श्रूयतामित्याह, सज्जन इति ।—[सज्जनोऽसि] अत एव [ चापलं ] चपलस्य कर्म [ विजहीहि ] त्यज । जहातेर्लोट् । "आ च हौ" (६।४।११७ पा०) इतीकारः । [सर्वदा क इव वा] को वा [सहिष्यते ?]। इवशब्दो वाक्यालङ्कारे। वाशब्दोऽवधारणे । असहने कारणमाह, वारिधीनिति ।—[अनिभृताः] चपलाः पुनः पुनः अकार्य्यकारिणः [गुरून्] धैर्य्ययुक्तान् [अपि ]। अन्यत्र—विशालानपि । [ युगान्तवायवः ] प्रलयपवनाः [ वारिधीनिव ] समुद्रानिव [ क्षोभयन्ति ]। उपमानुप्राणितोऽयमर्थान्तरन्यासः ॥ ६६ ॥

नन्वयं किरातः क्षुभितः किं करिष्यति ? तत्राह, अस्त्रेति ।—[अयं महीपतिः अस्त्रवेदवित् ] निग्रहानुग्रहसमर्थं इति भावः । अतः पर्वते भवः [ पर्वतीयः ] । "पर्वताच्च" (४।२।१४३ पा०) इति छप्रत्ययः । [इति] हेतोः [मावजीगणः] वनेचरबुद्ध्या मावज्ञासीरित्यर्थः । गणयतेर्माङि लुङ् । "ई च गणः" (७।४।९७ पा०) इतीकारः । ननु ईदृशश्चेत् किमर्थमिह वने वसति ? तत्राह, गोपितुमिति ।—[मरुत्वता] इन्द्रेण [इमां भुवं, गोपितु'] रक्षितुम् । "आयादय आर्द्धधातुके वा"

गोपितुं भुवमिमां मरुत्वता
शैलवासमनुनीय लम्भितः ॥ ६७ ॥

तत्तितिक्षितमिदं मया मुनेः
इत्यवोचत वचश्चमूपतिः।
बाणमत्रभवते निजं दिशन्
आप्नुहि त्वमपि सर्वसम्पदः ॥ ६८ ॥

आत्मनीनमुपतिष्ठते गुणाः
सम्भवन्ति विरमन्ति चापदः।

( ३।१।३१ पा० ) इति विकल्पात् "गुपूधूप" ( ३।१।२८ पा० ) इत्यादिना न आयप्रत्ययः। [अनुनीय] प्रार्थ्य [शैलवासं, लम्भितः] प्रापितः। "ण्यन्ते कर्त्तुश्च कर्मणः" का० इति वचनादण्यिकर्त्तुः कर्मणि क्तः। "गतिबुद्धि" ( १।४।५२ पा० ) इत्यादिना अण्यिकर्त्तुः कर्मत्वम् ॥ ६७ ॥

उपसंहरति, तदिति।—[ तत् ] तस्मात् मुनिचापलात् [ मुनेः] सम्बन्धि [इदं] मृगवधरूपम् आगः [मया, तितिक्षितं] सोढम्, [ इति वचः चमूपतिः अवोचत]। शरद्रोहस्य प्रत्यर्पणमेव प्रतीकार इत्याह।—[ अत्रभवते ] पूज्याय स्वामिने। अत्रभवान् व्याख्यातः। [निजं बाणं] तदीयमेव शरं [ दिशन् ] प्रत्यर्पयन् [ त्वमपि सर्वसम्पदः आप्नुहि ]; सख्येन इति भावः ॥ ६८ ॥

ननु मह्यमेतत्सख्यमेव न रोचते, किं पुनः तन्मूलाः सम्पदः? तत्राह, आत्मनीनमिति।—आत्मने हितम् [ आत्मनीनम्। ] "आत्मन्विश्वजनभोगोत्तरपदात् खः".

इत्यनेकफलभाजि मा स्म भूत्
अर्थिता कथमिवार्य्यसङ्गमे ॥ ६९ ॥
दृश्यतामयमनोकहान्तरे
तिग्महेतिपृतनाभिरन्वितः ।
साहिवीचिरिव सिन्धुरुद्धतः
भूपतिः समयसेतुवारितः ॥ ७० ॥

( ५।१।८ पा० ) [ उपतिष्ठते ] सङ्गच्छते । "उपाद्देवपूजा-सङ्गतिकरणमित्रकरणपथिषु इति वाच्यम्" ( वा० ) इति वक्तव्यात् आत्मनेपदम् । [ गुणाः ] विनयादयः [ सम्भवन्ति आपदश्च विरमन्ति ] । "व्याङ्परिभ्यो रमः" ( १।३।८३ पा० ) इति परस्मैपदम् । [ इति अनेकफलभाजि ] नानाफलोत्पादके [आर्य्यसङ्गमे ] साधुसङ्गतौ [ अर्थिता ] अपेक्षा [ कथमिव मा स्म भूत् ? ] सर्वदा भवत्येव ॥ ६९ ॥

न च अयं दूरे वर्त्तते इत्याह, दृश्यतामिति ।—[तिग्महेति-पृतनाभिः ] तिग्महेतिभिः तीक्ष्णायुधाभिः । "हेतिर्ज्वाला-स्त्रसूर्य्यांशुषु" इति हेमचन्द्रः । पृतनाभिः वाहिनीभिः । "वाहिनी पृतना चमूः" इत्यमरः । [ अन्वितः भूपतिः, साहि-वीचिः ] साहयः ससर्पाः वीचयः यस्य सः [ सिन्धुः ] समुद्रः [ इव उद्धतः ] किन्तु [ समयसेतुवारितः ] समयो मर्य्यादा सेतुरिव स समयसेतुः तेन वारितः सन् । हस्तेन निर्दिशन् आह ।—[ अयमनोकहान्तरे ] द्रुमान्तर्धाने, वर्त्तत इति शेषः । [ दृश्यताम् । ] "अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः" इत्यमरः ॥ ७० ॥ *

* अत्र समयसेतुवारितः साहिर्वीचिः सिन्धुः इव इत्यत्र श्रौती पूर्णोपमा ।

सज्यं धनुर्वहति योऽहिपतिस्थवीयः
स्थेयान् जयन् हरितुरङ्गमकेतुलक्ष्मीम् ।
अस्यानुकूलय मतिं मतिमन्ननेन
सख्या सुखं समभियास्यसि चिन्तितानि ॥७१॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये
दूतवाक्यं नाम त्रयोदशः सर्गः ॥ १३ ॥

अथ अस्य विज्ञापनमेव आह, सज्यमिति ।—[ स्थेयान् ] स्थिरतरः । "प्रियस्थिर" (३।४।१५७ पा०) इत्यादिना स्थादेशः । [ यः ] चमूपतिः [ हरितुरङ्गमकेतुलक्ष्मीं ] हरितुरङ्गमकेतोः इन्द्रध्वजस्य लक्ष्मीं शोभां [ जयन् । अहिपतिस्थवीयः ] अहिपतिः शेषः इव स्थवीयः स्थूलतरम् । "स्थूलदूर" (६।४।१५६ पा० ) इत्यादिना पूर्वगुणयणादिपरलोपौ । सह ज्यया [ सज्यं धनुः वहति ] । हे [ मतिमन् ! अस्य ] चमूपतेः [ मतिम्, अनुकूलय ] अनुकूलां कुरु ; सख्यं कुर्वित्यर्थः । मतिमत्तायाः फलम् एतदिति भावः । कुतः ?—[ सख्या अनेन ] चमूपतिना हेतुना [ सुखम् ] अक्लेशेन [ चिन्तितानि ] मनोरथान् [समभियास्यसि] प्राप्स्यसि । वसन्ततिलका वृत्तम् ॥ ७१ ॥ *

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ-सूरि-विरचितायां किरातार्जुनीय-काव्य-व्याख्यायां घण्टापथसमाख्यायां त्रयोदशः सर्गः ।

* अत्राहिपतिस्थवीयः हरितुरङ्गमकेतुलक्ष्मीं जयन् इति उपमालङ्कृती । चिन्तित-मनोरथपूरणक्रिययोः परस्परोपकारकत्वम् इति अन्योन्यालङ्कारश्च, इति एतेषां संसृष्टिः ।

# चतुर्दशः सर्गः ।

ततः किरातस्य वचोभिरुद्धतैः
पराहतः शैल इवार्णवाम्बुभिः ।
जहौ न धैर्य्यं कुपितोऽपि पाण्डवः
सुदुर्ग्रहान्तःकरणा हि साधवः ॥ १ ॥
सलेशमुल्लिङ्गितशात्रवेङ्गितः
कृती गिरां विस्तरतत्त्वसङ्ग्रहे ।

तत इति ।—[ ततः ] किरातवाक्यानन्तरम् [ उद्धतैः ] प्रगल्भैः [किरातस्य वचोभिः अर्णवाम्बुभिः शैल इव, पराहतः] अभिहतः, अत एव [ कुपितोऽपि पाण्डवः, धैर्य्यं ] निर्विकारचित्तत्वं [ न जहौ ] न तत्याज । उत्पन्नमपि कोपं स्तम्भयामास इत्यर्थः । तथाहि [ साधवः ] सज्जनाः । सुदुर्ग्रहं सुष्ठु दुरासदम् अप्रकम्प्यम् अन्तःकरणं येषां ते [ सुदुर्ग्रहान्तःकरणा हि ]। अर्थान्तरन्यासः ॥ १ ॥

सलेशमिति ।—सह लेशैः [सलेशं] सकलं यथा तथा [उल्लिङ्गितशात्रवेङ्गितः] उल्लिङ्गितम् उद्भूतलिङ्गं कृतं, लिङ्गैः तद्वाक्यभङ्गिभिः एव सम्यगवगतम् इत्यर्थः । शत्रुरेव शात्रवः । स्वार्थे अण्प्रत्ययः । तस्य इङ्गितम् अभिप्रायः तदुल्लिङ्गितं येन सः । [ गिरां ] वाचां सम्बन्धिनि [ विस्तरतत्त्वसंग्रहे ] विस्तरे

अयं प्रमाणीकृतकालसाधनः
प्रशान्तसंरम्भ इवाददे वचः ॥ २ ॥
विविक्तवर्णाभरणा सुखश्रुतिः
प्रसादयन्ती हृदयान्यपि द्विषाम्।

तत्त्वसंग्रहे अर्थसङ्क्षेपे। वैभाषिको द्वन्द्वैकवद्भावः *। [ कृती ] कुशलः [ प्रमाणीकृतकालसाधनः ] प्रमाणीकृतं प्रधानीकृतं काल एव साधनं येन सः, अवसरोचितं विवक्षुः इत्यर्थः। [अयं] पाण्डवः [ प्रशान्तसंरम्भः ] सङ्क्षोभरहितः [ इव वचः आददे ] उवाच इत्यर्थः ॥ २ ॥

सान्त्वपूर्वकमेवाह, विविक्तेति।—[ विविक्तवर्णाभरणा ] विविक्ताः संयोगादिना अश्लिष्टाः स्फुटोच्चारिता वर्णाः अक्षराणि एव आभरणानि यस्याः सा। अन्यत्र तु—विविक्तानि शुद्धानि वर्णः रूपम् आभरणानि च यस्याः सा। "वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे" इत्युभयत्रापि अमरः। सुखा श्रुतिः श्रवणं यस्याः सा [ सुखश्रुतिः ] श्राव्या इत्यर्थः। अन्यत्र—श्रूयते इति श्रुतिः वाक्, सा सुखा यस्याः सा, मञ्जुभाषिणीत्यर्थः। [ द्विषामपि हृदयानि प्रसादयन्ती, ] किं पुनः सुहृदामिति भावः। [ प्रसन्नगम्भीरपदा ] प्रसन्नानि वाचकानि गम्भीराणि अर्थगुरूणि च पदानि सुप्तिङन्तरूपाणि यस्याः सा। अन्यत्र तु—प्रसन्ना विमला गम्भीरपदा अलसचरणा [ सरस्वती ] वाक्, स्त्रीरत्नं च। तथा चोक्तम्—"सरस्वती

* "विप्रतिषिद्धञ्चानधिकरणवाचि" (२।४।१३ पा०) इति सूत्रेण विस्तर-संक्षेपयोः विरुद्धत्वम् इति।

प्रवर्त्तते नाकृतपुण्यकर्मणां
प्रसन्नगम्भीरपदा सरस्वती ॥ ३ ॥
भवन्ति ते सभ्यतमा विपश्चितां
मनोगतं वाचि निवेशयन्ति ये ।
नयन्ति तेष्वप्युपपन्ननैपुणा
गभीरमर्थं कतिचित् प्रकाशताम् ॥ ४ ॥

सरिद्भेदे गोवाग्देवतयोरपि । स्त्रोरत्ने च" इति । [ अकृतपुण्यकर्म्मणां ] न कृतं पुण्यकर्म यैः तेषां [ न प्रवर्त्तते ] न प्रसरति, किन्तु सुकृतिनामेव इत्यर्थः । भवद्वाणी च एवंविधेति धन्यः भवान् इति भावः । अत्र काचित् नायिका वाग्देवता च प्रतीयते । तत्रादौ समासोक्तिरलङ्कारः । विशेषणमात्रसाम्येन अप्रस्तुतप्रतीतेः ; अत एव न श्लेषः ॥ ३ ॥

भवन्तीति ।—[ ते ] पुरुषाः [ विपश्चितां ] विदुषाम् । "विद्वान् विपश्चिद्दोषज्ञः" इत्यमरः । मध्ये [ सभ्यतमाः * ] सभायां साधुतमा निपुणतमाः । "साधुः समर्थो निपुणश्च" इति काशिकायाम् । [भवन्ति । ये मनोगतं] मनसा गृहीतमर्थं [ वाचि निवेशयन्ति ] वाचा उद्गिरन्तीत्यर्थः । [ तेषु ] वक्तृषु [ अपि, उपपन्ननैपुणाः ] सम्भावितकौशलाः [कतिचित्] एव [ गभीरं ] निगूढ़म् [अर्थं, प्रकाशतां] स्फुटतां [ नयन्ति ] । लोके तावत् ज्ञातार एव दुर्लभा, तत्रापि वक्तारः, तत्रापि निगू-

---

* "सभाया यः" ( ४।४।१०५ पा० ) इति यः । "अतिशायने तमबिष्ठनौ" ( ५।३।५५ पा० ) इति तमप् ।

स्तुवन्ति गुर्वीमभिधेयसम्पदं
विशुद्धिमुक्तेरपरे विपश्चितः।
इति स्थितायां प्रतिपूरुषं रुचौ
सुदुर्लभाः सर्वमनोरमा गिरः॥ ५॥
समस्य सम्पादयता गुणैरिमां
त्वया समारोपितभार! भारतीम्।

ढार्थप्रकाशकाः। त्वयि सर्वम् अस्ति इति स्तुतिः। वनेचरवाक्यरहस्यं ज्ञातम् इति स्वयमपि तादृश एव इति हृदयम् ॥४॥ *

स्तुवन्तीति।—किञ्च केचित् [गुर्वीं] महतीम् [अभिधेयसम्पदम्] अर्थसम्पत्तिं [स्तुवन्ति। अपरे विपश्चितः उक्तेः] शब्दस्य [विशुद्धिं] सामर्थ्यं स्तुवन्ति। [इति प्रतिपूरुषं, रुचौ] प्रीतौ [स्थितायां] व्यवस्थितायां [सर्वमनोरमाः] सर्वेषां शब्दार्थरुचीनां पुंसां मनोरमाः [गिरः सुदुर्लभाः।] त्वद्गिरस्तु सर्वमनोरमा उक्तसर्वगुणसम्पत्त्या इति भावः॥ ५॥ †

समस्येति।—धुरं वहतीति धुर्य्यः तत्सम्बोधने हे [धुर्य्य!] हे कार्य्यनिर्वाहक! "धुरो यड्ढकौ" (४।४।७७ पा०) इति यत्प्रत्ययः। अत एव [समारोपितभार!] स्वामिना निहितसन्ध्यादिकार्य्यभार! तदाह मनुः—"दूते सन्धिविपर्य्ययौ" इति। [इमां] "शान्तता विनययोगि" ‡ इत्यादिकां [भारतीं] वाचं [गुणैः] विविक्तवर्णत्वादिभिः [समस्य] संयोज्य [प्रगल्भं] निर्भीकं यथा तथा [सम्पादयता] रचयता,

* अत्र प्रस्तुते सामान्ये विशेषोदासीनाप्रस्तुतोक्त्या अप्रस्तुतप्रशंसालङ्कारः।

† अत्र वाक्यार्थहेतुकं काव्यलिङ्गम् अलङ्कारः।

‡ १२श सर्गे ३७श श्लोकः।

प्रगल्भमात्मा धुरि धुर्य्य ! वाग्मिनां
वनेचरेणापि सताधिरोपितः ॥ ६ ॥
प्रयुज्य सामाचरितं विलोभनं
भयं विभेदाय धियः प्रदर्शितम् ।
तथाभियुक्तश्च शिलीमुखार्थिना
यथेतरन्न्याय्यमिवावभासते ॥ ७ ॥

व्याहरता इत्यर्थः । [ त्वया, वनेचरेण अपि ] इत्यर्थः, [ सता ] । अपिशब्दो विरोधद्योतनार्थम् । [ आत्मा ] स्वयं [ वाग्मिनां ] वाचो युक्तिपटूनाम् । "वाचो युक्तिपटुर्वाग्मी" इत्यमरः । "वाचो ग्मिनिः" ( ५।२।१२४ पा० ) इति मत्वर्थीयो ग्मिनिप्रत्ययः । [ धुरि ] अग्रे [ अधिरोपितः ] स्थापित इत्यर्थः । "रुहः पोऽन्यतरस्याम्" (७।३।४३ पा०) इति पकारः । अत्र मनुः—"वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते" इति ॥ ६ ॥

वाग्मितामेवाह, प्रयुज्येति ।—"शान्तता विनययोगि" * इत्यादिना [साम] सान्त्वम् । "साम सान्त्वमुभे समे" इत्यमरः । [ प्रयुज्य ] नियुज्य [ विलोभनं ] प्रलोभनम् । "मित्रमिष्टम्" † इत्यादिना [ आचरितं ] सम्पादितम् । तथा [ धियः ] बुद्धेः [ विभेदाय] व्यामोहनार्थम् "शक्तिरर्थपतिषु" ‡ इत्यादिना [भयं प्रदर्शितम् ] । किं च [ शिलीमुखार्थिना ] न तु न्यायार्थिना इति भावः । त्वया इति शेषः । "नाभियोक्तुम्" § इत्यादिना

* १३श सर्गे ३७म श्लोकः । † १३श सर्गे ५१म श्लोकः ।
‡ १३श सर्गे ६१म श्लोकः । § १३श सर्गे ५८ श्लोकः ।

विरोधि सिद्धेरिति कर्त्तुमुद्यतः
स वारितः किं भवता न भूपतिः ? ।
हिते नियोज्यः खलु भूतिमिच्छता
सहार्थनाशेन नृपोऽनुजीविना ॥ ८ ॥
ध्रुवं प्रणाशः प्रहितस्य पत्रिणः
शिलोच्चये तस्य विमार्गणं नयः ।

[तथा अभियुक्तं] कथितं [यथा इतरत्] न्यायादन्यत्, अन्याय्यम् इत्यर्थः । [न्याय्यं] न्यायात् अनपेतम् [इव अवभासते] इति उपमा । अनेन वाग्मिनाम् अग्रेसरोऽसि इति भावः ॥ ७ ॥

ततः किम् ? अत आह, विरोधीति ।—किन्तु [सिद्धेः] फलस्य [विरोधि] विघातकम् [इति] इदम् अस्मदास्कन्दनरूपं कर्म्म [कर्त्तुम् उद्यतः सः, भूपतिः] महीपतिः [भवता] धुर्य्येण इति भावः । [किं न वारितः ?] निवर्त्तितः ? निवारणे हेतुमाह ।—[भूतिमिच्छता] इहामुत्र च श्रेयोऽर्थिना सहचरितौ अर्थनाशौ स्वार्थानर्थौ यस्य तेन [सहार्थनाशेन] समानसुखदुःखेन इत्यर्थः । [अनुजीविना] भृत्येन [नृपः] स्वामी [हिते नियोज्यः] नियम्यः [खलु] । अन्यथा स्वामिद्रोहपातकी श्रेयसो भ्रष्टः स्यात् इति भावः ॥ ८ ॥

तर्हि नो बाणः क्व गतः ? किमत्र वा न्याय्यम् ? तत्राह, ध्रुवमिति ।—[प्रहितस्य] प्रयुक्तस्य [पत्रिणः] शरस्य [प्रणाशः] अदर्शनं [ध्रुवं] निश्चितम् । प्रहितश्चेत् [तस्य] नष्टस्य पत्रिणः [शिलोच्चये] शैले । "अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः" इत्यमरः । [विमार्गणम्] संवीक्षणं [नयः] न्यायः । "संवीक्षणं विचयनं मार्गणं

न युक्तमत्रार्य्यजनातिलङ्घनं
दिशत्यपायं हि सतामतिक्रमः ॥ ९ ॥
अतीतसंख्या विहिता ममाग्निना
शिलीमुखाः खाण्डवमत्तुमिच्छता ।
अनादृतस्यामरसायकेष्वपि
स्थिता कथं शैलजनाशुगे धृतिः ? ॥१०॥
यदि प्रमाणीकृतमार्य्यचेष्टितं
किमित्यदोषेण तिरस्कृता वयम् ? ।

मृगणा मृगः" इत्यमरः । [ अत्र ] विषये [ आर्य्यजनातिलङ्घनं ] सज्जनव्यतिक्रमः [ न युक्तम् । हि ] यस्मात् कारणात् [सताम् अतिक्रमोऽपायम्] अनर्थं [दिशति] ददाति ॥ ९ ॥ *

यदुक्तम् "हर्त्तुमर्हसि" † इति तत्र उत्तरमाह, अतीतेति ।— [ खाण्डवम् ] इन्द्रवनम् [अत्तुं] भक्षयितुम् [इच्छता अग्निना मम, अतीतसङ्ख्याः ] असङ्ख्याः [ शिलीमुखाः ] शराः [विहिताः] दत्ताः । खाण्डवदाहे अक्षयतूणीरदानमुक्तं भारते । अतः [ अमरसायकेषु अपि, अनादृतस्य ] आदररहितस्य । भावे क्तः । ततः नञा बहुव्रीहिः । मम [ कथं शैलजनाशुगे ] किरातबाणे [ धृतिः ] आस्था [ स्थिता ? ] न कथञ्चित् इत्यर्थः । अतो न अपहारशङ्का कार्य्या इत्यर्थः ॥ १० ॥

यदुक्तम् "स्मर्य्यते तनुभृताम्" ‡ इत्यादिना सदाचारः प्रमाणम् इति तत्रोत्तरमाह, यदीति ।—[ आर्य्यचेष्टितं ] सच्चरितं [ प्रमाणीकृतं यदि ] साधुत्वेन अङ्गीकृतं यदि इत्यर्थः । तर्हि

* अत्र कारणकार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ।
† १३श सर्गे ४१म श्लोकः । ‡ १३श सर्गे ४[illegible] श्लोकः ।

अयातपूर्वा परिवादगोचरं
सतां हि वाणी गुणमेव भाषते ॥ ११ ॥
गुणापवादेन तदन्यरोपणात्
भृशाधिरूढस्य समञ्जसं जनम्।
द्विधेव कृत्वा हृदयं निगूहतः
स्फुरन्नसाधोर्विवृणोति वागसिः ॥ १२ ॥

---

[ अदोषेण ] दोषाभावेऽपि। "क्वचित् प्रसज्यप्रतिषेधेऽपि नञ्-समासः" इति भाष्यकारः। उपलक्षणे तृतीया। * [ वयं किम् इति तिरस्कृताः ? ] न युक्तम् इत्यर्थः। [ हि ] यस्मात् [ परिवादगोचरं ] परनिन्दास्पदम् [ अयातपूर्वा सतां वाणी गुणमेव भाषते]। न दोषम् ; अतः ते मृषादोषभाषिणोऽन सदाचारप्रामाण्यबुद्धिः इति भावः। पूर्वं न याता इति अयातपूर्वा। सुप्सुपेति समासः। परत्वात् सर्वनाम्नो निष्ठायाः पूर्वनिपातः। "स्त्रियाः पुंवत्" (६।३।३४ पा०) इत्यादिना पुंवद्भावः पूर्वलिङ्गता च। अर्थान्तरन्यासः ॥ ११ ॥

ननु अप्रत्यक्षा परबुद्धिः कथं दृष्टा ? इति निश्चीयते तत्राह, गुणेति।—[ गुणापवादेन ] विद्यमानगुणापह्नवेन [ तदन्यरोपणात् ] तस्मात् गुणात् अन्यस्य दोषस्य अविद्यमानस्य एव आरोपणात् च [ समञ्जसं जनं ] सुजनं [ भृशाधिरूढस्य ] अतिमात्रम् आक्रम्य स्थितस्य, अभिक्षिप्तस्य इत्यर्थः। कर्त्तरि क्तः। [ निगूहतः ] हृदयं संवृण्वतोऽपि [ असाधोः ] अनार्य्यस्य [ हृदयं ] कर्म [ स्फुरन् ] विलसन् [ वागसिः ] वागेव

---

* "इत्थम्भूतलक्षणे" (२।३।२१ पा०) इति सूत्रम्।

वनाश्रयाः कस्य मृगाः परिग्रहाः ?
शृणाति यस्तान् प्रसभेन तस्य ते ।
प्रहीयतामत्र नृपेण मानिता
न मानिता चास्ति भवन्ति च श्रियः ॥१३॥
न वर्त्म कस्मैचिदपि प्रदीयताम्
इति व्रतं मे विहितं महर्षिणा ।

असिः [ द्विधा कृत्वा इव] भित्त्वेव [ विवृणोति ] । अतिदुष्टया वाचैव एतत्पूर्विकायाः बुद्धेः अपि दौष्ट्यम् अनुमीयते इति भावः । वागसिः इत्यत्र रूपकं द्विधाकरणरूपकसाधकम् ॥ १२ ॥ *

यदुक्तम् "अभ्यघानि" † इति, तत्र उत्तरमाह, वनेति ।—[वनाश्रयाः] अत एव [ मृगाः कस्य परिग्रहाः ? ] न कस्यापि इत्यर्थः । किन्तु [ यः तान् ] मृगान् [ प्रसभेन ] बलात्कारेण [ शृणाति ] हिनस्ति । "शॄ हिंसायाम्" इति धातोः लट् । ‡ [ ते ] मृगाः [ तस्य ] हन्तुः परिग्रहाः परिग्राह्याः हन्ता च अहम् एवेति भावः । ननु ममायम् इति अभिमानात् नृपस्य स्वत्वम् इति आशङ्क्याह, अत्रेति ।—[ अत्र ] मृगे [ नृपेण मानिता ] मम इति अभिमानः [ प्रहीयतां ] त्यज्यताम् । कुतः ? इति आशङ्क्याभिमानमात्रेण स्वत्वाभावादित्याह, नेति ।—[ मानिता च अस्ति । श्रियः च] स्वानि [भवन्ति] इति [ न ] । किन्तु न भवन्ति एव, सत्याम् अभिमानितायाम् इत्यर्थः । अभिमानमात्रेण स्वत्वे अति आसङ्गात् इति भावः ॥ १३ ॥

* तच्च द्विधाकृत्वेव इत्युत्प्रेक्षालङ्कारेण संकीर्णम् ।

† १२श सर्गः ६३म श्लोकः ।

‡ "प्वादीनां ह्रस्वः" ( ७।३।८० पा० ) इति ह्रस्वत्वम् ।

जिघांसुरस्मान्निहतो मया मृगः
व्रताभिरक्षा हि सतामलङ्क्रिया ॥ १४ ॥
मृगान् विनिघ्नन् मृगयुः स्वहेतुना
कृतोपकारः कथमिच्छतां तपः ? ।

"यष्टुमिच्छसि पितॄन्" * इत्यादिना यत् निष्कारणम् अवधीरिति उपालब्धं, तत्र उत्तरमाह, नेति ।—[ कस्मैचिदपि वर्ध्मं न प्रदीयताम्, इति ] एवं [व्रतं महर्षिणा ] व्यासेन [ मे ] मह्यं [ विहितम् ] उपदिष्टमित्यर्थः । [ अस्मात् ] कारणात् [ जिघांसुः ] हन्तुमिच्छुः अभिधावन् अयं [ मृगो मया निहतः । हि ] यस्मात् [ व्रताभिरक्षा सताम् अलङ्क्रिया ], न तु दोषः । अतः आत्मरक्षणार्थम् अस्य वधः, न निष्कारणम् इत्यर्थः ॥ १४ ॥ †

"दुर्वचं तत्" ‡ इत्यादिना यत् सञ्जातं बन्धुत्वमुक्तं तत्राचष्टे, मृगानिति ।—स्वमात्मा एव हेतुः तेन [ स्वहेतुना ] स्वार्थम् इत्यर्थः । "सर्वनाम्नस्तृतीया च" (२।३।२७ पा० ) इति तृतीया । [मृगान्, विनिघ्नन्] प्रहरन् । मृगान् यातीति [मृगयुः] व्याधः । 'मृगय्वादयश्च' ( उणा० १।३७ ) इति औणादिको कुप्रत्ययान्तो निपातः । "व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः" इत्यमरः । [तप इच्छतां] तपस्विनां [कथं कृतोपकारः ? ] न कथञ्चित् इत्यर्थः । अथ [ कृपेति चेत् ] व्याधस्य अपि इति शेषः । [ अस्तु ], किं शुष्ककलहेन इति भावः । परन्तु यदुक्तम् "निघ्नतः परनिवर्हितम्" § इत्यादिना तस्य प्रथमप्रहर्तृत्वं तद-

* १२श सर्गः ६५म श्लोकः । † अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।
‡ १२श सर्गः ४९म श्लोकः । § १२श सर्गः ४६म श्लोकः ।

कृपेति चेदस्तु मृगः क्षतः क्षणात्
अनेन पूर्वं न मयेति का गतिः ? ॥१५॥
अनायुधे सत्त्वजिघांसिते मुनौ
कृपेति वृत्तिर्महतामकृत्रिमा ।
शरासनं बिभ्रति सज्यसायकं
कृतानुकम्पः स कथं प्रतीयते ? ॥ १६ ॥
अथो शरस्तेन मदर्थमुज्झितः
फलञ्च तस्य प्रतिकायसाधनम् ।

युक्तम् इत्याह ।—[मृगः क्षणात् क्षतः] आवाभ्यां युगपदेव विद्ध इत्यर्थः । एवं सति [अनेन] नृपेण एव [पूर्वं] हतः [मया] तु [न, इति] अत्र [का गतिः ?] किं प्रमाणं ? पौर्वापर्यस्य दुर्लक्ष्यत्वात् इति भावः । तथा च यदुक्तम् "व्रीडितव्यम्"* इत्युपालम्भः तस्य एव किं न स्यात् ? इति भावः ॥ १५ ॥

पूर्वं "कृपेति चेदस्तु" इत्युक्तं, सम्प्रति तदपि असहमान आह, अनायुध इति ।—[अनायुधे] निरायुधे [सत्त्वजिघांसिते] सत्त्वेन केनचित् प्राणिना जिघांसिते हन्तुमिष्टे । हन्तेः सन्नन्तात् कर्मणि क्तः । [मुनौ] विषये [कृपेति वृत्तिः] व्यवहारो [महतां] महात्मनाम् [अकृत्रिमा] अकपटा । [सज्यसायकं] सह ज्यया सज्यः सायको यस्मिन् तत् [शरासनं] धनुः [बिभ्रति] दधति मयि [सः] नृपः [कथं कृतानुकम्पः] मया [प्रतीयते] ज्ञायते ? इणः कर्मणि लट् । अक्षमे कृपा विहिता, न तु क्षमे इत्यर्थः ॥ १६ ॥ †

* १३श सर्गे ४६म श्लोकः ।

† 'समर्थे कृपानुयोगः न प्रकृष्टः इति पदार्थहेतुकं काव्यलिङ्गम् ।

अविच्छते तव मयात्मसात्कृते
कृतार्थता नन्वधिका चमूपतेः ॥ १७ ॥
यदात्थ कामं भवता स याच्यताम्
इति क्षमं नैतदनल्पचेतसाम् ।

---

अथ कृपामभ्युपगम्याह, अथो इति।—[ अथो ] प्रश्ने । "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः । [ तेन ] नृपेण [ मदर्थं ] यथा तथा । अर्थेन सह नित्यसमासः । * [ शरः, उज्झितः] त्यक्तः [ तस्य ] उज्झितस्य [फलस्य प्रतिकायसाधनं ] प्रतिकायस्य प्रतिपक्षस्य साधनं वधः । "साधनं निर्वृतौ मेढ्रे सैन्ये सिद्धौ वधे गतौ" इति विश्वः । [ अविच्छते ] अखण्डिते [ तव ] तस्मिन् फले [ मया आत्मसात्कृते ] स्वाधीनीकृते सति । "तदधीनवचने" ( ५।४।५४ पा० ) इति सातिप्रत्ययः । [ चमूपतेः अधिका कृतार्थता ] साफल्यम् । [ ननु ] खलु ; स्वायुधस्य परत्राणशत्रुवधपात्रप्रतिपादनाय एकहेलया सिद्धेरित्यर्थः । तथापि अयं शरलोभ इति कृपालुताया मूलान्यपि निकृन्ततीति भावः ॥ १७ ॥ †

"मार्गणैरथ तव प्रयोजनम्"‡ इत्यादिना यदुक्तं तन्निराचष्टे, यदिति।—[ सः ] नृपः [कामं भवता याच्यताम् इति यदात्थ] मामिति शेषः । [ एतदनल्पचेतसां ] मनस्विनां [ न क्षमं ] न युक्तम् । कुतः ?—[ प्रसह्य ] बलात् [ आहरणैषिणाम् ]

* अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् (वा०) ।

† अत्र प्रशंसनस्य निन्दापर्य्यवसानात् व्याजस्तुतिरिति ।

‡ १३श सर्गे ५९म श्लोकः ।

कथं प्रसह्याहरणैषिणां प्रियाः
परावनत्या मलिनीकृताः श्रियः ? ॥१८॥
अभूतमासज्य विरुद्धमीहितं
बलादलभ्यं तव लिप्सते नृपः ।
विजानतोऽपि ह्यनयस्य रौद्रतां
भवत्यपाये परिमोहिनी मतिः ॥ १९ ॥

आहर्त्तुमिच्छूनाम् । "क्षत्रियस्य विजितम्" इति स्मरणादिति भावः । [ परावनत्या ] याञ्चादैन्येन· [ मलिनीकृताः श्रियः कथं प्रियाः ?] न कथञ्चित् इत्यर्थः ॥ १८ ॥ *

अथ परेङ्गितमुद्घाट्य भयं दर्शयति, अभूतमिति ।—[ तव नृपोऽभूतम् ] अनृतम् [ आसज्य ] मिथ्याभियुज्येत्यर्थः । "युक्ते क्ष्मादावृते भूतम्" इत्यमरः । [ अलभ्यं ] लब्धुम् अशक्यं [ विरुद्धं ] विपरीतफलकम् [ ईहितं ] मनोरथं [ बलात् लिप्सते ] लब्धुमिच्छति । न च एतच्चित्रम् इत्याह ।—[ हि ] यस्मात् [ अनयस्य ] दुर्नयस्य [ [ रौद्रतां ] भयङ्करत्वं [ विजानतोऽपि ] पुरुषस्य [मतिः] बुद्धिः [अपाये] विनाशकाले [ परिमोहिनी भवति ] । परिमुह्यति इति परिमोहिनी । "संपृच्" (३।२।१४२ पा० ) इत्यादि सूत्रेण ताच्छील्ये घिनुण्प्रत्ययः । तथाचोक्तम् ।—"विनिर्मितः केन न दृष्टपूर्वो हेम्नः कुरङ्गो न च कुत्र वार्त्ता । तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ॥" इति । तस्मात् विनाशकाले बलात् विपरीतबुद्धिः भवतीति भावः ॥ १९ ॥ †

* अत्र सततोज्ज्वलानां श्रियां मलिनतापादनेन असम्बन्धे सम्बन्धरूपातिशयोक्तिः ।

† अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

असिः शरा वर्म धनुश्च नोच्चकै-
र्विविच्य किं प्रार्थितमीश्वरेण ते ? ।
अथास्ति शक्तिः कृतमेव याच्ञया ?
न दूषितः शक्तिमतां स्वयङ्ग्रहः ॥ २० ॥
सखा स युक्तः कथितः कथं त्वया ?
यदृच्छयाऽसूयति यस्तपस्यते ।

अथ सर्वथा नाभ्यस्ते शरः तर्हि किम् अनेन ? सुष्ठु विस्रब्धं याच्यतां शरोऽन्यद्वेत्याह, असिरिति।—[असिः] खड्गः [शराः, वर्म] कवचम् [उच्चकैः] उत्कृष्टं [धनुश्च] धनुः वा [ते] तव [ईश्वरेण] स्वामिना [विविच्य] एकैकशः विभज्य [किं न प्रार्थितं ? ] न याचितं ? येन प्रयोजनं तद्दास्यामीति भावः। नपुंसकैकशेषः। * [अथ] अस्य वीराभिमानिनो नृपस्य [शक्तिरस्ति] चेत् इति शेषः। [याच्ञया कृतमेव] अलमेव ; साध्याभावात् न याचितव्यमेव इत्यर्थः। गम्यमानक्रियापेक्षया करणत्वात् तृतीया इत्युक्तं प्राक्। कृतमिति निषेधार्थम् अव्ययम्। यतः, [शक्तिमतां स्वयङ्ग्रहः] बलाद्ग्रहणं [न दूषितः], किन्तु भूषणम् एव वीराणाम् इति भावः। क्षत्रियाणां प्रसह्य वित्तापहरणं न दूषितमिति भारतोक्तम् ॥ २० ॥ †

"राघवप्लवगराजयोरिव" ‡ इत्यादिना उपदिष्टं सख्यं प्रत्याचष्टे, सखेति।—[सः] नृपः [कथं त्वया युक्तः] योग्यः [सखा कथितः ? ] न कथञ्चित् कथनीय इत्यर्थः। कुतः ? [यः] नृपः

* "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" (१।२।६९ पा० ) इति।

† अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

‡ १३श सर्गे ५७म श्लोकः।

गुणार्जनोच्छ्रायविरुद्धबुद्धयः
प्रकृत्यमित्रा हि सतामसाधवः ॥ २१ ॥
वयं क्व वर्णाश्रमरक्षणोचिताः ?
क्व जातिहीना मृगजीवितच्छिदः ? ।
सहापकृष्टैर्महतां न सङ्गतं
भवन्ति गोमायुसखा न दन्तिनः ॥ २२ ॥

[ तपस्यते ] तपश्चरते, अनपराधिने इत्यर्थः। "क्रुधद्रुह" (१।४।३७ पा०) इत्यादिना सम्प्रदानत्वात् चतुर्थी। [यदृच्छया] स्वैरवृत्त्या। "यदृच्छा स्वैरिता" इत्यमरः। [ असूयति ] असूयां करोति *। "असूया तु दोषारोपो गुणेष्वपि" इत्यमरः। प्रत्युत शत्रुरेव अयमित्याह।—[ हि ] यस्मात् [ गुणार्जनोच्छ्रायविरुद्धबुद्धयः ] गुणानामर्जने यः उच्छ्रायः उत्कर्षः तस्य विरुद्धा विमुखा बुद्धिः येषां ते तथा [ असाधवः ] दुष्टाः [ सतां ] सज्जनानां [ प्रकृत्यमित्राः ] प्रकृत्या शत्रवः। "द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः" इत्यमरः ॥ २१ ॥ †

हीनजातिवृत्तित्वात् सख्यानर्हः स इत्याह, वयमिति।—[ वर्णाश्रमरक्षणोचिताः ] विशुद्धवृत्तयः [वयं] राजानः [ क्व ?, जातिहीना मृगजीवितच्छिदः ] हिंसाजीविनो व्याधाः [ क्व ? ] फलितमाह।—[ सह अपकृष्टैः ] उक्तरीत्या जात्या वृत्त्या च निकृष्टैः सह [ महतां ] जात्या वृत्त्या च उत्कृष्टानां [ सङ्गतं ]

---

* "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च। प्रातिपदिकाद्धात्वर्थे णिच् स्यादिष्टे" इति प्रसङ्गे "तत्करोति तदाचष्टे" (गण०) इति। "कण्ड्वादिभ्यो यक्" (३।१।२७ पा०) इति यक् वा।

† अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

परोऽवजानाति यदज्ञताजडः
तदुन्नतानां न विहन्ति धीरताम् ।
समानवीर्य्यान्वयपौरुषेषु यः
करोत्यतिक्रान्तिमसौ तिरस्क्रिया ॥ २३ ॥
यदा विगृह्णाति हतं तदा यशः
करोति मैत्रीमथ दूषिता गुणाः ।

सख्यं [ न ], घटते इति शेषः । तथाहि ।—[ दन्तिनः ] गजाः गोमायूनां शृगालानां सखायः [ गोमायुसखाः न भवन्ति ] । "स्त्रियां शिवा भूरिमायगोमायुमृगधूर्त्तकाः । शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः" इत्यमरः । अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ २२ ॥

नीचसख्यं कथमधिक्षिप्यत ? इति चेत् तत्राह, पर इति ।—[ अज्ञताजडः ] मोहान्धः [परोऽवजानाति यत् तत्] अवज्ञानम् [ उन्नतानां ] महतां [ धीरतां ] निर्विकारचित्तत्वं [ न विहन्ति ] न विकारं जनयति इत्यर्थः । क्रोष्टेव सिंहस्य इति भावः । किन्तु [ समानवीर्य्यान्वयपौरुषेषु ] समानानि तुल्यानि वीर्य्यान्वयपौरुषाणि शक्तिकुलविक्रमाः येषां तेषु मध्ये । निर्धारणे सप्तमी * । [यः] कश्चित् इत्यर्थः । [ अतिक्रान्तिम् ] अतिक्रमं [ करोति] चेत् [ असौ ] सदृशजनातिक्रमः [ तिरस्क्रिया ] तिरस्कारः । यथा सिंहे सिंहस्य इति भावः ॥ २३ ॥

तर्हि नीचे कीदृशी वृत्तिः ? इत्याशङ्क्य सोपपत्तिकमाह,

* "यतश्च निर्द्धारणम्" (२।३।४१ पा० इति सूत्रम् ।

स्थितिं समीक्ष्योभयथा परीक्षकः
करोत्यवज्ञोपहतं पृथग्जनम् ॥ २४ ॥

मया मृगान् हन्तुरनेन हेतुना
विरुद्धमाक्षेपवचस्तितिक्षितम् ।
शरार्थमेष्यत्यथ लप्स्यते गतिं
शिरोमणिं दृष्टिविषाज्जिघृक्षतः ॥ २५ ॥

यदेति ।—[ यदा विमृशति ] विकत्थते, पृथग्जनेन इति शेषः । [तदा यशो, हतं] नाशितं भवेत् । [अथ मैत्रीं करोति] तदा [ गुणाः दूषिताः ] भवेयुरिति शेषः । इत्थं [ उभयथा स्थितिं समीक्ष्य ] प्रतर्क्य विमृश्य [ परीक्षकः ] विवेचकः [ पृथग्जनं ] नीचजनम् [ अवज्ञोपहतं ] अवज्ञया अनादरेण उपहतं तिरस्कृतं [ करोति ] उपेक्षते इत्यर्थः ॥ २४ ॥ *

उपसंहरन्नाह, मयेति ।—[अनेन हेतुना] सन्धिविग्रहह्रासार्थत्वेन कारणेन [मया मृगान् हन्तुः] व्याधस्य सम्बन्धि । हन्तेः तृन्प्रत्ययः । अत एव "न लोक" ( २।३।६९ पा० ) इत्यादिना षष्ठीप्रतिषेधः । [विरुद्धम्] अतिपरुषम् [आक्षेपवचः] तिरस्कारवचनं [ तितिक्षितं ] सोढम् । ननु सख्यानङ्गीकारे बलात् शरं ग्रहीष्यति ? इत्याशङ्क्याह, शरेति ।—[अथ शरार्थमेष्यति ] दृष्टौ विषं यस्य तस्मात् [ दृष्टिविषात् ] सर्पविशेषात् [ शिरोमणिं, जिघृक्षतः ] ग्रहीतुमिच्छतः [ गतिं ] दशां [ लप्स्यते ] प्राप्स्यति ॥ २५ ॥ †

---

* विपक्षे यशोहानिः सदयक्षे चरित्रदूषणं इति नीचः तिरस्कार्य्यः इति वाक्यार्थहेतुकं काव्यलिङ्गमत्र ।

† अत्र गतिमिव गतिम् इति गम्यमानोपमानत्वात् निदर्शनालङ्कारः ।

इतीरिताकूतमनीलवाजिनं
जयाय दूतः प्रतितर्ज्य तेजसा ।
ययौ समीपं ध्वजिनीमुपेयुषः
प्रसन्नरूपस्य विरूपचक्षुषः ॥ २६ ॥
ततोऽपवादेन पताकिनीपतेः
चचाल निर्ह्रादवती महाचमूः ।
युगान्तवाताभिहतेव कुर्वती
निनादमम्भोनिधिवीचिसंहतिः ॥ २७ ॥

---

इतीति ।—[ इति ] इत्थम् [ ईरिताकूतम् ] उक्ताभिप्रायम् [ अनीलवाजिनं ] श्वेताश्वम् अर्जुनं [ दूतः जयाय तेजसा ] प्रतापेन [ प्रतितर्ज्य ]; अस्मान् अजित्वा क्व गमिष्यसि ? इति भीषयित्वा इत्यर्थः । [ ध्वजिनीम् उपेयुषः ] सेनासङ्गतस्य [ प्रसन्नरूपस्य ]* अर्जुनं प्रति इति शेषः । [ विरूपचक्षुषः ] त्र्यम्बकस्य [ समीपं ययौ ] ॥ २६ ॥ †

तत इति ।—[ ततः पताकिनीपतेः ] सेनापतेः [ अपवादेन ] आदेशेन । "अपवादोऽप्यथादेशः" इति सज्जनः । [ निर्ह्रादवती ] शब्दवती [ महाचमूः ] सेना । [ युगान्तवाताभिहता ] युगान्तवातैः अभिहता आन्दोलिता, अत एव [ निनादं

* "प्रशंसायां रूपप्" (५।३।६६ पा०) प्रशस्तः प्रसन्नः प्रसन्नरूपः तस्य ।

† अत्र विरूपचक्षुः इति विरूपचक्षुरपि प्रसन्नरूपः इति विरोधः, अतिशयप्रसन्न इत्याभासत्वेन विरोधाभासोऽलङ्कारः । एवं विरोधद्योतकापिरभावात् वाच्यानभिधानरूपो दोषः स्मर्यः ।

रणाय जैत्रः प्रदिशन्निव त्वरां
तरङ्गितालम्बितकेतुसन्ततिः।
पुरो बलानां सघनाम्बुशीकरः
शनैः प्रतस्थे सुरभिः समीरणः ॥ २८ ॥

जयारवक्ष्वेडितनादमूर्च्छितः
शरासनज्यातलवारणध्वनिः।

कुर्वती, अम्भोनिधिवीचिसंहतिः] अर्णवोर्मिसमूहः [इव चचाल] ॥ २७ ॥ *

रणायेति।—जेता एव [जैत्रः] जयनशीलः, अनुकूल इत्यर्थः। जयतेः तृजन्तात् प्रज्ञादित्वात् स्वार्थे अण्प्रत्ययः। † [तरङ्गितालम्बितकेतुसन्ततिः] तरङ्गितं सञ्जाततरङ्गं यथा तथा आलम्बिता अवस्थिताः केतुसन्ततयो येन सः। सह घनैः सान्द्रैः अम्बुशीकरैः वर्त्तमानः [सघनाम्बुशीकरः, सुरभिः] सुगन्धः [समीरणः] वायुः [रणाय त्वरां प्रदिशन्निव] त्वरयन्निव [बलानां] सैन्यानां [पुरः] अग्रे [शनैः प्रतस्थे] प्रस्थितः; ववौ इत्यर्थः ॥ २८ ॥ ‡

जयेति।—[जयारवक्ष्वेडितनादमूर्च्छितः] जयारवैः वन्दिनां जयजयेति शब्दैः क्ष्वेडितनादैः सिंहनादैश्च मूर्च्छितः वर्द्धितः [शरासनज्यातलवारणध्वनिः] शरासनज्यानां धनुर्गुणानां तलवारणानां ज्याघातवारणानां च ध्वनिः [भूधरराजकुक्षिषु]

* अत्रोपमालङ्कारः स्फुटः।

† "प्रज्ञादिभ्यश्च" (५।४।३८ पा०) सूत्रम्।

‡ अत्र रणाय त्वरितयन्निव मारुतः प्रचचाल इति उत्प्रेक्षालङ्कारः।

असम्भवन् भूधरराजकुक्षिषु
प्रकम्पयन् गामवतस्तरे दिशः ॥ २९ ॥
निशातरौद्रेषु विकाशतां गतैः
प्रदीपयद्भिः ककुभामिवान्तरम् ।
वनेसदां हेतिषु भिन्नविग्रहैः
विपुस्फुरे रश्मिमतो मरीचिभिः ॥ ३० ॥

गिरिकुक्षिषु [ असम्भवन् ] अमान्, अवकाशम् अलभमान इत्यर्थः । अत एव [ गां ] भुवं [ प्रकम्पयन् ] । एतेन बलानां बाहुल्यमुक्तम् । [दिशोऽवतस्तरे] व्यानशे । "ऋतश्च संयोगादेर्गुणः" ( ७।४।१० पा० )। अत्र मूर्च्छापदार्थस्य विशेषणगत्या असम्भवन्हेतुत्वात् काव्यलिङ्गरूपम् । गिरिकुक्षिरूपापेक्षया ध्वनेराधेयस्य आधिक्योक्तेः अधिकालङ्कारस्य ताभ्याञ्च इयम् असम्भवन् इति । व्यञ्जकं विना उत्थाप्यमानोपात्तमूर्च्छागुणनिमित्ता प्रतीयमाना क्रियोत्प्रेक्षा । तैः अङ्गाङ्गिभावेन सङ्कीर्य्यन्ते इति सङ्करः ॥ २९ ॥

निशातेति ।—निशाताः तीक्ष्णाः अत एव रौद्राः भीषणाश्च ये तेषु [निशातरौद्रेषु ] । विशेष्यविशेषणयोः अन्यतरविशेष्यत्वविवक्षायाम् इष्टत्वात् विशेषणसमासः । वने सीदन्ति इति [ वनेसदां ] वनेचराणाम् । "सत्सूद्विष" ( ३।२।६१ पा० ) इत्यादिना क्विप् । "तत्पुरुषे कृति बहुलम्" ( ६।३।१४ पा० ) इत्यलुक् । [ हेतिषु ] आयुधेषु । "हेतिः शस्त्रेऽपि पुंस्त्रियोः" इति केशवः । [ भिन्नविग्रहैः ] संक्रान्तमूर्त्तिभिः अत एव [विकाश ] विसृत्वरतां [गतैः ] अत एव [ककुभां ] दिशाम्

उद्गूढवक्षःस्थगितैकदिङ्मुखो
विकृष्टविस्फारितचापमण्डलः ।
वितत्य पक्षद्वयमायतं बभौ
विभुर्गणानामुपरीव मध्यगः ॥ ३१ ॥
सुगेषु दुर्गेषु च तुल्यविक्रमैः
जवाद्दहंपूर्विकया यियासुभिः ।

[ अम्बरं ] अवकाशं [ प्रदीपयद्भिः ] प्रज्वालयद्भिः [ इव ] स्थितैः इति उत्प्रेक्षा । [ रश्मिमतः ] सूर्यस्य । "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" ( ८।२।९ पा० ) इति मतुपो मकारस्य न वकारः । [ मरीचिभिः ] करैः । "भानुः करो मरीचिः स्त्रीपुंसयोः" इत्यमरः । [ विपुस्फुरे ] बभासे । स्फुरतेः भावे लिट् ॥ ३० ॥

उद्गूढेति ।—[ उद्गूढवक्षःस्थगितैकदिङ्मुखः ] उद्गूढेन उन्नतेन वक्षसा स्थगितम् आच्छादितम् एकम् एकतरं दिङ्मुखं येन सः । [ विकृष्टविस्फारितचापमण्डलः ] विकृष्टम् आकृष्टम् अत एव विस्फारितं निर्घोषितं चापमण्डलं येन सः [ विभुः ] शिवः [ आयतं ] विस्तृतं [ पक्षद्वयं ] पार्श्वद्वयं [ वितत्य ] स्वमहिम्ना व्याप्य । "पक्षः साध्यगरुत्पार्श्वसहायबलभित्तिषु" इति वैजयन्ती । [ गणानां मध्यगः ] मध्यस्थोऽपि [ उपरि ] स्थितः [ इव बभौ ] । सर्वोन्नतत्वात् तथा लक्षित इत्यर्थः ॥ ३१ ॥ *

सुगेष्विति ।—सुखेन दुःखेन च गच्छन्ति एषु इति

---

* अत्र मध्यस्थोऽप्युपरिस्थित इव चकास्ति इत्युत्प्रेक्षा ।

गणैरविच्छेदनिरुद्धमाबभौ
वनं निरुच्छ्वासमिवाकुलाकुलम् ॥ ३२ ॥
तिरोहितश्वभ्रनिकुञ्जरोधसः
समश्नुवानाः सहसातिरिक्तताम् ।
किरातसैन्यैरपिधाय रेचिता
भुवः क्षणं निम्नतयेव भेजिरे ॥ ३३ ॥

[ सुगेषु ] सुगमेषु [ दुर्गेषु ] दुर्गमेषु [ च ] समविषमदेशेषु इत्यर्थः । "सुदुरोः अधिकरणार्थे डो वक्तव्यः" (वा०) अत एव टिलोपः । [ तुल्यविक्रमैः ] लाघवात् समसञ्चारैः । [ जवात् ] वेगात् [ अहंपूर्विकया ] अहमहमिकया "अहंपूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियाम्" इत्यमरः । मनोज्ञादित्वात् वुञ्प्रत्ययः,* पृषोदरादित्वात् मुमभावः । † [ यियासुभिः ] यातुमिच्छुभिः । यातेः सन्नन्तात् उप्रत्ययः । [ गणैः ] प्रमथैः । "गणाः प्रमथसङ्घोघाः" इति वैजयन्ती । [ अविच्छेदनिरुद्धं ] अविच्छेदेन निरुद्धं, अत एव [ आकुलाकुलम् ] आकुलप्रकारम् । "प्रकारे गुणवचनस्य" (८।१।१२ पा०) इति द्विर्भावः । [ वनं निरुच्छ्वासं ] निरुद्धप्राणम् [ इव आबभौ ] इति उत्प्रेक्षा ॥ ३२ ॥

तिरोहितेति ।—[ किरातसैन्यैः, तिरोहितश्वभ्रनिकुञ्जरोधसः ] तिरोहितानि छन्नानि श्वभ्रनिकुञ्जरोधांसि गर्त्तकुञ्जतटानि यासां ताः, अत एव [ भुवः ] प्रदेशाः [ सहसा अति-

* "द्वन्द्वमनोज्ञादिभ्यश्च" (५।१।१३३ पा०) इति सूत्रम् ।

† "पृषोदरादीनि यथोपदिष्टम्" (६।३।१०८ पा० ) इति सूत्रम् ।

पृथूरुपर्य्यस्तबृहल्लताततिः
जवानिलाघूर्णितशालचन्दना ।
गणाधिपानां परितः प्रसारिणी
वनान्यवाञ्चीव चकार संहतिः ॥ ३४ ॥

ततः सदर्पं प्रतनुं तपस्यया
मदस्रुतिक्षाममिवैकवारणम् ।

रिक्तताम् ] उत्तानतां [समश्नुवानाः] आप्नुवत्यः । तथा [अपिधाय ] आच्छाद्य [ रेचिताः ] रिक्तीकृताः मुक्ताः [ घणं निम्नतया ] गाम्भीर्य्येण [ भेजिरे इव ] प्राप्ता इवेत्युत्प्रेक्षा । सैन्यैः या भुवो व्याप्तास्ता उत्ताना: प्रतीयन्ते ; तैः मुक्तास्ता एव निम्नाः प्रतीयन्ते इत्यर्थः ॥ ३३ ॥

पृथ्विति ।–[ पृथूरुपर्य्यस्तबृहल्लताततिः] पृथुभिः विशालैः ऊरुभिः सक्थिभिः पर्य्यस्ताः क्षिप्ताः बृहत्यो लताततयो यया सा [ जवानिलाघूर्णितशालचन्दना ] जवानिलेन वेगमारुतेन आघूर्णिताः भ्रमिताः शालाः सर्जतरवः चन्दनानि च यया सा । "प्राकारवृक्षयोः साल: शालः सर्जतरुः स्मृतः" इति शाश्वतः । [ परितः ] सर्वत्र [ प्रसारिणी ] प्रसरणशीला [ गणाधिपानां संहतिः ] समूहः [ वनानि अवाञ्चि ] न्युब्जानि [इव] नीचानीव इत्यर्थः, [ चकार ] इत्युत्प्रेक्षा । अवाञ्चति अधोभवति । अवपूर्वादञ्चतेः क्विप् । "स्यादवाङप्यधोमुखः" इत्यमरः ॥ ३४ ॥

अथ अष्टभिः श्लोकैः अर्जुनं विशेषयन् गणानां तदभियोगमाह, तत इत्यादिना ।–[ततः सदर्पं] सगर्वं सान्तःसारं [ तपस्यया ] तपश्चर्य्यया । तपस्यतेः क्यजन्तात् स्त्रियामप्रत्यये

परिज्वलन्तं निधनाय भूभृतां
दहन्तमाशा इव जातवेदसम् ॥ ३५ ॥
अनादरोपात्तधृतैकसायकं
जयेऽनुकूले सुहृदीव सस्पृहम् ।
शनैरपूर्णप्रतिकारपेलवे
निवेशयन्तं नयने बलोदधौ ॥ ३६ ॥

---

टाप्। [स्फनु ] क्रयम्, अत एव [मदस्रुतिक्षामं ] मादस्रुत्या मदक्षरणेन क्षामं क्रयम्। "क्षायो मः" (८।२।५३ पा०) इति निष्ठातकारस्य मकारः। [एकवारणम् ] एकाकिनं गजम् [ इव ] स्थितम् इत्युपमा। पुनः।—[ भूभृतां ] राज्ञां [ निधनाय ] नाशाय [ परिज्वलन्तं ] तेजस्विनम्, अत एव [ आशाः ] दिशः [ दहन्तं जातवेदसम् ] अग्निम् [ इव ] स्थितम् इत्युपमालङ्कारः। "कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्" इत्यमरः॥ ३५॥ *

अनादरेति।—पुनश्च [ अनादरोपात्तधृतैकसायकं] अनादरेण अवगणनया उपात्तो निषङ्गात् उद्धृतो धृतश्च एकः सायको येन तं तथा [ अनुकूले सुहृदीव जये सस्पृहं ] जयमिच्छन्तम् इत्यर्थः। पुनश्च।—अपूर्णः न्यूनः प्रतिकारो बाणाहरणप्रत्यर्पणरूपो यस्य सः। अत एव पेलवो लघुः तस्मिन् [अपूर्ण प्रतिकारपेलवे बलोदधौ ] सेनासमुद्रे [ शनैः ] असम्भ्रमेण [ नयने ] दृष्टी [निवेशयन्तम् ] इति वीरस्वभावोक्तिः। बलम् उदधिः इव

* अनयोः सजातीययोः संसृष्टिः।

निषसमापत्प्रतिकारकारणे
शरासने धैर्य्य इवानपायिनि ।
अलङ्घनीयं प्रकृतावपि स्थितं
निवातनिष्कम्पमिवापगापतिम् ॥ ३७ ॥
उपेयुषीं बिभ्रतमन्तकद्युतिं
बधाददूरे पतितस्य दंष्ट्रिणः ।

इति उपमितसमासः । "पेषंवासवाहनधिषु च" (६।३।५८ पा०) इत्युदकस्य उदादेशः ॥ ३६ ॥

निषसमिति ।—पुनश्च [ आपत्प्रतिकारकारणे ] आपदां प्रतीकारस्य कारणे साधने [ अनपायिनि ] स्थिरे [ शरासने ] एवम्भूते [ धैर्य्य इव निषस्' ] स्थितं [ प्रकृतौ ] स्वभावे [ स्थितमपि ] निर्विकारमपि इत्यर्थः । अत एव [ अलङ्घनीयम् ] अनतिक्रमणीयम्, अत एव [ निवातनिष्कम्प' ] वाताभावान्निश्चलम् । "निवातावाश्रयावातौ" इत्यमरः । [ आपगापतिं ] समुद्रम् [ इव ] स्थितम् ॥ ३७ ॥ *

उपेयुषीमिति ।—पुनश्च [ अदूरे ] समीपे [ पतितस्य दंष्ट्रिणः ] वराहस्य । व्रीह्यादित्वादिनिप्रत्ययः † । [ बधात् ] हेतोः [ उपेयुषीं ] प्राप्ताम् [ अन्तकद्युतिं ] अन्तकस्य इव यमस्य इव द्युतिस्तां [ बिभ्रतं ] धारयन्तम् । तथा च [ द्विजैः ] ब्राह्मणैः [ अध्वरे ] यज्ञे । "यज्ञः सवोऽध्वरो यागः" इत्यमरः । [ हुतम् ] आहुतं [ पुरः ] अग्रे [ समाबेशितसत्पश्' ]

* अत्र पूर्व्वोत्तरोपमयोः निरपेक्षयोः संसृष्टिः ।

† "व्रीह्यादिभ्यश्च" (५।२।११६ पा०) ।

पुरः समावेशितसत्पशुं द्विजैः
पतिं पशूनामिव हूतमध्वरे ॥ ३८ ॥
निजेन नीतं विजितान्यगौरवं
गभीरतां धैर्य्यगुणेन भूयसा ।
वनोदयेनेव घनोरुवीरुधा
समन्धकारीकृतमुत्तमाचलम् ॥ ३९ ॥
महर्षभस्कन्धमनूनकन्धरं
बृहच्छिलावप्रघनेन वक्षसा ।

समावेशितः स्थापितः सत्पशुः यज्ञीयपशुः यस्य तं [ पशूनां पतिं ] रुद्रम् [इव] स्थितम् ॥ ३८ ॥ *

निजेनेति।—पुनश्च [ निजेन ] नैसर्गिकेण [ भूयसा ] बहुलेन [ धैर्य्यगुणेन ] धैर्य्यमेव गुणस्तेन [ विजितान्यगौरवं] विजितम् अन्येषां गौरवं गाम्भीर्य्यं यस्मिन् कर्मणि तथा [गभीरतां] दुरवगाहत्वं [नीतम्]। अत एव घनाः सान्द्रा उरवश्च महत्यो वीरुधो लताश्च यस्मिन् तेन, [घनोरुवीरुधा, वनोदयेन] अरण्यप्रादुर्भावेण [ समन्धकारीकृतं ] दुरवगाहीकृतम् [ उत्तमाचलम् इव ] स्थितम्। समन्ततोऽन्धकारो यस्य स इति विग्रहः ॥ ३९ ॥ †

महर्षभेति।—[ महर्षभस्कन्धं ] महर्षभस्य महावृषभस्य

---

* अत्रोपमानोपमेययसाधारणधर्म्मसम्बन्धात् पूर्णोपमालङ्कृतिः। न हि अन्यस्य दुर्गं अन्योग्रहीतुमर्हति इति असम्भवन् वस्तुसम्बन्धात् निदर्शनालङ्कारः इति एतयोः अङ्गाङ्गित्वम्।

† अत्रापि उपमालङ्कृतिः पूर्ववत्।

समुज्जिहीर्षुं जगतीं महाभरां
महावराहं महतोऽर्णवादिव ॥ ४० ॥
हरिन्मणिश्याममुदग्रविग्रहं
प्रकाशमानं परिभूय देहिनः ।
मनुष्यभावे पुरुषं पुरातनं
स्थितं जलादर्श इवांशुमालिनम् ॥ ४१ ॥

स्कन्ध इव स्कन्धौ अंसौ यस्य तम् । उपमानपूर्वपदत्वात् उत्तरस्कन्धलोपः । "ऋषभो वृषभो वृषः" इत्यमरः । "स्कन्धो भुजशिरोऽंसोऽस्त्री" इत्यमरः । [ अनूनकन्धरं ] स्थूलग्रीवम् । "अथ ग्रीवायां शिरोधिः कन्धरेत्यपि" इत्यमरः । [ बृहच्छिला-वप्रघनेन ] बृहच्छिलावप्रं महाशिलातटं, तद्वत् घनेन कठिनेन [ वक्षसा ] उपलक्षितम् । [ महाभरां ] दुष्टैः अति-भारवतीं [ जगतीं ] महीं [ समुज्जिहीर्षुं ] दुष्टराजकार्णवात् समुद्धर्त्तुमिच्छुम् । अत एव [ महतोऽर्णवात् ] जगतीं समुज्जिहीर्षुम् उक्तविशेषणविशिष्टञ्च [ महावराहमिव ] स्थितम् । अर्थसाधर्म्यात् इयमुपमा न श्लेषः, शब्दमात्र-साधर्म्येण तस्य विधानात् इति रहस्यम् ॥ ४० ॥

हरिदिति ।—पुनश्च [ हरिन्मणिश्यामं ] मरकतमणि-श्यामलम् [ उदग्रविग्रहम् ] उदारमूर्त्तिं [ देहिनः ] सत्वान् [परिभूय] तिरस्कृत्य [प्रकाशमानं, जलादर्शे] जलम् एव आदर्शः मुकुरः तस्मिन्, [ अंशुमालिनं ] सूर्य्यम् [ इव, मनुष्यभावे ]

गुरुक्रियारम्भफलैरलङ्कृतं
गतिं प्रतापस्य जगत्प्रमाथिनः ।
गणाः समासेदुरनीलवाजिनं
तपात्यये तोयघना घना इव ॥ ४२ ॥

॥ कुलकम् ॥

यथास्वमाशंसितविक्रमाः पुरा
मुनिप्रभावक्षततेजसः परे ।

---

मनुष्यरूपे [ स्थितं पुरातनं पुरुषं ] । यो बदरी-तपोवन-निवासी नारायणसहचरो नरो नाम, स एव अयमित्यर्थः ॥ ४१ ॥ *

गुर्विति ।—[ गुरुक्रियारम्भफलैः ] गुरुभिः क्रियारम्भाणां फलैः [ अलङ्कृतं ] सफलकर्मारम्भम् इत्यर्थः । [ जगत्प्रमाथिनः ] जगद्विजयिनः [ प्रतापस्य ] तेजसो [ गतिं ] स्थानम् । अतोऽस्य बहूनाम् एकलक्ष्यत्वञ्च युज्यते इति सन्दर्भाभिप्रायः । पूर्वोक्तविशेषणविशिष्टम् [ अनीलवाजिनं ] श्वेताश्वम् अर्जुनं [ गणाः ] प्रमथाः [ तपात्यये, तोयघनाः ] तोयभरिताः, वार्षिका इत्यर्थः ; [ घनाः ] मेघाः [ इव ] महाचलम् इति शेषः, [समासेदुः] अवापुः इत्यर्थः ॥ ४२ ॥ †

यथास्वमिति ।—[ पुरा ] पूर्वं, स्वं स्वम् अनतिक्रम्य [यथास्वम् ] "अहम् एव एनं जेष्यामि" इति [ आशंसितविक्रमाः ] आशंसिताः काङ्क्षिताः कथिता वा विक्रमा यैः ते [परे] शत्रवः,

---

* क्रमोपमयोः संसृष्टिः ।

† अत्र यमकानुप्रासोपमादीनां शब्दार्थालङ्काराणां परस्परं निरपेक्षत्वात् संसृष्टिः ।

यतुः क्षणादप्रतिपत्तिमूढतां
महानुभावः प्रतिहन्ति पौरुषम् ॥ ४३ ॥
ततः प्रजह्रे सममेव तत्र तैः
अपेक्षिताऽन्योऽन्यबलोपपत्तिभिः।
महोदयानामपि सङ्घवृत्तितां
सहायसाध्याः प्रदिशन्ति सिद्धयः ॥ ४४ ॥

---

[ मुनिप्रभावक्षततेजसः ] मुनिप्रभावात् क्षततेजसो हतप्रभावाः सन्तः [क्षणात्, अप्रतिपत्तिमूढताम्] अज्ञानमोहान्धतां [ययुः]। तथाहि [ महानुभावः ] अतिप्रतापः [ पौरुषं ] पुरुषस्य चेष्टितं [ प्रतिहन्ति ] नाशयति ॥ ४३ ॥ *

तत इति।—[ततः] एकैकस्य अशक्तौ [ अपेक्षिताऽन्योऽन्यबलोपपत्तिभिः ] अपेक्षिता वाञ्छिता, अन्योऽन्यबलोपपत्तिः अन्योऽन्यशक्त्यवष्टम्भः यैः [ तैः ] प्रमथैः [ तत्र ] अर्जुने। क्रियाधारत्वात् सप्तमी। [ समं ] युगपत् [ एव, प्रजह्रे ] प्रहृतम्। भावे लिट्। तथाहि, [ सहायसाध्याः, सिद्धयः ] कार्यसिद्धयो [ महोदयानां ] महानुभावानाम् [ अपि ] सङ्घेन वृत्तिः व्यापारो येषां तेषां भावस्तत्ता तां [ सङ्घवृत्तितां ] सम्भूयकारितां [ प्रदिशन्ति ]। अतो गणानाम् अपि सम्भूयकारित्वं न दोष इति भावः ॥ ४४ ॥ †

---

* अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

† अत्रापि अलङ्कृतिः पूर्वश्लोकवत्।

किरातसैन्यादुरुचापनोदिताः
समं समुत्पेतुरुपात्तरंहसः।
महावनादुन्मनसः खगा इव
प्रवृत्तपत्रध्वनयः शिलीमुखाः॥ ४५॥

गभीररन्ध्रेषु भृशं महीभृतः
प्रतिस्वनैरुन्नमितेन सानुषु।
धनुर्निनादेन जवादुपेयुषा
विभिद्यमाना इव दध्वनुर्दिशः॥ ४६॥

---

किरातेति।—[ उरुचापनोदिताः ] उरुभिः वृहद्भिः चापैः नोदिताः प्रक्षिप्ताः [ उपात्तरंहसः ] प्राप्तवेगाः [ प्रवृत्तपत्रध्वनयः] सञ्जातपत्रस्वनाः [ शिलीमुखाः ] वाणाः [ महावनात्, उन्मनसः ] क्वापि गन्तुम् उत्सुकाः, तथोक्तविशेषणविशिष्टाश्च [ खगाः ] पक्षिणः [इव, किरातसैन्यात्, समं] समन्ततः [समुत्पेतुः॥ ४५॥ *

गभीरेति।—[ गभीररन्ध्रेषु ] गम्भीरगह्वरेषु [ महीभृतः सानुषु ] ये प्रतिस्वनाः तैः [ प्रतिस्वनैः भृशम्, उन्नमितेन ] उत्थापितेन दीर्घीकृतेन इत्यर्थः, [जवात्, उपेयुषा] प्राप्तवता [धनुर्निनादेन ] धनुषां निनादेन [ दिशः, विभिद्यमानाः ] विदीर्य्यमाणाः [ इव, दध्वनुः ] ध्वनिं चक्रुः॥ ४६॥ †

* अत्र उपमालङ्कारः। शिलीमुखा इत्यनेन अप्रस्तुतस्य भ्रमररूपार्थस्य गम्यमानत्वात् शब्दशक्तिमूलः वस्तुध्वनिः इति सुधीभिर्विभाव्यम्।

† उत्प्रेक्षालङ्कारः।

विधूनयन्ती गहनानि भूरुहां
तिरोहितोपान्तनभोदिगन्तरा ।
महीयसी वृष्टिरिवानिलेरिता
रवं वितेने गणमार्गणावलि: ॥ ४७ ॥

त्रयीमृतूनामनिलाशिन: सत:
प्रयाति पोषं वपुषि प्रहृष्यत: ।

---

विधूनयन्तीति ।—[ भूरुहां, गहनानि ] वनानि । "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमर: । [ विधूनयन्ती] कम्पयन्ती [तिरोहितोपान्तनभोदिगन्तरा] तिरोहितानि छादितानि उपान्तानि प्रान्तानि नभोऽन्तरीक्षं दिगन्तराणि च यया सा [ गणमार्गणावलि: ] प्रमथशरसंहति: [ अनिलेरिता ] अनिलेन वायुना ईरिता प्रेरिता [ महीयसी वृष्टिरिव रवं, वितेने ] विस्तारयामास ॥ ४७ ॥ *

त्रयीमिति ।—[ ऋतूनां त्रयीं ] षण्मासान् । "कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) द्वितीया । [अनिलाशिन:] वायुभक्षकस्य, कृशस्य इत्यर्थ:, [सत:] तथापि [ रणाय ] रणं कर्त्तुं [प्रहृष्यत:] उत्सहमानस्य । "क्रियार्थोप" (२।३।१४ पा०) इत्यादिना चतुर्थी । [ जिष्णो: ] अर्जुनस्य [ वपुषि, पोषम् ] उपचयं [ प्रयाति ] गच्छति सति [ शिथिलेन ] प्रथमम् इति शेष: । [ वर्मणा ] कवचेन [ विदुषा इव ] अनन्तरकरणीयं जानता

* अत्रोपमालङ्कार: ।

रणाय जिष्णोर्विदुषेव सत्वरं
घनत्वमीये शिथिलेन वर्मणा ॥ ४८ ॥
पतत्सु शस्त्रेषु वितत्य रोदसी
समन्ततस्तस्य धनुर्दुधूषतः ।
सरोषमुल्केव पपात भीषणा
बलेषु दृष्टिर्विनिपातशंसिनी ॥ ४९ ॥
दिशः समूहन्निव विक्षिपन्निव
प्रभां रवेराकुलयन्निवानिलम् ।

---

इव इति उत्प्रेक्षा। [सत्वरं] शीघ्रं [घनत्वं] दृढत्वम् [ईये] प्राप्तम्। अन्यथाऽनुपयोगादिति भावः। इणः कर्मणि लिट्॥ ४८ ॥

पतत्स्विति।—[शस्त्रेषु, रोदसी] द्यावापृथिव्यौ। "द्यावा-पृथिव्यौ रोदसी" इत्यमरः। [समन्ततः, वितत्य] व्याप्य [पतत्सु] सत्सु [धनुः, दुधूषतः] कम्पयितुम् इच्छतः, आस्फा-लयत इत्यर्थः। धूञः सन्नन्ताच्छतृप्रत्ययः। "स्वरतिसूतिसूयति-धूञूदितो वा" (७।२।४४ पा०) इति विकल्पादिडभावः। [तस्य] अर्जुनस्य सम्बन्धिनी। भीषयत इति [भीषणा]। नन्द्यादित्वाल्ल्युः। [विनिपातशंसिनी] विनाशसूचिका [दृष्टिः] उक्तविशेषणा [उल्केव बलेषु सरोषं] यथा तथा [पपात]॥ ४९ ॥ *

दिश इति।—[क्षयकालदारुणः] क्षयकालः कल्पान्त-

---

* अत्रोपमानोपमेयसाधारणधर्मसम्बन्धादुपमा।

मुनिश्चचाल क्षयकालदारुणः
क्षितिं सशैलां चलयन्निवेषुभिः ॥ ५० ॥
विमुक्तमाशंसितशत्रुनिर्जयैः
अनेकमेकावसरं वनेचरैः ।
स निर्जघानायुधमन्तरा शरैः
क्रियाफलं काल इवातिपातितः ॥ ५१ ॥

---

काल इव । "संवर्त्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि" इत्यमरः । दारुणो रौद्रः [ मुनिः ] अर्जुनः [ इषुभिः ] वाणैः [दिशः, समूहन्निव] एकत्र समाहरन् इव । अन्यथा तासां पारदर्शनं न स्यादिति भावः । [ रवेः प्रभां, विक्षिपन् इव ] अधः प्रक्षिपन् इव । अन्यथा सा कथं न दृश्यते ? इति भावः । तथा [अनिलं] वायुम् [आकुलयन् इव] इषुभिः अन्तराले आघूर्णयन् इव । तस्य तथा गतिविघातादिति भावः । [सशैलां क्षितिं चलयन् इव] कम्पयन् इव । तथा सङ्क्षोभादिति भावः । [ चचाल ] गतिम् अकरोत् । सर्वत्र इवशब्दः उत्प्रेक्षायाम् ॥ ५० ॥ *

विमुक्तमिति ।—[ आशंसितशत्रुनिर्जयैः ] आशंसितः काङ्क्षितः शत्रुनिर्जयो यैः तैः । अहमहमिकया शत्रुं विजिगीषद्भिः इत्यर्थः । [ वनेचरैः, एकावसरं ] समकालम् । अत्यन्तसंयोगे द्वितीया । † [विमुक्तं] प्रयुक्तम् [अनेकं] बहु [आयुधम्] । जातावेकवचनम् । [सः ] अर्जुनः [क्रियाफलम्, अतिपातितः ] अतिक्रान्तः [काल इव ] । अतिक्रान्तकालस्य कर्मणो निष्फल-

---

* क्षयकालदारुणः इत्यत्रोपमालङ्कारस्य, इत्येतेषां संसृष्टिः ।

† "कालाध्वनोरत्यन्तसंयोगे" ( २।३।५ पा० ) इति सूत्रम् ।

गतैः परेषामविभावनीयतां
निवारयद्भिर्विपदं विदूरगैः ।
भृशं बभूवोपचितो बृहत्फलैः
शरैरुपायैरिव पाण्डुनन्दनः ॥ ५२ ॥
दिवः पृथिव्याः ककुभां नु मण्डलात्
पतन्ति बिम्बादुत तिग्मतेजसः ? ।

त्वात् इति भावः । [ अन्तरा ] मध्ये [ शरैः निर्जघान ] ॥ ५१ ॥ *

गतैरिति ।—[ पाण्डुनन्दनः ] अर्जुनः [ परेषाम् अविभावनीयतां] लघुप्रयोगात् अन्यत्र—गूढ़प्रयोगाच्च अदृश्यताम् अप्रकाश्यतां च [ गतैः, विपदम् ] अनर्थं [निवारयद्भिः, विदूरगैः] दूरलक्ष्यगैः परमण्डलप्रविष्टैश्च [ बृहत्फलैः ] आयताग्रैः महालाभैश्च । "फलं बाणाग्रलाभयोः" इति शाश्वतः । [ शरैः, उपायैः] सामादिभिः [ इव, भृशम्, उपचितः] प्रवृद्धः [बभूव]। अत्र शब्दमात्रसाधर्म्यात् प्रकृताप्रकृतश्लेषः । उपमा इति केचित् ॥ ५२ ॥

दिव इति ।—[ शराः, दिवः ] अन्तरीक्षात् [ पृथिव्याः ] भूगोलात् [ककुभां मण्डलात् नु ? ] दिशां मण्डलाद्वा ? [उत, तिग्मतेजसः ] अर्कस्य [ बिम्बात् ] मण्डलाद्वा ? [अथ] अथवा [सकृद्विकृष्टात् कार्मुकात्] वा [मुनेः शरीरात्] वा [पतन्ति, इति ते ] गणाः [ अभिमेनिरे ] ज्ञातवन्तः । अन्यथा कथम् अमी

* अत्रोपमालङ्कृतिः ।

सकृद्विकृष्टादथ कार्मुकात् मुनेः
शराः शरीरादिति तेऽभिमेनिरे ॥ ५३ ॥
गणाधिपानामविधाय निर्गतैः
परासुतां मर्मविदारणैरपि ।
जवादतीये हिमवानधोमुखैः
कृतापराधैरिव तस्य पत्रिभिः ॥ ५४ ॥
द्विषां क्षतीर्याः प्रथमे शिलीमुखाः
विभिद्य देहावरणानि चक्रिरे ।

विश्वम् अन्तर्धाय शराः सम्भाव्यन्ते ? इति भावः । अत्र सर्वतः शरसम्पातदर्शनात् सम्भावनया पृथिव्यादीनाम् अन्यतमस्य अपादानत्वोत्प्रेक्षा । सा च प्रतीयमाना व्यञ्जकाप्रयोगात् । नुशब्दादयस्तु संशये ॥ ५३ ॥

गणेति ।—[ मर्मविदारणैः अपि ] मर्मस्थानानि एव विदारयद्भिः अपीत्यर्थः । [ गणाधिपानां, परासुतां ] मरणम् [ अविधाय ] अकृत्वा [ निर्गतैः ] । तेषाम् अमर्त्यत्वात् इति भावः । [ तस्य ] मुनेः [ पत्रिभिः ] शरैः [ कृतापराधैः इव ] स्वामिकार्य्याकरणात् सापराधैः इवेत्युत्प्रेक्षा । [ अधोमुखैः ] सद्भिः [ जवात् हिमवान्, अतीये ] अतिचक्रमे । तत्र प्रविष्टम् इत्यर्थः । लज्जितस्य क्वचिन्निलयनम् उचितम् इति भावः ॥ ५४ ॥ *

द्विषामिति ।—[ प्रथमे ] प्रथममुक्ता इत्यर्थः । [ शिली-

* अकृतकार्य्यसाधनैः इति अधोमुखैः अत एव हिमवानतिक्रान्तः इति पदार्थहेतुकं काव्यलिङ्गम् । इत्यनयोरङ्गाङ्गित्वम् ।

न तासु पेते विशिखैः पुनर्मुनेः
अरुन्तुदत्वं महतां ह्यगोचरः ॥ ५५ ॥
समुज्झिता यावदराति निर्य्यती
सहैव चापात् मुनिबाणसंहतिः ।
प्रभा हिमांशोरिव पङ्कजावलिं
निनाय सङ्कोचमुमापतेश्चमूम् ॥ ५६ ॥

---

मुख्याः ] मुनिशराः [ द्विषां, देहावरणानि ] वर्माणि [ विभिद्य याः क्षतीः ] प्रहारान् [ चक्रिरे, तासु ] क्षतिषु [ पुनः ] पश्चात् प्रमुक्तैः [ मुनेः विशिखैः, न पेते ] न पतितम् । पिष्टपेषणदोषाभावात् इति भावः । तथाहि, [ अरुन्तुदत्वं ] पीड़ितपीड़नं [ महतां ] सताम् [ अगोचरः ] अविषयः [हि ] सन्तः पीड़ितपीड़ां न कुर्वन्ति इत्यर्थः । "न हन्याद् व्यसनप्राप्तं नार्त्तं नातिपरिक्षतम्" इति निषेधस्मरणादिति भावः । अरुः व्रणं तुदतीति अरुन्तुदः । "व्रणोऽस्त्रियामीर्ममरुः" इत्यमरः । "विध्वरुषोस्तुदः" (३।२।३५ पा०) इति खश्प्रत्ययः । "अरुर्द्विषदजन्तस्य मुम्" (६।३।६७ पा० ) इति मुमागमः ॥ ५५ ॥ *

समुज्झितेति ।—यावन्तोऽरातयो [ यावदराति ] "यावदवधारणे" ( २।१।८ पा० ) इति अव्ययीभावः । यावदराति यथा तथा [समुज्झिता] अरातिसमसङ्ख्यया मुक्ता [चापात्] मुनिकार्मुकात् [सह ] सम्भूय [एव, निर्य्यती] निष्क्रामन्ती । तादृक् तस्य कौशलमिति भावः । इणः शतरि ङीप् । [ मुनिबाणसंहतिः,

---

* अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

अजिह्ममोजिष्ठममोघमक्लमं
क्रियासु बह्वीषु पृथङ्नियोजितम् ।
प्रसेहिरे सादयितुं न सादिताः
शरौघमुत्साहमिवास्य विद्विषः ॥ ५७ ॥

शिवध्वजिन्यः प्रतियोधमग्रतः
स्फुरन्तमुग्रेषुमयूखमालिनम् ।

---

उमापतेः चमूं हिमांशोः प्रभा पङ्कजावलिम् इव सङ्कोचं, निनाय ] प्रापयामास । दुहादिपाठान्नयतिर्द्विकर्मकः ॥५६॥ *

अजिह्ममिति ।—[ अजिह्मं ] स्वरूपतो गत्या वा अवक्रम् । अन्यत्र तु—जिह्मस्थानप्रवृत्तो न भवतीति अजिह्मः, तम् । [ ओजिष्ठम् ] ओजस्विनं सारवत्तमं तेजिष्ठं च । उभयत्रापि ओजस्विशब्दाद्विन्नन्तादिष्ठन् । "विन्मतोर्लुक्" (५।३।६५ पा० ) इति लुक्, टिलोपश्च । [ अमोघम् ] अवन्ध्यम् [ अक्लमं ] निरन्तरव्यापारेऽपि अक्लान्तं [बह्वीषु क्रियासु] छेदनभेदनपातनादिकर्मसु [ पृथक् ] भेदेन [ नियोजितम् ] । कर्मानुगुण्येन विनियुक्तमित्यर्थः । [ अस्य ] मुनेः [ शरौघम्, उत्साहम् ] औत्सुक्यम् [इव]। वीररसस्य स्थायिभावभूतं प्रयत्नविशेषम् इवेत्यर्थः । [ सादिताः ] कर्षिताः [ विद्विषः] शत्रवः [ सादयितुं ] प्रतिकर्त्तुं [ न प्रसेहिरे ] न शेकुः । तस्य उत्साहवत् एव शरवर्षं दुर्धर्षम् अभूत् इति भावः ॥ ५७ ॥ †

शिवेति ।—[अनेकदेशगाः] नानादेशस्थाः [शिवध्वजिन्यः]

---

* अत्र उपमालङ्कृतिः ।

† अत्र प्रकृताप्रकृतश्लेषाङ्गिका उपमालङ्कृतिः इति केचित् ।

तमेकदेशस्थमनेकदेशगाः
निदध्युरर्कं युगपत् प्रजा इव ॥ ५८ ॥
मुनेः शरौघेण तदुग्ररंहसा
बलं प्रकोपादिव विष्वगायता ।

इवसेनाः । उग्रेषवो मयूखा इवेति उपमितसमासः *। अन्यत्र तु—उग्रेषव इव मयूखा इति मयूरव्यंसकादित्वात् समासः । † तेषां माला अस्यास्तीति तम् [उग्रेषुमयूखमालिनम् ]। व्रीह्यादित्वादिनिः । ‡ [ एकदेशस्थम् ] एकत्रैव स्थितं [ तं ] मुनिम् [ अर्कं प्रजा इव युगपत् प्रतियोधं ] योधं योधं प्रति । "अव्ययं विभक्ति" ( २।१।६ पा० ) इत्यादिना प्रत्यर्थे वीप्सायामव्ययीभावः । [ अग्रतः स्फुरन्तं, निदध्युः ] ददृशुः । यथा एकोऽर्कः एकत्रैव स्थितोऽपि नानादेशस्थानाम् अपि प्रतिपुरुषं मम एवाग्रे वर्त्तत इति युगपत् प्रतीयते, तद्वत् बाणवर्षी मुनिः अपि प्रतियोधं तथा एव प्रत्यभात् इत्यर्थः ॥ ५८ ॥ §

मुनेरिति ।—[ प्रकोपात् ] अमर्षात् [ इव, विष्वक् ] समन्तात् [ आयता ] आगच्छता [ उग्ररंहसा ] तीव्रवेगेण [ मुनेः शरौघेण ] उक्तविशेषणेन [ महाऽनिलेन ] वात्यया [ निदाघजं ] ग्रीष्मोत्थं [ रज इव, विधूनितं ] व्याहतं [ तद्बलं ] प्रमथानां सैन्यं [ सङ्गिनीम् ] अनुबन्धिनीम्, अवि-

* "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" ( २।१।५६ पा० ) सूत्रम् ।

† "मयूरव्यंसकादयश्च" (२।१।७२ पा०)।

‡ "व्रीह्यादिभ्यश्च" (५।२।११६ पा० ) सूत्रम् ।

§ अत्रोपमानोपमेयसाधारणधर्मसम्बन्धादुपमालङ्कारः ।

विधूनितं भ्रान्तिमियाय सङ्गिनीं
महाऽनिलेनेव निदाघजं रजः ॥ ५९ ॥
तपोबलेनैष विधाय भूयसीः
तनूरदृश्याः स्विदिषूनिरस्यति ? ।
अमुष्य मायाविहतं निहन्ति नः
प्रतीपमागत्य किमु स्वमायुधम् ? ॥ ६० ॥
हृता गुणैरस्य भयेन वा मुनेः
तिरोहिताः स्वित् प्रहरन्ति देवताः ? ।

च्छिन्नाम् इति यावत् [ भ्रान्तिम् ] अनवस्थानम् [ इयाय ] प्राप ॥ ५९ ॥ *

अथ त्रिभिः विशेषकमाह, तप इत्यादिना ।—[ एषः ] मुनिः [ तपोबलेन ] तपःसामर्थ्येन [ भूयसीः ] बह्वीः [ अदृश्याः तनूः ] आत्मनः शरीराणि [ विधाय ] सृष्ट्वा [ इषूनिरस्यति स्वित् ? ] क्षिपति किम् ? अथवा [ अमुष्य ] अस्य मुनेः [ मायाविहतं ] मायया विहतं प्रतिहतं [स्वं] स्वकीयम् इव [ आयुधं, प्रतीपं ] प्रतिकूलम् [आगत्य ] प्रत्यावृत्येत्यर्थः, [नः] अस्माकं [ निहन्ति किमु ? ] "जासिनिप्रहण" (२।३।५६ पा०) इत्यादिसूत्रेण कर्मणि षष्ठी । शेषाविवक्षायान्तु द्वितीया ॥६०॥†

हृता इति ।—यद्वा [ अस्य मुनेः, गुणैः ] शान्त्यादिभिः [हृताः] आकृष्टाः, वशीकृता इति यावत्, [भयेन] भीत्या [वा],

* अत्रोपमालङ्कारः । स च प्रकोपादिव इति हेतूत्प्रेक्षया सङ्कीर्णः ।

† अत्र यथार्थस्यान्यभावसम्भावनया उत्प्रेक्षालङ्कारः ।

कथं न्वमी सन्ततमस्य सायका
भवन्त्यनेके जलधेरिवोर्मयः ? ॥ ६१ ॥
जयेन कच्चिद्विरमेदयं रणात्
भवेदपि स्वस्ति चराचराय वा ? ।
तताप कीर्णा नृपसूनुमार्गणैः
इति प्रतर्काकुलिता पताकिनी ॥ ६२ ॥

॥ विशेषकम् ॥

भयात् विभ्यत्य एवेत्यर्थः । [ देवताः तिरोहिताः ] सत्यः [ प्रहरन्ति स्वित् ? ] तत् कुतः ? अन्यथा [ अस्य ] मुनेः [ अमी सायका जलधेः ऊर्मय इव कथं नु सन्ततमनेके ] असङ्ख्याः [ भवन्ति ] ? एतच्चोक्तान्यतमपक्षासम्भवे न सम्भवतीत्यर्थः । किमिति पृच्छन्त्यो देवता युध्यन्ते ? इत्याह ।—गुणैः हृता भयेन वा । एतेन गुणैः आवर्जिताः प्रीत्या, विभ्यत्यः अस्माद् वर्त्तमाना वा इत्यर्थः । किमस्य वितर्कत्रयस्य मूलमित्याह,— कथमिति । अस्मात् कथं जलधेः ऊर्मयो यथा, एकस्यैव सायकाः सन्ततम् अतिबहवो भवन्ति ? एतच्चोद्यमन्यसपक्ष-सम्भवे न सम्भवति इत्यर्थः । एकशब्दस्य एकशेषे कृते एके इति रूपम् इति केचित् । नुशब्दस्त्वन्यार्थे ॥ ६१ ॥ *

जयेनेति ।—[ कच्चिदयं वा रणात् जयेन विरमेत् ] अस्मान् जित्वा कच्चिदयं युद्धम् उपसंहरेत् इत्यर्थः । [ अपि चराचराय स्वस्ति भवेत् ? ] अपि स्थावरजङ्गमं जगत् न विन-

* मालोपमालङ्कारः । मुनेः भयेन स्वित् इत्युत्प्रेक्षा संसृष्टः ।

अमर्षिणा कृत्यमिव क्षमाश्रयं
मदोद्धतेनेव हितं प्रियं वचः।
बलीयसा तद्विधिनेव पौरुषं
बलं निरस्तं न रराज जिष्णुना॥ ६३ ॥

श्वेत् इत्यर्थः। अपिशब्दः सम्भावनायाम्। प्रार्थनायां लिङ्। [ इति प्रतर्काकुलिता ] पूर्वोक्ता ये वितर्कास्तैः आकुलिता विह्वला। अत्र सहेतुकं विशेषणमाह,—[ नृपसूनुमार्गणैः ] अर्जुनबाणैः [ कीर्णा ] क्षिप्ता [ पताकिनी ] सेना, किरातपतेरिति शेषः। [ तताप ] तापं प्राप॥ ६२ ॥ *

अमर्षिणेति।—[ जिष्णुना ] अर्ज्जुनेन [ निरस्तं ] क्षिप्तं [ तत् बलं ] किरातसैन्यं [ न रराज ]। किमिव? केन क्षिप्तं न शोभते? [ अमर्षिणा ] क्रोधवता निरस्तम् [ क्षमाश्रयं ] शान्तिसाध्यं [ कृत्यम् इव ] कार्य्यम् इव। यथा क्षमासाध्यं हि कृत्यं सामर्षैः निरस्यते. तच्च निरस्तं न शोभते। यथा च मदः पौरुषादिधर्मः, तेनोद्धतोऽवलिप्तः तेन [ मदोद्धतेन ] पुंसा [ हितं प्रियं वचः ] प्रियवचनम् [ इव ] निरस्तं तिरस्कृतं न राजते। [ बलीयसा ] बलवत्तरेण च [विधिना] दैवेन [पौरुषम् इव ] निरस्तं सत् न राजते। बलीयसा दैवेन प्रतिहतपुरुषव्यापारस्य नैष्फल्यात्। जिष्णुरपि तथा बलीयान् इति भावः। मालोपमा॥ ६३ ॥

---

* अत्र पदार्थहेतुकं काव्यलिङ्गम्।

प्रतिदिशं प्लवगाधिपलक्ष्मणा
विशिखसंहतितापितमूर्त्तिभिः।
रविकरग्लपितैरिव वारिभिः
शिवबलैः परिमण्डलता दधे ॥ ६४ ॥
प्रविततशरजालच्छन्नविश्वान्तराले
विधुवति धनुराविर्मण्डलं पाण्डुसूनौ।

प्रतिदिशमिति।—[प्लवगाधिपलक्ष्मणा] प्लवगानाम् अधिपोऽधीशो लक्ष्म यस्य तेन, वानरचिह्नेन। "कपिप्लवङ्गप्लवग-" इति "चिह्नं लक्ष्म च लक्षणम्" इति च अमरः। अर्जुनेन [विशिखसंहतितापितमूर्त्तिभिः] विशिखा बाणाः तेषां संहतयः समूहाः। "स्त्रियां तु संहतिर्वृन्दम्" इत्यमरः। ताभिः तापिताः पीड़िता मूर्त्तयो देहाः येषां तैः तथाभूतैः, शरनिकरकर्त्तितकलेवरैः इत्यर्थः। [शिवबलैः] प्रमथसैन्यैः कर्त्तृभिः [रविकरग्लपितैः] रविकरेण ग्लपितैः तप्तैः सूर्य्यकिरणशोषितैः इत्यर्थः, [वारिभिः] उदकैः [इव, प्रतिदिशं] दिक्षु [परिमण्डलता] परितः चक्राकारमण्डलता इति यावत्, [दधे] अधारि। प्रतिदिशं मण्डलाकारेण स्थितम् इत्यर्थः। धाञः कर्मणि लिट्। आतपतप्तं हि नीरं परिभ्रमति तद्वन्मुनिपीड़ितं सैन्यं बभ्राम इत्यर्थः। द्रुतविलम्बितं छन्दः,—"द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात्॥ ६४॥ *

प्रविततेति।—[प्रविततशरजालच्छन्नविश्वान्तराले] प्रवित-

---

* अत्रोपमानोपमेययोः सदृशधर्मसम्बन्धादुपमालङ्कारः।

कथमपि जयलक्ष्मीर्भीतभीतेव हातुं
विषमनयनसेनापक्षपातं विषेहे ॥ ६५ ॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये
अर्जुनाभिगमनो नाम चतुर्दशः सर्गः ॥ १४ ॥

---

तानि विस्तृतानि यानि शरजालानि तैः छन्नम् आच्छादितं विश्वान्तरालं येन तस्मिन्, शरसमूहपूरितब्रह्माण्डोदरे [पाण्डुसूनौ] अत एव [आविर्मण्डलम्] आविर्भूतमण्डलं [धनुः]। आविर्भूतं मण्डलं यस्य धनुष इति वृत्तौ भूतार्थस्य अनुप्रवेशात् भूतशब्दस्याप्रयोगः। [विधुवति] कम्पयति आस्फालयति सति [भीतभीतेव] भीतप्रकारेव * [जयलक्ष्मीः] विजयश्रीः [कथमपि] केनचित् प्रकारेण, महता कष्टेनैव इत्यर्थः, [विषमनयनसेनापक्षपातं] शिवसैन्यानुरागं [हातुं] त्यक्तुं [विषेहे] शशाक इत्यर्थः। मालिनीवृत्तम्। लक्षणं तूक्तम् ॥ ६५ ॥ †

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ-सूरि-विरचितायां किरातार्जुनीय-काव्य-व्याख्यायां घण्टापथसमाख्यायां चतुर्दशः सर्गः ।

* "प्रकारे गुणवचनस्य" (८।१।१२ पा०) इति द्वित्वे रूपम्।

† अत्र जयलक्ष्म्याः भयासम्भवेऽपि तत्सम्भावनात् उत्प्रेक्षा। सा च इवशब्दसान्निध्यात् वाच्या।

# पञ्चदशः सर्गः ।



अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः ।
भेजे दिशः परित्यक्तमहेष्वासा च सा चमूः ॥ १ ॥
अपश्यद्भिरिवेशानं रणान्निववृते गणैः ।
मुह्यत्येव हि कृच्छ्रेषु सम्भ्रमज्वलितं मनः ॥ २ ॥

---

अथेति ।—[ अथ ] अनन्तरं [ तत्र ] रणे [ भूतानि ] सर्वप्राणिनः । [ वार्त्रघ्नशरेभ्यः ] वृत्रं हतवान् इति वृत्रहा इन्द्रः । "ब्रह्मभ्रूणवृत्रेषु क्विप्" ( ३।२।८७ पा० ) । तस्य अपत्यं पुमान् वार्त्रघ्नोऽर्जुनः । "तस्यापत्यम्" (४।१।९२ पा०) इति अण्प्रत्ययः । तस्य शरेभ्यः [ तत्रसुः ] बिभ्युः । "वा जॄभ्रमुत्रसाम्" ( ६।४।१२४ पा० ) इति विकल्पादेत्वाभ्यास-लोपाभावः । [ सा चमूश्च, परित्यक्तमहेष्वासा ] इषवोऽस्यन्ते एभिः इति इष्वासाः धनूंषि । "धनुश्चापोऽस्त्रमिष्वासः" इति हेमचन्द्रः । "अकर्त्तरि च कारके संज्ञायाम्" (३।३।१९ पा०) इति करणे घञ् । परित्यक्ता महान्त इष्वासा यया सा, परित्यक्तायुधा इत्यर्थः । [ दिशो भेजे ] पलायाञ्चक्रे इत्यर्थः । अत्र भूतत्राससेनापलायनयोः समुच्चयकथनात् भिन्नविषयः क्रियासमुच्चयोऽलङ्कारः । "गुणक्रियायौगपद्यं समुच्चयः" इति सामान्यलक्षणं, तस्य यमकेन संसृष्टिः । उपान्त्ययमकम् ॥ १ ॥

अपश्यद्भिरिति ।—[ गणैः ] प्रमथैः [ ईशानं ] स्वामिनं शिवं, पुरोवर्त्तिनम् इति भावः । [ अपश्यद्भिः इव रणान्निव-

खण्डिताशंसया तेषां पराङ्मुखतया तया।
आविवेश कृपा केतौ कृतोच्चैर्वानरं नरम् ॥३॥
आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु।
व्यक्तिमायाति महतां माहात्म्यमनुकम्पया ॥४॥

वृते ] निवृत्तम्। भावे लिट्। [हि] तथाहि [कृच्छ्रेषु ] आपत्सु [ सम्भ्रमज्वलितं ] सम्भ्रमेण साध्वसेन ज्वलितं तप्तम्। "सम्भ्रमः साध्वसेऽपि स्यात्" इति विश्वः। [ मनो मुह्यति एव ]। अतः पुरोवर्त्तिनोऽपि अदर्शनम् उपपद्यत इति भावः ॥ २ ॥ *

खण्डितेति।—[ खण्डिताशंसया ] खण्डिता ध्वस्ता आशंसा जयाशा यस्याः तया [ तेषां ] गणानां सम्बन्धिन्या [ तया ] अतिसन्निकृष्टया इत्यर्थः। [ पराङ्मुखतया ] रण-वैमुख्येन, पलायनेन इत्यर्थः। [ केतौ ] ध्वजे [कृतोच्चैर्वानरं] कृतः आरोपितः उच्चैः उन्नतो वानरो हनूमान् येन तं, [ नरं ] पुरुषं, कपिध्वजम् इत्यर्थः, [कृपा] करुणा [आविवेश]। तदीय-दुर्दशां दृष्ट्वा स कृपाविष्टोऽभूत् इत्यर्थः। यमकालङ्कारः ॥३॥

ननु शत्रुषु कथं करुणा? तत्राह, आस्थामिति।—[ आस्थां ] यत्नम् [ आलम्ब्य ]। "आस्था त्वालम्बनास्थानयत्ना-पेक्षासु कथ्यते" इति विश्वः। [ वशं नीतेषु क्षुद्रेषु ] दुष्टेषु [ अरातिषु ] शत्रुषु विषये [ अनुकम्पया ] कृपया [ महतां ] वीराणां [ माहात्म्यं ] महानुभावत्वं [ व्यक्तिं ] स्फुटताम् [ आयाति ] प्राप्नोति। स्वपौरुषनिर्जितेषु अरातिषु अपि करुणा भूषणम् एव महताम् इति भावः ॥ ४ ॥

---

* अनौत्प्रेक्षानुप्राणितः सामान्येन विशेषसमर्थनात्मकः अर्थान्तरन्यासः। एवं असारोत्प्रेक्षितार्थस्य समर्थनात् अनौचित्यं दोषः च।

स सासिः सासुसूः सासो येयायेयाययाययः ।
ललौ लीलां ललोऽलोलः शशीशशिशुशीः शशन् ॥५
एकाक्षरपादः ।

---

स सासिरिति ।—सहासिना वर्त्तमानः [सासिः] सखड्गः । असून् सुवन्ति प्रेरयन्तीति असुसुवो बाणाः । "षू प्रेरणे" इति धातोः "सत्सूद्विष" ( ३।२।६१ पा० ) इत्यादिना क्विप् । असुसूभिः सह वर्त्तत इति [ सासुसूः ] सबाणः । अस्यन्ते क्षिप्यन्ते शरा अनेनेति आसः धनुः । "अकर्त्तरि च कारके संज्ञायाम्" ( ३।३।१९ पा० ) इति घञ् । आसेन सह वर्त्तत इति [सासः] सचापः । सर्वत्र "तेन सहेति तुल्ययोगे" ( २।२।२८ पा० ) इति बहुव्रीहिः । येया यातव्या, यानसाध्याः । अयेया अयातव्याः, यानं विनैव साध्याः । "अचो यत्" ( ३।१।९७ पा० ) इति यत्प्रत्ययः । येयाश्च अयेयाश्च येयायेयाः तेषां द्वयानाम् आये स्वर्णगजादिलाभे याति प्राप्नोतीति येयायेयायया: । अयः शुभावहदैवं यातीत्ययय: । येयायेयाययश्च असौ अययश्च इति [येयायेयाययाययः] । याधातोरुभयत्रापि "आतोऽनुपसर्गे कः" ( ३।२।३ पा० ) इति कप्रत्ययः । अतो ललति विलसतीति [ ललः ] । "लल विलासे" । पचाद्यच् । [ अलोलः ] अचपलः, शशिनः ईशः शिवः तस्य शिशुः स्कन्दः, तं शृणाति हिनस्तीति [ शशीशशिशुशीः ]। क्विप् । [ शशन् ] प्लुतगतिं कुर्वन् । "शश प्लुतगतौ" इति धातोः शतृप्रत्ययः । [सः] अर्जुनः [ लीलां ] शोभां [ ललौ ] प्राप । "ला आदाने" कर्त्तरि लिट् । एकाक्षरपादः ॥ ५ ॥ *

---

* अत्र व्यञ्जनानां असकृदावृत्त्या वृत्त्यनुप्रासोऽलङ्कारः ।

त्रासजिह्मं यतश्चैतान् मन्दमेवान्वियाय सः ।
नातिपीड़यितुं भग्नानिच्छन्ति हि महौजसः॥६॥

अथाग्रे हसता साचिस्थितेन स्थिरकीर्त्तिना ।
सेनान्या ते जगदिरे किञ्चिदायस्तचेतसा ॥७॥

निरौष्ठ्यम् ।

मा विहासिष्ट समरं समरन्तव्यसंयतः ।
क्षतं क्षुण्णाऽसुरगणैरगणैरिव किं यशः ? ॥ ८ ॥

पादान्तादियमकम् ।

---

त्रासेति ।—[सः] अर्जुनः [त्रासजिह्मं] भयक्लिष्टं यथा तथा [यतः] गच्छतः, पलायमानान् इत्यर्थः । [च, एतान्] गणान् [मन्दमेव अन्वियाय] अनुजगाम । [हि] तथाहि [महौजसः] महानुभावाः [भग्नान् अतिपीड़यितुं न इच्छन्ति] ॥ ६ ॥ *

अथेति ।—[अथ अग्रे] बलानाम् इत्यर्थः । [हसता] तद्भङ्गदर्शनात् स्मयमानेन [साचिस्थितेन] तन्निवारणाय तिर्य्यग्व्यवस्थितेन। "तिर्य्यगर्थे साचि तिरः" इत्यमरः । [स्थिरकीर्त्तिना] स्वयम् अभङ्गत्वात् इति भावः । [किञ्चिदायस्तचेतसा] किञ्चिदीषदायस्तं खिन्नं चेतो यस्य तेन, स्वकीयगणभङ्गात् ईषत्खिन्नचित्तेन [सेनान्या] स्कन्देन । "पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः" इत्यमरः । [ते] गणाः प्रमथाद्यः [जगदिरे] उक्ताः । ओष्ठवर्णाभावात् निरौष्ठ्यमेतत् ॥ ७ ॥

अथ एकविंशतिभिः श्लोकैः स्कन्दवाक्यमेवाह, मा विहासि-

* अत्र सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः ।

विवस्वदंशुसंश्लेषद्विगुणीकृततेजसः ।
अमी वो मोघमुद्गूर्णा हसन्तीव महासयः ॥ ९ ॥
वनेऽवने वनसदां मार्गं मार्गमुपेयुषाम् ।
बाणैर्बाणैः समासक्तं शङ्केऽशं केन शाम्यति ? ॥ १० ॥

पादादियमकम् ।

---

ष्टेत्यादिना ।—रन्तव्यं रमणं क्रीड़ा । बहुलग्रहणात् * भावे तव्यप्रत्ययः । संयत् युद्धम् । "समुदायः स्त्रियः संयत्समित्याजि-समिद्युधः" इत्यमरः । समे रन्तव्यसंयती येषां ते [समरन्तव्य-संयतः] तुल्यक्रीड़ासङ्गरा इति तेषां सम्बोधनम् । यूयं [समरं] संग्रामं [मा विहासिष्ट] न त्यजत । जहातेर्माङि लुङ् । मध्यम-बहुवचनम् । [क्षुण्णाऽसुरगणैः] क्षुण्णाः पराजिता असुरगणाः यैः तैः, भवद्भिः इति शेषः । [अगणैः इव] गणेभ्योऽन्यैः इव [किं] किमर्थं [यशः, क्षतं] नाशितम् । न एतद्युक्तं महाशूराणां भवा-दृशानाम् इत्यर्थः । पादान्तादियमकम् ॥ ८ ॥ †

विवस्वदिति ।—[विवस्वदंशुसंश्लेषद्विगुणीकृततेजसः] विव-स्वदंशुसंश्लेषेण सूर्य्यकिरणसम्पर्केण द्विगुणीकृतानि उत्तेजितानि तेजांसि येषां ते तथोक्ताः, [मोघं] व्यर्थम् [उद्गूर्णाः] उद्यताः । "गुरी उद्यमने" इति धातोः कर्मणि क्तः । [वः] युष्माकम् [अमी महासयः] खड्गाः [हसन्तीव] इत्युत्प्रेक्षा । किं पलाय-मानानां खड्गैरिति हासः ॥ ९ ॥

वन इति ।—[वनसदां] वनेचराणाम् [अवने] रक्षके [वने, मार्गं] मृगसम्बन्धिनं [मार्गं] पन्थानम् [उपेयुषां]

---

* "कृत्यल्युटो बहुलम्" ( ३।३।११३ पा० ) इति सूत्रम् ।

† अत्रोपमालङ्कृतिः इति यमकोपमयोः संसृष्टिः ।

पातितोत्तुङ्गमाहात्म्यैः संहृतायतकीर्त्तिभिः ।
गुर्वीं कामापदं हन्तुं कृतमावृत्तिसाहसम् ॥ ११ ॥

पलायमानानाम् इत्यर्थः, युष्माकम् इति शेषः । वाणो ध्वनिः एषाम् अस्तीति तैः [ वाणैः ] ध्वनियुक्तैः । "वण संशब्दने" इति धातोर्घञ्, ततः "अर्शआदिभ्यः" ( ५।२।१२७ पा० ) इत्यच्प्रत्ययः । यमकत्वात् बवयोरभेदः । उक्तञ्च—"रलयोर्ड-लयोस्तद्वज्जययोर्बवयोरपि । शसयोर्मनयोश्चान्ते सविसर्गा-ऽविसर्गयोः । सबिन्दुकाऽबिन्दुकयोः स्यादभेदेन कल्पनम् ॥" इति । [ बाणैः ] शरैः [समासक्तं] समासञ्जितम् [ अशं ] दुःखं तत् [ केन शाम्यति ? ] इति [शङ्के] । केन उपायेन शाम्येदिति विचारयामि इत्यर्थः । पादादियमकम् । ॥ १० ॥ *

पातितेति ।—[ पातितोत्तुङ्गमाहात्म्यैः ] पातितं भ्रंशितम् उत्तुङ्गमाहात्म्यम् उन्नतभावो यैः तैः, [ संहृतायतकीर्त्तिभिः ] संहृताः आहृता आयताः विस्तृताः कीर्त्तयो यैः तैः, युष्माभिः इति शेषः । [कां गुर्वीम् आपदं हन्तुं ?] न काञ्चिदपि इत्यर्थः । [आवृत्तिः] युद्धान्निवृत्तिः, सैव [ साहसं कृतम् ] । अतः पापात् अन्यत् न किञ्चित् फलम् अस्तीति भावः । तदुक्तं मनुना—"यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः । भर्त्तुर्यद्दुष्कृतं किञ्चित् तत्सर्वं प्रतिपद्यते ॥ यच्चास्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम् । भर्त्ता तत्सर्वमादत्ते परावृत्तहतस्य तु ॥" इति ॥ ११ ॥

* अत्र शङ्के इति विचारार्थेन प्रदत्तं, न सम्भावनायामिति नोत्प्रेक्षा ।

ना ऽसु रो ऽयं न वा नागो धरसंस्थो न राक्षसः ।
ना सु खो ऽयं न वा भोगो धरणिस्थो हि राजसः ॥१२

गोमूत्रिका बन्धः ।

मन्दमस्यन्निषुलतां घृणया मुनिरेष वः ।
प्रणुदत्यागतावज्ञं जघनेषु पशूनिव ॥१३॥

---

नेति ।—किञ्च [ अयम् असुरः ] दैत्यः [ न, नागः ] गजः [वा] पन्नगश्च [न] । धरस्य इव संस्था यस्य सः [धरसंस्थः] पर्वताकारः । "अहार्य्यधरपर्वताः" इत्यमरः । "संस्था-व्यवस्था-प्रणिधि-समाप्त्याकारमृत्युषु" इति वैजयन्ती । [ राक्षसो न ] । किन्तु [अयं] सुखयतीति [ सुखः], सुखसाध्य इत्यर्थः । [ नवाभोगः ] अभिनवप्रयत्नः, महोत्साह इत्यर्थः । "आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि" इति विश्वः । [ धरणिस्थः ] भूतलचारी [ राजसः ] रजोगुणप्रधानः [ ना ] पुरुषः [हि], कश्चित् मानुष इत्यर्थः । "पुरुषाः पूरुषा नरः । मनुष्या मानुषा मर्त्या मनुजा मानवा नराः" इत्यमरः । अतो न पलायनमुचितमिति भावः । गोमूत्रिकाबन्धः ।—"वर्णानामेकरूपत्वं यद्येकान्तरमर्द्धयोः । गोमूत्रिकेति तत्प्राहुः दुष्करं तद्विदो विदुः ॥" इति लक्षणात् । षोडशकोष्ठद्वये अर्द्धद्वयं क्रमेण विलिख्य एकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिः इति उद्धारः ॥ १२ ॥ *

मन्दमिति ।—[एष मुनिः घृणया] कृपया [ इषुलतां ] इषुलतां शाखाम् इव [मन्दम्, अस्यन्] क्षिपन् [वः] युष्मान् [पशून्

* अत्र धरसंस्थः पर्व्वतसदृशाकारः इत्यंशे उपमेति विभाव्यम् ।

**न नोननुन्नो नुन्नो नो नाऽना नानानना ! ननु ।**
**नुन्नोऽनुन्नो ननुन्नेनो नाऽनेना नुन्ननुन्ननुत् ॥१४॥**

एकाक्षर: ।

इव आगतावस्थं ] यथा तथा [ जघनेषु प्रणुदति ] नोदयति । किमत: परं कष्टम् अस्ति ? इति भाव: ॥१३॥ *

नेति ।—पदच्छेदस्तावत् ।—न ना ऊननुन्न: नुन्नोन: ना अना नानानना: ननु । नुन्न: अनुन्न: ननुन्नेन: ना अनेना: नुन्ननुन्ननुत् । अथ योजना ।—हे [नानानना: !] नानाप्रकाराणि आननानि येषां ते, नानाविधास्या इत्यर्थ: । ऊनेन निकृष्टेन नुन्नो विद्ध: [ऊननुन्न:] य: स: [ ना न ] पुरुषो न । तथा नुन्न ऊनो येन स: [ नुन्नोन: ना ] पुरुष: [अना ननु] अपुरुष: खलु । ऊनाद्भीत: पलायमानस्तु किं वक्तव्यम् ? इति भाव: । किञ्च,— नुन्न इन: स्वामी यस्य स नुन्नेन:, स न भवतीति [ ननुन्नेन: ] । नञर्थस्य नशब्दस्य सुप्सुपेति समास: । † स: [ नुन्न: ] विद्धोऽपि [अनुन्न: ] अविद्ध एव । अयमनुन्नस्वामिकत्वादनुन्न एवेति भाव: । तथा नुन्ननुन्ननुदतिशयेन नुन्ना नुन्ननुन्ना: तान् नुदतीति [ नुन्ननुन्ननुत् ] अतिपीड़ितपीड़क: [ ना ] पुरुष: [ अनेना: ? ] निर्दोषो न भवतीति, किन्तु सदोष एवेति ; "नार्त्तं नातिपरिक्षतम्" इति निषेधादित्यर्थ: । अयन्तु नेतादृश इति न पलायितव्यमिति भाव: । अयमेकव्यञ्जन: । अन्त्यस्तकारस्तु न दोषावह: । "नान्त्यवर्णस्तु भेदक:" इति अभ्यनुज्ञानात् । एकाक्षर: । ॥ १४ ॥

* अत्र इषुलतां पशूनिव इति पूर्व्वोत्तरार्द्धयो: एकजातीयोपमालङ्कारयो: संसृष्टि:

† "सुपा सुप्" (२।१।४ पा०) इति सूत्रम् ।

वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान् ।
प्रकृत्या ह्यमणिः श्रेयान् नालङ्कारश्च्युतोपलः ॥१५

स्यन्दना नो चतुरगाः सुरेभा वाऽविपत्तयः ।
स्यन्दना नो च तुरगाः सुरेभा वा विपत्तयः ॥१६॥

समुद्गकः ।

वरमिति ।—[ कृतध्वस्तगुणात् ] कृताः पूर्वम् उत्पादिताः पश्चात् ध्वस्ता नष्टाः ते कृतध्वस्ताः । "पूर्वकाल" (२।१।४८ पा०) इत्यादिना समासः । कृतध्वस्ताः गुणाः यस्य तस्मात् पुंसः [ अत्यन्तम् ] अतिशयेन [ अगुणः ] निर्गुणः [ पुमान् वरं ] मनाक्प्रियः, किञ्चित्प्रिय इत्यर्थः । "वरं क्लीवे मनाक्प्रिये" इत्यमरः । [हि] तथाहि [प्रकृत्या ] स्वभावेन [अमणिः] मणिरहितः [अलङ्कारः श्रेयान् । च्युतोपलः] भ्रष्टरत्नो [न] श्रेयान् । "उपलः प्रस्तरे रत्ने" इति विश्वः । पलायितुः समरात् ; असमर एव वरमिति भावः । अत्र समानविषयारोपयोः प्रतिबिम्बकरणात् दृष्टान्तालङ्कारः ॥ १५ ॥

स्यन्दना इति ।—स्यन्दन्ते प्रद्रवन्तीति [ स्यन्दनाः ] जवनाः [स्यन्दनाः ] रथाः [ नो ] सन्ति । नन्द्यादित्वात् ल्युः । * चतुरं गच्छन्तीति [ चतुरगाः तुरगाश्च ] अश्वाः [ नो ] सन्ति । [ सुरेभाः ] शोभनबृंहणाः, [ सुरेभा वा ] सुरगजाश्च नो सन्ति । [ अविपत्तयः ] :विपत्तिरहिताः, [ विपत्तयो वा ] विशिष्टाः पदातयः नो सन्ति । अतो न भेतव्यम इति

* 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" ( ३।१।१३४ पा० ) इति सूत्रम्

भवद्भिरधुनाऽरातिपरिहापितपौरुषैः ।
ह्रदैरिवार्कनिष्पीतैः प्राप्तः पङ्को दुरुत्तरः ॥१७॥
वेत्रशाककुजे शैलेऽलेशैजेऽकुकशात्रवे ।
यात किं विदिशो जेतुं तुङ्गेशो दिवि किंतया ॥१८॥

प्रतिलोमानुलोमपादः ।

भावः । अत्र पूर्वोत्तरार्द्धगतानां विशेषणानां च उद्देशोद्देश्यीभूतानां यथासङ्ख्यसम्बन्धानुक्रमादयथासङ्ख्यालङ्कारो यमकेन संसृष्टः । समुद्गकः ॥ १६ ॥

भवद्भिरिति ।—[ अधुना अरातिपरिहापितपौरुषैः ] अरातिभिः परिहापितानि त्याजितानि पौरुषाणि यैः तैः [भवद्भिः, अर्कनिष्पीतैः] अर्केण संशोषितैः [ह्रदैः इव, दुरुत्तरः] दुस्तरः पङ्क इव [ पङ्कः ] दुष्कीर्त्तिः [ प्राप्तः ] ॥ १७ ॥ *

वेत्रेति ।—वेत्राणि वंशाः फलिन्यो वा शाकाः वर्वराश्च कुजा वृक्षा यस्मिन् तस्मिन् [ वेत्रशाककुजे ] अतएव दुःप्रवेश्ये इत्यर्थः । "वेत्रं वंशफलिन्योश्च" इति विश्वः । "शाकवर्वरवर्धकाः" इत्यमरः । [ अलेशैजे ] लेशेन स्तोकेन अपि, एजते कम्पते इति लेशैजः, स न भवतीति अलेशैजः, तस्मिन्, अत्यन्ताकम्पने इत्यर्थः । "एजृ कम्पने" । पचाद्यच् । न कोकते नादत्ते इति अकुको ग्रहणासमर्थः शात्रवो यस्मिन् तस्मिन् [ अकुकशात्रवे ] "कुक आदाने" । पचाद्यच् । [शैले] पर्वते । [ किंतया ] केषां भावः किंता कुत्सितता, तया उपलक्षिताः

---

* अत्र पश्चोत्तरार्द्धे उपमानलोपात् लुप्तोपमा। एवं जड़चेतनदेवमानवादिवैषम्यनिबन्धनात् भवन्तोऽप्योऽपि हीनवर्गीयाः इति अलङ्कारेण व्यतिरेकध्वनिः।

अयं वः क्लैव्यमापन्नान् दृष्टपृष्ठानरातिना ।
इच्छतीशश्च्युताचारान् दारानिव निगोपितुम् ॥१९

ननु हो मथना राघो घोरा नाथमहो नु न ।
तयदातवदा भीमा माभीदा बत दायत ॥२०॥

प्रतिलोमानुलोमार्द्धः ।

मल्लः । "कुत्साप्रश्नवितर्केषु क्षेपे किंशब्द इष्यते" इति शाश्वतः । [ विदिशो जेतुं यात ] गच्छत [ किम् ? ] यातः सम्प्रश्ने लोट्, मध्यमपुरुषबहुवचनम् । [ दिवि ] स्वर्गेऽपि । तुञ्जेश इति तेषां सम्बोधनम् । तुञ्जन्त इति तुञ्जाः हिंसका दैत्याः । "तुजि हिंसायाम्" । पचाद्यच् । तेभ्यो दैत्येभ्य ईशत इति [तुञ्जेशः !] ईशेः क्विप् । तेभ्योऽपि शक्ता इत्यर्थः । स्वर्गेऽपि असुरविजयिनां युष्माकम् अत क्षुद्रस्थले क्षुद्रशत्रौ पलायनम् अनुचितम् इति भावः । प्रतिलोमानुलोमपादः ॥ १८ ॥

अथेशे तिष्ठति पलायनमेतद् वो नयुक्तम् इत्याह, अयमिति ।—[अयम्, ईशः] स्वामी शिवः [ क्लैव्यं ] निष्पौरुषत्वम् [ आपन्नान् ] प्राप्तान् तथा [ अरातिना, दृष्टपृष्ठान् ] पलायमानान् इत्यर्थः, [ वः ] युष्मान् [ च्युताचारान् ] स्खलितव्रतान् [ दारान् ] कलत्राणि [ इव ] । "अथ पुंभूम्नि दाराः" इत्यमरः । [ निगोपितुं ] गोप्तुम् । ऊदित्त्वादिड् विकल्पः ।* दारदोषं भर्त्तेव स्वमहिम्ना युष्मद्दोषं संवरितुम् [ इच्छति ] । अतः कुतो युष्माकम् अनर्थः ? इत्यर्थः ॥ १९ ॥ †

नन्विति ।—[ ननु ] इति आमन्त्रणे । [ हो ] इति

* "स्वरतिसूतिसूयतिधूञूदितो वा" ( ७।२।४४ पा० ) इति सूत्रम् ।

† अत्रोपमानोपमेयसाधारणधर्म्मसम्बन्धादुपमा ।

किं त्यक्तापास्तदेवत्वमानुष्यकपरिग्रहैः।
ज्वलितान्यगुणैर्गुर्वी स्थिता तेजसि मानिता॥२१॥

आह्वाने। "हे है व्यस्तौ समस्तौ च इतिसम्बोधनार्थयोः। हो ही चैवंविधौ ज्ञेयौ सम्बुद्ध्याह्वानयोरपि॥" इति विश्वः। मथ्नन्तीति [मथनाः]। "मन्थ विलोडने"। कर्त्तरि ल्युः। रावन्ति समर्था भवन्तीति [रावः]। "राष्टृ सामर्थ्ये"। क्विप्। [घोराः] क्रूराः, शत्रूणाम् इति भावः। नाथं महयन्ति पूजयन्तीति [नाथमहः]। दृशिग्रहणात् कर्म्मणि उपपदे क्विप्। तयन्ति रक्षन्तीति तयाः रक्षकाः। पचाद्यच्। दायन्तीति दाताः शुद्धाः। "दैप् शोधने"। कर्त्तरि क्तः। वदन्तीति वदाः वक्तारः। पचाद्यच्। तेषां द्वन्द्वः [तयदातवदाः। भीमाः] भयङ्कराः। माभीः। नञर्थमाशब्दस्य सुप्सुपेति समासः। तान् ददतीति [माभीदाः] अभयप्रदाः। एवंविधा यूयमिति शेषः। [बत] इति खेदे। बवयोरभेदः। [न दायत नु ?] न शुद्धाः किम् ? नु पृच्छायाम्। किन्तु शुद्धा एव। काकुः अत्रानुसन्धेयः। "दैप् शोधने"। लोट्, मध्यमपुरुषबहुवचनम्। प्रतिलोमानुलोमार्द्धः॥२०॥

किमिति।—[अपास्तदेवत्वमानुष्यकपरिग्रहैः] अपास्तोऽवधीरितो देवत्वमानुष्यकयोः परिग्रहः स्वीकारो यैः तैः, अतिदेवमानुषैः इत्यर्थः। मनुष्याणां भावो मानुष्यकम्। "योपधात् गुरूपोत्तमाद्वुञ्" (५।१।१३२ पा०)। [ज्वलितान्यगुणैः] ज्वलिताः उज्ज्वलिताः, प्रकाशिता इति यावत्, अन्यगुणा असदृशगुणा यैः तैः। "अन्यौ विभिन्नासदृशौ" इति वैजयन्ती। ईदृशैः, भवद्भिरि[illegible]। [तेजसि] प्रतापे [स्थिता] प्रतापैकशरणा [गुर्वी [illegible]] [illegible]त्वाभिमानिता [किम्] इति [त्यक्ता ?] कि[illegible]त्यक्ता ? इति भावः॥२१॥

**निशितासिरतोऽभीको न्येजतेऽमरणा रुचा ।**
**सारतो न विरोधी नः स्वाभासो भरवानुत ॥२२॥**

निशितेति ।—हे [ अमरणा ] मरणरहिताः [ निशितासिरतः ] अतितीक्ष्णखड्गरतः [ अभीकः ] निर्भीकः [ रुचा ] तेजसा उपलक्षितः सुष्ठु: आभासत इति [ स्वाभासः ] रमणीयः । पचाद्यच् । [ उत ] अत्यर्थम् अतिशयेन [ भरवान् ] रणभरसहिष्णुः इत्यर्थः । "उतात्यर्थविकल्पयोः" इति विश्वः । ईदृशो [ नः ] अस्माकं [ विरोधी ] शत्रुः [ सारतो ] बलतः [ न न्येजते ] न कम्पते, न प्रचलतीत्यर्थः । "एजृ कम्पने" लट् । अतो भवद्भिः अपि स्थातव्यम् एव ; न चलितव्यम् इति भावः । एतन्मते "विरोधी नः" इतत्र सविसर्गपाठः । प्रतिलोमे निर्विसर्गपाठे—"पदान्ते सविसर्गाऽविसर्गयोः" इत्येतादृशकाव्ये ऐक्यस्वीकारात् । अन्ये तु—इनः सूर्य्य इव स्वाभास इनस्वाभास इत्येकं पदम् आहुः । केचित्तु—विरोधी शत्रुः पूर्वविशेषणविशिष्टो न, अपि तु पूर्वविशेषणविशिष्ट एवेति काक्वर्थेन नकारमाहुः । परे तु—सारतोनविरोधी न । न रतम् अरतम्, अरतेन सह वर्त्तमानाः सारता मुनयः, तान् ऊनयन्ति मारणेन न्यूनान् कुर्वन्तीति सारतोना दैत्यास्तेषां विरोधी विष्णुः, स नायम् । अतः कथं पलायन्ते ? न स्वाभासः । स्वेन धनेन भासत इति स्वाभासः कुवेरः, सोऽपि नायम् । न भरवान् । भं नक्षत्रं राति । "आतोऽनुपसर्गे कः" (३।२।३ पा०) भरश्चन्द्रस्तद्वान् शिवोऽपि न । अतः पलायनं न उचितमित्याहुः इत्युपरिष्टात् ॥ २२ ॥

तनुवारभसो भास्वानधीरोऽविनतोरसा ।
चारुणा रमते जन्ये कोऽभीतो रसिताशिनि॥२३॥

प्रतिलोमानुलोमेन श्लोकद्वयम् ।

विभिन्नपातिताश्वीयनिरुद्धरथवर्त्मनि ।
हतद्विपनगष्ठ्यूतरुधिराम्बुनदाकुले ॥ २४ ॥

ननु अयं न चलतीति कथं ज्ञायते ? तत्राह, तन्विति ।— तनुमावृणोति आच्छादयति इति तनुवारं वर्म । कर्मण्यण् । तेन बभस्ति भासते इति [ तनुवारभसः ] । "भस दीप्तौ" । पचाद्यच् । [भास्वान्] तेजस्वी [चारुणा] भास्वता [अविनतोरसा] अविनतेन उन्नतेन उरसा वक्षःस्थलेन उपलक्षितः । एवंविधोऽपि [ अधीरः ] धैर्य्यरहितः [ रसिताशिनि ] रसितेन शब्दितेनैव अश्नाति ग्रसति इति रसिताशी, तस्मिन् । रवेणैव विश्वप्राणहारिणीत्यर्थः । आभीक्ष्ण्ये णिनिः । * [ जन्ये ] युद्धे । "युद्धमायोधनं जन्यम्" इत्यमरः । [ अभीतः ] निर्भीकः सन् [ को रमते ? ] कः क्रीड़ति ? यदि रमते तर्ह्ययमेवेति भावः । निर्भयसञ्चारात् एव अस्य निश्चलत्वं निश्चीयत इत्यर्थः । "पूर्वश्लोकस्य अयं प्रतिलोमः ॥ २३ ॥

अथ पञ्चभिः कुलकमाह, विभिन्नेत्यादिभिः ।—आहवं विशिनष्टि ।—[ विभिन्नपातिताश्वीयनिरुद्धरथवर्त्मनि ] विभिन्नानि विदारितानि अत एव पातितानि अश्वीयानि अश्वसमूहाः पूर्वकाल" (२।१।२८ पा० ) इति समासः । तैः अश्वसमूहैः

* "बहुलमाभीक्ष्ण्ये" (३।२।८१ पा० ) इति सूत्रम् । पौनःपुन्ये द्योत्ये सुप्युपपदे णिनिः इति ।

दे वा का नि नि का वा दे
वा हि का स्व स्व का हि वा ।
का का रे भ भ रे का का ।
नि स्व भ व्य व्य भ स्व नि ॥ २५ ॥

इति सर्वतोभद्रः ।

निरुद्धानि रथानां वर्त्मानि यस्मिन् तथोक्ते । "वृन्दे त्वश्वीय-माश्ववत्" इत्यमरः । "केशाश्वाभ्यां यञ्छावन्यतरस्याम्" (४।२।४८ वा० ) इति छप्रत्ययः । [हतद्विपनगष्ठ्यूतरुधिराम्बु-नदाकुले ] हतास्ताडिता द्विपा गजा एव नगाः शैलाः । "शैलवृक्षौ नगावगौ" इत्यमरः । तैः ष्ठ्यूतानि उज्झितानि । ष्ठिवतेः कर्म्मणि क्तः । "च्छ्वोः शूडनुनासिके च" (६।४।१९ पा०) इति ऊठादेशः । तानि रुधिराण्येव अम्बूनि तेषां नदैः प्रवाहैः आकुले व्याप्ते ॥ २४ ॥ *

देवेति ।—पुनश्च । देवान् आकनयति उद्दीपयति उत्साहयति इति देवाकानी तस्मिन् [ देवाकानिनि ] । "कन दीप्तौ" इति धातोर्ण्यन्तात् णिनिः । यद्वा "कै शब्दे" इति धातोराङ्पूर्वस्य भावे ल्युटि आकानम् आशब्दनम्, ईषद्वदनम् इति यावत्, देवानां तद्वतीत्यर्थः । कावादः ईषद्वादो वाक्कलहः । "ईषदर्थे" (६।३।१०५ पा० ) इति कुशब्दस्य कादेशः । तद्वति [कावादे] । "अर्शआदिभ्योऽच्" ( ५।२।१२७ पा० ) । [वाहिकास्वस्वकाहि ] वाहिका पर्य्यायेण रणभारोद्वहनम् । वहेः पर्य्याये धात्वर्थ-

* अत्र "हतद्विपनगष्ठ्यूतरुधिराम्बुनदाकुले" इत्यत्र रुधिरस्य अम्बुत्वारोपः द्विपस्य नगत्वारोपे कारणम् इति परम्परितरूपकम् ।

प्रनृत्तशववित्रस्ततुरगाक्षिप्तसारथौ ।
मारुतापूर्णतूणीरविक्रुष्टहतसादिनि ॥ २६ ॥

निर्देशे ण्वुल् वक्तव्य:। वाहिकया क्रमप्रासरणक्रियया सुष्ठु शोभनं यथा तथा अश्वकान् परानाजिहीते अभियुङ्क्ते, योजयतीति यावत्, वाहिकाश्वकाहा:, तस्मिन्। योद्‌धर्मो युद्धे उपचर्य्यते। "ओहाङ् गतौ" इति धातो: विच्प्रत्यय:। सोमपा-शब्दवत् प्रक्रिया। [वा] वाशब्दश्चार्थे। कं मदोदकमाकिरन्ति इति काकारा: मदस्राविण:। किरतेराङ्पूर्वात् कर्मण्यण्। एवंविधा इभभरा गजघटा यत्र तस्मिन् [काकारेभभरे]। [काका] इव काका: गर्ह्या इति लक्षणया तेषाम् आमन्त्रणम्। [निरभभव्यव्यभस्वनि] निरभा: निरुत्साहा: भव्या: सोत्साहा: तान् उभयान् व्ययन्ति संवृणवन्ति इति निरभभव्यव्या:। "व्येञ् संवरणे।" "आतोऽनुपसर्गे क:" (३।२।२ पा०)। तै: वभस्ति भासते इति निरभभव्यव्यभस्वान्, तस्मिन्। "अन्येभ्योऽपि दृश्यते" (३।२।१७८ पा०) इति क्वनिप्। सर्वतोभद्रम्। सर्वतो भ्रमणात् सर्वतोभद्राख्यश्चित्रबन्ध:। यथाह दण्डी।— "तदिदं सर्वतोभद्रं भ्रमणं यदि सर्वत:" इति। उद्धारस्तु।— "चतुष्कोष्ठे चतुरङ्गबन्धक्रमेण आद्यपङ्क्तिचतुष्टये पादचतुष्टयं विलिख्य अनन्तरपङ्क्तिचतुष्टयेऽपि अध:क्रमेण पादचतुष्टयलेखने प्रथमासु चतसृषु पङ्क्तिषु प्रथम: पाद: सर्वतो वाच्यते. द्वितीयादिषु द्वितीय इत्यादि। इति ॥ २५ ॥

प्रनृत्तेति।—[प्रनृत्तशववित्रस्ततुरगाक्षिप्तसारथौ] प्रनृत्तशवेभ्यो नृत्यत्कबन्धेभ्यो वित्रस्तै: क्षुभितै: तुरगै: आक्षिप्ता अवधूता: सारथयो यत्र तस्मिन्। तथा [मारुतापूर्णतूणीर-

स स त्त्व र ति दे नि त्यं
स द रा म र्ष ना शि नि ।
त्व रा धि क क सं ना दे
र म क त्व म क र्ष ति ॥ २७ ॥

इति अर्द्धभ्रमकः ।

आसुरे लोकवित्रासविधायिनि महाहवे ।
युष्माभिरुन्नतिं नीतं निरस्तमिह पौरुषम् ॥२८॥

कुलकम् ।

विक्रुष्टहतसादिनि ] मारुतेन आपूर्णैः व्याप्तैः तूणीरैः निषङ्गैः विक्रुष्टाः शब्दायमानाः हताः ताड़िताः सादिनस्तौरङ्गिका यत्र तस्मिन् । यद्वा विक्रुष्ट इति पाठे—मारुतापूर्णतूणीरैः विक्रुष्टा आकर्षिता, अत एव हता मारिताः सादिनोऽश्ववारा यत्र तस्मिन् ॥ २६ ॥

ससत्त्वेति ।—[ ससत्त्वरतिदे ] ससत्त्वानां सत्त्ववतां रतिदे रागप्रदे [ नित्यं, सदरामर्षनाशिनि ] सदराणां सभयानाम् अमर्षनाशिनि क्रोधहारिणि [ त्वराधिककसन्नादे ] त्वरया उत्साहेन अधिकं कसन्तो विकसन्तो नादाः यत्र तस्मिन् । रमयति इति रमकः । रमधातोः वुञ् । तस्य अकादेशः तद्भावो [ रमकत्वम् ] रणकर्मणा पररञ्जकत्वम् [अकर्षति] अपनुदति । वीराणां परस्परम् उत्साहं रणकर्मणा स्फोरयति इत्यर्थः । अर्द्धभ्रमकः ॥ २७ ॥

आसुर इति ।—एवंविधे [ आसुरे] असुरसम्बन्धिनि [लोक-

इति शासति सेनान्यां गच्छतस्ताननेकधा।
निषिध्य हसता किञ्चित् तस्थे तत्रान्धकारिणा ॥२९

निरौष्ठ्यम्।

मुनीषुदहनातप्तान् लज्जया निविवृत्सतः।
शिवः प्रह्लादयामास तान्निषेधहिमाम्बुना ॥३०॥

दूनास्तेऽरिबलादूना निरेभा बहु मेनिरे।
भीताः शितशराभीताः शङ्करं तत्र शङ्करम् ॥३१॥

पादाद्यन्तयमकम्।

---

विलासविधायिनि ] लोकभयङ्करे [ महाहवे ] महायुद्धे [युष्माभिः, उन्नतिं ] वृद्धिं [ नीतं ] प्रापितं [ पौरुषं ] पुरुषकर्म [ निरस्तं ] नाशितम् [ इह ] संग्रामे ॥ २८ ॥

इतीति।—[ इति ] इत्थं [ सेनान्यां ] स्कन्दे [ शासति ] आज्ञापयति [ अनेकधा गच्छतः ] पलायमानान् [ तान् ] गणान् [ निषिध्य ] निवार्य्य [ अन्धकारिणा ] हरेण [ किञ्चित् हसता, तस्थे ] स्थितम्। भावे लिट्। निरौष्ठ्यम् ॥ २९ ॥

मुनीति।—[ मुनीषुदहनातप्तान् ] मुनेरिषव एव दहनस्तेन आतप्तान् पीड़ितान् तथा [ लज्जया ] रणभङ्गात् शालीनत्वेन [ निविवृत्सतः ] निवर्त्तितुकामान्। "वृद्भ्यः स्यसनोः" (१।३।९२ पा०) इति विकल्पात् परस्मैपदम्। [ तान् ] गणान् [ शिवः, निषेधहिमाम्बुना ] निषेधः मा भैष्ट मा पलायध्वमिति निवारणवचनं, स एव हिमाम्बु शीतोदकं, तेन, [ प्रह्लादयामास ]। रूपकालङ्कारः ॥ ३० ॥ *

दूना इति।—[दूनाः] परितप्ताः। "ल्वादिभ्यः" (८।२।४४ पा०)

---

* अत्र परम्परितरूपकम्।

महेषुजलधौ शत्रोर्वर्त्तमाना दुरुत्तरे।
प्राप्य पारमिवेशानमाशश्वास पताकिनी ॥ ३२ ॥
स बभार रणापेतां चमूं पश्चादवस्थिताम्।
पुरःसूर्य्यादपावृत्तां छायामिव महातरुः ॥३३॥

---

इति निष्ठानत्वम्। [अरिबलात्] शत्रुबलात् [जनाः] जनबलाः। "पञ्चमी विभक्ते" (२।३।४० पा०) इति पञ्चमी। [निरेभा] निःशब्दाः। कुतः? [भीताः] त्रस्ताः। कुतः? यतः [शितशराभीताः] शितैः तीक्ष्णैः शरैः अभीताः अभिव्याप्ताः। इणः कर्मणि क्तः। [ते] गणाः [तत्र] रणे [शङ्करम्] अभयवचनेन सुखकरं [शङ्करं] शिवं [बहु] यथा तथा [मेनिरे] अमन्यन्त। पादाद्यन्तयमकम् ॥ ३१ ॥

महेष्विति।—[दुरुत्तरे] दुस्तरे [शत्रोः] सम्बन्धिनि [महेषुजलधौ] महति बाणसागरे [वर्त्तमाना, पताकिनी] सेना [ईशानं] शिवं [पारं] परतीरम् [इव]। "पारावारे परार्वाची" इत्यमरः। [प्राप्य, आशश्वास] प्राणिति स्म ॥३२॥ *

स इति।—[स] शिवः [रणापेतां] रणादपवृत्तां पराङ्मुखीभूताम् अत एव [पश्चात्] पृष्ठभागे [अवस्थितां चमूम्]। पुरः अग्रे स्थितः सूर्य्यः पुरःसूर्य्यः। रणोपमानमेषः। सूर्य्यकिरणः इत्यर्थः, तस्मात् [पुरःसूर्य्यात्, अपावृत्तां] परावृत्तां [छायां महातरुः इव बभार]। छायां तरुः इव आत्मैकशरणां तां चमूं न मुमोच इत्यर्थः ॥ ३३ ॥ †

---

* अत्र उपमानोपमेयसाधारणधर्म्मसम्बन्धात् उपमालङ्कृतिः।

† अत्रापि सादृश्यादिधर्म्मसम्बन्धिनी उपमालङ्कृतिः।

मुञ्चतीशे शरान् जिष्णौ पिनाकस्वनपूरितः ।
दध्वान ध्वनयन्नाशाः स्फुटन्निव धराधरः ॥३४॥

तद्गणा ददृशुर्भीमं चित्रसंस्था इवाचलाः ।
विस्मयेन तयोर्युद्धं चित्रसंस्था इवाचलाः ॥३५॥

द्विचतुर्थयमकम् ।

परिमोहयमाणेन शिक्षालाघवलीलया ।
जैष्णवी विशिखश्रेणी परिजह्ने पिनाकिना ॥३६॥

मुञ्चतीति ।—[ ईशे ] हरे कर्त्तरि [ जिष्णौ ] अर्जुने विषये [ शरान् मुञ्चति ] सति [ पिनाकस्वनपूरितः ] पिनाकस्य शिवकार्मुकस्य स्वनेन ध्वनिना पूरितः [ धराधरः ] इन्द्रकीलः [ स्फुटन्निव] विदीर्य्यमाण इव इत्युत्प्रेक्षा । [ आशाः ] दिशः [ ध्वनयन् ] शब्दयुक्ताः कुर्वन् [ दध्वान ] शब्दमकरोत् । "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः ॥३४॥

तदिति ।—[भीमं, तयोः ] हरपाण्डवयोः [ तत् ] प्रसिद्धं [ युद्धं, गणाः ] प्रमथाः [चित्रसंस्थाः] चित्राकाराः [अचलाः ] शैलाः [ इव ]। तथा चित्रे आलेख्ये संस्था स्थितिः येषां ते [ चित्रसंस्थाः ] चित्रलिखिताः [ इव अचलाः ] आश्चर्य्यवशात् निश्चलाः सन्तो [विस्मयेन ददृशुः]। द्विचतुर्थयमकम् ॥ ३५ ॥ *

परीति ।—[ शिक्षालाघवलीलया ] अभ्यासपाटवातिशयेन हेतुना [परिमोहयमाणेन] व्यामोहयता । "अणावकर्मकाच्चित्तवत्कर्त्तृकात्" (१।३।८८ पा०) इति परस्मैपदे प्राप्ते "न पादमि" (१।३।८९ पा० ) इत्यादिना तत्प्रतिषेधात् आत्मनेपदं शानच् ।

---

* पूर्व्वपरार्द्धयोः भासयतोः उपमालङ्कारयोर्योगात् साङ्कर्य्यम् ।

अवद्यन् पत्रिणः शम्भोः सायकैरवसायकैः ।
पाण्डवः परिचक्राम शिक्षया रणशिक्षया ॥३७॥
आद्यन्तयमकम् ।

चारचुञ्चुः चिरारेची चञ्चच्चीररुचा रुचः ।
चचार रुचिरः चारु चारैराचारचञ्चुरः ॥ ३८ ॥
द्व्यक्षरः ।

"क्षोर्विभाषा" ( ८।४।३० पा० ) इति कृत्स्थस्य नस्य वा णत्वम् । [ पिनाकिना ] हरेण जिष्णोः अर्जुनस्य इयं, [जैष्णवी, विशिख-श्रेणी ] बाणसङ्घातः [ परिजह्रे ] निरस्ता ॥ ३६ ॥ *

अवद्यन्निति ।—[ पाण्डवः ] अर्जुनः [ अवसायकैः ] अवसानकरैः । स्यतेर्ण्यन्तात् ण्वुल्प्रत्ययः । [ सायकैः ] बाणैः [ शम्भोः, पत्रिणः ] शरान् [ अवद्यन् ] खण्डयन् । द्यतेः शतृप्रत्ययः । "ओतः श्यनि" ( ७।३।७१ पा० ) इति ओकारलोपः । [शिक्षया ] शक्तुं प्रभवितुमिच्छया, उत्साहेन इत्यर्थः, [ रणशिक्षया ] रणे शिक्षया अभ्यासेन च [ परिचक्राम ] । उत्साहनैपुण्याभ्यां चचार इत्यर्थः । आद्यन्तयमकम् ॥ ३७ ॥

चारेति ।—चारैः गतिविशेषैः वित्त इति [ चारचुञ्चुः ] । "तेन वित्तश्चुञ्चुप्चणपौ" ( ५।२।२६ पा० ) इति चुञ्चुप्प्रत्ययः । चिरमारेचयति रिक्तीकरोति शत्रून् इति [ चिरारेची । चञ्चच्चीररुचा ] चञ्चतः चलतश्चीरस्य वल्कलस्य रुचा प्रभया । रोचते इति [ रुचः ] शोभमानः । "इगुपध" ( ३।१।१३ पा० ) इति

---

* असाधारणशिक्षाविकाशपाटवाद्धेतोः व्यामोहयता प्रतिभटं दर्शकांश्च इति पदार्थ-[illegible] ।

स्फुरत्पिशङ्गमौर्वीकं धुनानः स बृहद्धनुः ।
धृतोल्कानलयोगेन तुल्यमंशुमता बभौ ॥ ३९ ॥
पार्थबाणाः पशुपतेरावव्रुर्विशिखावलीम् ।
पयोमुच इवारब्धाः सावित्रीमंशुसंहतिम् ॥४०॥

कः । [ रुचिरः ] सुन्दरः । [ आचारचंचुरः ] चंचूर्यते भृशं चरतीति चंचुरः । चरतेर्यङन्तात् पचाद्यच् । "चरफलोश्च" (७।४।८७ पा०) इति नुमागमः । "यङोऽचि च" (२।४।७४ पा०) इति यङो लुक् । आचारस्य शुद्धव्यवहारस्य चंचुरो भृशम् आचरितः स मुनिः [ चारु ] यथा तथा [ चारैः ] चक्रादिबन्धैः गतिविशेषैः [ चचार ] । "चारः पियालवृक्षे स्याद्गतौ बन्धापसर्पयोः" इति विश्वः । द्व्यक्षरः ॥ ३८ ॥ *

स्फुरदिति ।—[ सः ] मुनिः अर्जुनः [स्फुरत्पिशङ्गमौर्वीकं] स्फुरन्ती पिशङ्गी पिशङ्गवर्णा मौर्वी ज्या यस्य तत् तथोक्तम् । "नद्यृतश्च" ( ५।४।१५३ पा० ) इति कप्प्रत्ययः । [ बृहद्धनुः ] गाण्डीवं [ धुनानः ] कम्पयन् । [ धृतोल्कानलयोगेन ] उल्केव अनलः, तेन धृतो योगो येन तेन [ अंशुमता ] अर्केण, सूर्येण इत्यर्थः, [ तुल्यं बभौ ] । उपमा ॥ ३९ ॥

पार्थेति ।—[ पार्थबाणाः] अर्जुनशराः [पशुपतेः विशिखावलीं ] शरसङ्घातम् । [ सावित्रीं ] सवितुरियं सावित्री ताम् [ अंशुसंहतिं ] किरणसमूहम् [ आरब्धाः ] निविडाः [ पयोमुचः ] मेघाः [ इव, आवव्रुः ] तिरोदधुः ॥ ४० ॥ †

* अत्र "सन्धिस्तु पुरुषेच्छया" इति मतमवलम्बनीयम् ।

† अत्रोपमानादिपदार्थनिबन्धना उपमा ।

शरवृष्टिं विधूयोर्वीमुदस्तां सव्यसाचिना ।
रुरोध मार्गणैर्मार्गं तपनस्य त्रिलोचनः ॥ ४१ ॥

तेन व्यातेनिरे भीमा भीमार्जनफलानना: ।
न नानुकम्प्य विशिखाः शिखाधरजवाससः ॥४२॥

शृङ्खलायमकम् ।

द्युवियद्गामिनी तारसंरावविहतश्रुतिः ।
हैमीषुमाला शुशुभे विद्युतामिव संहतिः ॥४३॥

गूढ़चतुर्थपादः ।

---

शरेति ।—[ त्रिलोचनः ] शिवः । सव्येन सचते समवैतीति तेन [ सव्यसाचिना ] अर्जुनेन [ उदस्तां ] क्षिप्ताम् [ उर्वीं ] महतीं [ शरवृष्टिं, मार्गणैः ] शरैः [विधूय ] निरस्य [तपनस्य] रवेः [मार्गं, रुरोध ] आवव्रे ॥ ४१ ॥ *

तनेति ।—[ तेन] शिवेन [ भीमाः ] भयङ्कराः, तथा भियो भयस्य मार्जनं निरासः तदेव फलं प्रयोजनं येषां तानि आननानि अग्राणि येषां ते [भीमार्जनफलाननाः]। तथा शिखाधराः मयूराः तेषु जातानि शिखाधरजानि बर्हाणि तानि वासांसीव वासांसि पत्रा येषां ते [ शिखाधरजवाससः ] मयूरपक्षिण इत्यर्थः। [ विशिखाः ] वाणाः [ अनुकम्प्य ] कृपां कृत्वा [ न व्यातेनिरे] इति [न] किन्तु पनुकम्प्यैव इत्यर्थः। अनुजिघृक्षुत्वात् इति भावः। "सम्भाव्यनिषेधने द्वौ प्रतिषेधौ" इत्युक्तम्। शृङ्खलायमकम् ॥ ४२ ॥ †

द्युवियदिति ।— द्यां स्वर्गं वियत् अन्तरिक्षं च गच्छति इति

---

* अत्र रविमार्गावरोधासम्बन्धेऽपि सम्बन्धप्रतिपादनात् असम्बन्धे सम्बन्धरूपातिशयोक्तिः ।

† अत्र शिखाधरजानि वासांसीव इत्युपमालङ्कारसंसृष्टं शृङ्खलायमकम् ।

विलङ्घ्य पत्रिणां पङ्क्तिं भिन्नः शिवशिलीमुखैः ।
ज्यायो वीर्य्यमुपाश्रित्य न चकम्पे कपिध्वजः॥४४॥
जगतीशरणे युक्तो हरिकान्तः सुधासितः ।
दानवर्षी कृताशंसो नागराज इवाबभौ ॥४५॥

अर्थत्रयवाची ।

[ द्युवियद्गामिनी ] ते इव व्यापिनी । द्वितीयाप्रकरणे श्रितादिषु गम्यादीनाम् उपसङ्ख्यानात्समासः । * [तारसंरावविहतश्रुतिः ] तारेण उच्चैस्तरेण संरावेण नादेन विहताः ताड़िताः विद्धाः इति यावत्, श्रुतयः कर्णा यया सा तथोक्ता । [ हैमीषुमाला ] हैमी हेममयी इषुमाला शिवशरावलिः [ विद्युतां संहतिरिव ] उक्तविशेषणा विद्युन्माला इव [ शुशुभे ]। चतुर्थपादवर्णानां त्रिपाद्यां सम्भवात् गूढ़चतुर्थपादमाहुः ॥ ४३ ॥ †

विलङ्घ्येति ।—[शिवशिलीमुखैः पत्रिणां पङ्क्तिं ] निजशरावलिं [ विलङ्घ्य ] अतिक्रम्य [ भिन्नः ] विद्धः [ कपिध्वजः] अर्ज्जुनः [ज्यायः] प्रशस्तम् । "वृद्धप्रशस्ययोर्ज्यायान्" इत्यमरः । [वीर्य्यं] सत्त्वम् [उपाश्रित्य] अवलम्ब्य [न चकम्पे ] न चचाल ; किन्तु तान् सहमानः अवतस्थे इत्यर्थः ॥ ४४ ॥

जगतीति ।—अर्थत्रयवाची श्लोकोऽयम् । तत्र आदौ "अगराजः" इति पदच्छेदमाश्रित्य प्रथमोऽर्थोऽभिधीयते ।—[ईशरणे] ईशस्य रणे [युक्तः] शक्तः । अन्यत्र—जगतीशरणे भूरक्षणे युक्तः

* "द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति २।१।२४ पा० सूत्रे "गम्यादीनामुपसंख्यानम्" इति वार्त्तिकेन सिद्धम् ।

† अत्र गूढ़चतुर्थपादः विद्युतां संहतिरिव इत्युपमालङ्कारेण संसृज्यते ।

स्थित: ; विधिना इति शेष: । [हरिकान्त: ] हरि: सिंह: इव कान्त: मनोहर: । अन्यत्र—हरीणां सिंहानां कान्त: आवासदानात् प्रिय: । [ सुधासित: ] सुष्ठु दधाति पालयति प्रजा इति सुधा: । क्विबन्त: । असित: कृष्णवर्ण:, ततो विशेषणसमास: । अन्यत्र—सुधा लेपद्रव्यविशेष:, तद्वत् सितो धवल: । [दानवर्षी] बहुप्रद: [कृताशंस:] कृतजयाभिलाष: । अन्यत्र—दानवै: दैत्यै: ऋषिभि: इना कामेन च कृता आशंसा नानाफलाभिलाषो यस्मिन् स: [ना] नरोऽर्जुन: । [अगराज:] हिमवान् [इव, जगति, आबभौ] । इति एकोऽर्थ: ॥ * * *॥ (१) [ अथ ऐरावतसाम्यमुच्यते ।—जगतीशरणे जगतीं भुवं शृणन्ति तनूकुर्वन्तीति ते जगतीशा: राक्षसा:, तेषां रण: तत्र युक्त: विहित:, समर्थ: इत्यर्थ: । हरिकान्त: इन्द्रप्रिय:, उभयत्रापि समानमेतत् । सुधासित: अमृतस्वच्छ: । एकत्र—शीतल:, अन्यत्र—वर्णत इति विवेक: । दानवर्षी धनप्रदो मदस्रावी च । कृताशंस: उभयत्र कृतजिगीष: । पार्थ: नागराज इव ऐरावत इव, आबभौ इति द्वितीयोऽर्थ: ॥ * * * ॥ ( २ ) अथ शेषौपम्यमुच्यते ।—जगतीशरणे भूरक्षणे युक्तो नियुक्त:, दैवेनेति शेष: । "शरणं गृहरक्षित्रो:" इत्यमर: । हरिकान्त: कृष्णप्रिय:, उभयत्रापि तुल्यम् । सुधासित: सुष्ठु दधातीति सुधा, वसुधा इति केचित् ; एकदेशग्रहणात् समुदायग्रहणम् । तत्र सितो बद्ध: । "षिञ् बन्धने" क्त: । अन्यत्र—सुधया अमृतेन सितो बद्ध:, अमृतप्रिय इत्यर्थ: । दानवर्षी दानवाश्च ऋषयश्च दूर्लक्ष्मीश्च ते: कृताशंसो विहितप्रशंस:, उभयत्रापि तुल्यमेतत् । सोऽर्जुन: नागराज: शेष इव आबभौ इति तृतीयोऽर्थ: ॥ * * * ॥ (३) ॥ ४५ ॥ *

* अत्र श्लेषसंकीर्णोपमालङ्कृति: अर्थत्रयवैचित्र्यानुषङ्गिणी इति वस्तुस्थिति:।

विफलीकृतयत्नस्य क्षतबाणस्य शम्भुना।
गाण्डीवधन्वनः खेभ्यो निश्चक्राम हुताशनः ॥४६॥

स पिशङ्गजटावलिः किरन्
उरु तेजः परमेण मन्युना।
ज्वलितौषधिजातवेदसा
हिमशैलेन समं विदिद्युते ॥ ४७ ॥

शतशो विशिखानवद्यते
भृशमस्मै रणवेगशालिने।

---

विफलेति।—[ शम्भुना क्षतबाणस्य ] अत एव [ विफलीकृतयत्नस्य] निष्फलप्रयत्नस्य, गाण्डीवं धनुः यस्य तस्य [गाण्डीवधन्वनः ] अर्जुनस्य। "वा संज्ञायाम्" (५।४।१३४ पा०) इत्यनङादेशः। [खेभ्यः] इन्द्रियरन्ध्रेभ्यः। "खमिन्द्रिये सुखे स्वर्गे" इति विश्वः। [ हुताशनः ] अग्निः [ निश्चक्राम ] निष्क्रान्तः, क्रोधादिति भावः ॥ ४६ ॥ *

स इति।—[ पिशङ्गजटावलिः ] पिशङ्गजटाजूटः [ परमेण ] उत्कृष्टेन [ मन्युना ] क्रोधेन [ उरु ] महत् [तेजः, किरन् ] विक्षिपन् [ सः ] अर्जुनः [ ज्वलितौषधिजातवेदसा ] ज्वलिताः ओषधयः तृणज्योतींषि जातवेदाः दवाग्निश्च यस्मिन् तेन [ हिमशैलेन, समं ] तुल्यं, हिमाद्रिरिव [ विदिद्युते ] हिमाद्रिवत् शुशुभे इति बिम्बप्रतिबिम्बभावोपमा ॥ ४७ ॥ †

शतश इति।—[ शिवः शतशः विशिखान्, अवद्यते] खण्ड-

---

* अत्रासम्बन्धे सम्बन्धसमन्वयादतिशयोक्तिः। विफलीकृतयत्नस्य इति हेतुमद्भावकल्पनात् पदार्थहेतुकं काव्यलिङ्गञ्च इत्युभयोः अङ्गाङ्गिभावः।

† औपच्छन्दसिकं वृत्तम्।

प्रथयन्ननिवार्य्यवीर्य्यतां
प्रजिघायेषुमघातुकं शिवः ॥ ४८ ॥
शम्भोर्धनुर्मण्डलतः प्रवृत्तं
तं मण्डलादंशुमिवांशुभर्त्तुः ।
निवारयिष्यन् विदधे सिताश्वः
शिलीमुखच्छायवृतां धरित्रीम् ॥ ४९ ॥

यते [ रणवेगशालिनि ] रणसंरम्भशोभिनि [ अस्मै ] पार्थाय [भृशम्] अत्यर्थम् [अनिवार्य्यवीर्य्यतां] निजाम् इति शेषः । [प्रथयन्] तस्मै दर्शयन् । किन्तु [अघातुकम्] अमारकम् । "लषपत" (३।२।१५४ पा०) इत्यादिना उकञ् । [इषुं] जातौ एकवचनम् । [प्रजिघाय] प्रयुयुजे । "हि गतौ" इति धातोर्लिट् । "हेरचङि" (७।३।५६ पा०) इति कुत्वम् ॥ ४८ ॥

शम्भोरिति ।—[सिताश्वः] अर्जुनः [शम्भोः धनुर्मण्डलतः] धनुर्वलयात् [प्रवृत्तं] निष्क्रान्तं [तम्] इषुम् । [अंशुभर्त्तुः] अर्कस्य [मण्डलात्] प्रवृत्तम् [अंशुम् इव] । अत्रापि इषुवज्जातौ एकवचनम् । [निवारयिष्यन्] निवारयितुकामः । क्रियार्थक्रियायां लृटि तस्य शत्रादेशः ।* [धरित्रीं] भुवं [शिलीमुखच्छायवृतां] शिलीमुखानां छाया शिलीमुखच्छायम् । "छाया बाहुल्ये" (२।४।२२ पा०) इति नपुंसकत्वम् । तेन वृतां व्याप्तां [विदधे] कृतवान् । शरजालच्छायावृतां धरित्रीम् अकरोत् इत्यर्थः । उपमालङ्कारः ॥ ४९ ॥ †

---

* "लृट् शेषे च" (३।३।१३ पा०) "भविष्यदर्थाद्धातोर्लृट् स्यात् । क्रियार्थायां क्रियायामसत्यां सत्यां च" इति वृत्तिः ।

† अत्र पूर्वार्द्धोत्तरार्द्धस्थयोः उपमातिशयोक्त्योः संसृष्टिः स्वतन्त्रसंस्थानावस्थानात् । वृत्तमुपजातिः

घनं विदार्य्यार्जुनबाणपूगं
ससारबाणोऽयुगलोचनस्य ।
घनं विदार्य्यार्जुनबाणपूगं
ससार बाणोऽयुगलोचनस्य ॥ ५० ॥

अर्द्धावलिः ।

रुजन् महेषून् बहुधाशुपातिनो
मुहुः शरौघैरपवारयन् दिशः ।

घनमिति ।—[ अयुगलोचनस्य ] विषमनेत्रस्य ईशस्य, [ अलोचनस्य ] लोच्यतेऽसौ लोचनः । कर्मणि ल्युट् । न लोचनः अलोचनः तस्य अलोचनस्य अचाक्षुषज्ञानविषयस्य सम्बन्धी ; सारो बलं वाणः शब्दः ताभ्यां सारवाणाभ्यां सह वर्त्तते इति [ ससारवाणः ] । बवयोरभेद इत्युक्तम् । * न युज्यते कुत्रापीति [ अयुक् ] सङ्गरहितः । क्विप् । [ बाणः ] शरः । जातौ एकवचनम् । [ घनं ] सान्द्रम् [ अर्जुन-बाणपूगम् ] अर्जुनस्य बाणपूगं शरव्रातं [ विदार्य्य ] विभिद्य [ घनं ] निविडम् । विदार्य्या भूमिकूष्माण्ड्यो लताविशेषाः, अर्जुनाः ककुभवृक्षाः, बाणा नीलसैरेयकाः, पूगाः क्रमुकाः तेषाम् । "विभाषा वृक्ष" ( २।४।१२ पा० ) इत्यादिना द्वन्द्वैक-वद्भावः । [ विदार्य्यार्जुनबाणपूगं, ससार ] विवेश इत्यर्थः । "सृ गतौ" । यद्वा—तदानीमेव युगलोचनस्य अर्जुनस्य बाणः ससार इत्यर्थः ॥ ५० ॥

रुजन्नित्यादि ।—[ बहुधा, आशुपातिनः ] शीघ्रम् आपततो [महेषून् मुहुः शरौघैः, रुजन्] भञ्जयन् । तथा [दिशः] च [अप-

---

* "यमकादौ भवेदैक्यं डलोः बवोः लरोः तथा" इति दर्पणकारः ।

चलाचलोऽनेक इव क्रियावशात्
महर्षिसङ्घैर्बुबुधे धनञ्जयः॥ ५१ ॥

विकाशमीयुर्जगतीशमार्गणा
विकाशमीयुर्जगतीशमार्गणाः।
विकाशमीयुर्जगतीशमार्गणा
विकाशमीयुर्जगतीशमार्गणाः॥ ५२ ॥

महायमकम्।

---

वारयन् ] आच्छादयन् [ क्रियावशात् ] युद्धकर्मायत्ततया [ चलाचलः] अतिचञ्चलः [ धनञ्जयः ] अर्जुनः [महर्षिसङ्घैः, अनेकः ] बहुविधः [ इव, बुबुधे ] ददृशे ॥ ५१ ॥ *

विकाशमिति।—[जगतीशमार्गणाः ] जगतीशस्य पृथिवीपतेः अर्जुनस्य मार्गणा बाणाः [विकाशं] प्रसारम् [ईयुः]। तथा [जगति] लोके [ईशमार्गणाः] शम्भुशराः [विकाशं] विषमगतिम् [ ईयुः ] भङ्गं प्रापुः इत्यर्थः। तथा जगतीं पृथ्वीं श्यन्ति तनूकुर्वन्तीति जगतीशाः दानवाः। "आतोऽनुपसर्गे कः" (३।१।१३६ पा० ) तान् मारयन्तीति जगतीशमारः। म्रियतेर्ण्यन्तात् क्विप्। ते च ते गणाः [ जगतीशमार्गणाः ] प्रमथाश्च [ विकाशम् ] उल्लासम् [ईयुः] हर्षं प्रापुः इत्यर्थः। अहो देवेऽपि अस्य पराक्रमप्रसर इति विस्मयात् इति भावः। तदानीं [जगतीशमार्गणाः] मार्गयन्तीति मार्गणाः अन्वेषकाः। कर्त्तरि ल्युट्। जगतीशस्य त्रैलोक्यनाथस्य मार्गणाः अन्वेषकाः शिवद्रष्टारो देवर्ष्यादयः; वीनां पक्षिणां काशो गतिः अत्र

* अत्रानेकत्वाभावेऽप्यनेकत्वसम्भावनया उत्प्रेक्षा वाच्या।

सम्पश्यतामिति शिवेन वितायमानं
लक्ष्मीवतः क्षितिपतेस्तनयस्य वीर्य्यम् ।
अङ्गान्यभिन्नमपि तत्त्वविदां मुनीनां
रोमाञ्चमञ्चिततरं बिभराम्बभूवुः ॥ ५३ ॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये युद्धवर्णनं
नाम पञ्चदशः सर्गः ॥ १५ ॥

इति [ विकाशम् ] आकाशम् [ ईयुः ] ; दिदृक्षया इति भावः । महायमकम् ॥ ५२ ॥ *

सम्पश्यतामिति ।—[ इति ] इत्थं [ शिवेन, वितायमानं ] विस्तार्य्यमाणम् । "तनोतेर्यकि" ( ६।४।४४ पा० ) इति वैकल्पिक आकारादेशः । [लक्ष्मीवतः] जयश्रीमतः । "मादुपधायाः" ( ८।२।९ पा० ) इत्यादिना मतुपो मस्य वकारः । [ क्षितिपतेः तनयस्य ] अर्जुनस्य [ वीर्य्यं ] शौर्य्यं [ सम्पश्यतां तत्त्वविदाम् अपि] हरेः अंशावतारोऽयमिति विदुषाम् अपि ; किमुत अन्येषाम् ? इति भावः । [मुनीनाम् अङ्गानि] गात्राणि [अभिन्नम्] अविरलम् [ अञ्चिततरम् ] अतिरुचिरं [ रोमाञ्चं ] रोमहर्षं [बिभराम्बभूवुः] बभ्रुः । "भीह्री" ( ३।१।३९ पा० ) इत्यादिना विकल्पात् आमप्रत्ययः ॥ ५३ ॥ †

इति श्रीमहामहोपाध्याय कोलाचल-मल्लिनाथ-सूरि-विरचितायां किरातार्जुनीयकाव्य-व्याख्यायां घण्टापथसमाख्यायां पञ्चदशसर्गव्याख्या ।

* वंशस्थं वृत्तम् ।

† अत्र तत्त्वदर्शिनां भगवदंशावतारं विजानतामपि विस्मयकारणाभावेऽपि अप्रमेयोत्कर्षदर्शनविस्मयाविर्भावेण रोमाञ्चोदयः इति विभावनालङ्कारः । तल्लक्षणम्—"विभावना विना हेतुं कार्य्योत्पत्तिः यदुच्यते ।" इति । वसन्ततिलकं वृत्तम् ।

# षोड़शः सर्गः ।



ततः किरातधिपतेरलघ्वीम्
आजिक्रियां वीक्ष्य विवृद्धमन्युः ।
स तर्कयामास विविक्ततर्कः
चिरं विचिन्वन्निति कारणानि ॥ १ ॥
मदस्रुतिश्यामितगण्डलेखाः
क्रामन्ति विक्रान्तनराधिरूढाः ।

तत इति ।—[ ततः ] अनन्तरं [किराताधिपतेः] सम्बन्धिनीम् [ अलघ्वीं ] गुर्वीम् [आजिक्रियां] रणकर्म [वीक्ष्य, विवृद्धमन्युः ] विवृद्धकोपः । [विविक्ततर्कः] विविक्तः निष्कलङ्कः तर्कः ऊहो ज्ञानं वा यस्य [सः] अर्जुनः [चिरं, कारणानि ] रणभराशक्तिकारणानि [ विचिन्वन् ] विमृषन् [ इति ] इत्थं वक्ष्यमाणम् एव [ तर्कयामास ] अभ्यूहितवान् ॥ १ ॥

अथ त्रयोविंशतिश्लोकैः वितर्कमेवाह, मदेत्यादि ।—[इह] अस्मिन् युद्धे [ मदस्रुतिश्यामितगण्डलेखाः ] मदस्रुतिभिः मदप्रवाहैः श्यामाः कृताः इति श्यामिताः गण्डलेखाः कपोलभागा येषां ते [ विक्रान्तनराधिरूढाः ] विक्रान्ताः पराक्रमं कुर्वन्तः । कर्त्तरि क्तः । "शूरो वीरश्च विक्रान्तः" इत्यमरः । तैः नरैः अधिरूढाः [ सहिष्णवः ] रणभरक्षमाः [ युधां ] युद्धानाम् [अभिज्ञाः] शिक्षिता इत्यर्थः । क्रुद्योगात् कर्मणि

सहिष्णवो नेह युधामभिज्ञा
नागा नगोच्छ्रायमिवाक्षिपन्त: ॥ २ ॥
विचित्रया चित्रयतेव भिन्नां
रुचं रवे: केतनरत्नभासा ।
महारथौघेन न सन्निरुद्धा
पयोदमन्द्रध्वनिना धरित्री ॥ ३ ॥

षष्ठी । * किञ्च । [नगोच्छ्रायं] नगानाम् उच्छ्रायं पर्वतानामौन्नत्यम् । घञन्तेन उपसर्गस्य समासो नोपसृष्टात् घञ्प्रत्यय: । "श्रिनीभुवोऽनुपसर्गे" (३।३।२४ पा०) इत्यत्रानुपसर्ग इति निषेधात् । [आक्षिपन्त:] प्रतिषेधयन्त: [इव] स्थिता: ; तथा उन्नता इत्यर्थ: । [नागा:] गजा: [इह] संग्रामे [न क्रामन्ति] न चरन्ति । यथा युद्धान्तरेषु इति शेष: । एवम् उत्तरत्रापि सर्वत्र द्रष्टव्यम् । तथापि कथं मे शक्तिह्रासोऽयम् ? इति सर्वत्र तात्पर्य्यार्थ: ॥ २ ॥ †

विचित्रेति ।—[विचित्रया] नानवर्णया [केतनरत्नभासा] केतनानां रत्नानि तेषां भासा प्रभया [भिन्नां] संवलितां [रवे: रुचं] कान्तिं [चित्रयता इव] विचित्रवर्णां कुर्वतेव स्थितेन इति केतनौन्नत्यनिमित्तेयम् उत्प्रेक्षा । [पयोदमन्द्रध्वनिना] मेघगम्भीरघोषेण [महारथौघेन] महतां रथानामोघेन समूहेन [धरित्री, न सन्निरुद्धा] न आवृता ॥ ३ ॥ ‡

* "कर्त्तृकर्म्मणो: कृति" (२।३।६५ पा०) सूत्रम् ।

† अत्र नागा नगोच्छ्रायम् उत्क्षिपन्त इव स्थिता: इति क्रियोत्प्रेक्षालङ्कृति: ।

‡ अत्र क्रियोत्प्रेक्षा पयोदमन्द्रध्वनिपदोत्थोपमालङ्कारेण संसृष्टा ।

समुल्लसत्प्रासमहोर्मिमालं
परिस्फुरच्चामरफेनपङ्क्ति।
विभिन्नमर्य्यादमिहातनोति
नाश्वीयमाशा जलधेरिवाम्भः॥ ४॥
हताहतेत्युद्धतभीमघोषैः
समुज्झिता योद्धृभिरभ्यमित्रम्।

समुल्लसदिति।—[इह] युद्धे प्रासाः कुन्ताः। "प्रासस्तु कुन्तः" इत्यमरः। ते महोर्मय इव, तेषां मालाः समुल्लसन्त्यो यत्र तत् [समुल्लसत्प्रासमहोर्मिमालम्। परिस्फुरच्चामरफेनपङ्क्ति] चामराणि फेना इव चामरफेनाः, तेषां पङ्क्तयः परिस्फुरन्त्यः यत्र तत्तथोक्तम्। [अश्वीयम्] अश्वसमूहः। * "वृन्दे त्वश्वीयमाश्ववत्" इत्यमरः। [जलधेः अम्भ इव विभिन्नमर्य्यादम्] उच्छृङ्खलं यथा तथा [आशा] दिशः [न आतनोति] न आवृणोति॥ ४॥ †

हतेति।—[हताहतेत्युद्धतभीमघोषैः] हत प्रहरत, आहत विध्यत। हन्तेर्लोट् मध्यमपुरुषबहुवचनम्। "अनुदात्तोपदेश" (६।४।३७ पा०) इत्यादिना अनुनासिकलोपः। आहतेत्यत्र कर्मणः प्रयोगासद्भावेऽपि हन्तेः स्वाभाविकसकर्मकत्वस्य अनपायात्, अकर्मकत्वस्य च तत्र विवक्षितत्वेन कर्मणिहत्या एव तन्निवृत्तेः "आङो यमहनः" (१।३।२८ पा०)

* "केशाश्वाभ्यां यञ्छावन्यतरस्याम्" (४।२।४८ पा०) इति छः।

† अत्र जलधेः अम्भ इव अश्वीयं न आतनोति इति उपमालङ्कृतिः।

न हेतयः प्राप्ततड़िच्त्विषः खे
विवस्वदंशुज्ज्वलिताः पतन्ति ॥ ५ ॥
अभ्यायतः सन्ततधूमधूम्रं
व्यापि प्रभाजालमिवान्तकस्य ।
रजः प्रतूर्णाश्वरथाङ्गनुन्नं
तनोति न व्योमनि मातरिश्वा ॥ ६ ॥

इति आत्मनेपदम् । * इत्येवमुद्धताः प्रगल्भाः भीमाश्च † घोषा येषां तैः [ योद्धृभिः ] योधैः [ अभ्यमित्रम् ] अमित्रान् अभि, [ समुज्झिताः ] मुक्ताः [ विवस्वदंशुज्ज्वलिताः ] विवस्वतः अंशुभिः, प्रतिफलितैः इति भावः । ज्वलिताः दीपिताः अत एव [ प्राप्ततड़िच्त्विषः ] प्राप्ताः तड़िताः त्विष इव त्विषो याभिः ताः [ हेतयः ] शस्त्राणि [ खे न पतन्ति ] समुल्लसन्त्यो न दृश्यन्ते इत्यर्थः । "हेतिः स्यादायुधे" इति विश्वः ॥ ५ ॥ ‡

अभीति ।—[ अभ्यायतः ] वीरान् हन्तुम् अभ्यागच्छतः । इणः शतृप्रत्ययः । [ अन्तकस्य ] कालस्य सम्बन्धि [ सन्ततधूमधूम्रं ] सन्ततं सततं धूमवत् धूम्रं [ व्यापि ] व्यापकं

---

* अत्रेदं व्याख्यानम्—यदा तु "आङो यमहनः" इति सूत्रेण आङ्पूर्व्वकात् हन्तेः आत्मनेपदप्राप्तिः भवति, तदैव अकर्म्मकत्वविवक्षा करणीया इति मल्लिनाथमतम् । अत्र तु तदभावात् परस्मैपदम् । तस्मात् मल्लिनाथेनोक्तं—"हन्तेः स्वाभाविकसकर्म्मकत्वस्य अनपायात्" इति । वयन्तु—"क्रियासमभिहारे······तध्वमोः" ( ३।४।२ पा० ) इति सूत्रेण 'त' इति मन्यामहे । युद्धचेष्टत्वात् पौनःपुन्यम् अर्थतः आयात्येव, इति दिक् ।

† "भीमादयोऽपादाने" ( ३।४।७४ पा० ) इति बिभेतेर्मक् ।

‡ सूर्य्यांशुज्वलिताः अत एव प्राप्ततड़िच्त्विषः इति पदार्थहेतुकं काव्यलिङ्गमेतत् । प्राप्ततड़िच्त्विषः इत्यत्रोपमालङ्कृतिश्चापि इत्येतयोरङ्गाङ्गित्वम् ।

भूरेणुना रासभधूसरेण
तिरोहिते वर्त्मनि लोचनानाम् ।
नास्त्येव तेजस्विभिरुत्सुकानाम्
अह्नि प्रदोषः सुरसुन्दरीणाम् ॥ ७

रथाङ्गसंक्रीडितमश्वहेषा
बृहन्ति मत्तद्विपबृंहितानि ।

[ प्रभाजालमिव ] स्थितं [ प्रतूर्णाश्वरथाङ्गनुन्नं ] प्रतूर्णैः वेगशालिभिरश्वैः रथाङ्गैः रथचक्रैश्च नुन्नं प्रेरितं [ रजः, मातरिश्वा ] मरुत् [व्योमनि] अन्तरिक्षे [न तनोति] न विस्तारयति ॥६॥ *

भूरेणुनेति ।—[ अत्र ] आहवे [ रासभधूसरेण ] रासभो गर्दभः तद्वत् धूसरेण ईषत्पाण्डुना । "रासभो गर्दभः खरः" "ईषत्पाण्डुस्तु धूसरः" इति चामरः । [ भूरेणुना ] रजसा [ लोचनानां वर्त्मनि ] चक्षुर्मार्गे [ तिरोहिते ] सति [ तेजस्विभिः ] तेजस्विषु वीरेषु [उत्सुकानां] वीरवरणार्थम् आगतानाम् इत्यर्थः । "प्रसितोत्सुकाभ्यां तृतीया च" ( २।३।४४ पा० ) इति विकल्पात् तृतीया । [ सुरसुन्दरीणाम्, अह्नि ] दिवसे एव [ प्रदोषः ] रात्रिमुखं [ नास्ति ] । अन्धकारवत्त्वात् दृष्टेः तिरोधानात् रात्रिभ्रमः स्यात् इति भावः ॥ ७ ॥ †

रथाङ्गेति ।—[ रथाङ्गसंक्रीडितं ] रथचक्रकूजितम् [ अश्वहेषा ] अश्वनाञ्च हेषा ह्रेषितानि शब्दितानि । "अश्वानां हेषा ह्रेषा च निस्वनः" इत्यमरः । [ बृहन्ति ] महान्ति

* अत्र पूर्व्वार्द्धयोरुत्प्रेक्षोपमयोः संसृष्टिः ।

† अत्र रासभधूसरपदोक्तोपमालङ्कृतिः, भ्रमस्य च भ्रान्तिमदलङ्कारः ।

सङ्घर्षयोगादिव मूर्च्छितानि
ह्रादं निगृह्णन्ति न दुन्दुभीनाम् ॥ ८ ॥
अस्मिन् यशःपौरुषलोलुपानाम्
अरातिभिः प्रत्युरसं चतानाम् ।
मूर्च्छान्तरायं मुहुरुच्छिनत्ति
नासारशीतं करिशीकराम्भः ॥ ९ ॥

[ मत्तद्विपबृंहितानि ]। "बृंहितं करिगर्जितम्" इत्यमरः । [ सङ्घर्षयोगात् इव ] परस्परस्पर्द्धासम्बन्धात् इव [ मूर्च्छितानि ] वृद्धिं गतानि सन्ति । "नपुंसकमनपुंसक" ( १।२।७० पा० ) इत्यादिना नपुंसकैकशेषः । [ दुन्दुभीनां ] भेरीणां [ ह्रादं] निर्घोषम् । "स्वाननिर्घोषनिर्ह्रादः" इत्यमरः । [ न निगृह्णन्ति ] न तिरस्कुर्वन्ति ॥ ८ ॥ *

अस्मिन्निति ।—[ अस्मिन् ] रणे [ यशःपौरुषलोलुपानां ] यशःपौरुषयोः लोलुपानां लुब्धानाम् अत एव [ अरातिभिः, प्रत्युरसम्] उरसि । "प्रतेरुरसः सप्तमीस्थात्" (५।४।८२ पा० ) इति समासान्तः । [ चतानां ] विद्धानां मध्ये भिन्नं [ मूर्च्छान्तरायं ] मूर्च्छैव अन्तरायो रणविघ्नः तम् [ आसारशीतं ] वर्षधाराशीतलम् । "धारासम्पात आसारः" इत्यमरः । [ करिशीकराम्भः ] करिणां शीकर एवाम्भः कर्तृ [ मुहुः न उच्छिनत्ति ] न नाशयति ॥ ९ ॥ †

---

* प्रकृतशब्दवर्द्धनकार्यस्य सङ्घ[illegible]योगजन्यत्वोत्प्रे[illegible] हेतूत्प्रेक्षालङ्कारः ।

† अत्र मू[illegible] [illegible] आसारशीतं इत्यंशद्वयस्थितानां रूपकद्वयोपमालङ्काराणां परस्परमङ्[illegible]

असृङ्नदीनामुपचीयमानै:
विदारयद्भिः पदवीं ध्वजिन्याः ।
उच्छ्रायमायान्ति न शोणितौघै:
पङ्कैरिवाश्यानघनैस्तटानि ॥ १० ॥

परिक्षते वक्षसि दन्तिदन्तैः
प्रियाङ्कशीता नभसः पतन्ती ।
नेह प्रमोहं प्रियसाहसानां
मन्दारमाला विरलीकरोति ॥ ११ ॥

असृगिति ।—[ असृङ्नदीनां तटानि, उपचीयमानैः] उपचयं नीयमानैः तथा [ ध्वजिन्याः पदवीं विदारयद्भिः ] दुःसञ्चारां कुर्वद्भिः । ("विदूरयद्भिः" इति पाठे—विदूरां दूरसञ्चारां कुर्वद्भिः) । आश्याना ईषच्छुष्काः । "संयोगादेरातो धातोर्यण्वतः" ( ८।२।४३ पा० ) इति श्यायतेर्निष्ठानत्वम् । घनाः सान्द्राः तैः [ आश्यानघनैः शोणितौघैः पङ्कैरिव, उच्छ्रायं ] वृद्धिं [ न आयान्ति ] न प्राप्नुवन्ति ॥ १० ॥ *

परीति ।—[ इह ] रणे [ दन्तिदन्तैः ] गजदन्तैः [ परिक्षते ] ताड़िते [ वक्षसि नभसः पतन्ती, प्रियाङ्कशीता] प्रियायाः अङ्क इव शीता शीतला, सुखकरी इत्यर्थः, [ मन्दारमाला ] सुरैर्मुक्तेति शेषः । प्रियं साहसं येषां तेषां [ प्रियसाहसानां ] ... गजाभियायिनाम् इति भावः । [प्रमोहं] प्रहारमूर्च्छां [न विरलीकरोति] न मन्दीकरोति, नापनयतीति यावत् ॥ ११ ॥

* अत्र रूपकानुप्राणितोपमालङ्कृतिः बोद्धव्या ।

निषादिसन्नाहमणिप्रभौघे
परीयमाणे करिशीकरेण।
अर्कत्विषोन्मीलितमभ्युदेति
न खण्डमाखण्डलकार्मुकस्य ॥ १२ ॥

महीभृता पक्षवतेव भिन्ना
विगाह्य मध्यं परवारणेन।
नावर्त्तमाना निनदन्ति भीमम्
अपां निधेराप इव ध्वजिन्यः ॥ १३ ॥

---

निषादीति।—[ करिशीकरेण ] करिणां शीकरेण पुष्कर-तुषारेण [ परीयमाणे ] व्याप्यमाने [ निषादिसन्नाहमणि-प्रभौघे ] निषादिनो हस्त्यारोहाः। "हस्त्यारोहा निषादिनः" इत्यमरः। तेषां सन्नाहाः कवचानि तेषां मणिप्रभौघे रत्नांशु-जाले [ अर्कत्विषा ] अर्कस्य त्विषा तेजसा [ उन्मीलितम् ] उत्पादितम् [ आखण्डलकार्मुकस्य ] इन्द्रधनुषः। "आख-ण्डलः सहस्राक्षः" इत्यमरः। [ खण्डं न अभ्युदेति ] ॥१२॥ *

महीति।—[ पक्षवता ] सपक्षेण [ महीभृता ] मैनाकेन [ इव, परवारणेन ] शत्रुगजेन [ मध्यं, विगाह्य ] प्रविश्य [ भिन्नाः ] क्षोभिताः [ ध्वजिन्यः ] सेनाः। "ध्वजिनी वाहिनी सेना" इत्यमरः। [ अपां निधेः ] सागरस्य [ आप इव, आवर्त्त-मानाः ] भ्रमन्त्यः सत्यः। "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः। [ भीमं न निनदन्ति ] ॥ १३ ॥ †

* अत्रासम्बन्धे सम्बन्धरूपातिशयोक्तिः।

† अत्रोपमानोपमेयसाधारणधर्म्मनिबन्धना उपमालङ्कृतिः।

महारथानां प्रतिदन्त्यनीकम्
अधिस्यद-स्यन्दनमुत्थितानाम् ।
आमूललूनैरतिमन्युनेव
मातङ्गहस्तैर्व्रियते न पन्था: ॥ १४ ॥

धृतोत्पलापीड इव प्रियाया:
शिरोरुहाणां शिथिल: कलाप: ।

महारथानामिति ।—[ प्रतिदन्त्यनीकं ] दन्तिसैन्यं प्रति । "अनीकं तु रणे सैन्ये" इति विश्व: । [ अधिस्यदस्यन्दनं ] अधिस्यदा: महारया: स्यन्दना रथा यत्र तत् तथा । "रंह-स्तरसी तु रय: स्यद:" इत्यमर: । [ उत्थितानां ] प्रस्थितानां [ महारथानां ] रथिकविशेषाणाम् । तदुक्तम्—"आत्मानं सारथिं चाश्वान् रक्षन् युध्येत यो नर: । स महारथसंज्ञ: स्यादित्याहुर्नीतिकोविदा: ॥" इति लक्षणात् । [ पन्था: ] मार्ग: [ आमूललूनै: ] आमूलम् आ मूलात् वा लूनै: छिन्नै: [मातङ्गहस्तै: ] नागकरै: [ अतिमन्युना] अतिक्रोधेन [ इव, न व्रियते] न निरुध्यते ॥ १४ ॥ *

धृतेति ।—[ पतितस्य ] वक्षसि मग्नस्य [ शङ्को: ] तोमरस्य सम्बन्धी । "वा पुंसि शल्यं शङ्कुर्ना सर्वला तोमरोऽस्त्रियाम्" इत्यमर: । [ बर्हभार: ] तन्मूलबद्धो लाञ्छनपिच्छकलापो [ धृतोत्पलापीड: ] धृत उत्पलापीड: कुवलयशेखरो यस्मिन् स: । [ प्रियाया: ] सम्बन्धी [ शिथिल:] स्रस्त: [शिरोरुहाणां

* अत्र अतिमन्युनेव इति हेतूत्प्रेक्षा, सा च इवशब्दसान्निध्यात् वाच्या ।

न बर्हभारः पतितस्य शङ्कोः
निषादिवक्षःस्थलमातनोति ॥ १५ ॥
उज्झत्सु संहार इवास्तसङ्ख्यम्
अङ्काय तेजस्विषु जीवितानि।
लोकत्रयास्वादनलोलजिह्वं
न व्याददात्याननमत्र मृत्युः ॥ १६ ॥
इयञ्च दुर्वारमहारथानाम्
आक्षिप्य वीर्य्यं महतां बलानाम्।

कलापः ] केशपाशः [ इव, निषादिवक्षःस्थलं ] निषादिनो हस्त्यारोहस्य वक्षःस्थलं [ न आतनोति ] न व्याप्नोति ॥१५॥ *

उज्झत्स्विति।—[ अत्र ] आहवे [ संहारे ] कल्पान्ते [इव, तेजस्विषु ] वीरेषु [ अस्तसंख्यम् ] असंख्यं यथा तथा [अङ्काय] झटिति। "द्राक्झटित्यञ्जसाह्नाय" इत्यमरः। [ जीवितानि, उज्झत्सु ] त्यजत्सु सत्सु [ मृत्युः, लोकत्रयास्वादनलोलजिह्वं ] लोकत्रयस्य आस्वादने भक्षणे लोला लुब्धा जिह्वा यस्मिन् तत् [आननं, न व्याददाति ] न विवृणोति। "आङो दोऽनास्यविहरणे" ( १।३।२० पा० ) इत्यत्रानास्यविहरण इति निषेधात् न आत्मनेपदम् ॥ १६ ॥ †

सत्यमेवं, तथापि किमेतत् कुत्सितम्? तत्राह, इयमिति।—[ इयं मम शक्तिश्च, दुर्वारमहारथानां ] दुर्वाराः पराक्रमिणो महारथा येषु तेषां [ महतां बलानां वीर्य्यम्,

---

* अत्रोपमालङ्कारः स्फुटः एव।

† अत्र संहारे इव अस्तसंख्यम् इत्यंशे उपमालङ्कारः स्फुटः।

शक्तिर्ममावस्यति हीनयुद्धे
सौरीव ताराधिपधाम्नि दीप्तिः ॥ १७ ॥
माया स्विदेषा ? मतिविभ्रमो वा ?
ध्वस्तं नु मे वीर्य्यमुताहमन्यः ? ।
गाण्डीवमुक्ता हि यथा पुरा मे
पराक्रमन्ते न शराः किराते ॥ १८ ॥

---

आक्षिप्य ] निरस्य [ताराधिपधाम्नि ] चन्द्रतेजसि । सूर्य्यस्य इयं [ सौरी ] । "सूर्य्यतिष्यागस्त्यमत्स्यानां य उपधायाः" ( ६।४।१४९ पा०) इति स्त्रियां ङीष् यकारस्य लोपः । [ दीप्तिः इव. हीनयुद्धे ] किरातरणे [ अवस्यति ] अवसीदति । एतच्च विरुद्धम् अत्यद्भुतं च इति भावः । षोऽन्तकर्मणि इति धातोर्लट् ॥ १७ ॥ *

मायेति ।—[एषा] शक्तिक्षामरूपा [माया स्वित् ?] देवताक्षोभणं नाम ? [मतिविभ्रमः] बुद्धिविपर्य्ययः [ वा ? ] अथवा । [मे वीर्य्यं, ध्वस्तं] नष्टं [नु ? उत अहम् अन्यः ?] अर्जुनो न वा ? कुतः ?—[हि] यस्मात् [ गाण्डीवमुक्ताः मे शराः, पुरा यथा ] पूर्वं परिपन्थिषु इवेत्यर्थः । [ किराते न पराक्रमन्ते ] अप्रतिबन्धेन न प्रवर्त्तन्ते । "उपपराभ्याम्" (१।३।३९ पा० ) इति वृत्तौ आत्मनेपदम् । वृत्तिः अप्रतिबन्धः ॥ १८ ॥ †

* अत्रोभयोः सादृश्यसम्बन्धादुपमालङ्कृतिः । आद्वितीयश्लोकादेतदवधि कारणाभावकार्य्यकथनया सर्वत्र विभावना । अनिश्चय-पर्य्यवसानात् संशयोऽपीति गम्यते, इत्यलङ्कारेणालङ्कारध्वनिः।

† गाण्डीवमुक्ताः ममापि वाणाः नैवास्मिन् पराक्रमन्ते इति कोऽपि अपूर्व्वोऽयं शूरः तदनुभावेन शक्तिर्दौर्ब्बल्यं वा अत मायामतिभ्रमादि-कारणकलापः न निश्चेतुं शक्यते

पुंसः पदं मध्यममुत्तमस्य
द्विधेव कुर्वन् धनुषः प्रणादैः ।
नूनं तथा नैष यथास्य वेषः
प्रच्छन्नमप्यूहयते हि चेष्टा ॥ १९ ॥

धनुः प्रबन्धध्वनितं रुषेव
सकृद्विकृष्टा विततेव मौर्वी ।

पुंस इति ।—किञ्च, [ उत्तमस्य पुंसः ] पुरुषोत्तमस्य [ मध्यमं पदम् ] आकाशं [ धनुषः प्रणादैः ]। "उपसर्गादसमासेऽपि णोपदेशस्य" ( ८।४।१४ पा० ) इति णत्वम् । [द्विधा कुर्वन्निव] विदारयन्निव स्थितः सः [एषः] किरातः [नूनं, तथा] तथाभूतो [ न ]। कीदृशः ? तत्राह ।—[अस्य] पुरुषस्य [यथा] यथाभूतो [ वेषः ] वर्त्तत इति शेषः। वेषत एवायं किरातः, न स्वरूपत इत्यर्थः। कुतः ?—[ हि ] यस्मात् [ चेष्टा ] व्यापारः [ प्रच्छन्नमपि ] निगूढमपि स्वरूपम् [ ऊहयते ] तर्कयते । तस्याः स्वभावादव्यभिचारादिति भावः ॥ १९ ॥ *

अथ चतुर्भिश्चेष्टामेवाचष्टे, धनुरिति ।—[धनुः रुषेव, प्रबन्धध्वनितं] प्रबन्धेन अविच्छेदेन ध्वनितम् । ध्वनतेः कर्त्तरि क्तः । [मौर्वी] च [ सकृत् विकृष्टा वितता इव ] एकवाराकर्षणात् एव

इति निश्चयाप्रतिपादनात् अनिश्चयान्तसंशयालङ्कारः। वस्तुतः अत्र अनिर्णयान्त उभयात्मा निरालम्बभ्रान्त्यनध्यवसायाङ्गरूपः वितर्कः। यथाहि ।—"मायादीनां विकल्पानां मिथ्यारूपत्वात् मम शराः किराते न व्याप्रियन्ते इत्यस्य अमिथ्यारूपत्वात् अनिर्णयान्तत्वाच्च अयम् अनिर्णयान्त उभयरूपो वितर्कः।

* अत्र पूर्व्वांशे धनुषः प्रणादैः द्विधाकुर्व्वन् इव इत्युत्प्रेक्षा। उत्तरांशे सामान्येन विशेषसमर्थनात् अर्थान्तरन्यासः। एतयोः अङ्गाङ्गित्वम् ।

सन्धानमुत्कर्षमिव व्युदस्य
मुष्टेरसम्भेद इवापवर्गे ॥ २० ॥
अंसाववष्टब्धनतौ समाधिः
शिरोधराया रहितप्रयासः ।
धृता विकारांस्त्यजता मुखेन
प्रसादलक्ष्मीः शशलाञ्छनस्य ॥ २१ ॥
प्रहीयते कार्य्यवशागतेषु
स्थानेषु विष्टब्धतया न देहः ।

वितता इव स्थिता । [सन्धानं] बाणसन्धानम् [उत्कर्षं] तूणात् उद्धरणं [व्युदस्य इव] वर्जयित्वा । किमु कृतम् ? इति शेषः । [अपवर्गे] बाणमोक्षेऽपि [मुष्टेः, असम्भेदः] असंघटनम् [इव] । मुष्टिबन्धं विना एव बाणमोक्षः कृत इव, इति हस्तलाघवोक्तिः ॥ २० ॥ *

अंसाविति ।—किञ्च । [अंसौ] अवष्टब्धौ स्थिरावस्थापितौ च तौ नतौ च [अवष्टब्धनतौ, शिरोधरायाः] कन्धरायाः [समाधिः] संस्थानविशेषश्च [रहितप्रयासः] रहितः प्रयासः यस्य स तथोक्तः, निःप्रयास इत्यर्थः । तथा [विकारांस्त्यजता] अमृतत्वात् निर्विकारेण इत्यर्थः । [मुखेन, शशलाञ्छनस्य] इन्दोः [प्रसादलक्ष्मीः धृता] । असम्भवत्सम्बन्धो निदर्शनालङ्कारः ॥ २१ ॥

* अत्र कृष्टेव विततेव व्युदस्येव असम्भेद इव इति उत्प्रेक्षाचतुष्टयसंसृष्टिः । एवमपवर्ग इत्यस्य कैवल्यार्थप्रसिद्धस्य अप्रसिद्धे मोचनार्थे प्रयोगात् निहतार्थतापददोषः ।

स्थितप्रयातेषु ससौष्ठवश्च
लक्ष्येषु पातः सदृशः शराणाम् ॥ २२ ॥
परस्य भूयान् विवरेऽभियोगः
प्रसह्य संरक्षणमात्मरन्ध्रे ।
भीष्मेऽप्यसम्भाव्यमिदं गुरौ वा
न सम्भवत्येव वनेचरेषु ॥ २३ ॥

प्रहीयत इति।—तस्य [ देहः, कार्य्यवशागतेषु ] कार्य्यवशेन प्रयोजनवशेन आगतेषु [ स्थानेषु ] आलीढ़ादिस्थानकेषु [ विष्टब्धतया ] स्थिरतया कवर्गो [ न प्रहीयते ] न त्यज्यते; किन्तु स्थिर एव तिष्ठतीत्यर्थः। सुष्ठुभावः सौष्ठवं लाघवम्। उद्गात्रादित्वादञ्प्रत्ययः। * तेन सह वर्त्तमानः [ ससौष्ठवः शराणां पातश्च ]। स्थितानि अचलानि प्रयातानि चलानि तेषु [ स्थितप्रयातेषु ] चलाचलेषु [ लक्ष्येषु ] विषये [सदृशः ] एकरूपः ॥ २२ ॥

परस्येति।—किञ्च। [ परस्य, विवरे ] रन्ध्रे। अल्पेऽपीति शेषः। [ भूयान् ] भूयिष्ठः [ अभियोगः ] आक्रमम्। परस्य रन्ध्राक्रमत्वात् प्रहारोद्योग इत्यर्थः। [आत्मरन्ध्रे] आत्मनो रन्ध्रविवरे; अनल्पेऽपि इति शेषः। [ प्रसह्य ] झटिति [ संरक्षणं ] गोपनञ्च; भूयिष्ठम् इति शेषः। [ इदं ] इयं [ भीष्मेऽपि, गुरौ वा ] द्रोणे वापि [असम्भाव्यं ] दुर्वितर्क्यम्; [ वनेचरेषु न सम्भवति एव ]। अतो न अयं किरातः, किन्तु एष तिरोहितवेषः कोऽपि अमानुषः पुरुष इति भावः ॥ २३ ॥

---

* प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ( ५।१।१२९ पा० ) इति सूत्रम्।

अप्राकृतस्याहवदुर्मदस्य
निवार्य्यमस्यास्त्रबलेन वीर्य्यम् ।
अल्पीयसोऽप्यामयतुल्यवृत्तेः
महापकाराय रिपोर्विवृद्धिः ॥ २४ ॥

इति कुलकम् ।

स सम्प्रधार्य्यैवमहार्य्यसारः
सारं विनेष्यन् सगणस्य शत्रोः ।
प्रस्वापनास्त्रं द्रुतमाजहार
ध्वान्तं घनानद्ध इवार्द्धरात्रः ॥ २५ ॥

---

अप्राकृतस्येति ।—[ अप्राकृतस्य ] उक्तरीत्या असाधारणस्य [ आहवदुर्मदस्य ] रणमत्तस्य [अस्य] किरातस्य [वीर्य्यं] तेजः [अस्त्रबलेन] दिव्यास्त्रमहिम्ना [निवार्य्यं] निवारणीयम् । अन्यथा अनिवार्य्यत्वम् अस्य इति भावः । तथा हि [अल्पीयसोऽपि] अत्यल्पस्य अपि [ आमयतुल्यवृत्तेः ] रोगसमानक्रियस्य । "रोगव्याधिगदामयाः" इत्यमरः । [ रिपोः विवृद्धिः महापकाराय ] किन्तु अयं महानुभाव इति भावः । २४ ॥ *

स इति ।—[ अहार्य्यसारः ] अनिवार्य्यवीर्य्यः [सः] अर्जुनः [ एवं, सम्प्रधार्य्य ] निश्चित्य [ सगणस्य ] सानुगस्य [ शत्रोः, सारं ] सत्त्वं [ विनेष्यन् ] अपनेष्यन् । [ प्रस्वापनास्त्रं ] प्रस्वाप्यते शाय्यते अनेनेति प्रस्वापनं तदेवास्त्रं [ घनानद्धः ] मेघावरुद्धः [ अर्द्धरात्रः ] निशीथः । "अर्द्धरात्रनिशीथौ द्वौ" इत्य-

* अत्रामयतुल्यवृत्तिपदेनोपमा । विच्छित्तिविशेषेणार्थगौरवं विकाशयन्ती कारणकार्य्यसमर्थनरूपार्थान्तरन्यासस्याङ्गम ।

प्रसक्तदावानलधूमधूम्रा
निरुन्धती धाम सहस्ररश्मेः ।
महावनानीव महातमिस्रा
छाया ततानेशवलानि काली ॥ २६ ॥
आसादिता तत्प्रथमं प्रसह्य
प्रगल्भतायाः पदवीं हरन्ती ।

मरः । "अर्द्धं नपुंसकम्" ( २।२।२ पा० ) इति समासः । "अहः सर्व्वैकदेश" ( ५।४।८० पा० ) इत्यादिना समासान्तः, "रात्राह्नाहाः पुंसि" ( २।४।२९ पा० ) इति पुंलिङ्गता । [ ध्वान्तमिव द्रुतम्, आजहार ] आचकर्ष ॥ २५ ॥ *

प्रसक्तेति ।—[ प्रसक्तदावानलधूमधूम्रा ] प्रसक्तः सन्ततो यो दावानलधूमः तद्वत् धूम्रा धूसरा [ सहस्ररश्मेः, धाम ] तेजः [ निरुन्धती ] आवृण्वती [ काली ] कृष्णवर्णा । "जानपद" ( ४।१।४२ पा० ) इत्यादिना ङीष् । [ छाया ] कान्तिः । [ईशवलानि, महातमिस्रा] महती तमःसन्ततिः । "तमिस्रा तु तमस्ततिः" इति विश्वः । [ महावनानीव, ततान ] व्यानशे ॥ २६ ॥ †

आसादितेति ।—तदेव आसादनं प्रथमं [ तत्प्रथमं ] यथा तथा [ प्रसह्य, आसादिता] कल्पिता [ प्रगल्भतायाः] व्यवहार-

* अत्रोपमानोपमेययोः सादृश्यलक्ष्मीसमुल्लासादुपमालङ्कृतिः ।

† अत्र धूमधूम्रा काली तमिस्रा इव इत्युपमाङ्गिनी महातमसोमस्यापि मार्त्तण्ड-तेजो निरोधासम्बन्धेऽपि सम्बन्धसूचनादतिशयोक्तिः ।

सभेव भीमा विदधे गणानां
निद्रा निरासं प्रतिभागुणस्य ॥ २७ ॥
गुरुस्थिराण्युत्तमवंशजत्वात्
विज्ञातसाराण्यनुशीलनेन ।
केचित् समाश्रित्य गुणान्वितानि
सुहृत्कुलानीव धनूंषि तस्थुः ॥ २८ ॥
कृतान्तदुर्वृत्त इवापरेषां
पुरः प्रतिद्वन्द्विनि पाण्डवास्त्रे ।

चार्थस्य [ पदवीं हरन्ती, भीमा ] भयङ्करी [ निद्रा ] उक्त-विशेषणा [ सभा ] संसत् [ इव । गणानां, प्रतिभागुणस्य ] प्रतिभा प्रज्ञाशक्तिः, सैव गुणः तस्य [ निरासं ] प्रतिभाक्षयं [ विदधे ] चक्रे ॥ २७ ॥ *

गुर्वीति ।—[ केचित् उत्तमवंशजत्वात् ] वंशो वेणुः कुलं च । "वंशो वेणौ कुले च" इति विश्वः । गुरूणि महान्ति स्थिराणि दृढ़ानि च [ गुरुस्थिराणि, अनुशीलनेन ] परिचय-बलेन [ विज्ञातसाराणि ] विज्ञातः सारो बलं येषां तानि [ गुणान्वितानि ] गुणैः मौर्वीभिः शौर्य्यादिभिः च अन्वितानि [ धनूंषि, सुहृत्कुलानि] मित्रकुलानि [इव, समाश्रित्य तस्थुः] । धनूंषि अवष्टभ्य निदध्युः इत्यर्थः ॥ २८ ॥ †

कृतान्तेति ।—[ कृतान्तदुर्वृत्ते ] दैवदुश्चेष्टिते [ इव ] ।

* अत्रोपमालङ्कारः स्फुटः ।

† अत्र श्लेषोपमयोः अङ्गाङ्गित्वसाङ्कर्य्यम् ।

अतर्कितं पाणितलान्निपेतु:
क्रियाफलानीव तदायुधानि ॥ २९ ॥
अंसस्थलै: केचिदभिन्नधैर्य्या:
स्कन्धेषु संश्लेषवतां तरूणाम् ।
मदेन मीलन्नयना: सलीलं
नागा इव स्रस्तकरा निषेदु: ॥ ३० ॥
तिरोहितेन्दोरथ शम्भुमूर्ध्न:
प्रणम्यमानं तपसां निवासै: ।

"कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु" इति विश्व: । [पाण्डवास्ते पुर:, प्रतिद्वन्द्विनि] प्रतिकूलवर्त्तिनि सति [तदा] तस्मिन् काले [अपरेषाम् आयुधानि, क्रियाफलानि इव] कृष्यादिफलानि इव ; [अतर्कितम्] अविचारितम् एव [पाणितलात् निपेतु: ] ॥ २८ ॥ *

अंसेति ।—[अभिन्नधैर्य्या: ] तदानीमपि अच्युतधैर्य्या: [केचित्, अंसस्थलै: ] अंसभागै: सह [संश्लेषवतां ] सङ्गतानां [तरूणां, स्कन्धेषु] प्रकाण्डेषु [मदेन, मीलन्नयना: ] मीलन्ति नयनानि येषां ते [नागा:] गजा: [इव, स्रस्तकरा:] स्रस्तहस्ता: सन्त: [सलीलं, निषेदु: ] निषण्णा: ॥ ३० ॥ †

तिरोहितेति ।—[अथ तिरोहितेन्दो: ] किरातमायया

* अत्र पूर्णोपमालङ्कृति: ।

† अत्र [illegible] बोध्या । अनेन मदमत्तगजेन्द्रा इव सैनिका न कुर्वत्-श्राया: इति [illegible] इति कथ्यते ।

सुमेरुशृङ्गादिव बिम्बमार्कं
पिशङ्गमुच्चैरुदियाय तेजः ॥ ३१ ॥
छायां विनिर्धूय तमोमयीं तां
तत्त्वस्य संवित्तिरिवापविद्याम् ।
ययौ विकाशं द्युतिरिन्दुमौलेः
आलोकमभ्यादिशती गणेभ्यः ॥ ३२ ॥
त्विषां ततिः पाटलिताम्बुवाहा
सा सर्वतः पूर्वसरीव सन्ध्या ।

इन्द्रचन्द्रात् [ शम्भुमूर्ध्नः ] सकाशात् [ सुमेरुशृङ्गात्, आर्कम् ] अर्कसम्बन्धि [ बिम्बम् इव, तपसां निवासैः ] तापसैः [ प्रणम्य-मानम् ] अभिवन्द्यमानम् [ पिशङ्गं तेजः, उच्चैः ] ऊर्ध्वम् [ उदियाय ] प्रकटीबभूव । तच्च न चान्द्रम् इति भावः ॥ ३१ ॥ *

छायामिति ।—[ इन्दुमौलेः, द्युतिः ] कान्तिः [ तत्त्वस्य, संवित्तिः ] ज्ञानं, तत्त्वज्ञानमित्यर्थः, [ अपविद्याम् ] अविद्याम् [ इव, तां तमोमयीं छायां ] निद्रां [ विनिर्धूय ] निरस्य [ गणेभ्यः, आलोकं ] वस्तुप्रकाशं, चिरम् [ अभ्यादिशती ] वितरन्ती [ विकाशं ] विस्तारं [ ययौ ] ॥ ३२ ॥ †

त्विषामिति ।—[ सर्वतः, पाटलिताम्बुवाहा ] पाटलिताः पाटलीकृताः अम्बुवाहाः यया तथोक्ता [ सा, त्विषां ] तेजसां [ ततिः ] । पूर्वां सरतीति [ पूर्वसरी ] । "पूर्वे कर्त्तरि"

* अत्रोपमालङ्कारः उपमानोपमेययोः सादृश्यस्पर्शात् ।

† अत्रोपमालङ्कारः ।

निनाय तेषां द्रुतमुल्लसन्ती
विनिद्रतां लोचनपङ्कजानि॥ ३३ ॥
पृथग्विधान्यस्त्रविरामबुद्धाः
शस्त्राणि भूयः प्रतिपेदिरे ते।
मुक्ता वितानेन बलाहकानां
ज्योतींषि रम्या इव दिग्विभागाः॥ ३४ ॥

---

( ३।२।१८ पा० ) इति टप्रत्यये ङीप्। "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" * इति पूर्वाशब्दस्य पुंवद्भावः। [सन्ध्या] प्रातःसन्ध्या [इव, उल्लसन्ती] प्रसरन्ती [तेषां] गणानां [लोचन-पङ्कजानि द्रुतं, विनिद्रतां] विकासं [निनाय] ॥३३॥ †

पृथगिति।—[अस्त्रविरामबुद्धाः] अस्त्रविरामेण प्रस्वापनास्त्रोपरमेण बुद्धा विनिद्राः [ते] गणाः, [बलाहकानां वितानेन] मेघपटलेन [मुक्ताः] अत एव [रम्याः, दिग्विभागाः] दिगन्ताः [ज्योतींषि] नक्षत्राणि [इव]। "ज्योतिस्ताराग्निभाज्वालाद्दृक्प्रकाशरमात्मसु" इति वैजयन्ती। [पृथग्विधानि] नानाविधानि [शस्त्राणि भूयः, प्रतिपेदिरे] जगृहुः इत्यर्थः ॥ ३४ ॥ ‡

---

* "तसिलादिष्वाकृत्वसुचः" ( ६।३।३५ पा० ) इत्यस्य वृत्त्युदाहरणप्रसङ्गे दर्शिता "भाष्यकारेष्टिः" एतदुक्त्या। इति विवेकः।

† अत्र पूर्वसरी सन्ध्या इव इत्युपमा, लोचनपङ्कजानि इति रूपकाङ्गासङ्गा, इत्येतयोः साङ्कर्यम्।

‡ अत्रोपमालङ्कृतिः। बलाहकानां वितानेन मुक्ताः, अतः ज्योतींषि प्रपेदिरे इति वाक्यार्थहेतुकं काव्यलिङ्गञ्च। इत्युभयोरङ्गाङ्गित्वम्।

द्यौरुन्ननामेव दिशः प्रसेदुः
स्फुटं विसस्रे सवितुर्मयूखैः ।
क्षयं गतायामिव यामवत्यां
पुनः समीयाय दिनं दिनश्रीः ॥ ३५ ॥

महास्त्रदुर्गे शिथिलप्रयत्नं
दिग्वारणेनेव परेण रुग्णे ।
भुजङ्गपाशान् भुजवीर्य्यशाली
प्रबन्धनाय प्रजिघाय जिष्णुः ॥ ३६ ॥

द्यौरिति ।—तदा [ यामवत्यां ] रात्रौ [ क्षयं गतायां ] विभातायाम् [ इव, द्यौः ] अन्तरिक्षम् [ उन्ननामेव ] ऊर्द्ध्वम् उत्पपात इव इत्युत्प्रेक्षा । [ दिशः प्रसेदुः । सवितुः मयूखैः, स्फुटं ] स्पष्टं [ विसस्रे ] विस्तृतम् । भावे लिट् । [ दिनश्रीः ] अह्नकान्तिः [ पुनः दिनं, समीयाय ] संजगाम । अत्र वैय-धिकरण्येन गुणक्रिययोः समुच्चयेन समुच्चयोऽलङ्कारः । तस्य च समुन्नमनोत्प्रेक्षया इवशब्दवाच्ययानुप्रवेशलक्षणः सङ्करः । दिक्प्रसादो गुणः । शेषाः क्रियाः ॥ ३५ ॥

महास्त्रेति ।—[भुजवीर्य्यशाली, जिष्णुः] अर्जुनः । महास्त्रं प्रस्वापनास्त्रं तत् दुर्गम् इव तस्मिन् [महास्त्रदुर्गे, दिग्वारणेन ] दिग्गजेन [ इव, परेण] शत्रुणा [शिथिलप्रयत्नम् ] अल्पप्रयासं यथा तथा [ रुग्णे ] भग्ने सति । "रुजो भङ्गे" कर्मणि क्तः । "ओदितश्च" ( ८।२।४५ पा० ) इति निष्ठातकारस्य नत्वम् । [ प्रबन्धनाय ] प्रकर्षेण बन्धनाय [ भुजङ्गपाशान् ] भुजङ्गा एव पाशाः तान् [ प्रजिघाय ] प्रहितवान् ॥ ३६ ॥*

* अत्र महास्त्रदुर्गे, दिग्वारणेनेव इत्युपमालङ्कृतिः । सा च भुजङ्गपाशान् इति रूपकसङ्कीर्णा ।

जिह्वाशतान्युल्लसयन्त्यजस्रं
लसत्तड़िल्लोलविषानलानि।
त्रासात् निरस्तां भुजगेन्द्रसेना
नभश्चरैस्तत्पदवीं विवव्रे॥ ३७॥

दिङ्नागहस्ताकृतिमुद्वहद्भि:
भोगै: प्रशस्तासितरत्ननीलै:।
रराज सर्पावलिरुल्लसन्ती
तरङ्गमालेव नभोऽर्णवस्य॥ ३८॥

निश्वासधूमै: स्थगितांशुजालं
फणावतामुत्फणमण्डलानाम्।

---

जिह्वे ति।—[लसत्तड़िल्लोलविषानलानि] लसन्त: तड़िल्लोला विद्युच्चञ्चला विषानला विषाग्नयो येषु तानि [जिह्वाशतानि अजस्रम्, उल्लसयन्ती] चलयन्ती। [भुजगेन्द्रसेना, त्रासात्] भयात्। [नभश्चरै:, निरस्तां] त्यक्तां [तत्] तेषां नभश्चराणां [पदवीं] मार्गं [विवव्रे] विशेषेण रुरोध॥३७॥ *

दिङ्नागेति।—[दिङ्नागहस्ताकृतिम् उद्वहद्भि:] दिक्करिकराकारै: तथा [प्रशस्तासितरत्ननीलै:] प्रशस्तानि समीचीनानि असितरत्नानि इन्द्रनीलमणय: तद्वत् नीलै:, भोगै:] कायै: उपलक्षिता [सर्पावलि:, उल्लसन्ती] प्रक्षुभ्यन्ती [नभोऽर्णवस्य] नभ एव अर्णव: तस्य [तरङ्गमाला इव रराज]। रूपकोत्थापिता इयमुत्प्रेक्षा॥ ३८॥

---

* अत्र तड़िल्लोलपदार्थे उपमालङ्कार:।

गच्छन्निवास्तं वपुरभ्युवाह
विलोचनानां सुखमुष्णरश्मिः ॥ ३९ ॥
प्रतप्तचामीकरभासुरेण
दिशः प्रकाशेन पिशङ्गयन्त्यः ।
निश्चक्रमुः प्राणहरेक्षणानां
ज्वाला महोल्का इव लोचनेभ्यः ॥ ४० ॥
आच्छिन्नसम्पातमपेतशोभम्
उद्वह्निधूमाकुलदिग्विभागम् ।

निश्वासेति ।—[ उष्णरश्मिः अस्तं गच्छन् इव, उत्फण मण्डलानां ] उन्नमितानि फणामण्डलानि येषां तेषां [ फणावतां ] सर्पाणां [निश्वासधूमैः] निश्वासेषु ये धूमास्तैः [स्थगितांशुजालं] स्थगितम् आच्छादितमंशुजालं यस्य तत् तथोक्तम्. अत एव [ विलोचनानां, सुखं ] सुखकरं [ वपुरभ्युवाह ] ॥ ३९ ॥ *

प्रतप्तेति ।—प्राणहराणि ईक्षणानि येषां तेषां [ प्राणहरेक्षणानां ] दृष्टिविषाणां सर्पविशेषाणां [लोचनेभ्यः] नेत्रेभ्यः । "लोचनं नयनं नेत्रम्" इत्यमरः । [प्रतप्तचामीकरभासुरेण ] प्रतप्तं यच्चामीकरं सुवर्णं तद्वत् भासुरेण । "भञ्जभासमिदो घुरच्" ( ३।२।१६१ पा० ) इति घुरच्प्रत्ययः । [ प्रकाशेन ] तेजसा [ दिशः पिशङ्गयन्त्यः ज्वाला महोल्का इव, निश्चक्रमुः] निर्जग्मुः ॥ ४० ॥ †

आच्छिन्नेति ।—[ आच्छिन्नसम्पातं ] आच्छिन्नः प्रतिबद्धः

* अत्र अस्तं गच्छन्निव इति क्रियोत्प्रेक्षा ।

† अत्र प्रतप्तचामीकरभासुरपदे उपमा । महोल्का इव निश्चक्रमुः इत्यत्र उत्प्रेक्षा च । अनयोरङ्गाङ्गित्वम् ।

वृतं नभो भोगिकुलैरवस्थां
परोपरुद्धस्य पुरस्य भेजे ॥ ४१ ॥

तमाशु चक्षुःश्रवसां समूहं
मन्त्रेण तार्क्ष्योदयकारणेन ।
नेता नयेनेव परोपजापं
निवारयामास पतिः पशूनाम् ॥ ४२ ॥

प्रतिघ्नतीभिः कृतमीलितानि
द्युलोकभाजामपि लोचनानि ।

---

सम्पातः सञ्चारो यस्मिन् तत्, सिद्धानां पक्षिणां च इति शेषः ; अपेता गता शोभा यस्मात् तत् [ अपेतशोभं ] गतश्रीकम् । [ उद्वह्निधूमाकुलदिग्विभागम् ] उद्गतवह्निधूमाभ्याम् आकुलाः दिग्विभागा दिगन्ताः यस्मिन् तत् [ भोगिकुलैः ] सर्पकुलैः [ वृतम् ] आवृतं [नभः, परोपरुद्धस्य ] शत्रुवेष्टितस्य [ पुरस्य] अवस्थामिव [अवस्थां] दशां [भेजे] ; उक्तरीत्या तत्साधर्म्यं प्राप्तम् इत्यर्थः । निदर्शनालङ्कारः ॥ ४१ ॥

तमिति ।—[ पशूनां पतिः ] शिवः [ तं, चक्षुःश्रवसां ] सर्पाणां [ समूहं, तार्क्ष्योदयकारणेन ] गरुडाविर्भावहेतुना [ मन्त्रेण, नेता ] नायकः [ नयेन ] नीत्या, परेषाम् उपजापं [ परोपजापं ] परकृतं स्वमण्डलभेदम् [ इव ] । "भेदोपजापावुपधा" इत्यमरः । [ आशु निवारयामास ] ॥ ४२ ॥ *

प्रतीति ।—[ द्युलोकभाजामपि ] अनिमेषाणामपि [ कृत-

* अत्रोपमानोपमेयसाधारणधर्म्मसम्बन्धादुपमालङ्कारः ।

गरुत्मतां संहतिभिर्विहायः
क्षणप्रकाशाभिरिवावतेने ॥ ४३ ॥

ततः सुपर्णव्रजपक्षजन्मा
नानागतिर्मण्डलयन् जवेन।
जरत्तृणानीव वियन्निनाय
वनस्पतीनां गहनानि वायुः ॥ ४४ ॥

मनःशिलाभङ्गनिभेन पश्चात्
निरुध्यमानं निकरेण भासाम्।

मीलितानि ] कृतं मीलितं निमेषो येषां तानि [ लोचनानि ] दृष्टीः [ प्रतिघ्नतीभिः ] प्रतिबध्नतीभिः। हन्तेः शतरि ङीप्। [ गरुत्मतां ] तार्क्ष्याणां [ संहतिभिः ] समूहैः [क्षणप्रकाशाभिः] विद्युद्भिः [ इव] ; तासां सौवर्णत्वात् इति भावः। [ विहायः ] अन्तरिक्षम् [ अवतेने ] व्यानशे ॥ ४३ ॥ *

तत इति।—[ ततः, सुपर्णव्रजपक्षजन्मा ] सुपर्णव्रजानां तार्क्ष्यकुलानां पक्षेभ्यो जन्म यस्य सः [ नानागतिः] विचित्रगतिः [ वायुः वनस्पतीनां ] वृक्षाणां [गहनानि अरण्यानि] जीर्ण-तृणानि [इव जवेन, मण्डलयन् ] भ्रमयन् [वियत्] अन्तरिक्षं [ निनाय ] ॥ ४४ ॥ †

मनःशिलेति।—[ मनःशिलाभङ्गनिभेन ] मनःशिला धातु-विशेषः, तस्याः भङ्गः छेदः तन्निभेन तत्सदृशेन [भासां निकरेण]

---

* अत्र क्षणप्रकाशाभिः इव इति उपमालङ्कृतिः, अनिमिषाणामपि निमेष-सम्पादनादसम्बन्धे सम्बन्धरूपातिशयोक्तिः चापि। एतयोरङ्गाङ्गित्वम्।

† अत्र जरत्तृणानीव इत्युत्प्रेक्षालङ्कारः स्फुटः।

व्यूढैरुरोभिश्च विनुद्यमानं
नभः ससर्पेव पुरः खगानाम् ॥ ४५ ॥
दरीमुखैरासवरागताम्रं
विकासि रुक्मच्छदधाम पीत्वा ।
जवानिलाघूर्णितसानुजालो
हिमाचलः क्षीव इवाचकम्पे ॥ ४६ ॥
प्रवृत्तनक्तन्दिवसन्धिदीप्तैः
नभस्तलं गाञ्च पिशङ्गयद्भिः ।

कान्तिपुञ्जेन [ पश्चात् ] पश्चाद्भागे [निरुध्यमानम्] आव्रियमाणं [ व्यूढैः ] विशालैः [ उरोभिः ] वक्षोभिः [च]। "उरो वत्सञ्च वक्षश्च" इत्यमरः। [ विनुद्यमानं ] प्रेर्य्यमाणं [नभः, खगानां] गरुड़ानां [ पुरः, ससर्पेव ] ससारेव। उत्तरोत्तरदेशातिरोधानेन गच्छतां खगानाम् अपूर्वोऽपि पुरोभागः सादृश्यात् पूर्ववदुपलभ्यमानतया नभस एव छेदनात् पुरः ससर्प इव इति उत्प्रेक्षालङ्कारः ॥ ४५ ॥ *

दरीति।—[जवानिलाघूर्णितसानुजालः] जवानिलेन आघूर्णितानि भ्रमितानि सानुजालानि यस्य सः [ हिमाचलः, आसवरागताम्रम्] आसवस्य रागो रक्तता तद्वत् ताम्रं ; गुणयोः एव उपमानोपमेयभावः। [विकासि] विकस्वरं [रुक्मच्छदधाम] रुक्मच्छदाः सुपर्णपक्षाः तार्क्ष्याः तेषां धाम तेजो दरीभिर्मुखैः इव [दरीमुखैः पीत्वा, क्षीवः] मत्तः [इव, आचकम्पे] आचचाल। उपमाव्यापितेयम् उत्प्रेक्षा ॥ ४६ ॥

प्रवृत्तेति।—[ प्रवृत्तनक्तन्दिवसन्धिदीप्तैः ] नक्तञ्च दिवा च

* अत्र नभःशिलाभङ्गनिभपदांशे उपमापि। इत्थं तयोरङ्गाङ्गित्वम्।

अन्तर्हितार्कैः परितः पतद्भिः
छायाः समाचिच्छिपिरे वनानाम् ॥ ४७ ॥
स भोगिसङ्घः शममुग्रधाम्नां
सैन्येन निन्ये विनतासुतानाम् ।
महाध्वरे विध्यपचारदोषः
कर्मान्तरेणेव महोदयेन ॥ ४८ ॥

नक्तन्दिवम् । "अचतुर" ( ५।४।७७ पा० ) इत्यादिना सप्तम्यर्थे द्वयोरपि अव्यययोः द्वन्द्वैकवद्भावनिपाते समासान्तः । लक्षणया तु अहोरात्रमात्रवाची । प्रवृत्तः प्रादुर्भूतो यो नक्तन्दिवस्य सन्धिः सन्ध्या तद्वत् दीप्तैः शोभितैः [ नभस्तलं, गां ] भुवं [ च, पिशङ्गयद्भिः ] पिशङ्गीकुर्वद्भिः [ अन्तर्हितार्कैः ] अन्तर्हितः आच्छादितोऽर्को यैः तैः [ पतद्भिः ] पक्षिभिः [ परितः ] सर्वतो [ वनानां छायाः, समाचिच्छिपिरे ] समाच्छिन्नाः ; अन्तर्वह्निस्थ तेजःप्रकाशात् क्वापि अन्तर्हिता इत्यर्थः ॥ ४७ ॥ *

स इति ।—[ स, भोगिसङ्घः ] सर्पसमूहः [ उग्रधाम्नां ] तेजस्विनां [ विनतासुतानां ] तार्क्ष्याणां [ सैन्येन, महाध्वरे ] महाक्रतौ [ विध्यपचारदोषः ] कर्मस्खलनदोषः [ महोदयेन ] महासामर्थ्येन अथवा—महता फलेन ; तन्मूलेन प्रकृतक्रियासिद्धेः इति । [ कर्मान्तरेण ] प्रायश्चित्तेन [ इव, शमं ] शान्तिं [ निन्ये ] प्रापितः ॥ ४८ ॥ †

* अत्र पूर्वार्द्धे प्रवृत्तनक्तन्दिवसन्धिदीप्तैरिति सादृश्यबोधनादुपमालङ्कारः । तथा पिशङ्गयद्भिरिति तद्गुणः । उत्तरार्द्धे च अन्तर्हितार्कैरिति असम्बन्धे सम्बन्धरूपातिशयोक्तिः । समाचिच्छिपिरे अत्रापि सैव । द्वयोः पामङ्गाङ्गिभावेन साङ्कर्य्यम् ।

† अत्रोपमालङ्कृतिः महोदयेन इति श्लेषसङ्कीर्णा ।

साफल्यमस्त्रे रिपुपौरुषस्य
कृत्वा गते भाग्य इवापवर्गम् ।
अनिन्धनस्य प्रसभं समन्युः
समाददेऽस्त्रं ज्वलनस्य जिष्णुः ॥ ४९ ॥

ऊर्द्ध्वं तिरश्चीनमधश्च कीर्णैः
ज्वालासटैर्लङ्घितमेघपङ्क्तिः ।
आयस्तसिंहाकृतिरुत्पपात
जातवेदाः ॥ ५० ॥

साफल्यमिति ।—[ अस्त्रे ] सर्पास्त्रे [ भाग्ये ] प्राग्भवीये शुभे कर्मणि [ इव, रिपुपौरुषस्य ] रिपुपराक्रमस्य [ साफल्यं कृत्वा अपवर्गम्] अवसानं समाप्तिमित्यर्थः, [ गते] सति ; स्वनिष्ठया परसाफल्यात् सफलीकरणोपचारः । [ समन्युः ] सक्रोधो [ जिष्णुः ] अर्जुनः [ अनिन्धनस्य ] इन्धनं विनैव उत्पादितस्य [ ज्वलनस्य ] ज्वलनप्रदीपकम् [ अस्त्रम् ] आग्नेयास्त्रं [प्रसभं] शीघ्रं [ समाददे ] अग्राहि ॥ ४९ ॥ *

ऊर्द्ध्वमिति ।—[ ऊर्द्ध्वं, तिरश्चीनं] तिर्य्यक् । "विभाषाऽञ्चेरदिक् स्त्रियाम्" ( ५।४।८ पा० ] इति खप्रत्ययः । [ अधश्च, कीर्णैः ] विस्तृतैः [ ज्वालासटैः ] ज्वाला एव सटाः केसराः । "सटा जटाकेशरयोः" इति विश्वः । तैः [ लङ्घितमेघपङ्क्तिः ] अतिक्रान्तजलदावलिः [ आयस्तसिंहाकृतिः ] आयस्तस्य लङ्घनोद्यतस्य सिंहस्य इव आकृतिः यस्य सः [ जातवेदाः ] अग्निः

* अत्रोपमानोपमेयसाधारणधर्म्मसम्बन्धाद्रुपमालङ्कारः ।

भित्त्वेव भाभिः सवितुर्मयूखान्
जज्वाल विष्वग् विसृतस्फुलिङ्गः ।
विशीर्य्यमाणाश्मनिनादघोरं
ध्वनिं वितन्वन्नकृशः कृशानुः ॥ ५१ ॥
चयानिवाद्रीनिव तुङ्गशृङ्गान्
क्वचित्पुराणीव हिरण्मयानि ।
महावनानीव च किंशुकानां
ततान वह्निः पवनानुवृत्त्या ॥ ५२ ॥

[ प्राणयन्त ] प्राणिनां संहारम् [ इच्छन् इव उत्पपात ] ॥ ५० ॥ *

भित्त्वेति ।—[ भाभिः ] तेजोभिः [ सवितुः, मयूखान् ] किरणान् । "किरणोऽस्रमयूखांशु" इत्यमरः । [ भित्त्वेव ] अभिहत्येव [ विष्वक् ] समन्तात् [ विसृतस्फुलिङ्गः ] विसृताः स्फुलिङ्गा यस्य सः । स्फुलिङ्गोदयस्य मयूखाभिघातहेतुकत्वम् उत्प्रेक्ष्यते । "त्रिषु स्फुलिङ्गोऽग्निकणः" इत्यमरः । [ अकृशः ] महान् [ कृशानुः ] वह्निः [ विशीर्य्यमाणाश्मनिनादघोरम् ] विशीर्य्यमाणस्य विदलतोऽश्मनो निनादमिव घोरम् उद्धतं [ ध्वनिं वितन्वन् जज्वाल ] ॥५१॥ †

चयानिति ।—[ वह्निः, पवनानुवृत्त्या ] वायुवशेन [ चयानिव ] हिरण्मयान् प्राकारान् इव । "चयः समूहे प्राकारे" इति विश्वः । [ तुङ्गशृङ्गान् अद्रीन् इव, क्वचित् हिरण्म-

* अत्रोत्प्रेक्षालङ्कार उपमासङ्कीर्णः ।

† अत्राश्मनो निनादमिव घोरम् इत्युपमालङ्कारश्चापि ।

मुहुश्चलत्पल्लवलोहिनीभिः
उच्चैः शिखाभिः शिखिनोऽवलीढ़ाः।
तलेषु मुक्ताविशदा बभूवुः
सान्द्राञ्जनश्यामरुचः पयोदाः ॥ ५३ ॥
लिलिक्षतीव क्षयकालरौद्रे
लोकं विलोलार्चिषि लोहिताश्वे।

यानि ] इति "दाण्डिनायन" (६।४।२७४ पा०) इत्यादिना निपातनात् साधुः। [ पुराणि ] नगराणि [ इव ] तथा [ किंशुकानां ] पलाशतरूणाम्। "पलाशे किंशुकः पर्णः" इत्यमरः। [ महावनानि इव च], पुष्पितानि इति शेषः। [ ततान ] विस्तार ; तदाकारेण जज्वाल इत्यर्थः ॥ ५२ ॥ *

मुहुरिति। -[ सान्द्राञ्जनश्यामरुचः ] घनकज्जलश्यामरुचः [ पयोदाः मुहुः ]; चलन्त्यश्च ताः पल्लवलोहिन्यः लोहितवर्णाश्च ताभिः [ चलत्पल्लवलोहिनीभिः ]; "वर्णादनुदात्तात्तोपधात्तो नः" ( ४।१।३९ पा० ) इति ङीप्। तकारस्य नकारः। [ शिखिनः ] अग्नेः [ उच्चैः ] उन्नताभिः [शिखाभिः] ज्वालाभिः [ अवलीढ़ाः ] दग्धा इत्यर्थः। अत एव [ तलेषु ] अधोभागेषु [ मुक्ताविशदाः ] मौक्तिकधवलाः [ बभूवुः ]। जलसंशोषणात् इति भावः। "अधःस्वरूपयोरस्त्री तलम्" इत्यमरः ॥ ५३ ॥ †

लिलिक्षतीति।--[ क्षयकालरौद्रे ] कल्पान्तकालवह्नयावहे

---

* अत्र सर्वत्रोत्प्रेक्षालङ्कारः।

† अत्र घनकज्जलश्यामवर्णानां मेघानां मौक्तिकवैशद्यावलम्बनात्तद्गुणः बहुपमानवान् इति साङ्कर्य्यम्।

पिनाकिना हूतमहाम्बुवाहम्
अस्त्रं पुनः पाशभृतः प्रणिन्ये ॥ ५४ ॥

ततो धरित्रीधरतुल्यरोधसः
तडिल्लतालिङ्गितनीलमूर्त्तयः।
अधोमुखाकाशसरिन्निपातिनीः
अपः प्रसक्तं मुमुचुः पयोमुचः ॥ ५५ ॥

[ विलोलार्चिषि ] चलज्ज्वाले [ लोहिताश्वे ] ज्वलने। "लोहिताश्वो वायुसखः" इत्यमरः। [ लोकं, लिलिक्षति ] लेढुम् इच्छति सति जिघत्सति सति [ इव ]। लिहेः सन्नन्तात् शतृ-प्रत्ययः। [ पिनाकिना पुनः, हूतमहाम्बुवाहं ] हूता आहूता आकारिता महाम्बुवाहा येन तत् [ पाशभृतः ] वरुणस्य [ अस्त्रं, प्रणिन्ये ] प्रयुक्तम् ॥ ५४ ॥ *

तत इति।—[ततः] वरुणास्त्रप्रयोगानन्तरं [धरित्रीधरतुल्य-रोधसः ] पर्वतसमप्रान्ताः। "रोधः स्यात् प्रान्तकूलयोः" इति विश्वः। [ तडिल्लतालिङ्गितनीलमूर्त्तयः ] तडिल्लताभिः आलिङ्गिता नीलमूर्त्तयः नीलाङ्गानि येषां ते [ पयोमुचः ] मेघाः। अधोमुखा आकाशसरिदिव निपतन्तीति [ अधोमुखा-काशसरिन्निपातिनीः ]। "कर्त्तर्युपमाने" (३।२।७९ पा०) इति णिनिः। [ अपः ] जलानि [ प्रसक्तम् ] अननुबन्धम् अविच्छिन्नं यथा तथा [ मुमुचुः ]। इतः प्रभृति एकषष्टितम-श्लोकपर्य्यन्तं वंशस्थवृत्तम् ॥ ५५ ॥ †

* अत्र चयकालरौद्रे इत्युपमासमासगा; तथा लोकं लिलिक्षतीव इति क्रियोत्प्रेक्षा चालङ्कृतिश्च।

† अत्रोपमास्वभावोक्तीनामङ्गाङ्गिलम् ( ५।१।११५ पा० )।

पराहतध्वस्तशिखे शिखावतो
वपुष्यधिक्षिप्तसमिद्धतेजसि।
कृतास्पदास्तप्त इवायसि ध्वनिं
पयोनिपाताः प्रथमे वितेनिरे॥ ५६॥

महानले भिन्नसिताभ्रपातिभिः
समेत्य सद्यः क्वथनेन फेनताम्।
व्रजद्भिरार्द्रेन्धनवत्परिक्षयं
जलैर्वितेने दिवि धूमसन्ततिः॥ ५७॥

पराहतेति।—[पराहतध्वस्तशिखे] पराहताः आसाराभिहताः अतो ध्वस्ता निर्वापिताः शिखा ज्वाला यस्य तस्मिन्, [अधिक्षिप्तसमिद्धतेजसि] अधिक्षिप्तं प्रक्षारितं नाशितमित्यर्थः, ताडितमिति यावत्। अतः समिद्धं झटिति प्रदीप्तं तेजो यस्य तस्मिन् [शिखावतः] अग्नेः [वपुषि] स्वरूपे [तप्ते, अयसि] लौहे [इव कृतास्पदाः] कृतस्थितयः। "आस्पदं प्रतिष्ठायाम्" (६।१।१४६ पा०) इति निपातः। [प्रथमे, पयोनिपाताः] जलपाताः [ध्वनिं, वितेनिरे] विस्तारयामासुः॥ ५६॥ *

महानल इति।—[महानले] अग्नौ, भिन्नानि खण्डितानि सिताभ्राणीव पतन्तीति [भिन्नसिताभ्रपातिभिः]। "कर्त्तर्युपमाने" (३।२।७९ पा०) इति णिनिप्रत्ययः। अत एव [सद्यः, क्वथनेन] पाकेन [फेनतां, समेत्य] प्राप्य [परिक्षयं] नाशं [व्रजद्भिः जलैः, आर्द्रेन्धनवत्] आर्द्रकाष्ठैः तुल्यम्।

* अत्र स्वभावोक्तिरलङ्कृतिः स्फुटैव। सा च अयसीव इत्युपमासङ्कीर्णा।

स्वकेतुभिः पाण्डुरनीलपाटलैः
समागताः शक्रधनुःप्रभाभिदः ।
असंस्थितामादधिरे विभावसो-
र्विचित्रचीनांशुकचारुतां त्विषः ॥ ५८ ॥

जलौघसम्मूर्च्छनमूर्च्छितस्वनः
प्रसक्तविद्युल्लसितैधितद्युतिः ।
प्रशान्तिमेष्यन् धृतधूममण्डलो
बभूव भूयानिव तत्र पावकः ॥ ५९ ॥

"तेन तुल्यं क्रिया चेद्वतिः" (५।१।११५ पा०) इति वति-प्रत्ययः । [दिवि] गगने [धूमसन्ततिः, वितेने] विस्तारिता । फेनादिकम् आर्द्रेन्धनेऽपि तुल्यम् ॥ ५७ ॥ *

स्वकेतुभिरिति ।—पाण्डुरैः नीलैः पाटलैश्च [पाण्डुरनील-पाटलैः] विचित्रैः [स्वकेतुभिः] धूमैः [समागताः] सङ्गताः, अत एव [शक्रधनुःप्रभाभिदः] शक्रधनुषः प्रभाभिदः इन्द्रधनुः-द्युतिभाजः [विभावसोः] अग्नेः [त्विषः, असंस्थिताम्] अस्थिरां [विचित्रचीनांशुकचारुतां] विचित्रस्य चीनांशुकस्य पट्टदुकूलस्य चारुताम् [आदधिरे] दधुः ॥ ५८ ॥ †

जलौघेति ।—[जलौघसम्मूर्च्छनमूर्च्छितस्वनः] जलौ-घानाम् उदकप्रवाहाणां सम्मूर्च्छनेन मेलनेन मूर्च्छितस्वनः प्रवृद्धघोषः । "मूर्च्छनं मेलने प्रोक्तं वृद्धौ मूर्च्छितमेव वा"

* अत्रार्द्रेन्धनवत्परिचयादिपदांशे उपमालङ्कारः, तथा पदार्थहेतुकं काव्यलिङ्गमपि अनुसन्धातव्यम् ।

† अत्र शक्रधनुःप्रभाभिदः विचित्रचीनांशुकचारुताम् इत्युभयत्र असम्भवद्वस्तु-सम्बन्धप्रसङ्गान्निदर्शना स्फुटैव । उभयत्रापि बिम्बानुबिम्बत्वं स्पष्टम् ।

प्रवृद्धसिन्धूर्मिचयस्थवीयसां
चयैर्विभिन्नाः पयसां प्रपेदिरे।
उपात्तसन्ध्यारुचिभिः सरूपतां
पयोदविच्छेदलवैः कृशानवः॥ ६०॥
उपैत्यनन्तद्युतिरप्यसंशयं
विभिन्नमूलोऽनुदयाय संचयम्।
तथा हि तोयौघविभिन्नसंहतिः
स हव्यवाहः प्रययौ पराभवम्॥ ६१॥

---

इति सज्जनः। [प्रसक्तविद्युल्लसितैधितद्युतिः] प्रसक्तैः सङ्गतैः विद्युतां तड़िल्लतानां लसितैः स्फुरणैः एधिता वर्द्धिता द्युतिः यस्य सः [हृतधूममण्डलः] जलाघातात् सम्भूतधूमपटलः [पावकः प्रशान्तिम् एयन्, तत्र] देशे [भूयान् इव बभूव] भूयस्तया स्थापित इवेति उत्प्रेक्षा॥ ५८॥

प्रवृद्धेति।—[प्रवृद्धसिन्धूर्मिचयस्थवीयसां] प्रवृद्धानां सिन्धोः समुद्रस्य ऊर्मीणां चया राशय इव स्थवीयसां स्थूलतराणां [पयसां, चयैः] पूरैः [विभिन्नाः] विश्लेषिताः [कृशानवः] अग्नयः [उपात्तसन्ध्यारुचिभिः] प्राप्तसन्ध्यारागैः [पयोदविच्छेदलवैः] पयोदानां विच्छिद्यन्ते इति विच्छेदा विच्छिन्ना विभिन्ना ये लवाः शकलाः तैः [सरूपतां] समानरूपतां [प्रपेदिरे] इत्युपमा॥ ६०॥

उपैतीति।—[अनन्तद्युतिः] महातेजाः [अपि, विभिन्नमूलः] नष्टमूलः [असंशयं] यथा तथा [अनुदयाय] पुनः अनुत्थानाय [संचयं] नाशम् [उपैति। तथाहि, तोयौघविभिन्नसंहतिः]

अथ विहितविधेयैराशु मुक्ता वितानैः
असितनगनितम्बश्यामभासां घनानाम्।
विकसदमलधाम्नां प्राप नीलोत्पलानां
श्रियमधिकविशुद्धां वह्निदाहादिव द्यौः॥६२

इति विविधमुदासे सव्यसाची यदस्त्रं
बहुसमरनयज्ञः सादयिष्यन्नरातिम्।

तोयौघैः विभिन्ना संहतिः सङ्घातो यस्य स तथोक्तः [सः, हव्यवाहः] अग्निः [पराभवं] नाशं [प्रययौ]। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ६१॥

अथेति।—[अथ] अग्निनिर्वाणानन्तरं [विहितविधेयैः] कृतकृत्यैः [असितनगनितम्बश्यामभासाम्] असितनगस्य अञ्जनाद्रेः नितम्बः कटकः तद्वत् श्यामभासां [घनानां, वितानैः] पटलैः [आशु मुक्ता, द्यौः] आकाशः [वह्निदाहात् इव] इति उत्प्रेक्षा। [विकसदमलधाम्नां] विकसन्ति च तानि अमलधामानि स्वच्छकान्तीनि च तेषां [नीलोत्पलानाम्, अधिकविशुद्धाम्] अत्युज्ज्वलां [श्रियं प्राप] इति निदर्शनालङ्कारः। मालिनीवृत्तम्॥ ६२॥

इतीति।—बहुसमरनयान् अनेकरणोपायान् जानाति इति [बहुसमरनयज्ञः]। "आतोऽनुपसर्गे कः" (३।२।३ पा०) इति कप्रत्ययः। न तु "इगुपध" (३।१।१३५ पा०) इत्यादिना आकारान्तात् "अनुपपदात् कर्मोपपदो भवति विप्रतिषेधेन" * इति वार्त्तिकव्याख्याने भाष्यकारेण अर्थग्रहणम्

---

* "अकारादनुपपदात् कर्मोपपदो विप्रतिषेधेन" (वा० )।

विधिरिव विपरीतः पौरुषं न्यायवृत्तेः
सपदि तदुपनिन्ये रिक्ततां नीलकण्ठः ॥६२

वीतप्रभावतनुरप्यतनुप्रभावः
प्रत्याचकाङ्क्ष जयिनीं भुजवीर्य्यलक्ष्मीम् ।

---

उदाहृत्य भस्य भर्थभ्रशब्दस्य कर्मोपपदत्वं दर्शितम् । [ सव्य-साची ] * अर्जुनः [अरातिं] किरातपतिं [ सादयिष्यन् ] अव-सादयितुकामः सन् इत्यर्थः । क्रियार्थक्रियायां लृटि तस्य शत्रादेशः । † [ इति ] पूर्वोक्तप्रकारेण [ विविधं यदस्त्रम्, उदासे ] प्रयुक्तवान् इत्यर्थः । "उपसर्गादस्यत्यूह्योर्वेति वाच्यम्" (वा०) इति आत्मनेपदम् । [ विपरीतो विधिः ] प्रतिकूलं दैवम् । "विधिर्विधाने दैवेऽपि" इत्यमरः । [ न्यायवृत्तेः ] न्यायेन नीत्या वृत्तिः वर्त्तनं यस्य तस्य नीतिनिष्ठस्य [ पौरुषम् इव, नीलकण्ठः ] शिवः [सपदि, तत् ] अस्त्रं [ रिक्ततां ] व्यर्थताम् [ उपनिन्ये ] संहृतवान् । मालिनीवृत्तम् ॥ ६२ ॥ ‡

वीतेति ।—[ भूतपतिना ] शम्भुना, अनुग्रहीष्यता इति शेषः । [ अस्त्रेषु अपहृतेषु ] सत्सु [ वर्षिष्यता ] उत्तरत्र सहस्रगुणं वितरिष्यता [ दिनकृता] सूर्य्येण [जलेषु] अपहृतेषु सत्सु [लोक इव] । वीतप्रभावो गतास्त्रमहिमा, अन्यत्र—गत-शक्तिः, अत एव तनुः क्षीणः [वीतप्रभावतनुः, अपि ] तथापि [अतनुप्रभावः] निसर्गतः सामर्थ्यात् अधिकः, अन्यत्र—उद्योग-

---

* सव्योपपदे सचतेः णिनिः । तथाहि—"उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे । तेन देवमनुष्येषु सव्यसाचीति मां विदुः" ॥ भा० वि० ४४ अध्याय ।

† "लृटः सद्वा" ( ३।३।१४ पा० ) इति सूत्रम् ।

‡ विपरीतः विधिः न्यायवृत्तेः पौरुषमिव इत्यत्र उपमालङ्कारः ।

अस्त्रेषु भूतपतिनाऽपहृतेषु जिष्णु:
वर्षिष्यता दिनकृतेव जलेषु लोकः ॥ ६४ ॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये युद्धवर्णनं
नाम षोड़शः सर्गः ॥ १६ ॥

---

वान्। ततो [ जिष्णुः * ] अर्जुनः [ जयिनीं ] जयनशीलाम्। "जिद्दचि" ( ३।२।१५७ पा० ) इत्यादिना इनिप्रत्ययः। [भुजवीर्य्यलक्ष्मीं] भुजपराक्रमसम्पदम्। उभयत्रापि पुरुषकारमिति यावत्। तत्कालकुण्ठिताम् इति शेषः। [ प्रत्याचकाङ्क्ष ] प्रत्याहर्त्तुम् इयेष इत्यर्थः। यथा लोको नद्यादिजलापहारेऽपि उपायान्तरेण कूपादिना जीवितुम् इच्छति तद्वत् अस्त्रजालापहारेऽपि भुजबलेन एव जेतुम् इयेष इति भावः। वसन्ततिलकावृत्तम् ॥ ६४ ॥ †

इति श्रीमहामहोपाध्याय-कोलाचलमल्लिनाथसूरि-विरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां षोड़शः सर्गः।

* "ग्लाजिस्थश्च क्स्नुः" (३।२।१३९ पा०) इति सूत्रेण क्स्नु प्रत्ययः।

† अत्र वीतप्रभावतनुरप्यतनुप्रभाव इत्यापाततः विरोधवत् आभासमानत्वात् विरोधाभासः, तथा उपमापि, इत्थं तयोः संसृष्टिः।

# सप्तदशः सर्गः ।

अथापदामुद्धरणक्षमेषु
मित्रेष्विवास्त्रेषु तिरोहितेषु ।
धृतिं गुरुश्रीर्गुरुणाभिपुष्यन्
स्वपौरुषेणेव शरासनेन ॥ १ ॥
भूरिप्रभावेण रणाभियोगात्
प्रीतो विजिह्मश्च तदीयवृत्त्या ।

अथ पञ्चभिः पार्थं विशेषयन् षड्भिः कुलकमाह, अथेत्यादिभिः ।—[ अथ ] जयलक्ष्मीप्रत्याकाङ्क्षानन्तरम् [ आपदाम् उद्धरणक्षमेषु ] आपन्निवारणसमर्थेषु [ अस्त्रेषु ] प्रस्वापनादिषु तादृशेषु [ मित्रेषु इव, तिरोहितेषु ] अन्तर्हितेषु सत्सु [ गुरुणा ] महता [ स्वपौरुषेणेव ] तादृशेन [ शरासनेन, धृतिं ] धैर्य्यम् [ अभिपुष्यन् ] वर्द्धयन् ; अद्यापि धनुषि पौरुषे च सति कियान् अयं किरात इति धैर्य्यम् अवलम्बमान इत्यर्थः । अत एव [ गुरुश्रीः ] प्रवृद्धशोभासम्पत्तिः । "पद्मा मा लक्ष्मीः श्रीर्निगद्यते" इति शाश्वतः ॥ १ ॥ *

भूरीति ।—पुनश्च [ भूरिप्रभावेण ] महानुभावेन सह [ रणाभियोगात् ] युद्धलाभात् [ प्रीतः, तदीयवृत्त्या ] शत्रुवृत्त्या [ विजिह्मः ] विच्छायः [च] तथा [स्पष्टः] दीप्त्या प्रज्वलन् [अपि, अविस्पष्टवपुःप्रकाशः] अविस्पष्टो वपुःप्रकाशो यस्य सः ।

* अत्र मित्रेष्विव स्वपौरुषेणेव इति अंशद्वये उपमालिकारः ।

स्पष्टोऽप्यविस्पष्टवपुःप्रकाशः
सर्पन्महाधूम इवाद्रिवह्निः॥ २॥
तेजः समाश्रित्य परैरहार्य्यं
निजं महन्मित्रमिवोरुधैर्य्यम्।
आसादयन्नस्खलितस्वभावं
भीमे भुजालम्बमिवारिदुर्गे॥ ३॥
वंशोचितत्वादभिमानवत्या
सम्प्राप्तया सम्प्रियतामसुभ्यः।

कुतः?—सर्पन् प्रसरन् महान् धूमो यस्य सः [ सर्पन्महाधूमः अद्रिवह्निरिव ] स्थितः॥ २॥ *

तेज इति।—पुनश्च [ परैः ] अरिभिः [ अहार्य्यम् ] अभेद्यं [निजं] स्वकीयं [ महत् तेजः ] वीर्य्यं [ मित्रमिव समाश्रित्य ] अत एव [ भीमे ] भयानके, अरिः एव दुर्गं तस्मिन् [ अरिदुर्गे ] शत्रुसङ्कटे [ अस्खलितस्वभावम् ] अचलशीलम् [ उरु ] महत् [ धैर्य्यं, भुजालम्बम् इव ] हस्तावष्टम्भम् इव [ आसादयन् ] प्राप्नुवन्; ईदृशे सङ्कटेऽपि महावीर्य्यत्वात् धैर्य्यम् अत्यजन् इत्यर्थः॥ ३॥ †

* अत्र महाधूमः अद्रिवह्निः इव इत्यंशे उपमालङ्कारः स्फुटः; तथा स्पष्टोऽपि अविस्पष्टवपुःप्रकाशः इति विरोधाभासः; एवम् अविस्पष्टवपुःप्रकाशः इति वाक्यं प्रति सर्पन्महाधूम इति वाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्; इत्येषाम् अङ्गाङ्गित्वम्।

† अत्रोपमालङ्कृतिः; भुजालम्बमिव इत्यंशे सम्भावनामात्रत्वात् उत्प्रेक्षा च; इत्यनयोः संसर्गः।

समक्षमादित्सितया परेण
बध्वेव कीर्त्त्या परितप्यमानः ॥ ४ ॥
पतिं नगानामिव बद्धमूलम्
उन्मूलयिष्यन् तरसा विपक्षम् ।
लघुप्रयत्नं निगृहीतवीर्य्यः
त्रिमार्गगावेग इवेश्वरेण ॥ ५ ॥

वंशेति ।—पुनश्च [ अभिमानवत्या ] अभिमानो ममताबुद्धिः तद्वत्या । विषयतया कर्मणि कर्त्तृत्वोपचारः । अभिमानास्पदेन इत्यर्थः । अन्यत्र—कुलशीलाद्यभिमानवत्या [ वंशोचितत्वात् ] स्वकुलानुरूपत्वात् [ असुभ्यः ] प्राणेभ्योऽपि [ सम्प्रियतां सम्प्राप्तया, परेण ] शत्रुणा, अक्ष्णोः समीपे [ समक्षम् ] अव्ययतः । "अव्ययीभावे शरत्प्रभृतिभ्यः" ( ५।४।१०७ पा० ) इति समासान्तः टच्प्रत्ययः । आदातुं ग्रहीतुम् इष्टया [ आदित्सितया ] आजिहीर्षितया इत्यर्थः । आङ्पूर्वात् ददातेः सन्नन्तात् कर्मणि क्तः । [ बध्वा इव कीर्त्त्या ] हेतुना [ परितप्यमानः ]। कर्त्तरि शानच् । "हेतौ" ( २।३।२३ पा० ) इति तृतीया । कन्यया शोक इतिवत् ॥ ४ ॥ *

पतिमिति ।—पुनश्च [ नगानां पतिं ] हिमवन्तम् [ इव बद्धमूलं, विपक्षं ] शत्रुं [ तरसा ] बलेन [ उन्मूलयिष्यन् ] उत्पाटयिष्यन् । किञ्च [त्रिमार्गगावेग इव] त्रिभिः मार्गैः गच्छति इति त्रिमार्गगा गङ्गा । उत्तरपदसमासः । तस्याः वेग इव [ ईश्वरेण, लघुप्रयत्नम् ] अल्पप्रयासं यथा तथा [ निगृहीतवीर्य्यः ]

* अत्रोपमा सदृशधर्मसम्बन्धादुपमानोपमेययोरिति ।

संस्कारवत्त्वाद्रमयत्सु चेतः
प्रयोगशिक्षागुणभूषणेषु ।
जयं यथार्थेषु शरेषु पार्थः
शब्देषु भावार्थमिवाशशंसे ॥ ६ ॥

कुलकम् ।

प्रतिबद्धशक्तिः, हतास्त्रशक्तिरिति यावत् । पुरा किल हिमाद्रि-विदलनाय गगनात् पतन्तं गङ्गाप्रवाहं गङ्गाधरो निजजटा-जूटेन निजग्राह इति पौराणिकी कथा । तद्वत् इत्यर्थः ॥५॥

संस्कारेति ।—एवम्भूतः [ पार्थः, संस्कारवत्त्वात् ] संस्कार-स्थितवासना, अन्यत्र—साधुत्वम् ; असाधूनां प्रयोगनिषेधादिति भावः । अथवा संस्कारो व्युत्पत्तिः तद्वत्त्वात् [ चेतो रमयत्सु, प्रयोगशिक्षागुणभूषणेषु ] प्रयोगः सन्धानमोक्षादिः, शिक्षा अभ्यासो, गुणः तदाहितोऽतिशयः मौर्वी वा । अन्यत्र तु—प्रयोगोऽभियुक्तव्यवहारः, शिक्षा अभ्यासः, गुणाः स्वस्थान-करणादयः श्लेषप्रसादादयो वा, ते भूषणं येषां तेषु । यथा, यथा-भूता अर्था येषां तेषु [यथार्थेषु], अन्यत्र—नियतार्थेषु [शरेषु] शृणन्ति हिंसन्ति इति शराः तेषु ; तन्निर्वाहकत्वात् ; तदा-धारत्वविवक्षायां सप्तमी । [ जयं, शब्देषु ] पदेषु [ भावार्थ ] भावः प्रवृत्तिनिमित्तं सामान्यादिः स एवार्थः तम् [ इव, आशशंसे ] आचकाङ्क्षे । शास्तिशंसत्योराङ्पूर्वयोरिच्छायाम् आत्मनेपदमुपसंख्यानात् । * यथा शाब्दिकाः शब्दैः अर्थं साध-यन्ति, तद्वत् अयं शरैः जयं साधयितुम् इयेष इत्यर्थः ॥ ६ ॥ †

* "आङः शसि इच्छायाम्" ( धा० इ० भ्वा० ) । "आङ्शासु इच्छायाम्" ( धा० इ० अदा० ) ।

† अत्र संस्कारवत्त्वादिपदानां श्लिष्टत्वात् श्लेषसङ्कीर्णोपमालङ्कृतिः ।

भूयः समाधानविवृद्धतेजा
नैवं पुरा युद्धमिति व्यथावान्।
स निर्ववामास्रममर्षनुन्नं
विषं महानाग इवेक्षणाभ्याम्॥ ७॥
तस्याहवायासविलोलमौलेः
संरम्भताम्रायतलोचनस्य।

भूय इति।—[ भूयः ] पुनरपि [ समाधानविवृद्धतेजाः ] समाधानेन युद्धाय मनोव्यवस्थापनेन विवृद्धतेजाः प्रवृद्धप्रतापः [ पुरा ] पुरातनं [ युद्धम् एवम् ] इत्थं ग्लानिसादकरं [ न ] भवति [इति] हेतोः [ व्यथावान् ] परितापवान् [ सः ] अर्जुनः [ ईक्षणाभ्यां ] दृष्टिभ्यां [ महानागः ] महासर्पः [ विषमिव, अमर्षनुन्नं ] क्रोधोत्थापितम् [ अस्रम् ] अश्रु [ निर्ववाम ] * निर्जगार। सात्त्विकानां रससाधारण्यात् रौद्रे रसेऽश्रूदयोक्तिः। —"स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः" इति॥ ७॥ †

तस्येति।—[ आहवायासविलोलमौलेः ] आहवायासेन युद्धायासेन विलोलमौलेः स्रस्तकेशबन्धस्य। "चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः। [संरम्भताम्रायतलोचनस्य] संरम्भताम्रे कोपारुणे आयते विस्तृते लोचने यस्य तस्य। "संरम्भः सम्भ्रमे कोपे" इति विश्वः। [ तस्य ] अर्जुनस्य [ रोषतप्तं मुखं, निदाघः] घर्मः [ निर्वापयिष्यन् ] शिशिरीकरिष्यन्

* अत्र गौण्या वृत्त्या वमधातुना प्रसवणार्थप्रत्यायनात् न अश्लीलत्वदोषः।

† अत्र उभयोः साहश्यधर्मसम्बन्धादुपमालङ्कृतिः।

निर्वापयिष्यन्निव रोषतप्तं
प्रस्नापयामास मुखं निदाघः॥ ८॥
क्रोधान्धकारान्तरितो रणाय
भ्रूभेदरेखाः स बभार तिस्रः।
घनोपरुद्धः प्रभवाय वृष्टेः
ऊर्द्ध्वांशुराजीरिव तिग्मरश्मिः॥ ९॥
स प्रध्वनय्याम्बुदनादि चापं
हस्तेन दिङ्नाग इवाद्रिशृङ्गम्।

[ इव ] इत्युत्प्रेक्षा। [ प्रस्नापयामास ] सिषेच, स्वेदं अनयामासेत्यर्थः। स्नातेः मित्त्वविकल्पितत्वात् ह्रस्वविकल्पः॥ ८॥

क्रोधेति।—[ क्रोधान्धकारान्तरितः ] क्रोधोऽन्धकारः इव तेन अन्तरित आवृतः [ सः ] अर्जुनः [ घनोपरुद्धः ] मेघावृतः [ तिग्मरश्मिः ] रविः [ वृष्टेः प्रभवाय ] वर्षणाय [ तिस्रः, ऊर्द्ध्वांशुराजीरिव ] ऊर्द्ध्वांशूनां राजीरिव। अर्कस्य ऊर्द्ध्वांशुरेखोदयो वृष्टिलिङ्गमित्यागमः। [ रणाय ] रणप्रवृत्तये तिस्रः त्रिसङ्ख्याः [ भ्रूभेदरेखाः ] भ्रूभेदो भ्रूभङ्गः तस्य रेखाः [ बभार ]॥ ९॥ *

स इति।—[ सः ] अर्जुनः, अम्बुदवत् नदतीति [ अम्बुदनादि ]। "कर्त्तर्य्युपमाने" (३।२।७९ पा०) इति णिनिः। [चापं, दिङ्नागः ] दिग्गजः [ अद्रिशृङ्गम् इव, हस्तेन ] करेण

* अत्र यथा ऊर्द्ध्वमरीचिरेखोदयस्य वृष्टेः निमित्तत्वं, तथा रणस्य त्रिरेखाङ्कितभ्रूभेदस्य इति कारणोपमालङ्कृतिः।

बलानि शम्भोरिषुभिस्तताप
चेतांसि चिन्ताभिरिवाशरीरः॥ १०॥
सह्यादितेवाभिनिविष्टबुद्धौ
गुणाभ्यसूयेव विपक्षपाते।

[ प्रध्वनय्य ] ध्वनयित्वा [ शम्भोः, बलानि ] सैन्यानि [अशरीरः] अनङ्गः काम इत्यर्थः, [चेतांसि] युवमनांसि [चिन्ताभिः] प्रयोजनध्यानैः [इव इषुभिः, तताप] तापयामास। तपतिः सकर्मकः। अत्रेषुशब्दः स्त्रीलिङ्गः, अन्यथा उपमानोपमेययोः भिन्नलिङ्गतादोषः स्यात्। "पत्री रोप इषुर्द्वयोः" इत्यमरः॥ १०॥ *

सह्यादितेति।—अभिनिविष्टा शास्त्रनिश्चिता बुद्धिः यस्य स तस्मिन् [ अभिनिविष्टबुद्धौ ] शास्त्रनिश्चितमतौ विषये [ सह्यादिता ] प्रामाणिकार्थसमर्थकता [ इव ]। न हि सम्यक् अभ्यस्तशास्त्रं प्रति सह्याद्यपि शक्नोतीति व्याचक्षते केचित्। अन्ये तु—अभिनिविष्टबुद्धौ आग्रहाविष्टचित्ते विषये सह्यादिता हितोपदेष्टृत्वमिव। न हि आग्रही हितं गृह्णातीति भावः। [ विपक्षपाते ] वीतरागे विषये [ गुणाभ्यसूया ] गुणासहिष्णुता [ इव ]। स हि समदर्शी द्विषन्तमपि न द्वेष्टि इति भावः। [ अगोचरे ] अवाङ्मनसगोचरे ब्रह्मणि [ वागिव च ]। "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतेः इति भावः। [ शराणां शक्तिः, शितिकण्ठकाये ] शिवशरीरे [ उपरेमे ] उपरता; तस्य अक्षोभ्यमहिमत्वात् इति भावः। "विभाषा-

* अत्र अम्बुदनादि भद्रिग्रङ्गम् इव चेतांसीव इत्यादौ उपमालङ्कृतिः। इषुेन इति श्लिष्टत्वात् श्लेषसङ्कीर्णा द्वितीया। परस्परमनाश्रयात् संसृष्टाऽन्या इति संक्षेपः।

अगोचरे वागिव चोपरेमे
शक्तिः शराणां शितिकण्ठकाये ॥ ११ ॥
उमापतिं पाण्डुसुतप्रणुन्नाः
शिलीमुखा न व्यथयाम्बभूवुः ।
अभ्युत्थितस्याद्रिपतेर्नितम्बम्
अर्कस्य पादा इव हैमनस्य ॥ १२ ॥
सम्प्रीयमाणोऽनुबभूव तीव्रं
पराक्रमं तस्य पतिर्गणानाम् ।

ऽकर्मकात्" (१।३।८५ पा०) इत्यस्य वैकल्पिकत्वात् पक्षे आत्मनेपदम्। अत्र मालोपमा ॥ ११ ॥

उमेति।—[पाण्डुसुतप्रणुन्नाः] पाण्डुसुतेन प्रणुन्नाः प्रक्षिप्ताः। शिलो शल्यं मुखे येषां ते [शिलीमुखाः] बाणाः [उमापतिं] शिवम् [अभ्युत्थितस्य] अभ्युन्नतस्य [अद्रिपतेः, नितम्बं] कटकम्। हेमन्ते भवस्य [हैमनस्य]। "सर्वत्राण् च तलोपश्च" (४।३।२२ पा०) इति अण्प्रत्ययः, तकारलोपश्च। [अर्कस्य पादाः] रश्मयः [इव]। "पादा रश्म्यङ्घ्रितुर्यांशाः" इत्यमरः। [न व्यथयाम्बभूवुः।] "मध्ये स्थितस्यासुमतां समूहम् अर्कस्य" इति पाठान्तरे—मध्ये स्थितस्य हैमनस्य अर्कस्य पादाः किरणाः असुमतां प्राणिनां समूहम् इवेति न दुःखमुत्पादयामासुः इति योजना ॥ १२ ॥ *

समिति।—[गणानां पतिः] शिवः [तीव्रं, तस्य] अर्जु-

* अत्रोपमालङ्कृतिः।

विषाणभेदं हिमवानसह्यं
वप्रानतस्येव सुरद्विपस्य ॥ १३ ॥
तस्मै हि भारोद्धरणे समर्थं
प्रदास्यता बाहुमिव प्रतापम् ।
चिरं विषेहेऽभिभवस्तदानीं
स कारणानामपि कारणेन ॥ १४ ॥
प्रत्याहृतौजाः कृतसत्त्ववेगः
पराक्रमं ज्यायसि यस्तनोति ।

नस्य [ पराक्रमं, वप्रानतस्य ] वप्रे रोधसि आनतस्य परिणतस्य, तटप्रहारिण इत्यर्थः । [सुरद्विपस्य असह्यं, विषाणभेदं] दन्तप्रहारं [ हिमवान् इव, सम्प्रीयमाणः ] संहृष्यन् [ अनुबभूव ] अनुभवति स्म । तस्याक्षोभ्यत्वादनुजिघृक्षुत्वाच्च इति भावः ॥ १३ ॥ *

तस्मै हीति ।—[ तस्मै ] पार्थाय [ भारोद्धरणे ] भारस्य भूभारस्य उद्धरणे उद्वहने [ समर्थं प्रतापं बाहुम् इव ] अवष्टम्भतया इति शेषः । अन्यथा भारोद्वहनस्य दुष्करत्वात् इति भावः । "स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम्" इत्यमरः । [प्रदास्यता] वितरिष्यता [कारणानां] ब्रह्मादीनाम् [ अपि, कारणेन ] जनकेन देवेन [ सः, अभिभवः ] अर्जुनपरिभवः [ तदानीं चिरं हि, विषेहे ] सोढः ; वात्सल्यात् इति भावः ॥ १४ ॥ †

* अत्रापि उपमालङ्कृतिः ।

† अत्र बाहुमिवेति वाच्योत्प्रेक्षा ।

तेजांसि भानोरिव निष्पतन्ति
यशांसि वीर्य्यज्वलितानि तस्य ॥ १५ ॥
दृष्टावदानाद् व्यथतेऽरिलोकः
प्रध्वंसमेति व्यथिताच्च तेजः।
तेजोविहीनं विजहाति दर्पः
शान्तार्चिषं दीपमिव प्रकाशः ॥ १६ ॥

अथ त्रिभिः भगवदभिप्रायम् आविष्कुर्वन् चतुर्भिः कलापकमाह, प्रत्याहृतेति।—[प्रत्याहृतौजाः] परेण प्रतिहतबलः सन्नपि [कृतसत्त्ववेगः] कृतोत्साहातिशयः सन् [यः] पुमान् [ज्यायसि] स्वस्मादपि अधिके [पराक्रमं तनोति, तस्य] पुंसः [भानोः] अर्कस्य [तेजांसीव, वीर्य्यज्वलितानि] वीर्य्येण शौर्य्येण ज्वलितानि प्रकाशितानि [यशांसि, निष्पतन्ति] उद्भवन्तीत्यर्थः। हीनस्य अधिकाभियोगो यशस्कर इति भावः ॥ १५ ॥ *

ततः किमित्यत आह, दृष्टेति।—दृष्टम् अवदानं महत् कर्म यस्य तस्मात् [दृष्टावदानात्] † दृष्टपौरुषात् [अरिलोकः] शत्रुजनः [व्यथते] बिभेति। [व्यथिताच्च] ‡ भीताच्च [तेजः, प्रध्वंसं] नाशम् [एति। तेजोविहीनं, दर्पः] उत्साहः [शान्तार्चिषं] निर्वाणज्वालं [दीपं प्रकाश इव, विजहाति] त्यजति ॥ १६ ॥

---

* अत्र उपमालङ्कृतिः स्फुटा अयश्च तथा इति अप्रस्तुतप्रशंसया संसृष्टा।

† अत्र "भीत्रार्थानां भयहेतुः" (१।४।२५ पा०) इत्यपादानत्वम्।

‡ व्यथितादत्र "ल्यब्लोपे कर्मण्यधिकरणे च" इति वार्त्तिकेन पञ्चमी बोध्या।

ततः प्रयात्यस्तमदावलेपः
स जय्यतायाः पदवीं जिगीषोः ।
गन्धेन जेतुः प्रमुखागतस्य
प्रतिद्विपस्येव मतङ्गजौघः ॥ १७ ॥

एवं प्रतिद्वन्द्विषु तस्य कीर्त्तिं
मौलीन्दुलेखाविशदां विधास्यन् ।
इयेष पर्य्यायजयावसादां
रणक्रियां शम्भुरनुक्रमेण ॥ १८ ॥

कलापकम् ।

तत इति ।—[ततः] दर्पहान्यनन्तरम् [ अस्तमदावलेपः ] अस्तौ क्षयं गतौ मदावलेपौ मदगर्वौ यस्य सः । [ सः ] अरिलोकः [गन्धेन] मदगन्धेनैव [जेतुः] जयनशीलस्य । शीलार्थे तृच्प्रत्ययः । [ प्रमुखागतस्य ] अभिमुखागतस्य [प्रतिद्विपस्य] अन्यः [ मतङ्गजौघः ] मत्तगजसमूहः [ इव, जिगीषोः ] नायकस्य [जय्यतायाः पदवीं, प्रयाति] प्राप्नोति ; विजिगीषुणा जेतुं शक्यो भवतीत्यर्थः । "क्षय्यजय्यौ शक्यार्थे" (६।१।८१ पा०) इति निपातः । अत्र श्लोकद्वये ज्यायसि पराक्रमकरणादीनां पूर्वपूर्वस्य उत्तरोत्तरं प्रति कारणत्वकथनात् कारणमालाख्यो-ऽलङ्कारः । लक्षणन्तु उक्तम् ॥ १७ ॥ *

एवमिति ।—[एवम्] उक्तरीत्या [प्रतिद्वन्द्विषु] प्रत्यर्थिमध्ये [ तस्य ] अर्जुनस्य [ मौलीन्दुलेखाविशदां कीर्त्तिं, विधास्यन् ] करिष्यन् [ शम्भुः, अनुक्रमेण ] अविपर्य्यासेन, पर्य्यायेण इत्यर्थः,

---

* एवं मतङ्गजौघः प्रतिद्विपस्य इव इत्यंशे उपमालङ्कारः, तयाचोभयोः संसृष्टिः ।

मुनेर्विचित्रैरिषुभिः स भूयान्
निन्ये वशं भूतपतेर्बलौघः।
सह्यात्मलाभेन समुत्पतद्भिः
जातिस्वभावैरिव जीवलोकः॥ १९ ॥

वितन्वतस्तस्य शरान्धकारं
त्रस्तानि सैन्यानि रवं निशेमुः।
प्रवर्षतः सन्ततवेपथूनि
क्षपाघनस्येव गवां कुलानि॥ २० ॥

जयोऽवसादो भङ्गश्च तौ जयावसादौ यस्यां तां [ पर्य्यायजयावसादां रणक्रियाम्, इयेष ] इच्छति स्म। जयानन्तरं भङ्गो भङ्गानन्तरं जय इति पर्य्यायार्थः। तस्य विपर्य्यासोऽन्यतरनैरन्तर्य्यं तदभावोऽनुक्रम इति अपौनरुक्त्यम्॥ १८॥ *

मुनेरिति।—[मुनेः विचित्रैः इषुभिः स, भूयान्] अनल्पः [ भूतपतेः बलौघः, आत्मलाभेन ] जन्मना [ सह, समुत्पतद्भिः ] आविर्भवद्भिः, आजन्मसिद्धैः इत्यर्थः। जातयः गोत्वमनुष्यत्वादयः, स्वभावा जातिनियता धर्माः तैः [जातिस्वभावैः, जीवलोकः] प्राणिजातम् [इव वशं, निन्ये] नीतः। कर्मणि लिट्। प्राणिनो जातिधर्मान् इव गणाः मुनिशरान् न अतिक्रमितुं शेकुः इत्यर्थः॥ १९॥ †

वितन्वत इति।—[ त्रस्तानि सैन्यानि, सन्ततवेपथूनि ] निरन्तरकम्पानि [ गवां, कुलानि ] वृन्दानि [ प्रवर्षतः ] वृष्टिं

---

* अत्र मौलीन्दुलेखाविशदाम् इत्यंशे उपमालङ्कृतिः।

† अत्रापि उपमा, उपमानोपमेययोः साम्यधर्म्माध्यासनात्।

स सायकान् साध्वसविप्लुतानां
क्षिपन् परेषामतिसौष्ठवेन ।
शशीव दोषावृतलोचनानां
विभिद्यमान: पृथगाबभासे ॥ २१ ॥
क्षोभेण तेनाथ गणाधिपानां
भेदं ययावाकृतिरीश्वरस्य ।

कुर्वत: [ घपाघनस्य ] रात्रिमेघस्य [ इव, शरान्धकारं ] शरै: योऽन्धकारस्तं [ वितन्वत: ] विस्तारयत: [ तस्य ] मुने: सम्बन्धिनं [रवं] शरवर्षघोषं [निशेमु:] शुश्रुवु:, न तु किञ्चित् ददृशु: ; चेष्टा तु दूरे आस्ताम् इति भाव: ॥ २० ॥ *

स इति ।—[ अतिसौष्ठवेन ] अतिलाघवेन [ सायकान् ] शरान् [ क्षिपन्, स: ] अर्जुन:, [ साध्वसविप्लुतानां ] साध्वसेन विप्लुतानां भ्रान्तानां [ परेषां ] द्विषां [ दोषावृतलोचनानां ] दोषेण काचकामलादिरोगेण आवृतलोचनानां दुष्टचक्षुषां [शशीव, :पृथग्विभिद्यमान: आबभासे ]। यथा सदोषचक्षुषा एकश्चन्द्रो नानेव लक्ष्यते तद्वत् एकोऽपि अनेक इव दृष्ट इति भाव: ॥ २१ ॥ †

क्षोभेणेति ।—[ अथ गणाधिपानां ] सम्बन्धिना [ तेन, क्षोभेण ] कम्पेन [ईश्वरस्य, आकृति:] आकारो मूर्त्ति: [ महाह्रदानां तरङ्गकम्पेण, छायामयस्य ] प्रतिबिम्बरूपस्य [ दिनस्य

* उपमालङ्कृतिरवापि । सा पूर्णा ।

† अत्रोपमालङ्कृति:, सा च प्रतीयमानोत्प्रेक्षोज्ज्वासिता ।

तरङ्गकम्पेण महाह्रदानां

छायामयस्येव दिनस्य भर्त्तुः ॥ २२ ॥

प्रसेदिवांसं न तमाप कोपः

कुतः परस्मिन् पुरुषे विकारः।

आकारवैषम्यमिदं च भेजे

दुर्लक्ष्यचिह्ना महतां हि वृत्तिः ॥ २३ ॥

भर्त्तुः ] दिवाकरस्य आकृतिः [इव, भेदं] विकारं [ययौ] प्राप। स्वयं निर्विकारोऽपि प्रतिसूर्य्यवत् परसंसर्गात् तथा प्रतीयत इत्यर्थः ॥ २२ ॥ *

यदि देवोऽपि विकृतस्तर्हि कोपः किं न कृतः ? तत्राह, प्रसेदिवांसमिति।—[ प्रसेदिवांसम् ] अर्जुनं प्रति प्रसन्नचित्तं [ तं ] देवं [ कोपः, न आप ] न प्राप। तत्रापि अनुग्रहं ययौ इति भावः। तत्र हेतुः—[परस्मिन् पुरुषे] परात्मनि देवे, स्वतो निर्विकारे इत्यर्थः। [ विकारः ] कोपरूपः [कुतः ?] न कुतश्चित् इत्यर्थः। ननु तस्य निर्विकारस्य कथं वहिः आकारभेदः कारणाभावादिति चेत्, तत्र विघ्न इत्याह।—[ इदं ] पूर्वोक्तम् [ आकारवैषम्यं च भेजे] किन्तु केनापि कारणेन न कुप्यति इत्यर्थः। ननु निर्विकारे कुत आकारभेदः ? तत्राह।—[ महतां, वृत्तिः ] चेष्टा [ दुर्लक्ष्यचिह्ना ] दुर्ग्रहहेतुका [ हि ] ॥ २३ ॥ †

* अत्रोपमालङ्कारः, उभयोः सादृश्यधर्म्मसम्बन्धात्।

† अत्र सामान्येन विशेषसमर्थनात् अर्थान्तरन्यासः; एवं कारणत्वाभावेऽपि कार्य्यत्वसिद्धवन्निर्देशात् विभावनालङ्कृतिरपि; अनयोरङ्गाङ्गित्वम्।

विस्फार्य्यमाणस्य ततो भुजाभ्यां
भूतानि भर्त्रा धनुरन्तकस्य ।
भिन्नाकृतिं ज्यां ददृशुः स्फुरन्तीं
क्रुद्धस्य जिह्वामिव तक्षकस्य ॥ २४ ॥
सव्यापसव्यध्वनितोग्रचापं
पार्थः किरातधिपमाशशङ्के ।

---

वैषम्यमेवाह, विस्फार्य्यमाणस्येति ।—[ ततः ] अनन्तरं [भूतानि भर्त्रा] भूतपतिना । भृञस्तृच्प्रत्ययः । अत एव "न लोक" ( २।३।६८ पा० ) इत्यादिना षष्ठीप्रतिषेधः । [ भुजाभ्यां] "कर्त्तृकरणयोः तृतीया" ( २।२।१८ पा० ) । [ विस्फार्य्यमाणस्य ] आकृष्यमाणस्य धनुरन्तक इव तस्य [ धनुरन्तकस्य ] सम्बन्धिनीं [ स्फुरन्तीं ] चलन्तीम् अत एव [ भिन्नाकृतिं ] भिन्ना द्विधा इव दृश्यमाना आकृतिः यस्याः तां [ ज्यां ] धनुर्गुणं [ क्रुद्धस्य, तक्षकस्य ] नागविशेषस्य [ जिह्वामिव ददृशुः ] द्विधाभावात् भयङ्करत्वाच्च इति भावः ॥ २४ ॥ *

सव्येति ।—[ पार्थः, सव्यापसव्यध्वनितोग्रचापं ] सव्यापसव्याभ्यां वामदक्षिणगतिभ्यां ध्वनितं नादितम् उग्रचापं येन तं [ किरातधिपम्, अपराद्धः ] प्रमत्तः [ यन्ता, पर्य्यायसम्पादितकर्णतालं ] पर्य्यायेण अयौगपद्येन सम्पादितं कर्णयोस्तालः आस्फालनं येन तं [ व्यालं ] दुष्टम् । "भेद्यलिङ्गः शठे व्यालः" इत्यमरः । [ गजमिव आशशङ्के ] तच्चापचातुर्य्य-

---

* अत्र धनुरन्तक इव इति समासगोपमा, जिह्वामिव इत्युपमा, भिन्नाकृतिमिति प्रतीयमानोत्प्रेक्षा च, इत्येतेषां संसृष्टिः ।

पर्य्यायसम्पादितकर्णतालं
यन्ता गजं व्यालमिवापराद्धः ॥ २५ ॥
निजघ्निरे तस्य हरेषुजालैः
पतन्ति वृन्दानि शिलीमुखानाम् ।
तेजस्विभिः सिन्धुमुखागतानि
यादांसि यादोभिरिवाम्बुराशेः ॥ २६ ॥
विभेदमन्तःपदवीनिरोधं
विध्वंसनं चाविदितप्रयोगः ।

दर्शनात् दुर्जयः कोऽपि अयमनर्थकरश्च इति शङ्कितवान् इत्यर्थः ॥ २५ ॥ *

निजघ्निर इति ।—[हरेषुजालैः, तस्य] अर्जुनस्य [पतन्ति] आगच्छन्ति, शिली शल्यं मुखे येषां तेषां [ शिलीमुखानां ] शराणां [ वृन्दानि । तेजस्विभिः ] प्रबलैः [ अम्बुराशेः यादोभिः ] जलग्राहैः, [ सिन्धुमुखागतानि ] सिन्धुमुखेन नदीमुखेन आगतानि [ यादांसीव ] जलजन्तूनिव । "यादांसि जलजन्तवः" इति अमरः । [ निजघ्निरे ] हतानि ॥ २६ ॥ †

विभेदमिति ।—[ अन्तर्विभेदं ] व्यूहविश्लेषणम् उपजापश्च [पदवीनिरोधं] मार्ग एव प्रतिबन्धनम् । अन्यत्र तु—आसारप्रसारप्रतिबन्धं [ विध्वंसनं ] खण्डनं दुर्गलुण्ठनदाहादिकं [ च ]

---

* अत्र सम्भावनामात्रत्वात् उत्प्रेक्षालङ्कारः ।

† अत्र उपमालङ्कारः । वारिधिस्थमहाग्राहैः नदीमुखागतक्षुद्रजन्तुन् इव इति विशेषणद्वयसामर्थ्यान्नायकात्प्रतिनायकाधिक्यकथनात् व्यतिरेकध्वनिः, इत्यलङ्कारेणालङ्कारध्वनिः ।

नेताऽरिलोकेषु करोति यद्यत्
तत्तच्चकारास्य शरेषु शम्भुः ॥ २७ ॥
सोढ़ावगीतप्रथमायुधस्य
क्रोधोज्झितैर्वेगितया पतद्भिः ।
छिन्नैरपि त्रासितवाहिनीकैः
पेते कृतार्थैरिव तस्य बाणैः ॥ २८ ॥
अलङ्कृतानामृजुतागुणेन
गुरूपदिष्टां गतिमास्थितानाम् ।

---

इत्यादि [यत् यत्, नेता] नायको जिगीषुः [ अविदितप्रयोगः ] संवृतमन्त्रत्वात् अविज्ञातोपायप्रयोगः सन् [ अरिलोकेषु ] शत्रुलोकेषु [ करोति, तत्तत् शम्भुः ] अविदितप्रयोगः अज्ञात-बाणसन्धानमोचनादिकः सन् [ अस्य ] अर्जुनस्य [ शरेषु, चकार ] कृतवान् । कर्त्तरि लिट् । श्लेषालङ्कारः ॥ २७ ॥

सोढ़ेति ।—[ सोढ़ावगीतप्रथमायुधस्य ] सोढ़ानि परैः अवगीतानि गर्हितानि प्रथमायुधानि पूर्वोत्सृष्टबाणाः यस्य [ तस्य ] अर्जुनस्य सम्बन्धिभिः [ क्रोधोज्झितैः ] क्रोधाभिक्षिप्तैः पूर्वबाणवैफल्यात् कोपेन त्यक्तैः इत्यर्थः । अत एव [ वेगितया ] वेगेन [ पतद्भिः ] गतिं कुर्वद्भिः । अत एव [ छिन्नैः अपि, त्रासितवाहिनीकैः ] त्रासिता वाहिन्यो यैः तैः, अत एव [ कृतार्थैः इव बाणैः पेते ] । भावे लिट् । वस्तुतस्तु अकृतार्था एवेत्यर्थः ॥ २८ ॥ *

* अत्राकृतार्थेष्वपि कृ...ार्थत्वसम्भावनादुत्प्रेक्षा, तथा काव्यलिङ्गमपि ।

सतामिवापर्वणि मार्गणानां
भङ्गः स जिष्णोर्धृतिमुन्ममाथ ॥ २९ ॥
बाणच्छिदस्ते विशिखाः स्मरारेः
अवाङ्मुखीभूतफलाः पतन्तः।
अखण्डितं पाण्डवसायकेभ्यः
कृतस्य सद्यः प्रतिकारमापुः ॥ ३० ॥

अलमिति।—[ ऋजुतागुणेन ] ऋजुता अवक्राकारत्वम् अवक्रशीलत्वं च सैव गुणः तेन [ अलङ्कृतानां, गुरूपदिष्टां ] गुरुभिः धनुर्विद्यागुरुभिः धर्मशास्त्रगुरुभिश्च उपदिष्टां दर्शितां [ गतिं ] गमनम् आचारञ्च [ आस्थितानां ] प्राप्तानां [ मार्गणानां ] शराणां [ सतां ] साधूनाम् [ इव, अपर्वणि ] अग्रन्थौ। अन्यत्र—अप्रस्तावे, अकाण्ड इत्यर्थः। "पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे" इति विश्वः। [ सः ] ईश्वरकृतः [भङ्गः] छेदो व्यसनञ्च [ जिष्णोः ] अर्जुनस्य कस्यचित् जित्वरस्य च। "जिष्णुः शक्रे धनञ्जये। जित्वरे" इति विश्वः। [ धृतिं ] धैर्य्यम् [ उन्ममाथ ] जहार इत्यर्थः। अकाण्डे साधुविपत्तिदर्शनात् इव शरभङ्गदर्शनात् धैर्य्यभङ्गोऽभूत् इत्यर्थः ॥ २९ ॥ *

बाणेति।—[ बाणच्छिदः ] पार्थशरच्छेदिनः [ ते स्मरारेः विशिखाः, अवाङ्मुखीभूतफलाः ] विमुखाग्राः विफलाश्च सन्तः [ पतन्तः, पाण्डवसायकेभ्यः ]। क्रियाग्रहणात् चतुर्थी। † पाण्डवसायकानां [ कृतस्य ] फलभङ्गरूपस्य स्वकर्मणः [ सद्यो-

* अत्रोपमालङ्कृतिरभङ्गश्लेषसंकीर्णा इति सङ्क्षेपः।

† "क्रियाग्रहणमपि कर्त्तव्यम्" (१।४।३२ पा० सूत्रे भाष्यम्)।

चित्रीयमाणानतिलाघवेन
प्रमाथिनस्तान् भवमार्गणानाम् ।
शङ्काकुलाया निचखान दूरं
बाणान् ध्वजिन्या हृदयेष्वरातिः ॥३१॥
तस्यातियत्नादतिरिच्यमाने
पराक्रमेऽन्योऽन्यविशेषणेन ।

ऽखण्डितं प्रतिकारम् आपुः ]। अत्युत्कटं कर्म सद्यः फलं दर्शयतीति भावः ॥ ३० ॥ *

पुनः अर्जुनस्य जयमाह, चित्रीयमाणानिति ।—[अरातिः] अर्जुनः [ अतिलाघवेन ] अतिशीघ्रत्वात् [ चित्रीयमाणान् ] चित्रमाश्चर्यं कुर्वाणान् । "नमोवरिवश्चित्रङः क्यच्" (३।१।१८ पा० ) [ भवमार्गणानां प्रमाथिनः ] खण्डयतः [ तान् बाणान्, शङ्काकुलायाः] समाकुलायाः संक्षुभितायाः इत्यर्थः, [ध्वजिन्याः] सेनायाः [हृदयेषु, दूरं ] गाढं [निचखान] निखातवान् ॥ ३१ ॥

तस्येति ।—[ तस्य ] अर्जुनस्य [ पराक्रमेऽतियत्नात् ] हेतोः [ अन्योऽन्यविशेषणेन ] अन्योऽन्यस्य विशेषणेन अतिशयकरणेन [ अतिरिच्यमाने ] अतिक्रम्यमाणे सति [ पुरां हन्ता ] त्रिपुरविजयी हरः [ भूरि ] प्रभूतं [ पृषत्कवर्षं ] बाणवर्षम् । "पृषत्कबाणविशिखाः" इत्यमरः । निदाघे भवः [ नैदाघः, मेघः ] अम्बुवाहः [ अम्बु ] जलम् [ इव, निरास ] मुमोच ।

---

* अत्र सद्यःप्रतीकारप्राप्तौ अवाङ्मुखीभूतफलरूपपदार्थस्य हेतुत्वेन पदार्थहेतुकं काव्यलिङ्गम् । तच्चाभङ्गश्लेषानुप्राणितम् ।

हन्ता पुरां भूरि पृषत्कवर्षं
निरास नैदाघ इवाम्बु मेघः ॥ ३२ ॥
अनामृशन्तः क्वचिदेव मर्म्म
प्रियैषिणानुप्रहिताः शिवेन ।
सुहृत्प्रयुक्ता इव नर्मवादाः
शरा मुनेः प्रीतिकरा बभूवुः ॥ ३३ ॥
अस्त्रैः समानामतिरेकिणीं वा
पश्यन् इषूणामपि तस्य शक्तिम् ।

---

अस्यतेर्लिट् । निदाघग्रहणं वर्षणस्य अतितीव्रत्वद्योतनार्थम् ॥ ३२ ॥ *

अनामृशन्त इति ।—[प्रियैषिणा] प्रियचिकीर्षुणा [शिवेन, अनुप्रहिताः] प्रयुक्ताः. अत एव [क्वचित् एव मर्म, अनामृशन्तः] अस्पृशन्तः ते [ शराः, सुहृत्प्रयुक्ताः ] सुहृन्मित्रं सोऽपि प्रियैषी, तेन प्रयुक्ताः उच्चारिताः [ नर्मवादाः ] प्रियवादा [ इव, मुनेः ] अर्जुनस्य [ प्रीतिकराः ] प्रीतिजनकाः [ बभूवुः ] ॥ ३३ ॥ †

अस्त्रैरिति ।—[ अस्त्रैः ] स्वायुधैः [ समानां ] तुल्याम्

---

* अत्र पुरारिनैदाघाम्बुदयोः वाणवर्षासारपातयोश्च उपमानोपमेयभावकल्पने विशेषणविशेष्यभावाप्तत्वात् एकेनेव शब्देन उभयोरुपमानोपमेययोः अभिधानात् । उपमावाचकत्यन्तरिता एकैव शब्दिका वाक्यार्थोपमासु वाक्योपमाभक्तिः । तथाच भोजराजः ।—

"यापि वाक्यार्थयोः साऽपि चतुर्धैकैव शब्दिका ।
नैकेव शब्दिकेवादिशून्या वैधर्म्यवत्यपि ॥" इति ।

† अत्र उपमैव स्पष्टा ।

विषादवक्तव्यबल: प्रमाथी
स्वमाललम्बे बलमिन्दुमौलि: ॥ ३४ ॥
ततस्तपोवीर्य्यसमुद्धतस्य
पारं यियासो: समरार्णवस्य ।
महेषुजालान्यखिलानि
अर्क: पयांसीव समाचचाम ॥ ३५ ॥
रिक्ते सविश्रम्भमथार्जुनस्य
निषङ्गवक्त्रे निपपात पाणि: ।

---

[ अतिरेकिणीं ] ततोऽधिकां [ वा. तस्य ] मुने: [ इषूणाम् अपि शक्तिं पश्यन्, विषादवक्तव्यबल: ] विषादेन उत्साहभङ्गेन वक्तव्यानि निर्वाच्यानि बलानि सैन्यानि यस्य स: [ प्रमाथी ] शत्रुमर्दन: [ इन्दुमौलि: ] महादेव: [ स्वं बलम् ] आत्मीयं महिमानम् [ आललम्बे ] स्वसामर्थ्यम् अवलम्बितवान् ॥ ३४ ॥

तत इति ।—[ तत: ] महिमप्रादुर्भावानन्तरं देव: [ तपोवीर्य्यसमुद्धतस्य ] तपोवीर्य्याभ्यां समुद्धतस्य प्रगल्भस्य [समरार्णवस्य ] समर एव अर्णवस्तस्य [ पारम् ] अन्तं [ यियासो: ] जिगमिषो: [ जिष्णो: ] अर्जुनस्य [ अखिलानि महेषुजालानि] समग्रबाणसमूहान् [ अर्क: ] सूर्य्य: [ पयांसीव ] जलानीव [ समाचचाम ] संजहारेत्यर्थ: ॥ ३५ ॥ *

रिक्त इति ।—[ अथ ] बाणान्तर्धानानन्तरम् [ अर्जुनस्य, पाणि: ] कर: [ रिक्ते ] बाणशून्ये [ निषङ्गवक्त्रे ] तूणीरमुखे [ अन्यद्विपापीतजले ] अन्यद्विपेन गजान्तरेण आपीतजले पीत-

---

* अत्रोपमालङ्कृति: स्फुटा ।

अन्यद्विपापीतजले सतर्षं
मतङ्गजस्येव नगाश्मरन्ध्रे ॥ ३६ ॥
च्युते स तस्मिन्निषुधौ शरार्थात्
ध्वस्तार्थसारे सहसेव बन्धौ ।
तत्कालमोघप्रणयः प्रपेदे
निर्वाच्यताकाम इवाभिमुख्यम् ॥ ३७ ॥

---

तोये [नगाश्मरन्ध्रे] नगस्य अचलस्य अश्मरन्ध्रे शिलागर्त्ते प्रदरे इत्यर्थः । [सतर्षं] सतृष्णं यथा स्यात्तथा इति क्रियाविशेषणम् । [मतङ्गजस्य] पाणिः लक्षणया करः [इव, सविश्रम्भं] सन्ति एव बाणा इति सविश्वासं [निपपात] ॥ ३६ ॥ *

च्युत इति ।—[शरार्थात्] शरा एव अर्थः धनं, तस्मात् [च्युते] भ्रष्टे [तस्मिन्, इषुधौ] निषङ्गे [सहसा] झटिति [ध्वस्तार्थसारे] अकाण्डे नष्टधनसारे [बन्धौ इव, तत्कालमोघप्रणयः] तत्काले मोघः वितथः प्रणयः प्रीतिः यस्य सः तत्कालकृतव्यर्थप्रार्थनः । पूर्वं कृतार्थ एव इति भावः । [सः] पाणिः । निर्वाच्यतां कृतघ्नत्वात् अपवादराहित्यं कामयत इति [निर्वाच्यताकामः] । "शीलिकामिभक्ष्याचरिभ्यो णः" † (वा०) सः [इव] इत्युत्प्रेक्षा । [आभिमुख्यं प्रपेदे] । यथा कश्चित् कृतघ्नः तत्काले अकृतोपकारमपि बन्धुं पूर्वोपकारस्मरणात् पुनः पुनरनुबध्नाति तद्वत् इत्यर्थः ॥ ३७ ॥

* साधारणसादृश्यधर्मसम्बन्धादुपमानोपमेययोरत्रोपमा, सा च श्लेषसङ्कीर्णा ।

† "कर्म्मण्यण्" (३।२।१ पा०) इत्यपवादकमेतद्वार्त्तिकमत्र प्रदर्शितं प्रसङ्गात् इति ।

आघट्टयामास गतागताभ्या
सावेगमग्राङ्गुलिरस्य तूणौ ।
विधेयमार्गे मतिरुत्सुकस्य
नयप्रयोगाविव गां जिगीषोः ॥ ३८ ॥
बभार शून्याकृतिरर्जुनस्तौ
महेषुधी वीतमहेषुजालौ ।

आघट्टयामासेति ।—[ अस्य ] मुनेः अग्रा चासौ अङ्गुलिश्च इति [अग्राङ्गुलिः] । "हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदात्" इति वामनः । [ विधेयमार्गे ] कर्त्तव्यान्वेषणे [ उत्सुकस्य ] प्रवृत्तस्य [ गां ] भुवं [ जिगीषोः ] नायकस्य [ मतिः ] बुद्धिः नयः षाड्गुण्यं प्रयोगः उपायः, तौ [ नयप्रयोगौ इव, तूणौ ] निषङ्गौ [ सावेगं ] ससम्भ्रमम् । "इष्टानिष्टागमाज्ज्ञानमावेगश्चित्तसम्भ्रमः" इति शाश्वतः । [ गतागताभ्यां ] यातायाताभ्याम् आवापोद्वापाभ्यां च [ आघट्टयामास ] । अन्यत्र तु— वितर्कयामास । शरग्रहणाय पुनःपुनः तूणयोः पाणिं व्यापारयामासेत्यर्थः ॥ ३८ ॥ *

बभारेति ।—[ शून्याकृतिः ] इष्टनाशात् निस्तेजस्करूपः [अर्जुनः, तौ, वीतमहेषुजालौ] वीतानि रिक्तानि महेषुजालानि ययोः तौ [महेषुधी] महानिषङ्गौ । [विजिह्मः] शून्यः [ लोकः युगान्तसंशुष्कजलौ ] युगान्ते संशुष्कजलौ । "शुषः कः"

* अत्रैकवाक्ये उपमानोपमेययोः साधर्म्यसाम्यम् इति उपमा ।

युगान्तसंशुष्कजलौ विजिह्मः
पूर्वापरौ लोक इवाम्बुराशी ॥ ३९ ॥
तेनानिमित्तेन तथा न पार्थः
तयोर्यथा रिक्ततयाऽनुतेपे ।
स्वामापदं प्रोज्झ्य विपत्तिमग्नं
शोचन्ति सन्तो ह्युपकारिपक्षम् ॥ ४० ॥
प्रतिक्रियायै विधुरः स तस्मात्
कृच्छ्रेण विश्लेषमियाय हस्तः ।

( ८।२।५१ पा० ) इति निष्ठातकारस्य ककारः। [ पूर्वापरौ, अम्बुराशी ] समुद्रौ [ इव, बभार ] ॥ ३९ ॥

तेनेति।—[ पार्थः, तयोः ] तूणयोः [ रिक्ततया ] हेतुना [ यथा, अनुतेपे ] शशोच [ तथा तेन, अनिमित्तेन ] बाणक्षयरूपेण दुर्निमित्तेन [ न ] शुशोच। [हि] तथाहि [सन्तः स्वाम् आपदं, प्रोज्झ्य] विसृज्य [विपत्तिमग्नम्, उपकारिपक्षं] उपकारिणां पक्षं वर्गं [ शोचन्ति ]। स्वव्यसनापेक्षया परकीयव्यसनमेव सतामनुतापकम् इत्यर्थः ॥ ४० ॥ *

प्रतीति।—[ प्रतिक्रियायै विधुरः ] प्रतिकर्त्तुम् असमर्थः। "तुमर्थाच्च भाववचनात्" ( २।३।१५ पा० ) इति चतुर्थी। अर्जुनस्य [ सः, हस्तः ] पाणिः [ पराङ्मुखत्वेऽपि ] तत्कालवैमुख्येऽपि [ कृतोपकारात् तस्मात् तूणीमुखात् मित्रकुलात्, आर्य्यः ] साधुः कृतज्ञः [ इव ]। "आर्य्यः साधुकुलीनयोः"

* अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

पराङ्मुखत्वेऽपि कृतोपकारात्
तूणीमुखान्मित्रकुलादिवार्य्यः ॥ ४१ ॥
पश्चात्क्रिया तूणयुगस्य भर्त्तु:
जज्ञे तदानीमुपकारिणीव ।
सम्भावनायामधरीकृतायां
पत्युः पुरः साहसमासितव्यम् ॥ ४२ ॥

इति विश्वः । [ कृच्छ्रेण ] महाकष्टेन [ विश्लेषमियाय ] गौरादित्वात् तूणशब्दात् ङीष् * ॥ ४१ ॥ †

पश्चादिति ।—[ तदानीं, भर्त्तुः ] स्वामिनः । कर्त्तरि षष्ठी । ‡ [ पश्चात्क्रिया ] पृष्ठतः करणं [ तूणयुगस्य ; उपकारिणीव ] उपकारिकेव [ जज्ञे ] जाता । तथा हि । [ सम्भावनायां ] स्वयोग्यतायाम् [ अधरीकृतायाम् ] अफलीकृतायां [ पत्युः ] स्वामिनः [ पुरः ] अग्रे [ आसितव्यम् ] आसंस्थितिः । बहुल-ग्रहणाद्भावे तव्यप्रत्ययः । § [ साहसं ] न योग्यम् । भर्त्रा सम्भावितस्य अवसरे अनुपकर्त्तुः अनुजीविनः तत् साम्मुख्यम् अनुचितमित्यर्थः ॥ ४२ ॥ ¶

* "षिद्गौरादिभ्यश्च" ( ४।१।४१ पा० ) इति सूत्रम् ।

† अत्रोपमालङ्कृतिः ।

‡ "कर्त्तृकर्मणोः कृति" ( २।३।६५ पा० ) सूत्रम् ।

§ "तव्यत्तव्यानीयरः" ( ३।१।९६ पा० ) सूत्रम् ।

¶ अत्रापि सामान्येन विशेषसमर्थनादर्थान्तरन्यासः, उपकारिणीव इत्युत्प्रेक्षा-ङ्गाश्रितः । तथा चोत्प्रेक्षितार्थस्य समर्थनादनौचित्यं दोषः ।

तं शम्भुराक्षिप्तमहेषुजालं
लोहैः शरैर्मर्मसु निस्तुतोद ।
हृतोत्तरं तत्त्वविचारमध्ये
वक्तेव दोषैर्गुरुभिर्विपक्षम् ॥ ४३ ॥

जहार चास्मादचिरेण वर्म
ज्वलन्मणिद्योतितहैमलेखम् ।
चण्डः पतङ्गान्मरुदेकनीलं
तडित्वतः खण्डमिवाम्बुदस्य ॥ ४४ ॥

तमिति ।—[ शम्भुः, आक्षिप्तमहेषुजालम् ] आक्षिप्तानि आहृतानि महेषुजालानि यस्य [तं] मुनिं [ तत्त्वविचारमध्ये ] वादमध्ये [ हृतोत्तरं ] निरुत्तरीकृतं [ विपक्षं ] प्रतिवादिनं [ वक्ता ] वादी, [ गुरुभिः, दोषैः ] निग्रहस्थानैः [इव, लोहैः ] लोहमयैः [ शरैः मर्मसु, निस्तुतोद ] व्यथयामास ॥ ४३ ॥ *

जहारेति ।—[च] किञ्च [अस्मात्] मुनेः [अचिरेण] शीघ्रम् ; [ ज्वलन्मणिद्योतितहैमलेखं ] ज्वलद्भिः मणिभिः द्योतिताः हैम्यः सौवर्ण्यो लेखाः यस्य तत् तथोक्तम् । [ वर्म ] कवचम्, [ चण्डः, मरुत् ] पवनः [पतङ्गात्] सूर्य्यात् [ एकनीलं ] केवलं कृष्णवर्णम् । "एके मुख्यान्यकेवलाः" इत्यमरः । [तडित्वतः] तडिद्युक्तस्य [ अम्बुदस्य खण्डमिव जहार ] । तदा भगवन्मायया मुक्तकञ्चुको मुनिः मेघनिर्मुक्तः सूर्य्य इव दिदीपे इति भावः ॥ ४४ ॥ †

* अत्रोपमा, उपमानोपमेययोः साहश्यलक्ष्मीसम्बन्धात् ।

† अत्र द्वयोः साहश्यलक्ष्मीसमुल्लसनादुपमा ।

विकोशनिर्धौततनोर्महासेः
फणावतस्य त्वचि विच्युतायाम् ।
प्रतिद्विपाबद्धरुषः समक्षं
नागस्य चाक्षिप्तमुखच्छदस्य ॥ ४५ ॥
विबोधितस्य ध्वनिना घनानां
हरेरपेतस्य च शैलरन्ध्रात् ।
निरस्तधूमस्य च रात्रिवह्नेः
विना तनुत्रेण रुचिं स भेजे ॥ ४६ ॥

युग्मकम् ।

अथ युग्मेनाह, विकोशेति ।—स: अर्जुन: तनुत्रेण तनुं त्रायत इति तनुत्रं वर्म । "आतोऽनुपसर्गे कः" (३।२।३ पा०) इति कप्रत्ययः । तेन विना ; विकोशः कोशादुद्धृत: निर्धौततनु: शाणोल्लीढमूर्त्तिः, ततो विशेषणसमासः, तस्य [ विकोशनिर्धौततनोः, महासेः ] महाखड्गस्य तथा [ त्वचि, विच्युतायां ] सत्यां [ फणावतस्य ] मुक्तकञ्चुकस्य सर्पस्य [ प्रतिद्विपाबद्धरुषः ] प्रतिद्विपे प्रतिगजे आबद्धरुषो बद्धकोपस्य [ समक्षं ] प्रतिगजस्य अग्रे [ आक्षिप्तमुखच्छदस्य ] निरस्तमुखावरणस्य [ नागस्य ] गजस्य [च] ॥ ४५ ॥

विबोधितस्येति ।—[ घनानां, ध्वनिना ] गर्जितेन [ विबोधितस्य, शैलरन्ध्रात्] कन्दरात् [ अपेतस्य ] निष्क्रान्तस्य [हरे:] सिंहस्य [ च ] तथा [ निरस्तधूमस्य ] गतधूमस्य [रात्रिवह्नेः च, रुचिं ] शोभां [ भेजे ]। एतेन अस्य तीक्ष्णत्व-वैरनिर्या-

अचित्ततायामपि नाम युक्ताम्

अनूर्ध्वतां प्राप्य तदीयकृच्छ्रे ।

महीं गतौ ताविषुधी तदानीं

विवव्रतुश्चेतनयेव योगम् ॥ ४७ ॥

स्थितं विशुद्धे नभसीव सत्त्वे

धाम्ना तपोवीर्य्यमयेण युक्तम् ।

शस्त्राभिघातैस्तमजस्रमीशः

त्वष्टा विवस्वन्तमिवोल्लिलेख ॥ ४८ ॥

तनत्व-रणदुर्मदत्व-मनस्वित्व-तेजस्वित्वानि उक्तानि। अत्र रुचिमिव रुचिमिति सादृश्याक्षेपात् असम्भवद्वस्तुसम्बन्धो निदर्शनालङ्कारो मालया संसृष्टः ॥ ४६ ॥

अचित्ततायामिति।—[ तदानीं ] कवचपतनसमये [ म ह गतौ तौ इषुधी ] निषङ्गौ [ अचित्ततायामपि ] अचेतनत्वेऽपि [तदीयकृच्छ्रे] स्वामिव्यसने [ युक्तां ] योग्याम्। [नाम] किल, अकिञ्चित्करत्वादिति भावः। [ अनूर्ध्वताम् ] अवाङ्मुखत्वं [ प्राप्य, चेतनया ] प्राणिसाधारणज्ञानेनेव [ योगं ] चैतन्यसम्बन्धं [ विवव्रतुः इव ] इत्युत्प्रेक्षा, अचेतनत्वेऽपि अवाङ्मुखत्वादिचेतनधर्मयोगात् इति भावः ॥ ४७ ॥

स्थितमिति।—[ विशुद्धे ] निर्मले [ नभसि इव, सत्त्वे ] सत्त्वगुणे [ स्थितं, तपोवीर्य्यमयेण ] तपोवीर्य्याभ्याम् आगतेन [ धाम्ना ] तेजसा [ युक्तं, तम् ] अर्जुनम् [ ईशः, त्वष्टा ] विश्वकर्मा [ विवस्वन्तं ] सूर्य्यम् [ इव, अजस्रं ]

संरम्भवेगोज्झितवेदनेषु
गात्रेषु बाधिर्य्यमुपागतेषु।
मुनेर्बभूवागणितेषुराशेः
लौहस्तिरस्कार इवात्ममन्युः ॥ ४९ ॥
ततोऽनुपूर्वायतवृत्तबाहुः
श्रीमान् क्षरल्लोहितदिग्धदेहः।

निरन्तरं [ अस्त्राभिघातैः ] अस्त्रकर्षणैः [ उल्लिलेख ] ततक्ष ॥ ४८ ॥ *

संरम्भेति।—[ संरम्भवेगोज्झितवेदनेषु ] संरम्भवेगेण सम्भ्रमातिशयेन उज्झितवेदनेषु त्यक्तदुःखेषु [ गात्रेषु, बाधिर्य्यं ] स्तैमित्यम् [उपागतेषु] सत्सु ; न गणिताः इषुराशयः येन तस्य [ अगणितेषुराशेः, मुनेः ] अर्जुनस्य [ आत्ममन्युः ] स्वकोपो, लोहस्य विकारः [ लौहः ] कार्ष्णायसः, तिरस्क्रियते आच्छाद्यतेऽनेनेति [ तिरस्कारः ] कञ्चुकः [ इव, बभूव ]। रोषवशात् न किञ्चित् प्रहारदुःखमज्ञासीदित्यर्थः। क्रोधैकवर्मणां वीराणां किमन्यैः लोहभारैः ? इति भावः ॥ ४९ ॥ †

अथ युग्मेन आह, तत इति।—[ ततः ] अनन्तरम् [अनुपूर्व्वायतवृत्तबाहुः ] अनुपूर्व्वौ पूर्व्वमनुगतौ गोपुच्छाकारौ

---

* पुरा किल त्वष्टा स्वदुहितरं संज्ञां स्वस्वामिनः सूर्य्यस्य तेजसा अभिभूताम् अवलोक्य स्वयन्त्रे च तमुल्लिलेख इति पौराणिकी वार्त्ताऽत्रानुसन्धेया। अत्र प्रसिद्धेरनुरोधेन भूयोऽवयवसादृश्ययोगादुपमालङ्कारः। तथा—"प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः। भूयोऽवयवसामान्ययोगः सेहोपमा मता ॥" इति भोजराजः। पूर्वार्द्धपरार्द्धस्थितस्य उपमाद्वयस्य संसृष्टिः।

† अत्र मन्योः तिरस्कारत्वसम्भावनया स्वरूपोत्प्रेक्षालङ्कारः। तथा च प्रकाशकारः।—"सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्"। इति।

आस्कन्द्य वेगेन विमुक्तनादः
क्षितिं विधुन्वन्निव पार्ष्णिघातैः॥ ५० ॥

साम्यं गतेनाशनिना मघोनः
शशाङ्कखण्डाकृतिपाण्डुरेण।
शम्भुं बिभित्सुर्धनुषा जघान
स्तम्बं विषाणेन महानिवेभः॥ ५१ ॥

युग्मकम्।

आयतौ दीर्घौ वृत्तौ वर्त्तुलौ च बाहू यस्य सः [ श्रीमान् ] शोभावान् [ चरणोक्षितदिग्धदेहः ] स्रवद्रुधिरलिप्तगात्रः [ पार्ष्णिघातैः ] चरणतलाघातैः। "तद्ग्रन्थी घुटिके गुल्फौ स्त्रियां पार्ष्णिरधस्तयोः" इत्यमरः। [ क्षितिं, विधुन्वन् ] प्रकम्पयन् [ इव, वेगेन, आस्कन्द्य ] अभिद्रुत्य [ विमुक्तनादः ] सोऽर्जुनः॥ ५० ॥ *

साम्यमिति।—[ मघोनः ] इन्द्रस्य [ अशनिना ] वज्रेण सह [ साम्यं गतेन ] वज्रकल्पेन इत्यर्थः। शशाङ्कस्य खण्डं शकलं तस्य इव आकृतिः यस्य, तद्वद्वक्रमित्यर्थः। पाण्डुरस्य, तद्वदेवेति भावः। तेन [ शशाङ्कखण्डाकृतिपाण्डुरेण धनुषा शम्भुं, बिभित्सुः ] भेत्तुमिच्छुः सन्। [ महान्, इभः ] गजः [ विषाणेन ] दन्तेन [ स्तम्बमिव जघान ]॥ ५१ ॥ †

---

* अत्र क्षितिं विधुन्वन् इव इति क्रियोत्प्रेक्षालङ्कारः।

† अत्रोभयोरुपमानोपमेययोः साहश्यलक्ष्मीसमुल्लासनादुपमालङ्कारः। पूर्वोत्तराद्धयोश्च तयोर्द्वयोरङ्गाङ्गिभावात् साङ्कर्य्यम्।

रयेण सा सन्निदधे पतन्ती
भवोद्भवेनात्मनि चापयष्टिः ।
समुद्धता सिन्धुरनेकमार्गा
परे स्थितेनौजसि जह्नुनेव ॥ ५२ ॥
विकार्मुकः कर्मसु शोचनीयः
परिच्युतौदार्य्य इवोपचारः ।
विचिच्छिदे शूलभृता सलीलं
स पत्रिभिर्दूरमदूरपातैः ॥ ५३ ॥

---

रयेणेति ।—[ रयेण ] वेगेन [ पतन्ती सा चापयष्टिः ], भवस्य संसारस्य उद्भवः उत्पत्तिः यस्मात् तेन [ भवोद्भवेन ] ईश्वरेण [ परे ओजसि ] परमे ज्योतिषि [ स्थितेन, जह्नुना ] राजर्षिणा, [ समुद्धता ] अत्युत्कटा [ अनेकमार्गा ] त्रिस्रोताः [ सिन्धुः ] गङ्गा [ इव आत्मनि, सन्निदधे ] सम्यक् निहिता, अन्तर्निलायितेत्यर्थः ॥ ५२ ॥ *

विकार्मुक इति ।—[विकार्मुकः ] भग्नचापः अत एव [ परिच्युतौदार्य्यः ] दानवर्जितः [ उपचारः ] सत्कारः [ इव, कर्मसु ] रणक्रियासु कृत्येषु च. [ शोचनीयः ] शोच्योऽपूज्यश्च सत्त्वावष्टम्भनात् भग्नचित्तत्वाच्च [ सः ] अर्जुनः [ शूलभृता ] शिवेन [सलीलं] सहेलं यथा तथा [अदूरपातैः] अतिगाढप्रहारैः [ पत्रिभिः ] शरैः [दूरम्] अत्यन्तं [विचिच्छिदे] लुनः ॥५३॥ †

* अलङ्कारः पूर्ववत् ।

† अत्र विकार्मुकः कर्मसु इत्यत्र व्यञ्जनसङ्घस्य क्रमस्वरूपाभ्यां सकृत्साम्यनिबन्धनः छेकानुप्रासः । परिच्युतौदार्य्यः इव उपचारः इत्युपमा च । एतयोः स्वतन्त्रं स्थितयोः संसृष्टिः ।

उपोढकल्याणफलोऽभिरक्षन्
वीरव्रतं पुण्यरणाश्रमस्थः ।
जपोपवासैरिव संयतात्मा
तेपे मुनिस्तैरिषुभिः शिवस्य ॥ ५४ ॥

ततोऽग्रभूमिं व्यवसायसिद्धेः
सीमानमन्यैरतिदुस्तरं सः ।
तेजःश्रियामाश्रयमुत्तमासिं
साक्षादहङ्कारमिवाललम्बे ॥ ५५ ॥

उपोढेति ।—[उपोढकल्याणफलः] उपोढमासन्नं कल्याणफलम् अस्त्रलाभरूपं स्वर्गादिकञ्च यस्य सः [ वीरव्रतम् ] आहवादनिवृत्तिरूपं तीव्रं तपश्च [ अभिरक्षन् ] पालयन् । पुण्यो यो रण एव आश्रमः तत्र तिष्ठति इति [ पुण्यरणाश्रमस्थः, संयतात्मा ] नियमितचित्तः [ मुनिः ] अर्जुनः, कश्चित्तपस्वी च [ तैः शिवस्य ] महादेवस्य [ इषुभिः ] शरैः [जपोपवासैः इव, तेपे] तप्तः । तपतेः कर्मणि लिट् ॥ ५४ ॥ *

तत इति ।—[ ततः ] चापान्तर्धानानन्तरं [ सः ] अर्जुनः [अग्रभूमिं] विपदि गन्तव्यस्थानं, शरणम् इत्यर्थः । कुतः ?—[ व्यवसायसिद्धेः ] युद्धोद्योगसिद्धेः [ सीमानम्] अवधिं, साधकतमम् इत्यर्थः । [ अन्यैः ] परैः [ अतिदुस्तरं ] दुरतिक्रमं [ तेजःश्रियां ] प्रतापसम्पदाम् [ आश्रयं ] हेतुम् इत्यर्थः ।

* अत्र जपोपवासैः इव इति साम्यसम्भावनया क्रियोत्प्रेक्षालङ्कृतिः । सा च पुण्यरणाश्रमस्थः इति रूपकानुप्राणिता ।

शरानवद्यन्ननवद्यकर्मा
चचार चित्रं प्रविचारमार्गैः ।
हस्तेन निस्त्रिंशभृता स दीप्तः
सार्कांशुना वारिधिरूर्मिणेव ॥ ५६ ॥
यथा निजे वर्त्मनि भाति भाभिः
छायामयश्चाप्सु सहस्ररश्मिः ।

[ उत्तमासिं ] महाखड्गम् । "सन्महत्" ( २।१।६१ पा० ) इत्यादिना समासः । [ साक्षादहङ्कारं ] सविग्रहम् अभिमानम् [ इव आललम्बे ] जग्राह ॥ ५५ ॥ *

शरानिति ।—[ अनवद्यकर्मा ] अगर्ह्यकर्मा । "अवद्य-पण्य" ( ३।१।१०१ पा० ) इत्यादिना निपातः । [ शरान्, अव-द्यन् ] खण्डयन् वीरः [ निस्त्रिंशभृता ] खड्गयुक्तेन [ हस्तेन सार्कांशुना ] अर्कांशुसहितेन [ ऊर्मिणा ] तरङ्गेण [ वारिधि-रिव, दीप्तः] दीपितः [ सः ] अर्जुनः [ प्रविचारमार्गैः ] खड्गिनां गतिभेदैः [ चित्रं ] यथा तथा [ चचार ] ॥ ५६ ॥ †

यथेति ।—[ भाभिः ] दीप्तिभिः उपलक्षितः । "स्युः प्रभा-रुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः । [ सहस्र-रश्मिः ] अर्कः [ यथा निजे वर्त्मनि ] नभसि [ छायामयः ] प्रतिबिम्बरूपः सन् [ अप्सु अष्टहिमूर्त्तिः भाति [ तथा, सः ]

* अत्र साक्षात् अहङ्कारम् इव आललम्बे इत्यंशे स्वरूपोत्प्रेक्षा ।

† शरानवद्यन्ननवद्यकर्मा इति न-व-द-यानां सकृदावृत्त्या स्वरूपक्रमावैशाद्य छेकानुप्रासः, उपमा च उपमानोपमेयसाधारणधर्मसम्बन्धात् ; इत्यं तयोः संसृष्टिः ।

तथा भ्रमन्नाशु रणस्थलीषु
स्पष्टद्विमूर्त्तिर्ददृशे स भूतैः ॥ ५७ ॥
शिवप्रणुन्नेन शिलीमुखेन
त्सरुप्रदेशादपवर्जिताङ्गः ।
ज्वलन्नसिस्तस्य पपात पाणेः
घनस्य वप्रादिव वैद्युतोऽग्निः ॥ ५८ ॥

---

अर्जुनः नभसि [ रणस्थलीषु च ] स्पष्टे द्वे मूर्त्ती यस्य सः स्पष्टद्विमूर्त्तिः सन् [ आशु भ्रमन्, भूतैः ] गणैः [ ददृशे ] दृष्टः। यथैकोऽर्को नभसि अप्सु च अनेक इव दृश्यते, तथा सोऽपि दिवि भुवि च आशुसञ्चाराद् यौगपद्यभ्रमात् एव एकोऽपि अनेक इव गणैः दृष्ट इत्युत्प्रेक्षा ॥ ५७ ॥ *

शिवेति।—[ शिवप्रणुन्नेन ] शिवेन प्रणुन्नः क्षिप्तः तेन [शिलीमुखेन, त्सरुप्रदेशात्] मुष्टिप्रदेशम् अवधिं कृत्वा। "त्सरुः खड्गादिमुष्टौ स्यात्" इत्यमरः। [ अपवर्जिताङ्गः ] लूनविग्रहः [ असिः ] खड्गः [ तस्य ] अर्जुनस्य [ पाणेः ] करात् [ घनस्य ] मेघस्य [ वप्रात् ] तटात् [ वैद्युतः ] विद्युत्सम्बन्धी [ अग्निः इव ज्वलन् पपात] ॥ ५८ ॥ †

---

* अत्रोपमानोपमेयसाधारणधर्म्मसम्बन्धनिबन्धनोपमा। एवं युगपत् अनेकमूर्त्तित्वानेकदेशसंस्थितत्वद्योतनाद् विशेषः ताभ्यामनुप्राणितेयमुत्प्रेक्षा। विशेषलक्षणं यथा आह प्रकाशकारः।—"विना प्रसिद्धमाधारम् आधेयस्य व्यवस्थितिः। एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥ अन्यत् प्रकुर्व्वतः कार्य्यमशक्यान्यस्य वस्तुनः। तथैव कारणं चेति विशेषः त्रिविधः स्मृतः ॥" इति। अनया च भ्रान्तिमदलङ्कारो व्यज्यते। इत्यलङ्कारेणालङ्कारध्वनिः।

† अत्रोपमानोपमेयसाधारणधर्म्मसम्बन्धादुपमालङ्कारोऽवगन्तव्यः।

आक्षिप्तचापावरणेषुजालः
छिन्नोत्तमासिः स मृधेऽवधूतः ।
रिक्तः प्रकाशश्च बभूव भूमेः
उत्सादितोद्यान इव प्रदेशः ॥ ५९ ॥

स खण्डनां प्राप्य परादमर्षवान्
भुजद्वितीयोऽपि विजेतुमिच्छया ।
ससर्ज वृष्टिं परिरुग्णपादपां
द्रवेतरेषां पयसामिवाश्मनाम् ॥ ६० ॥

आक्षिप्तेति ।—[ आक्षिप्तचापावरणेषुजालः ] आक्षिप्तानि अपहृतानि चापावरणेषुजालानि धनुर्वर्मबाणसमूहा यस्य सः [ छिन्नोत्तमासिः ] लूनमहाखड्गः [ मृधे ] रणे । "मृधमास्कन्दनं सङ्ग्रम्" इत्यमरः [ अवधूतः ] निरस्तः [ सः ] अर्जुनः [ उत्सादितोद्यानः ] उत्सादितम् उत्पाटितम् उद्यानं यस्य सः [ भूमेः प्रदेशः ] भूमिभाग [ इव, रिक्तः ] शून्यः [ प्रकाशः ] निःसम्बाधः [च], दृश्य इति यावत्, [ बभूव ] ॥ ५९ ॥ *

स इति ।—[परात् ] परस्मात् शत्रोः । "पूर्वादिभ्यो नवभ्यो वा" ( ७।१।१६ पा० ) इति विकल्पात् न स्मादादेशः । [ खण्डनां ] भङ्गं [ प्राप्य अमर्षवान्, सः] अर्जुनः [भुजद्वितीयः] भुजमात्रसहायः सन् [अपि, विजेतुम् इच्छया ] । द्रवेभ्यः इतराणि तेषां [ द्रवेतरेषां ] कठिनानां [ पयसाम् इव ] करकाणाम् इवेत्यर्थः । [ अश्मनां ] सम्बन्धिनीं [ परिरुग्णपादपां ]

* अत्रापि अलङ्कारः प्राग्वत् उह्यः ।

नीरन्ध्रं परिगमिते क्षयं पृषत्कैः
भूतानामधिपतिना शिलावितानें।
उच्छ्रायस्थगितनभोदिगन्तरालं
चिक्षेप क्षितिरुहजालमिन्द्रसूनुः॥ ६१॥
निःशेषं शकलितवल्कलाङ्गसारैः
कुर्वद्भिर्भुवमभितः कषायचित्राम्।

परिरुग्णा भग्नाः पादपाः यया सा तां [वृष्टिं ससर्ज] अश्मभिः जघान इत्यर्थः॥ ६०॥ *

नीरन्ध्रमिति।—[शिलावितानें] शिलाजाले [भूतानाम् अधिपतिना] शिवेन [पृषत्कैः] बाणैः [क्षयं परिगमिते] नीते सति [इन्द्रसूनुः] अर्जुनः [उच्छ्रायस्थगितनभोदिगन्तरालम्] उच्छ्रायेण उत्सेधेन स्थगितम् आच्छादितं नभो दिशाम् अन्तरालञ्च येन तत् [नीरन्ध्रं] सान्द्रम्। रोहन्तीति रुहाः। इगुपधलक्षणः कप्रत्ययः। † [क्षितिरुहजालं] क्षितौ रुहा वृक्षास्तेषां जालं [चिक्षेप] प्रेरयामास। "उच्छ्रायं गमितवति" इति प्रामादिकः पाठः॥ ६१॥ ‡

निःशेषमिति।—[ईशानः] शिवः। शानच्प्रत्ययः। [निःशेषं] यथा तथा [शकलितवल्कलाङ्गसारैः] शकलितानि वल्कलानि त्वचः अङ्गानि शाखाः सारो मज्जा च येषां तैः

* अत्रोपमानोपमेयसाधारणधर्म्मनिबन्धनोपमालङ्कृतिः। वंशस्थं वृत्तम्।

† "इगुपधज्ञाप्रीकिरः" (३।१।१३५ पा०) सूत्रम्।

‡ प्रमादस्तु गमितवति इति पाठे—क्तवतः कर्म्मणि प्रयोगेषु च्युतसंस्कारतादोषामातात् इति वर्णितं कण्ठाभरणे। प्रहर्षिणी वृत्तम्।

ईशानः सकुसुमपल्लवैर्नगैस्तैः
आतेने बलिमिव रङ्गदेवताभ्यः ॥ ६२ ॥
उन्मज्जन् मकर इवामरापगाया
वेगेन प्रतिमुखमेत्य बाणनद्याः ।

[ भुवम् अभितः, कषायचित्राम् ] कषायो यो रागः, स्वरसेन रञ्जनम् इति यावत् । "रागे क्वाथे कषायोऽस्त्री" इति वैजयन्ती । तेन चित्रां विचित्रवर्णां [ कुर्वद्भिः सकुसुमपल्लवैः तैः नगैः ] वृक्षैः [ रङ्गदेवताभ्यः ] रङ्गे रणरङ्गे या देवताः ताभ्यः [ बलिं ] पूजाम् [ इव आतेने ] ॥ ६२ ॥ *

उन्मज्जन्निति ।—[गाण्डीवी] अर्जुनः [ उन्मज्जन् ] उत्तरन् [ मकरः ] जलग्राहविशेषः [ अमरापगायाः ] गङ्गायाः [ इव बाणनद्याः ] बाणप्रवाहात् [ वेगेन, प्रतिमुखम् ] अभिमुखम् [ एत्य ] आगत्य [ कनकशिलानिभं ] कनकग्रहणं काठिन्यातिशयद्योतनार्थम् । [ विषमविलोचनस्य ] त्र्यम्बकस्य [वक्षः] हृदयं [ भुजाभ्याम्, आजघ्ने ] ताड़ितवान् । अत्र आत्मनेपदं विचार्य्यम् । "आङो यमहनः" ( १।३।२८ पा० ) इत्यत्र अकर्मकाधिकारात् "स्वाङ्गकर्मकात्" ( वा० ) इति वक्तव्यत्वात् । † न च शिवस्य प्रतिमुखम् इत्यन्वयात् कनकशिलानिभं कनकनिकषतुल्यं श्यामं स्ववक्ष आजघ्ने इत्यर्थः इति

* अत्र पूर्व्वार्द्धे भुवं कषायचित्रां कुर्वद्भिरिति तद्गुणालङ्कारः, तथा उत्तरार्द्धे प्रकृत-सकुसुमपल्लवभङ्गानां रणरङ्गदेवपूजोपहार-सम्भावनया उत्प्रेक्षालङ्कारश्च. तेन च परिणामालङ्कारः व्यज्यते, इत्यलङ्कारेणालङ्कारध्वनिः ।

† अकर्मकात् स्वाङ्गकर्म्मकादित्येव । इति कौ० वृत्तिः ।

गाण्डीवी कनकशिलानिभं भुजाभ्याम्
आजघ्ने विषमविलोचनस्य वक्षः॥ ६३ ॥
अभिलषत उपायं विक्रमं कीर्त्तिलक्ष्म्योः
असुगममरिसैन्यैरङ्कमभ्यागतस्य।

वाच्यम्, अनौचित्याचरणात्। न हि युद्धाय सन्नद्धा निपुणा अपि मल्लाः स्ववक्षस्ताडनम् आचरन्ति, किन्तु स्वभुजास्फालनम्। किञ्च, अनन्तरं वक्ष्यमाणभवकर्त्तृकाविनयसहनविरोधात्, वक्ष एव इत्यन्वयस्य अव्यवधानाच्च पूर्वः एव दूषितत्वात्। अतो व्याकरणान्तरात् द्रष्टव्यम्। केचित्तु—"त्र्यम्बकस्य वक्षः प्राप्य" इत्यध्याहारं स्वीकृत्य अकर्मकत्वात् आत्मनेपदमाहुः॥ ६३ ॥ *

अभिलषत इति।—[कीर्त्तिलक्ष्म्योः, उपायं] साधनभूतम् [अरिसैन्यैः, असुगमं] दुरासदं [विक्रमम् अभिलषतः]।

* अत्र च्युतसंस्कारता-दोषप्रसङ्गे आलङ्कारिकैरुदाहृतः पद्यांशोऽयम् अध्याहारारोपादिनिवेशैः समर्थितोऽपि कथञ्चिद्वर्त्तते यत्रकुत्रचित् यथा,—"आङो यमहनः" (१।३।२८ पा०) इति सूत्रवृत्तौ "अकर्म्मकात् स्वाङ्गकर्मकादित्येव" इत्येवकारेण नियम्यात्मनेपदमुक्तम्। पराङ्गकर्मकताड़ने न तत्प्राप्तिः इत्यसिद्धत्वादुद्राह्य भट्टोजिदीक्षितैः सि० कौ० वृत्तिविन्यासे समालोचितम्—"कथं तर्हि आजघ्ने विषमविलोचनस्य वक्षः?" इति भारविः, "आ हध्वं मा रघूत्तमम्" इति भट्टिश्च, प्रमादएवायम् इति भागवृत्तिः। प्राप्य इत्यध्याहारो वा। ल्यब्लोपे पञ्चमी इति तु ल्यबन्तं विनैव तदर्थावगतिर्यत्र तद्विषयम्। भेत्तुमित्यादि तुमुन्नन्ताध्याहारो वास्तु। समीपमेत्य इति वा" इति यथाकथञ्चित्।

अत्र पूर्व्वोत्तरार्द्धांशगतयोः "उन्मज्जन् मकर इव" "कनकशिलानिभम्" इति उपमालङ्कारयोः निरपेक्षं स्थितयोः संसृष्टिः।

जनक इव शिशुत्वे सुप्रियस्यैकसूनोः

अविनयमपि सेहे पाण्डवस्य स्मरारिः ॥६४॥

इति श्रीभारविकृतौ महाकाव्ये किरातार्जुनीये युद्धवर्णनं
नाम सप्तदशः सर्गः ॥ १७ ॥

सम्पद्यते—यत्किञ्चित् महत् फलं प्रार्थयमानस्य इत्यर्थः। अत एव [ अङ्कम् ] अन्तिकम् [ अभ्यागतस्य ] उत्सङ्गम् आरूढस्य च [ पाण्डवस्य अविनयं स्मरारिः ] अनेन भक्तवात्सल्यम् एव सहनकारणम् इति सूच्यते। [ शिशुत्वे ] शैशवे [ सुप्रियस्य ] परमप्रेमास्पदस्य। कुतः?—एक एव सूनुः तस्य [ एकसूनोः अविनयं जनक इव, सेहे ] सोढ़वान् ॥ ६४ ॥ *

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ-सूरि-विरचितायां किरातार्जुनीयकाव्य-व्याख्यायां घण्टापथसमाख्यायां सप्तदशसर्गव्याख्या।

---

* अत्रोपमानोपमेयसाधारणधर्म्मसम्बन्धादुपमालङ्कारः; स च श्लेषानुप्राणितः। तथा कारणं विनैव सहनरूपकार्य्यसम्पत्तेः विभावना। सहनाभावस्य कारणसत्त्वे तदभावाच्च विशेषोक्तिः, इत्युभयोः साधक-बाधक-प्रमाणाभावात् सन्देहसाङ्कर्य्यम्। मालिनी वृत्तम्।

## अष्टादशः सर्गः ।

तत उदग्र इव द्विरदे मुनौ
रणमुपेयुषि भीमभुजायुधे ।
धनुरपास्य सबाणधि शङ्करः
प्रतिजघान घनैरिव मुष्टिभिः ॥ १ ॥
हरपृथासुतयोर्ध्वनिरुत्पतन्
अमृदुसंवलिताङ्गुलिपाणिजः ।

तत इति ।—[ ततः ] मुनिमुष्टियुद्धानन्तरम् [ उदग्रे ] महति [ द्विरदे ] गजे [ इव, भीमभुजायुधे ] भीमे भुजौ एव आयुधे यस्य तथाभूते [ रणमुपेयुषि मुनौ शङ्करः ] स्वयमपि [ सबाणधि ] सतूणं [ धनुः, अपास्य ] त्यक्त्वा [मुष्टिभिः घनैः] लौहमुद्गरैः [ इव प्रतिजघान ] प्राङ्मुनिकृताघातस्य प्रतिघातं कृतवान् इत्यर्थः। "घनाः कठिनसङ्घातमेघकाठिन्यमुद्गराः" इति वैजयन्ती। "घनस्तु लौहमुद्गरे" इति विश्वः। यद्यपि मुष्टिशब्दः "मुष्ट्या तु बद्धया। सरत्निः स्यादरत्निस्तु निष्क-निष्ठेन मुष्टिना" इत्यमरः उभयथा प्रयोगाद् द्विलिङ्गः, तथापि अत्र उपमानसारूप्यात् पुंलिङ्गो ग्राह्यः। द्रुतविलम्बितं वृत्तम् ॥ १ ॥

हरेति ।—[ हरपृथासुतयोः ] शिवार्जुनयोः [ अमृदुसंवलिताङ्गुलिपाणिजः ] अमृदु निविड़ं यथा तथा संवलिताः सङ्घटिताः अङ्गुलयो येषां ते, मुष्टीकृता इत्यर्थः। तेषु पाणिषु जातः तथोक्तः। [ स्फुटदनल्पशिलारवदारुणः ] स्फुटन्तीनां

स्फुटदनल्पशिलारवदारुणः
प्रतिननाद दरीषु दरीभृतः ॥ २ ॥
शिवभुजाहतिभिन्नपृथुक्षतीः
सुखमिवानुबभूव कपिध्वजः ।
क इव नाम बृहन्मनसां भवेत्
अनुकृतेरपि सत्त्ववतां क्षमः ॥ ३ ॥

विदलन्तीनाम् अनल्पशिलानाम् आरव इव दारुणो भीषणः [ ध्वनिः, उत्पतन् ] उद्गच्छन् । [ दरीभृतः ] गिरेः [ दरीषु ] गुहासु [ प्रतिननाद ] प्रतिदध्वान ॥ २ ॥ *

शिवेति ।—[ कपिध्वजः, शिवभुजाहतिभिन्नपृथुक्षतीः ] शिवस्य भुजाहतिभिः मुष्टिघातैः भिन्ना विदीर्णाः याः पृथवो महत्यः क्षतयः प्रहाराः व्रणास्ताः [ सुखमिव अनुबभूव ] दुःखकरीरपि इति भावः । क्षतीर्दुःखं नाजीगणदित्यर्थः । ननु दुःसहदुःखवेगेषु कथम् अगणना ? इत्यत्राह, क इति ।— [ क इव नाम ] को नु खलु [ सत्त्ववतां ] सत्त्वाधिकानां [ बृहन्मनसां ] तेजस्विनाम् [ अनुकृतेः ] अनुकरणस्य [ अपि क्षमः भवेत् ? ] मनस्विनां चरितं नटवदनुकर्त्तुमपि न कश्चिदीष्टे, तस्य आचरणं तु दूरापास्तम् इत्यर्थः । रौद्ररसाविष्ट-मनसां मनस्विनां कुतः सुखदुःखगणना ? इति भावः ॥ ३ ॥ †

---

* अत्र स्फुटदनल्पशिलारवदारुणः इत्यत्र समासगोपमा ; एवं दरीषु दरीभृतः स्वरूपक्रमावृत्त्या छेकश्च, एतयोः संसृष्टिः ।

† अत्र पूर्व्वार्द्धे सुखमिव इति सम्भावनामात्रत्वात् उत्प्रेक्षा, तथा विभावना-विशेषोक्त्योः सन्देहसाङ्कर्य्यम् । परार्द्धे च सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । तथाच उत्प्रेक्षितार्थसमर्थनात् अनौचित्यं दोषः, इत्यपि सुधीभिर्विभावनीयम् ।

व्रणमुखच्युतशोणितशीकर-
स्थगितशैलतटाभभुजान्तरः ।
अभिनवौषसरागभृता बभौ
जलधरेण समानमुमापतिः ॥ ४ ॥

उरसि शूलभृतः प्रहिता मुहुः
प्रतिहतिं ययुरर्जुनमुष्टयः ।
भृशरया इव सह्यमहीभृतः
पृथुनि रोधसि सिन्धुमहोर्मयः ॥ ५ ॥

निपतितेऽधिशिरोधरमायते
सममरत्नियुगेऽयुगचक्षुषः ।

व्रणेति ।—[ व्रणमुखच्युतशोणितशीकरस्थगितशैलतटाभभुजान्तरः ] व्रणमुखेभ्यः च्युतस्य क्षरितस्य शोणितस्य शीकरैः स्थगितमावृतं शैलतटाभं शिलासदृशं भुजान्तरं वक्षो यस्य स तथोक्तः [ उमापतिः, अभिनवौषसरागभृता ] अभिनवम् औषसरागं सन्ध्यारागं बिभर्त्तीति तथोक्तेन [जलधरेण, समानं] तुल्यं यथा तथा [ बभौ ] इत्युपमा ॥ ४ ॥

उरसीति ।—[ शूलभृतः ] शिवस्य [ उरसि, प्रहिताः ] प्रयुक्ताः [ अर्जुनमुष्टयः ] अर्जुनस्य मुष्टयः [ पृथुनि ] विशाले सह्यमहीभृतः ] सह्याद्रेः [ रोधसि ] तटे [ भृशरयाः ] तीव्र-वेगाः [ सिन्धुमहोर्मयः ] सिन्धोः समुद्रस्य महोर्मयः [ इव, मुहुः प्रतिहतिं ययुः ] ॥ ५ ॥ *

* अत्रोपमालङ्कृतिः ।

त्रिचतुरेषु पदेषु किरीटिना
लुलितदृष्टि मदादिव चस्खले ॥ ६ ॥
अभिभवोदितमन्युविदीपित:
समभिसृत्य भृशं जवमोजसा।

निपतित इति।—अयुगानि चक्षूंषि यस्य तस्य [ अयुगचक्षुष: ] त्रिलोचनस्य [ आयते ] दीर्घे [ अरत्नियुगे ] अरत्न्यो: बद्धमुष्ट्योर्हस्तयो: युगे युग्मे। "हस्तो मुष्ट्या तु बद्धया। सरत्नि: स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना" इत्यमर:। प्रकृते तु मुष्टिमात्रविवक्षया प्रयोग:। शिरोधरायाम् अधि इति [अधिशिरोधरम् ] * अधिकन्धरं [ समं ] युगपत् [ निपतिते ] सति। [ किरीटिना ] अर्जुनेन [ मदादिव ] त्रीणि चत्वारि वा त्रिचतुराणि। "सङ्ख्ययाव्ययासन्न" ( २।२।२५ पा० ) इत्यादिना बहुव्रीहि:। चतुरोऽच्प्रकरणे "त्र्युपाभ्यामुपसंख्यानम्" (वा०) † इति समासान्त: अच्प्रत्यय:। तेषु [ त्रिचतुरेषु पदेषु लुलितदृष्टि ] घूर्णितनेत्रं यथा तथा [ चस्खले ] स्खलितम्। भावे लिट्॥ ६ ॥ ‡

अभिभवेति।—[ अभिभवोदितमन्युविदीपित: ] अभिभवेन उक्तरूपेण परिभवेन उदित: उत्पन्नो यो मन्यु: क्रोध: तेन विदीपित: प्रज्वलित: अर्जुन: [ भृशं जवं, समभिसृत्य ] समभिद्रुत्य [ ओजसा ] बलेन [ शशिकलाभरणस्य ] खण्डेन्दु-

---

* "अव्ययं विभक्तिसमीप" ( २।१।६ पा० ) इति विभक्त्यर्थेऽव्ययीभाव:।

† त्र्युपाभ्याञ्चतुरोऽजिष्यते" इति वार्त्तिकम्।

‡ अत्र प्रकृते आघातजन्यस्य प्रस्खलनस्य मत्तताजन्यत्वोत्प्रेक्षणात् हेतूत्प्रेक्षालङ्कार:।

भुजयुगेन विभज्य समाददे
शशिकलाभरणस्य भुजद्वयम्॥ ७॥

प्रववृतेऽथ महाहवमल्लयोः
अचलसञ्चलनाहरणो रणः।
करणशृङ्खलसङ्कलनागुरुः
गुरुभुजायुधगर्वितयोस्तयोः॥ ८॥

अयमसौ भगवानुत पाण्डवः
स्थितमवाङ्मुनिना शशिमौलिना।

मौलेः शिवस्य [भुजद्वयं भुजयुगेन, विभज्य] वियोज्य [समाददे] जग्राह॥ ७॥ *

प्रववृत इति।—[अथ महाहवमल्लयोः] महाहवे महारणे मल्लयोः बलीयसोः। "मल्लः पात्रे कपोले च मल्लभेदे बलीयसि" इति विश्वः। [गुरुभुजायुधगर्वितयोः] गुरू भुजौ एव आयुधं तेन गर्वितयोः [तयोः] शिवार्जुनयोः [करणशृङ्खलसङ्कलनागुरुः] करणानि करचरणबन्धनानि एव शृङ्खलानि तेषां सङ्कलना सङ्घट्टना तया गुरुः दुस्तरः तथा [अचलसञ्चलनाहरणः] अचलस्य हिमाद्रेः सञ्चलनं कम्पः तस्य आहरणः आरोपकः। कर्त्तरि ल्युः। [रणः, प्रववृते] प्रावर्त्तत॥ ८॥ †

---

* अत्र भुजयुगेन भुजद्वयं समाददे इति यथासंख्यमलङ्कारः। तद् यथा—"यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः" इति प्रकाशकारः।

† अत्र हिमगिरेः सञ्चलनासम्बन्धेऽपि तत्सम्बन्धोक्त्या असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिः। सा च करणस्य शृङ्खलाभेदरूप-रूपकानुप्राणिता, तयोः तयोः रणो रणः इति यमकादिशब्दालङ्कारसंसृष्टा च।

समधिरूढमजेन नु जिष्णुना
स्विदिति वेगवशान्मुमुहे गणैः ॥ ८ ॥
प्रचलिते चलितं स्थितमास्थिते
विनमिते नतमुन्नतमुन्नतौ ।

अयमिति ।—[ अयं ] पुरोवर्त्ती पुमान् [ असौ भगवान् ] प्रसिद्धो देवः । तदुक्तम्—"इदमः समक्षरूपं, समीपतरवर्त्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं, तदिति परोक्षे विजानीयात् ॥" इति । [ उत पाण्डवः ] । अयं हि तिष्ठदवस्थायां भ्रम इति वेदितव्यम् । अथ पतनावस्थायामाह—[ मुनिना, अवाक् ] अधः [ स्थितम् ? ] उत [ शशिमौलिना, अजेन ] देवेन [ नु समधिरूढम् ?] उपरिस्थितम् ? अथ [जिष्णुना स्वित् ?] अर्जुनेन वा समधिरूढम् ? [इति ] एवं [ गणैः ] प्रमथैः [ वेगवशात्, मुमुहे ] भ्रान्तम् । "मुह वैचित्त्ये" भावे लिट् ॥ ८ ॥ *

प्रचलिते इति—[ असहिष्णुना ] तयोः भारमसहमानेन [ भूभृता ] शैलेन [ अभावभयात् ] विनाशभयात् [ इव मुहुः ] । वृषश्च कपिश्च ध्वजौ ययोस्तयोः [ वृषकपिध्वजयोः, प्रचलिते ] चलने सति [ चलितं ] प्रचेले । [ आस्थिते ] तूष्णीम् अवस्थाने [ स्थितं ] तथैव तस्थे । [ विनमिते ] सम्यगाक्रमणे सति [ नतं ] नम्रीभूतम्, अनामीति यावत् ।

* अत्र निरालम्बनो नाम भ्रान्त्यनध्यवसायः, तत्र अनिर्णयान्तः अमिथ्यारूपो वितर्कः । भगवत् पार्थयोः अमिथ्यारूपत्वेन वेगवत्त्वादेकस्य निर्णयाभावात् । तल्लक्षणम् यथा,—"भ्रान्तिमान् भ्रान्तिमाला च भ्रान्तेरतिशयश्च यः । भ्रान्त्यनध्यवसायश्च भ्रान्तिरेवेति मे मतम् ।" इति प्रक्रम्य—"ऊहो वितर्कः सन्देहनिर्णयान्तरधिष्ठितः । द्विधाऽसौ निर्णयान्तश्चानिर्णयान्तश्च कीर्त्यते ॥" अन्यत्सर्वमवदातम् इति भोजदेवः ।

वृषकपिध्वजयोरसहिष्णुना
मुहुरभावभयादिव भूभृता ॥ १० ॥
करणशृङ्खलनिःसृतयोस्तयोः
कृतभुजध्वनि वल्गु विवल्गतोः।
चरणपातनिपातितरोधसः
प्रससृपुः सरितः परितः स्थलीः ॥ ११ ॥

---

[उन्नतौ] उन्नमने सति [उन्नतम्] उदगामि। सर्वत्र भावे क्तः ॥ १० ॥ *

करणेति—[करणशृङ्खलनिःसृतयोः] करणानि कर-चरणबन्धविशेषाः तान्येव शृङ्खलानि तेभ्यो निःसृतयोः मुक्तः त्यक्तबन्धयोः इत्यर्थः। [कृतभुजध्वनिः] कृतो भुजध्वनिः भुजास्फोटनशब्दो यस्मिन् कर्मणि तत्तथा [वल्गु] सुन्दरञ्च यथा तथा [विवल्गतोः] उत्प्लवमानयोः [तयोः] हरपार्थयोः [चरणपातनिपातितरोधसः] चरणपातैः पादक्षेपैः निपातितानि रोधांसि यासां ताः [सरितः] नद्यः [स्थलीः परितः] स्थलीषु [प्रससृपुः] प्रसृताः। "अभितःपरितः" (वा० वृ०) इत्यादिना द्वितीया। "जानपद" (४।१।४२ पा०) इत्यादिना अकृत्रिमार्थे ङीष्। कूलपातक्षोभात् उद्वेल-सलिलाः सरितः स्थलानि प्रामज्जयन् इत्यर्थः। एतेन तयो-र्भार उक्तः ॥ ११ ॥ †

* अत्र विनाशभयादिव इति हेतूत्प्रेक्षा, प्रचलन-नमनाद्यसम्बन्धेऽपि तत्सम्बन्धा-भिधानात् अतिशयोक्तिः। प्रचलिते चलितं, आस्थिते स्थितम्, इत्यादौ क्रमिकान्वयात् यथासंख्यम्; इत्येषाम् अङ्गाङ्गिभावात् साङ्कर्य्यम्।

† अत्र करणशृङ्खलनिःसृतयोरित्यंशे रूपकम्। तथा रणरङ्गस्थानस्थितनिम्नगा-सङ्घानां रोधोनिपातासम्बन्धेऽपि सम्बन्धकल्पनादतिशयोक्तः, एव "निःसृतयोः तयोः" इति यमकं, "सरितः परितः" "वल्गु विवल्गतोः" इत्यत्र स्वरूपक्रमसाम्यनिबन्धनः छेकः; इति एतेषां संसृष्टिः।

वियति वेगपरिप्लुतमन्तरा
समभिसृत्य रयेण कपिध्वजः ।
चरणयोश्चरणानमितक्षितिः
निजगृहे तिसृणां जयिनं पुराम् ॥ १२ ॥
विस्मितः सपदि तेन कर्मणा
कर्मणां क्षयकरः परः पुमान् ।
क्षेमुकाममवना तमक्रम
निष्पिपेष परिरभ्य वक्षसा ॥ १३ ॥

---

वियतीति—[ वियति ] अन्तरिक्षे [ वेगपरिप्लुतं ] वेगेन परिप्लुतम् उत्पतितं [ तिसृणां पुरां जयिनं ] त्रिपुरान्तकम् । "जिदृक्षि" ( ३।२।१५७ पा० ) इत्यादिना इनिप्रत्ययः । [ कपिध्वजः ] अर्जुनः [ चरणानमितक्षितिः ] चरणाभ्यां पादाभ्याम् आनमितक्षितिः सन्, [ रयेण ] वेगेन [ समभिसृत्य ] अभिद्रुत्य [ अन्तरा ] मध्येमार्गं [ चरणयोः ] पदयोः [ निजगृहे ] निगृहीतवान् । उत्पतितस्य भगवतश्चरणौ स्वकराभ्यां जग्राह इत्यर्थः ॥ १२ ॥ *

विस्मित इति ।—[ तेन कर्मणा ] चरणग्रहणरूपेण [ सपदि, विस्मितः ] सविस्मयः [ कर्मणां क्षयकरः ] मोक्षप्रद इत्यर्थः । [ परः पुमान् ] हरः [ अवनौ ] क्षितौ [क्षेमुकामं] क्षेमं कामो यस्य तम् । "तुङ्काममनसोरपि" [ का० ] इति मकारलोपः । [ अक्रमम् ] अक्रान्तं [ तं ] पार्थं [ वक्षसा परिरभ्य निष्पिपेष ] गाढमालिलिङ्ग इत्यर्थः । रथोद्धता वृत्तम् ॥ १३ ॥

---

* अत्र चरणानमितक्षितिः इति असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिः ।

तपसा तथा न मुदमस्य ययौ
भगवान् यथा विपुलसत्त्वतया ।
गुणसंहतेः समतिरिक्तमहो
निजमेव सत्त्वमुपकारि सताम् ॥ १४ ॥

अथ हिमशुचिभस्मभूषितं
शिरसि विराजितमिन्दुलेखया ।
स्ववपुरतिमनोहरं हरं
दधतमुदीक्ष्य ननाम पाण्डवः ॥ १५ ॥

तपसेति ।—[ भगवान् ] देवः [ अस्य ] अर्जुनस्य [विपुलसत्त्वतया ] बहुसत्त्वसम्पदा, धैर्य्यसम्पत्त्येति यावत् । [यथा मुदं ययौ तथा तपसा] मुदं [ न ] ययौ । तथा हि [सतां गुणसंहतेः ] तपःसेवादिगुणसङ्घातात् [ समतिरिक्तम् ] अतिशयितं [ निजं सत्त्वमेव उपकारि ] उपकारकम् [ अहो ] । प्रमिताक्षरा वृत्तम् ॥ १४ ॥ *

अथेति ।—[ अथ हिमशुचिभस्मभूषितं ] हिमशुचिना हिमशुभ्रेण भस्मना भूषितं [ शिरसि इन्दुलेखया, विराजितं ] शोभितम् [ अतिमनोहरं ] सुन्दरं [स्ववपुः दधतम्] । किरातरूपं विहाय निजविग्रहं दधानं [ हरम् उदीक्ष्य पाण्डवो, ननाम ] प्रणतवान् । अपरवक्त्रं वृत्तम् ।—"अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ" इति लक्षणात् ॥ १५ ॥

* अत्र सतां यथा स्वोत्कर्षसत्त्वेनैवाभीष्टलाभः तथा न तपश्चर्य्यादिभिः इतिसामान्येन समर्थितः समधिकोत्कर्षहेतुकाशुतोषाशुतोषप्रसङ्गविशेषः इति अर्थान्तरन्यासः ।

सहशरधि निजं तथा कार्मुकं
वपुरतनु तथैव संवर्मितम् ।
निहितमपि तथैव पश्यन्नसिं
वृषभगतिरुपाययौ विस्मयम् ॥ १६ ॥
सिषिचुरवनिमम्बुवाहाः शनैः
सुरकुसुममियाय चित्रं दिवः ।

सहेति ।—[वृषभगतिः] वृषभस्य इव गतिः यस्य सोऽर्जुनः तस्मिन् समये सह शरधिभ्यां वर्त्तत इति [ सहशरधि ] सनिषङ्गम् । "वोपसर्जनस्य" (६।३।८२ पा०) इति विकल्पात् सहशब्दस्य न सभावः । [ निजं कार्मुकं ] गाण्डीवं [ तथा ] तथैव, पूर्ववत् एव [संवर्मितं] सम्यक् कवचितम् [अतनु] महत् निजं [ वपुः, तथैव निहितं ] यथापूर्वं स्थापितम् । [असिमपि] खड्गञ्च [ तथैव ] पश्यन् [ विस्मयम् उपाययौ ]। क्वचित्तु 'वृषभगतिम्" इति पाठः । तत्र वृषभगतिं शिवञ्च पश्यन् विस्मयम् उपाययौ इत्यर्थः । प्रमुदितवदना वृत्तम् ।—"प्रमुदितवदना भवेत् नौ रसौ" इति लक्षणात् ॥ १६ ॥ *

सिषिचुरिति ।—[ अम्बुवाहाः शनैः अवनिं, सिषिचुः ] उक्षाञ्चक्रुः । [ दिवः ] अन्तरिक्षात् [ चित्रं ] विचित्रं [ सुरकुसुमं ] मन्दारकुसुमानि । जातौ एकवचनम् । [ इयाय ] जगाम । [ अनाहतस्य ] अताड़ितस्य [ दुन्दुभेः ]। जातौ एकवचनम् । [ ध्वनिः ] शब्दः [विमलरुचि] प्रसन्नम् [अखिलं

* अत्र विनष्टप्रायवस्तूनां यथावसरे युगपत् तथैव संस्थापनेन महेश्वरमहिम्नः अलौकसाधारणसम्पत्तिः प्रकाशते इति उदात्तालङ्कारः ।

विमलरुचि भृशं नभो दुन्दुभेः
ध्वनिरखिलमनाहतस्यानशे ॥ १७ ॥
आसेदुषां गोत्रभिदोऽनुवृत्त्या
गोपायकानां भुवनत्रयस्य ।
रोचिष्णुरत्नावलिभिर्विमानैः
द्यौराचिता तारकितेव रेजे ॥ १८ ॥
हंसा बृहन्तः सुरसद्मवाहाः
संह्रादिकण्ठाभरणाः पतन्तः ।

नभो भृशम्, आनशे ] व्याप । अताड़िता एव दुन्दुभयो: नेदुः इत्यर्थः । सर्वमिदम् अस्य सर्वलोकहितार्थित्वात् इति वेदितव्यम् ॥ १७ ॥ *

आसेदुषामिति ।—[ गोत्रभिदः ] इन्द्रस्य [ अनुवृत्त्या ] अनुसरणेन [आसेदुषाम् † ] आसन्नानां [भुवनत्रयस्य, गोपायकानां ] रक्षकाणां लोकपालादीनाम् । "गुपूधूप" ( ३।१।२८ पा० ) इत्यादिना आयप्रत्ययः, तदन्तात् ण्वुल् । [ रोचिष्णुरत्नावलिभिः ] रोचिष्णवः प्रकाशनशीलाः रत्नावलयो येषां तैः । "अलङ्कृञ्" (३।२।१३६ पा०) इत्यादिना इष्णुच्प्रत्ययः ।

* अत्र आकाशात् कुसुमवर्षणाऽताड़ितदुन्दुभिध्वानसङ्घानाम् अतर्कितोपपन्नत्वात् असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिः, हेतुं विना कार्य्योत्पादनप्रसङ्गात् विभावनापि केषाञ्चिन्मता, इत्येषां सन्देहसाङ्कर्य्यम् ; तथा सेकादीनां क्रियाणां यौगपद्यात् समुच्चयभिदश्च ।

† "भाषायां सदवसश्रुवः" ( ३।२।१०८ पा० ) इति लिट् क्वसुप्रत्ययः ।

चक्रुः प्रयत्नेन विकीर्य्यमाणैः
व्योम्नः परिष्वङ्गमिवाग्रपक्षैः ॥ १८ ॥
मुदितमधुलिहो वितानीकृताः
स्रज उपरि वितत्य सान्तानिकीः ।
जलद इव निषेदिवांसं वृषे
मरुदुपसुखयाम्बभूवेश्वरम् ॥ २० ॥

[ विमानैः ] पुष्पकैः [ आचिता ] व्याप्ता [ द्यौः तारकिता ] सञ्जाततारका [ इव, रेजे ]। उत्प्रेक्षालङ्कारः ॥ १८ ॥ *

हंसा इति ।—[ वहन्तः ] महान्तः सुरसद्मानि विमानानि वहन्तीति [ सुरसद्मवाहाः ]। "कर्मण्यण्" ( ३।२।१ पा० ) [ शंखादिकण्ठाभरणाः ] शंखादीनि निष्कादीनि, सुवर्णानि इत्यर्थः, कण्ठाभरणानि किङ्किण्यो येषां ते। [ पतन्तः ] धावन्तः [हंसाः प्रयत्नेन, विकीर्य्यमाणैः ] विक्षिप्यमाणैः [ अग्रपक्षैः ] पक्षाग्रैः [ व्योम्नः, परिष्वङ्गम् ] आलिङ्गनं [ चक्रुः इव ] इत्युत्प्रेक्षा ॥ १९ ॥

मुदितेति ।—अथ [ मरुत् ] वायुः [ जलदे ] मेघे [इव, वृषे निषेदिवांसम् ] उपविष्टम् [ ईश्वरं, मुदितमधुलिहः ] मुदिता मधुलिहो भृङ्गाः याभिः ताः [ वितानीकृताः ] उल्लोचाकाराः कृताः । "अस्त्री वितानमुल्लोचः" इत्यमरः । [सान्तानिकीः ] सन्तानकुसुमविकाराः [स्रजः] मन्दारमाला इत्यर्थः । सन्तानशब्दाद्विकारार्थे ठक् । † "सन्तानः कल्पवृक्षस्य" इत्य-

* एतेन च विमानसङ्कुलक्षितं नभोमण्डलमभवत् इति वासवोपदिष्टभवाराधनविद्धेः निरवच्छिन्नानन्दोदयः त्रिदिवेशानाम् इत्यलङ्कारेण वस्तुध्वनिः।

† "तस्य विकारः" ( ४।३।१३४ पा० ) इति सूत्रम्।

कृतधृति परिवन्दितेनोच्चकैः
गणपतिभिरभिन्नरोमोद्गमैः ।
तपसि कृतफले फलज्यायसी
स्तुतिरिति जगदे हरेः सूनुना ॥ २१ ॥
शरणं भवन्तमतिकारुणिकं
भव ! भक्तिगम्यमधिगम्य जनाः ।

मरः । [ उपरि, वितत्य ] विस्तार्य्य [ उपसुखयाम्बभूव ] प्रह्लादयामास ॥ २० ॥ *

कृतेति ।—[ अभिन्नरोमोद्गमैः ] अविरलरोमाञ्चैः [ गणपतिभिः ] प्रमथमुख्यैः [ उच्चकैः परिवन्दितेन ] साधु साधु इति संस्तुतेन । "वदि अभिवादनस्तुत्योः" कर्मणि क्तः । [हरेः सूनुना ] अर्जुनेन [तपसि] । कृतं फलं भगवत्साक्षात्कारलक्षणं येन तस्मिन् [ कृतफले ] सति इत्यर्थः । [ कृतधृति ] कृतसन्तोषं यथा तथा [ फलज्यायसी ] फलाधिका [ इति ] वक्ष्यमाणा [ स्तुतिः, जगदे ] कथिता ॥ २१ ॥

शरणमिति ।—हे [ अजित ! ] हे अपराजित ! हे [ भव !, अतिकारुणिकम् ] अतिदयालुम् । तदस्य प्रयोजनम् † इति ठक् । [ भक्तिगम्यं ] भक्तिमात्रसुलभं [ भवन्तं, शरणं ] रक्षकम् [ अधिगम्य, जितमृत्यवो ] विगतमरणाः, अमराः भूत्वे

* अत ईश्वरशब्दः महेश्वर-महेन्द्रवाचकः इति श्लिष्टः, तथा मरुत् देवगणः जातित्वादेकवचनं, मातरिश्वा च वृषे मेघे इव उपविष्टं तम् ईश्वरं शिवं मेघवाहनत्वादिन्द्रमपि वितानीकृतमन्दारमालाः उपरिविस्तार्य्य उपसुखयाम्बभूव, इति श्लेषाङ्गसङ्गोपमालङ्कृतिः ।

† तदस्येत्यर्थे "प्रयोजनम्" ( ५।१।१०९ पा० ) इति सूत्रम् ।

जितमृत्यवोऽजित ! भवन्ति भये
ससुरासुरस्य जगतः शरणम् ॥ २२ ॥
विपदेति तावदवसादकरी
न च कामसम्पदभिकामयते ।
न नमन्ति चैकपुरुषं पुरुषाः
तव यावदीश ! न नतिः क्रियते ॥२३॥
संसेवन्ते दानशीला विमुक्त्यै
सम्पश्यन्तो जन्मदुःखं पुमांसः ।

त्यर्थः । [ जनाः ससुरासुरस्य जगतः, भये ] आपदि [ शरणं ] स्वयं रक्षितारः [ भवन्ति ]। "शरणं गृहरक्षित्रोः" इति विश्वः । प्रमिताक्षरा वृत्तम् ॥ २२ ॥ *

विपदिति ।—हे [ ईश ! यावत् तव, नतिः ] प्रणामः [ न क्रियते] पुरुषेणेति शेषः। [तावत्] एव [एकपुरुषम्] एकं पुरुषम् एकाकिनं सन्तम् [ अवसादकरी ] क्षयकरी [ विपत्, एति ] प्राप्नोति । [ कामसम्पत् ] मनोरथसम्पत् [ च, न अभिकाम-यते ] न इच्छति । [ पुरुषाः च ] अन्ये लोकाः तम् एकं पुरुषं तव स्तुतिम् अकुर्वाणं [ न नमन्ति ] न वशे वर्त्तन्ते ; न अनिष्टनिवृत्तिः नापि इष्टप्राप्तिः इत्यर्थः । यदा तु त्वां प्रण-मति तदा एव सर्वं लभते इति भावः ॥ २३ ॥ †

संसेवन्त इति ।—दानं शीलं स्वभावो निजधर्मो येषां ते

---

* अत्र आद्यन्तपदैक्यनिबन्धनः सिंहावलोकः चित्रालङ्कारभेदः बोधव्यः ।

† अत्र व्यतिरेकवाक्येन महेशप्रणतिसाधनेनैव सर्व्वेष्टसाधनम् इति व्यति-रेकान्वयात् वाक्यार्थहेतुककाव्यलिङ्गालङ्कारः ।

यन्निःसङ्गस्त्वं फलस्यानतेभ्यः
तत्कारुण्यं केवलं न स्वकार्य्यम् ॥ २४ ॥
प्राप्यते यदिह दूरमगत्वा
यत्फलत्यमरलोकगताय ।
तीर्थमस्ति न भवार्णववाह्यं
सार्वकामिकमृते भवतस्तत् ॥ २५ ॥

---

[दानशीलाः] त्वाम् एव उद्दिश्य दानं कुर्वन्ति इत्यर्थः । "तस्माद्दानं परमं वदन्ति" इति श्रुतेरिति भावः । कुतः ?—यतः [जन्मदुःखं सम्पश्यन्तः] अनुभवन्तः [पुमांसः, विमुक्त्यै] मोक्षाय [ संसेवन्ते ] भवन्तम् इति शेषः । न च तच्चित्रं, किन्तु [आनतेभ्यः ] प्रणतेभ्यः [ निःसङ्गः ] निस्पृहः [ त्वं यत्. फलसि ] फलं ददासि ; तेषां फलार्थित्वात् इति भावः । [ तत्, केवलं ] निरुपाधिकं [ कारुण्यं ] करुणा । स्वार्थे ष्यञ् । "कारुण्यं करुणा घृणा" इत्यमरः । [ न स्वकार्य्यम् ] एतदेव चित्रं ; केवलं परार्थत्वात् इति भावः । शालिनी वृत्तम् ॥ २४ ॥ *

प्राप्यत इति ।—[ यत् ] तीर्थम् [ इह ] अस्मिन् लोके [ दूरम् अगत्वा प्राप्यते ] ; स्मृतिमात्रसुलभम् इत्यर्थः । गङ्गादिकन्तु न तथा इति भावः । [ यत् ] तीर्थम् [ अमरलोकगताय † फलति ] फलं प्रयच्छति । अत्रापि. स्मरणमात्रात् एव इति भावः । [ भवार्णववाह्यं ] भवः संसारः स एव अर्णवः ततो वाह्यं वहिर्भवं संसारातीतं, मोक्षप्रदम् इत्यर्थः ।

---

* अत्राप्रश्नतः स्वकार्य्यस्यापोहनात् परिसंख्यालङ्कारभेदोऽवगन्तव्यः ।

† अमरलोकगताय फलति इति अमरलोकगतमनुकूलं तोषयितुम् अमरलोकं गन्तुं वा इति चतुर्थी,—"क्रियार्थोपपदस्य कर्म्मणि स्थानिनः" (२।३।१४ पा०) इति सूत्रात् ।

व्रजति शुचि पदं त्वयि प्रीतिमान्
प्रतिहतमतिरेति घोरां गतिम् ।
इयमनघ ! निमित्तशक्तिः परा
तव वरद ! न चित्तभेदः क्वचित् ॥२६॥

---

"बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्" (वा०) इति ञ्यप्रत्ययः । सर्वे कामाः प्रयोजनम् अस्य इति [ सार्वकामिकम् ] । तदस्य "प्रयोजनम्" ( ५।१।१०८ पा० ) इति ठक् । [ तत् ] तादृक्, तरन्ति अनेन इति [ तीर्थं ] तारकं [ भवतः ] त्वत् [ ऋते ] । "अन्यारात्" ( २।३।२८ पा०) इत्यादिना पञ्चमी । अन्यत् [न अस्ति ] । औपच्छन्दसिकं वृत्तम् ॥ २५ ॥ *

व्रजतीति ।—हे [ वरद ! त्वयि प्रीतिमान् ] नरः [शुचि] निर्मलं [पदं] कैवल्यं मुक्तिमित्यर्थः, [व्रजति] । "मुक्तिः कैवल्यनिर्वाण" इत्यमरः । [ प्रतिहतमतिः ] उपहतबुद्धिः, त्वद्द्वेषीत्यर्थः । [ घोरां गतिं ] तीव्रं नरकम् [ एति ] प्राप्नोति । न च एतावता तव रागद्वेषकलङ्कपङ्क इत्याह.—इयमिति । हे [ अनघ ! ] निष्कलङ्क ! [ इयं ] भक्ताभक्तयोः इति शेषः । विधेयप्राधान्यात् स्त्रीलिङ्गता । [ परा ] दुस्तरा [ निमित्तशक्तिः] निमित्तभूता शक्तिः, स्वचेष्टितमहिमा इत्यर्थः, [ तव क्वचिद् ] भक्ते द्वेषिणि वा कुत्रापि [ चित्तभेदः ] बुद्धिवैषम्यं [न] अस्ति । स्वकर्मणैव जन्तुस्तरति पतति वा । त्वं साक्षितया सर्वत्र सम इत्यर्थः ॥ २६ ॥ †

* अत्र संसारस्य अर्णवतादात्म्येन रूपणाद्रूपकालङ्कारः ।

† अत्रानघ ! वरद ! इति साभिप्रायविशेषणत्वात् परिकरालङ्कारः ।

दक्षिणां प्रणतदक्षिण! मूर्त्तिं
तत्त्वतः शिवकरीमविदित्वा।
रागिणाऽपि विहिता तव भक्त्या
संस्मृतिर्भव! भवत्यभवाय ॥ २७ ॥
दृष्ट्वा दृश्यान्याचरणीयानि विधाय
प्रेक्षाकारी याति पदं मुक्तमपायैः।

दक्षिणामिति।—हे [ भव! ] हे [ प्रणतदक्षिण! ] प्रणतेषु दाक्षिण्यसम्पन्न! दाक्षिण्यं परच्छन्दानुवर्त्तित्वम्। "दक्षिणः सरलावामपरच्छन्दानुवर्त्तिषु" इति विश्वः। [ शिवकरीं ] श्रेयस्करीम्। "कृञो हेतु" (३।२।२० पा०) इत्यादिना टप्रत्यये ङीप्। [तव दक्षिणां मूर्त्तिं, तत्त्वतः] याथार्थ्येन [अविदित्वापि रागिणा ] रागद्वेषवतापि [ भक्त्या विहिता ] तव [संस्मृतिः ] संस्मरणम् [ अभवाय ] संसारनिवृत्तये। प्रसज्य-प्रतिषेधेऽपि नञ्समास इष्यते। [ भवति ]। तत्वज्ञानं विनापि भक्तिपूर्विका तव संस्मृतिः एव मुक्तिनिदानम् इत्यर्थः। स्वागता वृत्तम् ॥ २७ ॥ *

दृष्ट्वेति।—प्रेक्षया बुद्ध्या करोतीति [ प्रेक्षाकारी ] विमृश्य-कारी [ दृश्यानि ] द्रष्टव्यानि [ दृष्ट्वा ] ज्ञात्वा [ आचरणीयानि] कर्त्तव्यानि च [ विधाय ] कृत्वा [ अपायैः मुक्तं ] बाधवर्जितं [ पदं याति ]। "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति श्रुतेः। ज्ञानकर्मभ्यां मुक्तिः इत्यर्थः। किन्तु ते अपि

---

* अत्र "दक्षिणां प्रणतदक्षिण" इति व्यञ्जनसङ्घस्य अनेकधा सकृदावृत्त्या छेकानुप्रासः ; एवं "भव भवत्यभवाय" इति तस्यैव असकृदावृत्त्या वृत्त्यनुप्रासश्च ; एवम् अभवाय इत्यत्र प्रसज्यप्रतिषेधे नञा समासात् विधेयाविमर्षदोषोऽवगन्तव्यः।

सम्यग्दृष्टिस्तस्य परं पश्यति यस्त्वां
यश्चोपास्ते साधु विधेयं स विधत्ते ॥ २८ ॥
युक्ताः स्वशक्त्या मुनयः प्रजानां
हितोपदेशैरुपकारवन्तः ।
समुच्छिनत्सि त्वमचिन्त्यधामा
कर्माण्युपेतस्य दुरुत्तराणि ॥ २९ ॥
सन्निबद्धमपहर्त्तुमहार्य्यं
भूरि दुर्गतिभयं भुवनानाम् ।

ज्ञानकर्मणी त्वद्विषये एव मुक्तिसाधनं न अन्यविषये इत्याशयेन आह ।—सम्यगिति । [ यः ] पुमान् [ परं ] पुरुषोत्तमत्वेन सर्वोत्कृष्टं [ त्वां पश्यति तस्य, सम्यग्दृष्टिः ] सम्यक् ज्ञानम् । [ यश्च] त्वाम् [उपास्ते ] सेवते [सः] एव [साधु विधेयं विधत्ते ] साधुकारीत्यर्थः । मत्तमयूरं वृत्तम् । लक्षणन्तु उक्तम् ॥२८॥

युक्ता इति ।—[ मुनयः ] व्यासादयः [ स्वशक्त्या ] निज योगमहिम्ना [ युक्ताः ] तथा [ हितोपदेशैः ] विधिनिषेधवाक्यैः स्मृतीतिहासपुराणमुखेन [ प्रजानाम्, उपकारवन्तः ] कृतोपकाराश्च । मोक्षप्रदस्तु तेषाम् अन्येषां च त्वमेव इत्याह ।—समिति । [अचिन्त्यधामा] अचिन्त्यमहिमा [त्वम्] एव, [उपेतस्य ] शरणं प्राप्तस्य प्रपन्नस्य इत्यर्थः, सम्बन्धीनि [दुरुत्तराणि] सुदुस्तराणि [ कर्माणि] बन्धकानि पुण्यपापानि इत्यर्थः, [ समुच्छिनत्सि] नाशयसि । ते तु अत्र असमर्था एव इति भावः ॥२९॥

सन्निबद्धमिति ।—अतिक्रान्तो मायां बन्धरूपाम् [ अतिमायः ] । "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" (वा०) इति

अद्भुताकृतिमिमामतिमायः
त्वं बिभर्षि करुणामय ! मायाम् ॥३०॥
न रागि चेतः परमा विलासिता
वधूः शरीरेऽस्ति न चास्ति मन्मथः ।
नमस्क्रिया चोषसि धातुरित्यहो
निसर्गदुर्बोधमिदं तवेहितम् ॥ ३१ ॥

समासः । हे [ करुणामय ! ] हे कृपालो ! [ त्वं, अविवश ] स्वकर्मणा दृढबद्धम् अत एव [ अहार्य्यम् ] अन्यैः अनुच्छेद्यं [ भूरि ] प्रभूतं [ भुवनानां, दुर्गतिभयं ] नरकभयम् । "स्यान्ना-रकस्तु नरको निरयो दुर्गतिः स्त्रियाम्" इत्यमरः । [ अपहर्त्तुम्, अद्भुताकृतिं ] विचित्ररूपाम् [ इमां मायां ] दृश्यमानां लीला-विग्रहरूपां [बिभर्षि] । अन्येषां कर्मानुबन्धी विग्रहपरिग्रहः । भवतस्तु परोपकारार्थ इत्यर्थः ॥ ३० ॥ *

न रागीति ।—हे देव ! [ चेतः, ] तव चित्तं [ रागि ] रागयुक्तं [न] ; परमयोगित्वादिति भावः । तथापि [ परमा ] निरतिशया [ विलासिता ] शृङ्गारादिचेष्टाशीलता ; भिक्षाटना-दिषु विहरणेन, तीर्थविकव्यसनितया च, इति भावः । किञ्च [ शरीरे ] अर्द्धाङ्गे [ वधूः अस्ति ] प्रसिद्धञ्च एतदिति भावः । तथापि [मन्मथः] कामः [ च, नास्ति ], तस्य भस्मीकरणादिति भावः । [च] किञ्च [उषसि] प्रातःसन्ध्यायां [धातुः] ब्रह्मणः [नम-स्क्रिया ] वन्दनं, स्वयं जगद्वन्द्यस्य अपीत्यर्थः । [ इति ] इत्थं

* अत्र अद्भुताकृतिधारणे करुणामयत्वस्य पदार्थस्य हेतुत्वात् काव्यलिङ्गालङ्कृतिः । "अतिमायः करुणामय ! मायाम्" इत्यत्र व्यञ्जनसङ्घस्य असकृदावृत्त्या वृत्त्यनुप्रासश्च ; एतयोः संसृष्टिः ।

तवोत्तरीयं करिचर्म साङ्गजं
ज्वलन्मणिः सारशनं महानहिः ।
स्रगास्यपङ्क्तिः शवभस्म चन्दनं
कला हिमांशोश्च समं चकासति ॥ ३२ ॥
अविग्रहस्याप्यतुलेन हेतुना
समेतभिन्नद्वयमूर्त्ति तिष्ठतः ।

विषमम् [इदम्] उक्तं [तव, ईहितं] चेष्टितं [निसर्गदुर्बोधं] निसर्गतो दुर्बोधं दुराकलनीयं, दुर्ग्रहम् इत्यर्थः । अदृष्टपूर्वत्वात् इति भावः । वंशस्थं वृत्तम् ॥ ३१ ॥ *

तवेति ।—हे देव ! [तव साङ्गजं] सलोमकं [करिचर्म उत्तरीयं] संव्यानम् । दुःस्पर्शम् इति भावः । "संव्यानमुत्तरीयञ्च" इत्यमरः । [ज्वलन्मणिः] ज्वलद्रत्नः [महान् अहिः, सारशनं] कटिभूषाविशेषः । योऽन्येषां प्राणहर इत्यर्थः । "क्लीवे सारशनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु" इत्यमरः । [आस्यपङ्क्तिः] कपालमाला । [स्रक्] माल्यं [शवभस्म चन्दनम्] उभयत्र अपि अस्पृश्यम् अमङ्गलं च इति भावः । किञ्च, एतानि वस्तूनि [हिमांशोः कला च, समं] तुल्यतया [चकासति] दीप्यन्ते । त्वदाश्रयवशात् अरम्यस्य अपि रम्यतेति किमशक्यं तवेति भावः ॥ ३२ ॥ †

अविग्रहस्येति ।—[अविग्रहस्य] वस्तुतोऽशरीरस्य [अपि] सतः [अतुलेन] दुर्बोधत्वात् असदृशेन [हेतुना], केनापि

* अत्र विरागवतोऽपि नृत्याद्यनुरागित्वम् अर्द्धाङ्गनाविग्रहस्याप्यनङ्गविग्रहत्वं जगद्वन्द्यस्यापि स्वस्य साध्यवन्दनम् इत्यादौ विरूपघटनाद् विषमालङ्कारभेदः ।

† अत्रापि उत्तरीय-करिचर्मादीनां विरूपाणाम् एकत्रसमन्वयात् विषमालङ्कारभेदः ।

तवैव नान्यस्य जगत्सु दृश्यते
विरुद्धवेशाभरणस्य कान्तता ॥ ३३ ॥
आत्मलाभपरिणामनिरोधैः
भूतसङ्घ इव न त्वमुपेतः।
तेन सर्वभुवनातिग लोके
नोपमानमसि नाप्युपमेयः ॥ ३४ ॥

कारणेन इत्यर्थः। समेता सङ्गता भिन्ना विलक्षणा च इयी द्विविधा स्त्रीपुंसात्मिका मूर्त्तिः यस्मिन् कर्मणि तत् [ समेतभिन्नद्वयमूर्त्ति ] यथा तथा [ तिष्ठतः ]। अशरीरस्य शरीरमेव विरुद्धं, तदपि नारीनरात्मकमिति किमतश्चित्रम् अस्ति ? इति भावः। एवंविधस्य [तवैव जगत्सु]. विरुद्धे वेशाभरणे पूर्वोक्ते यस्य तस्य [ विरुद्धवेशाभरणस्य ] अपि सतः [ कान्तता] रमणीयता [ दृश्यते। अन्यस्य न ] दृश्यते ; तस्मात् अचिन्त्योऽसौ तव महिमा इति भावः ॥ ३३ ॥ *

आत्मेति।—हे देव ! [ लोके त्वं भूतसङ्घ इव ] शरीरादिसङ्घात इव [ आत्मलाभपरिणामनिरोधैः ] जन्मजरामरणैः [उपेतः] युक्तः [न असि]। [तेन] कारणेन हे [सर्वभुवनातिग ! ] सर्वलोकोत्तर !। उपमीयतेऽनेनेति [ उपमानं ] नासि। उपमीयते य स [ उपमेयोऽपि ] नासि। न कश्चित् त्वादृशोऽस्ति, त्वमपि न अन्यसदृशः, अनन्यसाधारणत्वात् इत्यर्थः। वृत्तमुक्तम् ॥ ३४ ॥ †

* अत्र अप्रश्नतः विरुद्धवेशाभरणस्य अन्यस्य कान्तता-व्यपोहनात् तवैवेति प्रतिपादनम् इति शाब्दी परिसंख्या।

† अत्र पूर्व्वार्द्धांशे भूतसङ्घ इव न त्वमुपेतः इति व्यतिरेकेणौपम्यात् व्यतिरेकोपमालङ्कृतिः।

त्वमन्तकः स्थावरजङ्गमानां
त्वया जगत् प्राणिति देव ! विश्वम् ।
त्वं योगिनां हेतुफले रुणत्सि
त्वं कारणं कारणकारणानाम् ॥ ३५ ॥

रक्षोभिः सुरमनुजैर्दितेः सुतैर्वा
यल्लोकेष्वविकलमाप्तमाधिपत्यम् ।
पाविन्याः शरणागतार्त्तिहारिणे तत्
माहात्म्यं भव ! भवते नमस्क्रियायाः ॥३६॥

---

त्वमिति ।—हे [ देव ! त्वं स्थावरजङ्गमानाम्, अन्तकः ] संहर्त्ता । [ त्वया ] हेतुना [ विश्वं ] सर्वं [ जगत् प्राणिति ] जीवति । [ त्वं योगिनां ] ; हेतुः प्रवर्त्तकं कर्म फलं भोगश्च ते [ हेतुफले, रुणत्सि ] निवर्त्तयसि । तेषां त्वमेव बन्धविमोचक इत्यर्थः । किञ्च [ त्वं ] कारणानि भूतानि तेषां कारणानि भूतसूक्ष्माणि परमाणवो वा तेषां [ कारणकारणानां कारणं ] प्रकृत्यादिद्वारा उत्पत्तिस्थानम् । अत्र सर्वत्र "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" इति श्रुतिः प्रमाणमिति भावः ॥ ३५ ॥ *

रक्षोभिरिति ।—[ रक्षोभिः ] राक्षसैः [ सुरमनुजैः ] सुराश्च मनुजाश्च तैः देवमनुष्यैः [दितेः सुतैः] दैत्यैः [वा, लोकेषु, यत्, अविकलं ] सम्पूर्णम् [ आधिपत्यम्, आप्तं ] प्राप्तं तत् हे [ भव !, शरणागतार्त्तिहारिणे ] शरणागतानाम् आर्त्तिहारिणे

---

* अत्र स्थावरजङ्गमानाम् अन्तकत्वं विश्वप्राणनत्वं योगिजनानां हेतुफलनिरोधकत्वं कारणानां कारणत्वं सर्व्वमेवैतत् एकस्य अनेकधा उल्लेखादुल्लेखालङ्कृतिः बोद्धव्या ।

तरसा भुवनानि यो बिभर्त्ति
ध्वनति ब्रह्म यतः परं पवित्रम्।
परितो दुरितानि यः पुनीते
शिव! तस्मै पवनात्मने नमस्ते ॥३७॥
भवतः स्मरतां सदासने
जयिनि ब्रह्ममये निषेदुषाम्।

---

दुःखनाशकाय [ तत्, भवते ] तुभ्यं [ नमस्क्रियायाः ]। "नमः-स्वस्ति" ( २।३।१६ पा० ) इत्यादिना चतुर्थी। [ पावित्र्याः ] पापहारिण्याः [ माहात्म्यं ] सामर्थ्यम्। "न कस्याप्युन्नतये भवति शिरसस्त्वय्यवनतिः" इति भावः। प्रहर्षिणी-वृत्तम् ॥ ३६ ॥

अथ अष्टमूर्त्तिषु कांश्चित् स्तुवन् वायुमूर्त्तिं तावदाह, तरसेति।—[यः] पवनः [ तरसा ] बलेन। "तरसी बलरंहसी" इति विश्वः। [ भुवनानि बिभर्त्ति ] प्राणात्मना धारयति। [ यतः ] यत्प्रेरणात् [ पवित्रं, परं ] परमं [ ब्रह्म ] वर्णात्मकं [ ध्वनति ] नदति। "सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णान् जनयते" ( पा० शि० ) इति वचनात्। [यः] पवनः [ परितो, दुरितानि ] पातकानि [ पुनीते ] शोध-यति, नाशयतीति यावत्। हे [ शिव ! तस्मै ]। पावयतीति पवनो वायुः स एव आत्मा यस्य तस्मै [ पवनात्मने, ते ] तुभ्यं [ नमः ]। वृत्तमुक्तम् ॥ ३७ ॥

अथ अग्निमूर्त्तिं स्तौति, भवत इति।—[जयिनि] विजय-शीले सर्वोत्कृष्टे [ ब्रह्ममये ] ब्रह्मप्रधाने, तत्प्राप्त्युपायत्वात्; [ सदासने ] सम्यगासने, योगासने इत्यर्थः। [ निषेदुषाम् ]

दहते भववीजसन्ततिं
शिखिनेऽनेकशिखाय ते नमः ॥ ३८ ॥
आबाधामरणभयार्चिषा चिराय
प्लुष्टेभ्यो भव ! महता भवानलेन।
निर्वाणं समुपगमेन यच्छते ते
वीजानां प्रभव ! नमोऽस्तु जीवनाय ॥३९॥

---

उपविष्टानां [ भवतः स्मरतां ] भवन्तं ध्यायताम्। "अधीगर्थ" (२।३।५२ पा०) इत्यादिना शेषे कर्मणि षष्ठी। [भववीजसन्ततिं] संसारनिदानसमूहं भवनिदानकर्मसङ्घातम् इत्यर्थः, [ दहते ] भस्मीकुर्वते [ अनेकशिखाय ] बहुज्वालाय [ शिखिने ] वह्नि-मूर्त्तये [ते] तुभ्यं [ नमः ]। वृत्तमुक्तम् ॥ ३८ ॥ *

अथ जलमूर्त्तिं स्तौति, आबाधेति।—हे [ भव ! वीजानां प्रभव ! ] कारणभूत ! "जीवानाम्" इति पाठे—तेषां तत्प्रति-विम्बत्वादिति भावः। [ आबाधामरणभयार्चिषा ] आबाधा आध्यात्मिकादिदुःखं, मरणं पञ्चत्वं ताभ्यां भयं, तदेव अर्चिः यस्य तेन [ महता, भवानलेन ] संसाराग्निना [ चिराय ] चिरं [ प्लुष्टेभ्यः ] दग्धेभ्यः [ समुपगमेन ] संसेवया [ निर्वाणं ] सन्तापशान्तिं [ यच्छते ] ददते। जीवयतीति जीवनं तस्मै [ जीवनाय ] जलात्मने [ते] तुभ्यं [ नमः अस्तु। ] ॥ ३९ ॥ †

---

* अत्र शिखिने अनेकशिखाय इत्यत्र व्यञ्जनसङ्घस्यानेकधा सकृदाम्यात् छेकानु-प्रासः।

† अत्र "महता भवानलेन" इत्यादौ भवादीनां अनलादि-तादात्म्यारोपात् रूपकालङ्कारः; निर्वाणमिति श्लेषाङ्गवान्।

य: सर्वेषामावरीता वरीयान्
सर्वैर्भावैर्नावृतोऽनादिनिष्ठः ।
मार्गातीतायेन्द्रियाणां नमस्ते-
ऽविज्ञेयाय व्योमरूपाय तस्मै ॥ ४० ॥
अणीयसे विश्वविधारिणे नमो
नमोऽन्तिकस्थाय नमो दवीयसे ।

---

इदानीं नभोमूर्त्तिं स्तौति य इति ।—भवेत्यनुवर्त्तते । भवति अस्मादयं प्रपञ्च इति भव: तत्सम्बुद्धौ । सकलजगज्जनकेति यावत् । [वरीयान्] उरुतर:, विभु: इत्यर्थ: । "प्रियस्थिर" (६।४।१५७ पा०) इत्यादिना उरुशब्दस्य वरादेश: । [य:] त्वं [सर्वेषां] वस्तूनाम् [आवरीता] आच्छादयिता । वृणोतेस्तृच्प्रत्यय: । [सर्वै:, भावै:] पदार्थै: [न आवृत:] केनापि कदाचिदपि अनावृत: स्वयं व्यापकत्वादिति भाव: । अविद्यमाने आदिनिष्ठे उत्पत्तिनाशौ यस्य असौ [अनादिनिष्ठ:] नित्य: । "निष्ठा निष्पत्तिनाशान्ता:" इत्यमर: । [इन्द्रियाणां] चक्षुरादीनां [मार्गातीताय] अतीन्द्रियाय । अत एव [अविज्ञेयाय] अपरिच्छेद्याय [तस्मै व्योमरूपाय, ते] तुभ्यं [नम:] ॥४०॥ *

अणीयस इति ।—भवेत्यनुवर्त्तते हे भव ! [अणीयसे] सूक्ष्मतराय तथापि [विश्वविधारिणे] जगद्धारकाय [ते] तुभ्यं [नम: । अन्तिकस्थाय] अन्तर्यामितया सन्निकृष्टाय सते । तथापि [दवीयसे] दुर्ग्रहत्वात् दूरतराय ते तुभ्यं [नमोनम:, वाचां मनसाञ्च, गोचरं] विषयम् [अतीत्य स्थिताय]

---

* अत्र "आवरीता वरीयान्" इत्यंशे व्यञ्जनानां सकृदावृत्त्या छेकाभिध: शब्दालङ्कार: ।

अतीत्य वाचां मनसां च गोचरं
स्थिताय ते तत्पतये नमो नमः ॥ ४१ ॥
असंविदानस्य ममेश संविदां
तितिक्षितुं दुश्चरितं त्वमर्हसि ।
विरोध्य मोहात् पुनरभ्युपेयुषां
गतिर्भवानेव दुरात्मनामपि ॥ ४२ ॥

अवाङ्मनसगोचराय । [ तत्पतये ] तेषां वाङ्मनसानाम् अध्यक्षाय । तदध्यक्षः तैः एव न दृश्यते इति विरोधः । ते तुभ्यं [ नमो नमः । ] "चापले द्वे भवत इति वक्तव्यम्" (वा०) इति द्विरुक्तिः । "सम्भ्रमेण प्रवृत्तिश्चापलम्" (वा०) इति काशिका । भक्त्युद्रेकाच्च सम्भ्रमः । विरोधाभासोऽलङ्कारः ॥४१॥

असंविदानस्येति ।—[ संविदां ] ज्ञानानाम् [ ईश ! ] । "ईशानः सर्वविद्यानाम्" इति श्रुतेरिति भावः । "प्रेक्षोपलब्धिश्चित् संवित्" इत्यमरः । [ असंविदानस्य ] अज्ञानस्य । "समो गम्यृच्छि" (१।३।२९ पा०) इत्यादिना विदेः सम्पूर्वादकर्मकात् शानच्प्रत्ययः । [ मम दुश्चरितं ] शस्त्रप्रयोगरूपं दुश्चेष्टितं [ तितिक्षितुं ] सोढुम् । तिजेः सन्नन्तात् तुमुन्प्रत्ययः । [त्वम्, अर्हसि] योग्योऽसि । ननु तव महानपराधः कथं सोढव्यः ? तत्राह, विरोध्येति ।—[ मोहात् ] अज्ञानात् [ विरोध्य ] वैरमुत्पाद्य [ पुनरभ्युपेयुषां ] पश्चात् शरणागतानां [ दुरात्मनामपि भवानेव गतिः ] त्वं हि शरणागतानाम् अपराधं न गणयसि इत्यर्थः ॥ ४२ ॥ *

* यतः दुरात्मनाम् अपि गतिः भवानेव, अतः मम दुश्चरितं तितिक्षितुं त्वमर्हसि इति वाक्यार्थहेतुकं काव्यलिङ्गम् ।

आस्तिक्यशुद्धमवतः प्रियधर्म ! धर्मं
धर्मात्मजस्य विहितागसि शत्रुवर्गे ।
सम्प्राप्नुयां विजयमीश ! यया समृद्ध्या
तां भूतनाथ ! विभुतां वितराहवेषु ॥४३॥
इति निगदितवन्तं सूनुमुच्चैर्मघोनः
प्रणतशिरसमीशः सादरं सान्त्वयित्वा ।

---

सम्प्रति वरं याचते आस्तिक्येति ।—हे प्रियः धर्मः यस्य इति [प्रियधर्म ! ]। "समासान्ता विधिरनित्यः" (सू०) इति न समासान्तः अनिच्प्रत्ययः । [आस्तिक्यशुद्धं] परलोके मतिः अस्तीति आस्तिकः पारलौकिकः । "अस्तिनास्तिदिष्टम्" (४।४।६० पा०) इति ठक् । तस्य भावः आस्तिक्यं विश्वासः तेन शुद्धं विमलं, [धर्मं] वैदिकाचारम् [अवतः] पालयतः [धर्मात्मजस्य] युधिष्ठिरस्य [विहितागसि] कृतापराधे [शत्रुवर्गे] शत्रुवर्गविषये हे [ईश ! यया समृद्ध्या] अस्त्रवैभवेण [विजयं सम्प्राप्नुयां]:भजेयम् । हे [भूतनाथ ! आहवेषु तां, विभुतां] विभूतिम् अस्त्रविद्यां [वितर] देहि ॥ ४३ ॥ *

इतीति ।—[इति उच्चैः निगदितवन्तं प्रणतशिरसं, मघोनः] इन्द्रस्य [सूनुम्] अर्जुनम् [ईशः] महादेवः [सादरं] यथा तथा [सान्त्वयित्वा] उपसान्त्व्य [अस्मै] अर्जुनाय [ज्वलदनलपरीतं] ज्वलता अनलेन तेजसा परीतं व्याप्तं [रौद्रं] रुद्रदेवताकं पाशुपतम् [अस्त्रं दधानं, धनरुपपदं] धनुःशब्दोपपदं [वेदं] धनुर्वेदम् इत्यर्थः ।

---

* अत्र "प्रियधर्म ! धर्मं धर्मात्मजस्य" इत्यंशे व्यञ्जनानाम् अनेकधा-ऽसकृदावृत्त्यात् वृत्त्यनुप्रासः ।

ज्वलदनलपरीतं रौद्रमस्त्रं दधानं
धनुरुपपदमस्मै वेदमभ्यादिदेश ॥ ४४ ॥
स पिङ्गाक्षः श्रीमान् भुवनमहनीयेन महसा
तनुं भीमां बिभ्रत् त्रिगुणपरिवारप्रहरणः।
परीत्येशानं त्रिः स्तुतिभिरुपगीतः सुरगणैः
सुतं पाण्डोर्वीरं जलदमिव भास्वानभिययौ ॥४५॥

---

[अभ्यादिदेश] ददौ, अध्यापयामासेत्यर्थः। "धनुरुपपदं वेदम्" इत्यत्र धनुरुपपदत्वं वेदशब्दस्य, न तु संज्ञिनः तदर्थस्य इति संज्ञायाः संज्ञिगतत्वाभावात् अवाच्यवचनदोषमाहुरालङ्कारिकाः। तदुक्तम्—"यदेवावाच्यवचनमवाच्यवचनं हि तत्" इति। समाधानं तु धनुःशब्दविशेषितेन वेदशब्देन, शब्दपरेण इत्यर्थः। परोपदेशयोग्यो धनुर्वेदो लक्ष्यत इति कथञ्चित् सम्पाद्यम् ॥ ४४ ॥

स इति।— [ पिङ्गाक्षः ] पिङ्गलाक्षः [श्रीमान्] शोभावान् [ भुवनमहनीयेन ] लोकपूज्येन [ महसा ] तेजसा [ भीमां तनुं बिभ्रत्, त्रिगुणपरिवारप्रहरणः ] त्रिगुणः त्रिशिखः परिवारः आकारो यस्य तत् त्रिगुणपरिवारं त्रिशूलं तदेव प्रहरणम् आयुधं यस्य स तथोक्तः। सूर्य्यपक्षे तु—गुणत्रयपरिवारः त्रय्यात्मक इति योज्यम्। [सः] धनुर्वेदः [ सुरगणैः स्तुतिभिः उपगीतः] सन् [ ईशानं ] शिवं [त्रिः] त्रिवारम्। "द्वित्रिचतुर्भ्यः सुच्" ( ५।४।१८ पा० ) इति सुच्प्रत्ययः। [ परीत्य ] प्रदक्षिणीकृत्य [ वीरं पाण्डोः सुतम् ] अर्जुनं [ भास्वान् ] सूर्य्यः [ जलदमिव अभिययौ ]। शिखरिणीवृत्तम् ॥ ४५ ॥ *

---

* अत्र "सुतं पाण्डोर्वीरं जलदमिव भास्वानभिययौ" इत्यंशे उपमानोपमेयसाधारण-धर्म्मसम्बन्धादुपमालङ्कारः ; स च त्रिगुणपरिवारप्रहरणः इति श्लेषसङ्कीर्णः।

अथ शशधरमौलेरभ्यनुज्ञामवाप्य
त्रिदशपतिपुरोगाः पूर्णकामाय तस्मै ।
अवितथफलमाशीर्वादमारोपयन्तो
विजयि विविधमस्त्रं लोकपाला वितेरुः ॥४६॥

असंहार्य्योत्साहं जयिनमुदयं प्राप्य तरसा
धुरं गुर्वीं वोढुं स्थितमनवसादाय जगतः ।
स्वधाम्ना लोकानां तमुपरि कृतस्थानममराः
तपोलक्ष्म्या दीप्तं दिनकृतमिवोच्चैरुपजगुः ॥४७॥

अथेति ।—[ अथ ] शशधरमौलिवरप्रदानानन्तरं [ त्रिदशपतिपुरोगाः ] इन्द्रादयो [ लोकपालाः शशधरमौलेः ] शम्भोः [ अभ्यनुज्ञाम् अवाप्य पूर्णकामाय तस्मै ] पाण्डवाय [अवितथफलम् ] अमोघफलम् [ आशीर्वादम्, आरोपयन्तः ] प्रयुञ्जानाः [ विजयि] जयशीलं [ विविधं ] नानाविधम् [ अस्त्रम् ] ऐन्द्रादिकं [ वितेरुः ] ददुः । मालिनीवृत्तम् ॥ ४६ ॥

असंहार्य्योत्साहमिति ।—[तरसा] बलेन वेगेन च [जयिनं] जयशीलम् [ उदयम् ] अस्त्रलाभरूपम् अभ्युदयम् । अन्यत्र—उदयाद्रिं च [ प्राप्य, असंहार्य्योत्साहं ] संहर्त्तुम् अशक्योत्साहं [ जगतोऽनवसादाय ] क्षेमाय [गुर्वीं धुरं ] दुष्टनिग्रहं तमोऽपसंहाररूपं च भारं [ वोढुं स्थितम् । स्वधाम्ना ] स्वतेजसा [लोकानाम् उपरि, कृतस्थानं] कृतस्थितिं कृतपदम् । अन्यत्रोपरि वर्त्तमानं [ तपोलक्ष्म्या दीप्तं तं] पाण्डवम् [ अमराः ] इन्द्रा-

व्रज जय रिपुलोकं पादपद्मानतः सन्
गदित इति शिवेन श्लाघितो देवसङ्घैः।
निजगृहमथ गत्वा सादरं पाण्डुपुत्रो
धृतगुरुजयलक्ष्मीर्धर्मसूनुं ननाम॥ ४८॥

इति श्रीमहामहोपाध्यायभारविकृतौ महाकाव्ये किरातार्जुनीये धनञ्जयास्त्रलाभो नाम अष्टादशः सर्गः।

---

दयः [ दिनकृतं ] सूर्यम् [इव उच्चैः उपजगुः ] साधु महाभाग्योऽसीति तुष्टुवुः। शिखरिणीवृत्तम्॥ ४७॥ *

व्रजेति—[ शिवेन, व्रज ] स्वपुरं गच्छ [ रिपुलोकं ] अरिलोकं [ जय इति, गदितः ] उक्तः। यतः [पादपद्मानतः] शिवपादपङ्कजानतः [सन्] तथा [ देवसङ्घैः, श्लाघितः ] स्तुतः अत एव [ धृतगुरुजयलक्ष्मीः ] धृता गुर्वी जयलक्ष्मीः येन स [ पाण्डुपुत्रः ] अर्जुनः [ निजगृहं ] स्वाश्रमं [गत्वा] प्राप्य [अथ सादरं ] यथा तथा [ धर्मसूनुं ] युधिष्ठिरं [ ननाम ] नमनं चकार॥ ४८॥

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथ-सूरि-विरचितायां किरातार्जुनीयकाव्य-व्याख्यायां घण्टापथसमाख्यायाम् अष्टादशसर्गव्याख्या।

* अत्र उदयं प्राप्य जयिनं तं दिनकृतम् इव इत्यादौ श्लेषसङ्कीर्णोपमालङ्कृतिः बोद्धव्या।

॥ समाप्तम् ॥

# शुद्धिपत्रम् ।

| पृष्ठा | पङ्क्ति | अशुद्धिः | शुद्धिः । |
|---|---|---|---|
| ७ | २४ | पचाद्यजन्तत् | पचाद्यजन्तात् । |
| १४ | २१ | सम्भाव्यम् | न भाव्यम् । |
| ३८५ | ७ | वचसां वा अस्यौपम्यं | वचसो वास्यौपम्यं । |

# किरातार्जुनीयस्य पञ्चदशसर्गे विन्यस्तानां चित्रबन्धानां चित्रप्रदर्शनम्।



## गोमूत्रिकाबन्धः। (१२ श्लोकः।)

ना सु रो यं न वा ना गो ध र सं स्थो न रा क्ष सः।



ना सु खो यं न वा भो गो ध र णि स्थो हि रा क्ष सः॥

## सर्व्वतोभद्रः। (२५ श्लोकः)।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| दे | वा | का | नि | नि | का | वा | दे |
| वा | हि | का | स्व | स्व | का | हि | वा |
| का | का | रे | भ | भ | रे | का | का |
| नि | स्व | भ | व्य | व्य | भ | स्व | नि |
| नि | स्व | भ | व्य | व्य | भ | स्व | नि |
| का | का | रे | भ | भ | रे | का | का |
| वा | हि | का | स्व | स्व | का | हि | वा |
| दे | वा | का | नि | नि | का | वा | दे |

## अर्धभ्रमकः। (२७ श्लोकः)।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| स | स | त्व | र | ति | दे | नि | त्यं |
| स | द | रा | म | र्ष | ना | शि | नि |
| त्व | रा | धि | क | क | सं | ना | दे |
| र | म | क | त्व | म | क | ष | ति |

# घण्टापथसमुल्लिखितानां प्रमाणप्रदर्शनार्थ-विन्यस्तानां ग्रन्थानां ग्रन्थकृतांश्च नामानि।



# INTRODUCTION

BY

**Mahamahopadhyaya**

**Dr. Satis Chandra Vidyabhushana**

M.A., PH.D., M.R.A.S, F.A.S.B.

BHARAVI was a most celebrated sanskrit poet who seems to have flourished in the Maharashtra-country. The reference in *Kiratarjuniyam* to Sahya-mountain (*a*) in the Maharashtra-country leads one to suppose that *Bharavi* was a *Maharashtriya.* (*b*) This supposition receives support from the Aihole inscription which couples the name of *Bharavi* with that of *Ravi-kirti* who evidenty flourished in *Vatapipuri* (Badami) in the Western Deccan. (*c*)

---

(*a*) उरसि शूलभृतः प्रहिता मुहुः प्रतिहतिं ययुरर्जुनमुष्टयः ।
भृशरया इव सह्यमहीभृतः पृथुनि रोधसि सिन्धुमहोर्मयः ॥

(*Kirata 18—5*).

(*b*) A similar view was expressed by Raja Ram Ram Krishna Bhagavat Pandit in his "Marhatyam cya sambandan cara udgara", page 34.

(*c*) The Aihole inscription which records the erection of a stone-temple of *Jinendra* by a certain *Ravi-kirti* during the reign of *Pulikesin* II otherwise called *Satyasraya* of the Western Chalukya-

2. There is reason to believe that *Bharavi* flourished at the end of the 6th Century A. D. during the supremacy of the Western Chalukya-dynasty. The Aihole inscription referred to above was executed during the reign of *Pulikeshi* II. otherwise called *Satyasraya* of the Western Chalukya-dynasty in the Saka year 556 (A. D. 634). This leaves no doubt that *Bharavi* lived before

dynasty in *Vatapi-Puri* (Badami ) in the Saka year 556 (634 A. D.) contains the following stanzas :—

पञ्चाशत्सु कलौकाले षट्सु पञ्चशतासु च ।
समासु समतीतासु शकानामपि भूभुजाम् ॥
तस्याम्बुधि-त्रय-निवारित-शासनस्य सत्याश्रयस्य परमाप्तवता प्रसादम् ।
शैलञ्जिनेन्द्रभवनम्भवनम्महिम्नान्निर्मापितम्मतिमता रविकीर्त्तिनेदम् ॥
प्रशस्तेर्व्वसतेश्चास्या: जिनस्य त्रिजगद्गुरो: ।
कर्त्ता कारयिता चापि रविकीर्त्ति:कृती स्वयम् ॥
येनायोजि नवेऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म ।
स विजयतां रविकीर्त्ति: कविताश्रितकालिदास-भारवि-कीर्त्ति: ॥

(*Indian Antiquary*, *Vol. V*, *page 73*).

Three thousand five hundred and fifty years of the Kali Age and five hundred and fifty-six years of the Saka kings having elapsed —this stone-temple of *Jinendra*, the abode of glory, was constructed by the order of the learned *Ravi-kirti*, who had gained the greatest favour of that same *Satyasraya* whose authority was kept within bounds, only by the three oceans. The accomplished *Ravikirti* himself is the composer of this eulogy and the builder of this abode of *Jina*, the father of three worlds. Victorious be *Ravi-kirti*, who well-versed in the new scriptures caused this Jain-temple made of stone to be erected, and in whom the poetic fame of *Kalidasa* and *Bharavi* found lodgment.

634 A. D. The interval between the dates of *Ravikirti* and *Bharavi* was not presumably long, and it will not be wide of the mark to place the latter at about 600 A. D.

3. There is a tradition that while *Bharavi* lived in the house of his preceptor, he used to tend his cow in the neighbouring hills and valleys, the beauty of which impressed him greatly and inspired him with poetic sentiments. Leaving the cow to graze at her sweet will, he sat down every day in a certain bower and wrote verses upon birch-leaves. These verses, collected and run into chapters, constituted the immortal epic *Kiratarjuniyam.*

4. The incidents, related in the poem, are mainly taken from the *Mahabhárata*, Vanaparva, Chapters 27-41.

5. Some of the earlier Chalukya kings were Saivas though the later ones were mostly Vaishnavas ; at any rate, *Bharavi* seems to have been a follower of the Saiva creed which was the prevalent faith in his time in the Maharashtra-country. There are verses in *Kiratarjuniyam* celebrating the glory of Siva, which may be adduced as a proof of the poet's implicit faith in the Saiva cult. (*d*)

(*d*) आत्मलाभ-परिणाम-निरोधैर्भूतसङ्घ इव न त्वमुपेतः ।
तेन सर्वभुवनातिग ! लोके नोपमानमसि नाप्युपमेयः ॥ २४ ॥
त्वमन्तकः स्थावर-जङ्गमानां त्वया जगत् प्राणिति देव ! विश्वम् ।
त्वं योगिनां हेतुफले रुणत्सि त्वं कारणं कारणकारणानाम् ॥ २५ ॥

6. The Aihole inscription and verses in *Kiratarjuniyam* on the impermanence of the world (*e*) bear ample testimony to the influences of Jainism and Buddhism, that still lingered in the Maharastra-country at the time of *Bharavi.*

रक्षोभिः सुरमनुजैर्दितेः सुतैर्वा
यल्लोकेष्वविकलमाप्तमाधिपत्यम्।
पाविन्याः शरणगतार्त्तिहारिणे तत्
माहात्म्यं भव ! भवते नमस्क्रियायाः॥ ३६॥

तरसा भुवनानि यो बिभर्त्ति ध्वनति ब्रह्म यतः परं पवित्रम्।
परितो दुरितानि यः पुनीते शिव ! तस्मै पवनात्मने नमस्ते॥ ३७॥

भवतः स्मरतां सदासने जयिनि ब्रह्ममये निषेदुषाम्।
दहते भवबीजसन्ततिं शिखिनेऽनेकशिखाय ते नमः॥ ३८॥

आबाधामरणभयार्च्चिषा चिराय
प्लुष्टेभ्यो भव ! महता भवानलेन।
निर्वाणं समुपगमेन यच्छते ते
बीजानां प्रभव ! नमोऽस्तु जीवनाय॥ ३९॥

यः सर्व्वेषामावरीता वरीयान् सर्व्वैर्भावैर्नावृतोऽनादिनिष्ठः।
मार्गातीतायेन्द्रियाणां नमस्तेऽविज्ञेयाय व्योमरूपाय तस्मै॥ ४०॥

अणीयसे विश्वविधारिणे नमो नमोऽन्तिकस्थाय नमो दवीयसे।
अतीत्य वाचां मनसां च गोचरं स्थिताय ते तत्पतये नमो नमः॥ ४१॥

*Kiratarjuniyam. Chap. XVIII.*

(*e*) शरदम्बुधरच्छायागत्वर्य्यो यौवनश्रियः।
आपातरम्या विषयाः पर्य्यन्तपरितापिनः॥ १२॥
अन्तकः पर्य्यवस्थाता जन्मिनः सन्ततापदः।
इति त्याज्ये भवे भव्यो मुक्तावुत्तिष्ठते जनः॥ १३॥
मूलं दोषस्य हिंसादेरर्थकामौ स्म मा पुषः।
तौ हि तत्त्वावबोधस्य दुरुच्छेदावुपप्लवौ॥ २०॥

7. There are sayings, which have almost passed into proverbs, which point out the comparative merits of *Kalidasa, Bharavi, Sriharsha* and *Magha.* Whatever difference of opinions may exist as to the justice of the estimate of *Magha* and *Sriharsha* contained in these verses *(f)* all including the renowned commentator *Mallinatha* are agreed in crediting *Bharavi* with a profound depth and an exuberant richness of meaning. *(g)* The style of *Bharavi* is beautiful, being fashioned after *Vaidarbhi* and *Panchali* models.

8. It is note-worthy that many of the ideas and expressions in the 1st chapter of *Magha* are evidently borrowed from the 3rd chapter of *Kiratarjuniyam*, the subject-matter in both being the same. The fairness therefore of the sayings *(h)* regarding the comparative merits of *Bharavi* and *Magha* will be challenged by every one who has made a thorough study of the poets.

विजहीहि रणोत्साहं मा तपः साधु नीनशः ।
उच्छेदं जन्मनः कर्तुमेधि शान्तस्तपोधन ! ॥ २१ ॥

*( Kiratarjuniyam. Chap. XI. )*

*(f)* उपमा कालिदासस्य भारवेरर्थगौरवम् ।
नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः ॥

*(g)* Compare,—

नारिकेल-फल-सम्मितं वचो भारवेः सपदि तद्विभज्यते ।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम् ॥

*(Mallinath's introduction to Ghantapatha.)*

*(h)* तावद् भा भारवेर्भाति यावत् माघस्य नोदयः ।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः ? ॥

9. The Poet *Bhatti* who flourished at *Valabhi* in 653 A. D. was also indebted to *Bharavi* for many of his ideas and sentiments. There are passages (*i*) in *Bhatti* which have their exact parallels in *Bharavi.*

(*i*) Some of the passages are quoted :—

| BHARAVI. | BHATTI. |
|---|---|
| नुतोष पश्यन् कलमस्य सोऽधिकं<br>सवारिजे वारिणि रामणीयकम् ।<br>सुदुर्लभे नार्हति कोऽभिनन्दितुं<br>प्रकर्षलक्ष्मीमनुरूप-सङ्गमे ? ॥ ४।४ | दिग्व्यापिनीर्लोचनलोभनीया<br>मृजान्विताः स्नेहमिव स्रवन्तीः ।<br>ऋज्वायताः शस्यविशेषपङ्क्ती-<br>स्तुतोष पश्यन् वितृणान्तरालाः ॥ २।१३ |
| कपोल-संश्लेषि विलोचनत्विषा<br>विभूषयन्तीमवतंसकोत्पलम् ।<br>सुतेन पाण्डोः कलमस्य गोपिकां<br>निरीक्ष्य मेने शरदः कृतार्थता ॥ ४।९ | स्त्रीभूषणं चेष्टितमप्रगल्भं<br>चारूण्यवक्राण्यपि वीक्षितानि ।<br>ऋजूंश्च विश्वासकृतः स्वभावान्<br>गोपाङ्गनानां मुमुदे विलोक्य ॥ २।१५ |
| स मन्थरावल्गित-पीवरस्तनीः<br>परिश्रमक्लान्तविलोचनोत्पलाः ।<br>निरीक्षितुं नोपरराम बल्लवीः<br>अभिप्रनृत्ता इव वार-योषितः ॥ ४।१७ | विवृत्तपार्श्वं रुचिराङ्गहारं<br>समुद्वहच्चारुनितम्बरम्यम् ।<br>आमन्द्रमन्थध्वनिदत्त-तालं<br>गोपाङ्गनानृत्तमनन्दयत्तम् ॥ २।१६ |
| कृतावधानं जितबर्हिणध्वनौ<br>सुरक्त-गोपीजन-गीत-निस्वने ।<br>इदं जिघत्सामपहाय भूयसीं<br>न शस्यमभ्येति मृगीकदम्बकम् ॥ ४।३३ | दत्तावधानं मधुलेहिगीतौ<br>प्रशान्तचेष्टं हरिणं जिघांसुः ।<br>आकर्णयन्नुत्सुक-हंसनादान्<br>लक्ष्ये समाधिं न दधे मृगावित् ॥ २।७ |

# किरातार्ज्जुनीयम् ।



## महाकवि-श्रीभारवि-विरचितम् ।



श्रीकोलाचलमल्लिनाथकृतघण्टापथव्याख्यासमेतम् ।




पण्डितकुलपति-

वि, ए, उपाधिधारि-

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्यात्मजाभ्यां

पण्डित-श्रीआशुबोध-विद्याभूषण-

पण्डित-श्रीनित्यबोध-विद्यारत्नाभ्यां


सुबोधान्वयनिर्द्देशेन विशदीकृतं संस्कृतं प्रकाशितञ्च ।




सप्तमसंस्करणम् ।

कलिकातानगर्य्याम्

"गोवर्द्धनयन्त्रे" मुद्रितम् ।

खृ° १९१२ ।

## टीकाकृन्मङ्गलाचरणम् ।

अर्धाङ्गीकृतदाम्पत्यमपि गाढानुरागि यत् ।
पितृभ्यां जगतस्तस्मै कस्मैचित् महसे नमः ॥ १ ॥
आलम्बे जगदालम्बं हेरम्बचरणाम्बुजम् ।
शुष्यन्ति यद्रजःस्पर्शात् सद्यः प्रत्यूहवार्द्धयः ॥ २ ॥
तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे ।
यत्प्रसादात् प्रलीयन्ते मोहान्धतमसच्छटाः ॥ ३ ॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥ ४ ॥

मल्लिनाथकविः सोऽयं मन्दात्मानुजिघृक्षया ।
तत्किरातार्जुनीयाख्यं काव्यं व्याख्यातुमिच्छति ॥ ५ ॥

नारिकेलफलसम्मितं वचो भारवेः सपदि तद्विभज्यते ।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम् ॥ ६ ॥

नानानिबन्धविषमैकपदैर्नितान्तं
शाशङ्कचङ्क्रमणखिन्नधियामशङ्कम् ।
कर्त्तुं प्रवेशमिह भारविकाव्यबन्धे
घण्टापथं कमपि नूतनमातनिष्ये ॥ ७ ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥ ८ ॥

---